23

**RASHTRIYA SANSKRIT SANSTHAN, DELHI**
**[KENDRIYA SANSKRIT VIDYAPEETHA, TIRUPATI, SERIES NO. 23]**

# TATTVACINTĀMAṆI

OF

## GAṄGEŚOPĀDHYĀYA

WITH

PRAKĀŚA OF RUCIDATTAMIŚRA

AND

TARKACŪḌĀMAṆI ON PRAKĀŚA

BY

DHARMARĀJĀDHVARIN

**VOLUME II—ANUMĀNAKHAṆḌA PART I**


CRITICALLY EDITED BY
DR. N. S. RAMANUJA TATACHARYA
Professor, Kendriya Sanskrit Vidyapeetha
TIRUPATI






KENDRIYA SANSKRIT VIDYAPEETHA
TIRUPATI
1982

RASHTRIYA SANSKRIT SANSTHAN, DELHI
[KENDRIYA SANSKRIT VIDYAPEETHA, TIRUPATI, SERIES NO.33]

# TATTVACINTĀMAṆI

OF

## GAṄGEŚOPĀDHYĀYA

WITH

PRAKĀŚA OF RUCIDATTAMIŚRA

AND

TARKACŪḌĀMAṆI ON PRAKĀŚA

OF

DHARMARĀJĀDHVARIN

VOLUME II—ANUMĀNAKHAṆḌA PART I

CRITICALLY EDITED BY
DR. N. S. RAMANUJA TATACHARYA
Professor, Kendriya Sanskrit Vidyapeetha
TIRUPATI




KENDRIYA SANSKRIT VIDYAPEETHA
TIRUPATI
1982

राष्ट्रियसंस्कृतसंस्थानम्, देहली

[ केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला—संख्या ३३ ]

गङ्गेशोपाध्यायविरचितः

# तत्त्वचिन्तामणिः

धर्मराजाध्वरिकृततर्कचूडामणिभूषितेन

रुचिदत्तमिश्रविरचितप्रकाशेन अलंकृतः

द्वितीयभागस्य अनुमानखण्डस्य प्रथमो भागः

केन्द्रीयसंस्कृतविद्यापीठे आचार्यपदमधितिष्ठता

डा० एन्. एस्. रामानुजताताचार्येण

पाठभेदादिभिः संशोध्य संपादितः




केन्द्रीयसंस्कृतविद्यापीठम्

तिरुपतिः

१९८२

# FOREWORD

## प्रस्तावना

विदितमिदं समेषां विदुषां यत् वेदान्तपरिभाषानामकः अद्वैतवेदान्तप्रकरणग्रन्थः प्रायः सर्वैरपि वेदान्तिभिरधीयत इति। तस्य ग्रन्थस्य प्रणेतारः श्रीमद्धर्मराजाध्वरीन्द्राः वेदान्तपरिभाषाकारत्वेनैव प्रसिद्धाः। परं त्वेते प्रौढपाण्डित्यगर्भं नव्यन्यायशास्त्रग्रन्थं प्रणिन्युरिति प्रायः सर्वे न जानन्ति। यद्यपि तेलुगुलिप्यां बहोः कालात् पूर्वं मुद्रिते वेदान्तपरिभाषापुस्तके आरम्भे—

येन चिन्तामणौ टीका दशटीकाविभञ्जिनी।
तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा॥

इति श्लोको दृश्यते। तेन च तत्त्वचिन्तामणिव्याख्यानरूपः तर्कचूडामणिनामकः ग्रन्थस्तैर्विरचित इति प्रतीयते। तथापि तस्य मुद्रणार्थं परिशीलनार्थं च प्रयासः कैरपि पण्डितैः न अकारि। परं यदा डा. वे. राघवन्महोदयाः अस्य विद्यापीठस्य निर्वाहकसमितेः अध्यक्षा आसन् (1964) तदा "तर्कचूडामणिनामकस्य धर्मराजाध्वरिकृतस्य ग्रन्थस्य मातृकाः तञ्जापुरीस्थसरस्वतीमहाल्कोशालये बहोः कालात् प्राक् मया दृष्टाः। तस्य प्रकाशनम् उचितम्" इत्यवदन्। तदनुसारं तस्य प्रकाशनं विद्यापीठेन स्वीकृतम्। स च चूडामणिग्रन्थः न तत्त्वचिन्तामणेः साक्षात् व्याख्यानरूपः, अपि तु मणिव्याख्यानस्य रुचिदत्तीयप्रकाशस्य व्याख्यानरूप इति मातृकाणां परिशीलनेन अवगतम्। तत्रापि प्रत्यक्षखण्डस्य चूडामणिग्रन्थमातृका न क्वाप्यलभ्यत।

अतः तत्पुत्रकृतन्यायशिखामणिटीकया सह प्रत्यक्षखण्डः 1973 तमे वर्षे प्राकाश्यत। अनुमानखण्डस्य चूडामणिव्याख्या समग्रा तत्र तत्र कोशालये मातृकारूपेण वर्तते। तत्रापि अनुमानखण्डस्यातिविस्तृतत्वात् तस्य भागद्वयात्मना मुद्रणं युक्तमिति पर्यालोच्य इदानीम् आदितः अवयवप्रकरणान्तः रुचिदत्त-कृतप्रकाशधर्मराजाध्वरिकृततर्कचूडामणिभ्यां सहितः तत्त्वचिन्तामणेः अनुमान-खण्डस्य प्रथमभागः प्रकाशमानीयते। 'दशटीकाविभञ्जनी' इति वेदान्त-परिभाषोपक्रमे यदुक्तं तत् अन्वर्थम् इति एतद्व्याख्यानविमर्शकाः विद्वांसः ज्ञास्यन्ति। दक्षिणप्रान्तेऽपि प्रौढाः न्यायपण्डिता आसन्नित्यत्र प्रत्यक्षं निदर्शनमिदं व्याख्यानं भविष्यति।

"प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः" इति वाचस्पतिमिश्रोक्तया रीत्या तर्कशास्त्रस्यानुमानमेव जीवातुभूतम्। तच्चानुमानम्—

अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत् सामान्यतोदृष्टं च—

इति एकेनैव सूत्रेणोपक्षिप्तं न्यायदर्शनप्रवर्तकेन महर्षिणा। तत् वार्तिक-तात्पर्य-टीका-परिशुद्धिषु उद्योतकरवाचस्पतिमिश्रोदयनाचार्यैः अनुमानापेक्षितानेकविषय-कथनपूर्वकं विस्तृतम्। परं तु तेषु ग्रन्थेष्वपि इदमित्थमिति अनुमानापेक्षिता विषयाः दुर्ज्ञाना एवाभवन्। मणिकारास्तु स्वकीयमेधाविशेषेण प्राचीनपूर्वोक्त-ग्रन्थतात्पर्यं यथावदवगम्य यथा अन्येऽपि निष्कृष्य तत्त्वं विजानीयुः तथा नाम प्रयस्य चिन्तामणिग्रन्थं निबबन्धुः। अतः न्यायदर्शने विशिष्य अनुमान-भागे ज्ञातव्यानि तत्त्वानि चिन्तामणिग्रन्थात् निःशेषतया ज्ञातुं शक्यन्ते। अत एव तत्त्वचिन्तामणेरारम्भे गङ्गेशोपाध्यायैर्यदुक्तम्—

अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम् ।
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरुः
गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् ॥

इति तद्वस्तुस्थितिकथनम् । मितेन वचसा निर्मितत्वादेव चिन्तामणिरपि कालक्रमेण दुरूहो जातः । तस्य भावं प्रकाशयितुं नाना व्याख्यानानि प्रदुर्बभूवुः । तेषु प्रकाश एव समग्रः । अतस्तस्य पूर्वमप्रकाशितस्य अप्रकाशितेन व्याख्यानेन सह प्रकाशनं युक्तरूपम् । प्रकाशे च 'अन्ये तु' 'केचित्' इत्यादिना बहूनि व्याख्यानान्यनूदितानि विमृष्टानि च । तादृशस्थलानि कस्माद्ग्रन्थादुद्धृतानीति जिज्ञासा भवेदेव । सा च जिज्ञासा तत्र तत्र 'जयदेवमतमाह' 'उपाध्यायमतमाह' इत्याद्यवतरणिकादानेन तर्कचूडामणौ शमिता । प्रकाशादिषु व्याख्यानेषु मणिप्रदर्शितपरिष्कारोपरि दोषान् आशङ्क्य मार्गान्तरेण परिष्काराः प्रादर्शिषत । तादृशस्थलेषु चिन्तामणिकारमार्गमेव समर्थयन्ते चूडामणिकाराः । तस्मात् प्रौढनैयायिकानां प्रकाशनमिदम् अमन्दमानन्दं जनयिष्यतीत्यत्र न संदेहः ।

तत्रभवद्भिः श्रीमद्भिः पदवाक्यप्रमाणज्ञैः डा० एन्. एस्. रामानुजताताचार्यमहाभागैः शब्दन्यायवेदान्तमीमांसादिषु शास्त्रेषु पञ्चदश प्रौढग्रन्थाः त्रिंशदधिकाः शोधप्रबन्धलेखाश्च समलेखिषत । सत्स्वपि अनेकेषु कार्येषु पण्डितप्रवराः श्रीताताचार्यमहाशयाः परया श्रद्धया यथावकाशं महदिदं कार्यं क्रमशः निर्वहन्तस्तिष्ठन्ति । इतः अनुमानस्य द्वितीयभागः, उपमानखण्डः, शब्दखण्डस्य

भागद्वयं च प्रकाशनीयानि अवशिष्यन्ते। तेषां भागानां प्रकाशनाय विद्यापीठमिदं शीघ्रमेव व्यवस्थां करिष्यति। ग्रन्थस्यातिप्रौढत्वात् विस्तृतत्वाच्च तत्तत्प्रकरणसारार्थज्ञानपूर्वकं ग्रन्थपठने सति विदुषां छात्राणां च तदर्थावगम-सौकर्यं स्यादिति पर्यालोच्य प्रकरणसारार्थः श्रीताताचार्यमहाभागैः अलेखि। तच्चात्र प्रकाश्यमानं विदुषां छात्राणां च महते उपकाराय कल्पिष्यते।

एते श्रीताताचार्यमहाशयाः श्रीपद्मावतीसमेतस्य भगवतः श्रीवेंकटेशस्य कृपाप्रसादात् स्वार्जितवैदुष्याच्च इतरेषामपि प्रौढानां शास्त्रग्रन्थानाम् अत्र प्रदर्शितां सरणिमाश्रित्य नूतनव्याख्यानग्रन्थान् विरचयन्तः सन्तः विलसन्तु इत्याशास्यते।

तिरुपतिः मल्लादि० द० बालसुब्रह्मण्यः

31–3–82 प्राचार्यः

# उपोद्घातविषयानुक्रमणिका

## ग्रन्थविषयानुक्रमणिका

# उपोद्घातः

श्रीमद्धर्मराजाध्वरीन्द्रात्मजश्रीरामकृष्णाध्वरिविरचितन्यायशिखामणिभूषित-श्रीरुचिदत्तमिश्रकृतप्रकाशेनोद्भासितस्य श्रीमद्गङ्गेशोपाध्यायकृतस्य तत्त्वचिन्तामणेः प्रथमभागात्मकः प्रत्यक्षखण्डः बृहच्छरीरः १९७३ तमे क्रैस्तवाब्दे विद्यापीठेन प्रकाशितः । तस्य आमुखे ( Foreword ) डा० वे० राघवन् महोदयाः आङ्गलवाण्या एवमलिखन् —

The edition of the whole Maṇi and Prakāśa with the two Commentaries is a prodigious undertaking, and the editor deserves to be congratulated for his laborious work on this. It is hoped that with the experience gained in bringing out first volume and with greater facilities provided for the work. he will bring out the others more quickly. Indeed scholars, like the writer of this Foreword, are naturally looking forward eagerly to reading the famous Dharmarāja's Tarkacūḍāmaṇi on Anumāna, upamāna and Śabdakhaṇḍas about which Darmarāja himself raised such high hopes— इति । परं तु यं तर्कचूडामणिं परया आस्थया आदरेण च दिदृक्षन्ते स्म तम् अधुना प्रकाश्यमानं द्रष्टुं ते राघवन्महोदयाः न सन्तीति चेखिद्यतेऽस्माकं चेतः । तेषां जीवद्दशायामेव अनुमानखण्डं प्रकाशयितुमिच्छन्नप्यहं शास्त्रि-आचार्यादिकक्ष्यासु अध्यापनकार्येण विद्यावारिधिशोधच्छात्राणां मार्गदर्शनेन इतरैश्च तदनुबन्धिकार्यचयैः आक्रान्तदैनंदिनबहुसमयः नैवाशकं प्रकाशयितुम् । ईदृशानि हि अनेकतालकोशादिनिरीक्षणपूर्वकं संपादनीयानि कर्माणि प्रतिदिनं महान्तं

समयमपेक्षन्ते। अथापि महतां तेषां निर्देशस्य वशंवदः स्वयं च आबाल्यात् ईदृशे कार्ये समुत्सुकोऽहं विद्यापीठे गृहे च यदा यदा अवकाशोऽलभ्यत तदा तदा कार्यमेतत् निरुह्य विद्यापीठद्वारा इदानीम् अनुमानभाग प्रकाशयामि। तत्त्वचिन्तामणेः तव्द्याख्यानानां व्याख्यानव्याख्यानानां तत्कर्तॄणां च विषये वक्तव्यं प्रत्यक्षखण्डोपोद्घाते विस्तरेण प्रत्यपादयम्। तत्र धर्मराजाध्वरिणां देशकालचरित्रादिकमपि व्यवेचयम्। रुचिदत्तमिश्रकृतं प्रकाशाभिधानं व्याख्यानमेव मणेश्चतुर्णामपि खण्डानामुपलभ्यते। इतराणि व्याख्यानानितु असमग्राणि। प्रकाशश्च अतिप्रौढः बहुविषयगर्भश्च। प्रकाशस्य अनुमानखण्डात् शब्दखण्डान्तस्य धर्मराजाध्वरिकृतः तर्कचूडामणिः उपलभ्यते। परं प्रत्यक्षखण्डप्रकाशस्य तर्कचूडामणिर्नोपलभ्यत इति कृत्वा श्रीरामकृष्णाध्वरिप्रणीतन्यायशिखामणिना सह प्रकाशनं कर्तव्यमभूत्। अनुमानादिखण्डानामिव प्रत्यक्षखण्डस्यापि यदि तर्कचूडामणिं धर्मराजाध्वरीन्द्राः व्यरचयिष्यन् तदा तत्पुत्राः रामकृष्णाध्वरीन्द्राः न्यायशिखामणिं न प्राभन्त्स्यन्। अतः प्रत्यक्षखण्डव्याख्यानं धर्मराजाध्वरीन्द्रैर्न व्यरचीति अहमतर्कयम्। किं तु स तर्क आभास इति इदानीं निश्चिनोमि। यतः अनुमानतर्कचूडामणेः द्वित्रस्थलानां दर्शनेन प्रत्यक्षखण्डस्यापि व्याख्यानं तैः प्राणायीति स्पष्टमवगम्यते। तथा हि—'यथा चैतत्तथोक्तं प्रत्यक्षपरिच्छेदे' (पृ. 11) "वस्तुतस्तु विशेषणत्वं न भासत इति प्रपञ्चितमस्माभिः प्रत्यक्षपरिच्छेदे" (पृ. 95) इति। परं तु अस्माकं दौर्भाग्यवशाद् प्रत्यक्षभागतर्कचूडामणिः अलुप्यत। अथापि तल्लोपेन नातीव विषदनीयम्, तत्पुत्राणां रामकृष्णाध्वरीन्द्राणां न्यायशिखामणिव्याख्यानस्य लाभेन संतुष्टैरेव भवितव्यं विद्वद्भिः। अस्त्वेतत्।

अयं तर्कचूडामणिग्रन्थः नातिविस्तृतः नातिसंक्षिप्तः प्रौढनानाविषयगुम्फितः स्वातन्त्र्येण सुसूक्ष्मनानाविषयविवेचकश्च। मणेर्यानि यानि व्याख्यानान्यासन् तानि

सर्वाणि निरीक्ष्य व्याख्यानमेतत् निरमासिषुरिति स्पष्टम् । प्रभा - आलोकादीनि व्याख्यानानि तत्र तत्र विमृशन्तः चूडामणिकाराः स्वव्याख्येयभूतं प्रकाशमपि बहुत्र विमृशन्ति । उदाहरणार्थम् 213, 239, 422 च पृष्ठानि द्रष्टव्यानि ।

गङ्गेशवचसि दोषमेन न सहन्त इति—'तस्मात् गङ्गाप्रवाहवत् निर्मले गङ्गेशवचसि बाधितार्थकत्वं न शङ्कनीयम्' (पृ. 422) 'न्यायविदामेकपुण्डरीकेण गङ्गेशेन' (पृ 64) इतिवाक्याभ्यामवगम्यते ।

रघुनाथशिरोमणिकृतदीधितिव्याख्यानप्रादुर्भावात् प्राक् दक्षिणप्रान्ते तत्त्वचिन्तामणेः रुचिदत्तीयप्रकाशव्याख्यानस्यैव भूयान् प्रचारो बभूवेति ज्ञायते । दक्षिणप्रान्तीयैरनेकैर्विद्वद्भिः प्रकाशस्य व्याख्यानकरणात्, अप्पय्यदीक्षितैः परिमल - शिवार्कमणिदीपिकादौ न्यायमतविवेचनावसरे प्रकाशस्य प्रमाणतया उद्धरणाच्च । किं बहुना श्रीव्यासतीर्थविरचिते तर्कताण्डवे श्रीराघवेन्द्रकृते तद्व्याख्याने च प्रकाशस्योद्धरणमनेकस्थलेषु ईक्षामहे । अनेन प्रकाशस्य महत्त्वं स्पष्टम् । अपि च दीधितावपि प्रकाशस्य प्रभावस्तत्र तत्रास्तीति दीधितिं प्रकाशं च तुलनात्मकदृष्ट्या पश्यतां स्पष्टं भविष्यति ।

तत्र प्रकाशस्य संपादनकर्मणि द्वे मातृके उपायुज्येताम् । तयोः विवरणं यथा—तञ्जापुरस्थसरस्वतीमहाल्कोशालये उपलभ्यमाना काकदमयी प्रत्यक्षमारभ्य शब्दखण्डसमाप्तिपर्यन्ता प्रायःशुद्धा D. No. 6190 B. C. No. 2137 संख्याङ्किता एका मातृका । तस्याः 'क' इति चिह्नमस्माभिः दत्तम् । तस्याः विवरणं प्रत्यक्षखण्डोपोद्घाते दत्तमेव । द्वितीया तिरुपतिस्थकेन्द्रीयसंस्कृतविद्यापीठे स्थिता काकदमयी देवनागराक्षरलिखिता 2331 संख्याङ्किता शुद्धा मातृका । तस्याः 'ख' इति चिह्नम् । तस्याः विवरणं यथा—

KSV. No. 2331

अनुमानप्रकाशः

Paper. Devanagari. Foll 311 pages 622. Lines 11 to a page. Anumāna portion complete. Condition, good. Beginning:—

श्री गणेशाय नमः । श्रीसरस्वत्यै नमः ।

प्रणयकलहकाले भीषणं भीतिहेतोः
प्रकटयति समन्तान्मायया कायमस्मिन् ।
सभयमथ भवान्या गाढमालिङ्ग्यमानो
घटयतु घनविघ्नध्वंसमस्माकमीशः ॥

निशम्य सकलं शास्त्रं नानागुरुमुखाम्बुजात् ।
अनुमानप्रकाशोऽयं रुचिदत्तेन तन्यते ॥

संगतिं दर्शयन्नेव शिष्यावधानार्थमिदानीमनुमाननिरूपणं क्रियत इति प्रतिजानीते—प्रत्यक्षेति ।

End :—

उत्पन्नेति । क्षणमात्रस्य विलम्बपदवाच्यत्वाभावादिति भावः । तथा चोक्तश्रुतिरप्यनन्यथासिद्धा तत्र प्रमाणमेवेति तात्पर्यम् । अत एव शास्त्रमपि तत्त्वज्ञानपूर्वकमुपपद्यते । अन्यथा तदग्रिमक्षण एव मोक्षापत्तौ तदसंभवादिति ।

इति श्रीमहामहोपाध्यायश्रीरुचिदत्तविरचितः
अनुमानप्रकाशः संपूर्णः

तर्कचूडामणेः संपादनाय चतस्रः मातृकाः उपयुक्ताः। तत्राद्या तञ्जापुरी-सरस्वतीमहाल् कोशालयीया D No. 6217 B C No. 2174 संख्याङ्किता। तस्याः 'क' इति चिह्नम्। तस्याः विवरणं यथा—

### तत्त्वचिन्तामणिप्रकाशव्याख्या—तर्कचूडामणिः

6217 Burnell catalogue No. 2174. Page 115. Right Column. Substance—paper. size—13×5 inches. sheets—399. lines—10 to a page. script—Devanagari. No. of granthas—13700. Author — Dharmarāja. Complete. From Anumāna to Sabda. Not printed.

Beginning:—

श्रीगणेशाय नमः। अविघ्नमस्तु। शुभमस्तु।
श्रीरामचन्द्राय नमः

कावेरीवारिपानप्रतिहततमसां मण्डिते पण्डितानां
वृन्दैः श्रीरामचन्द्रस्तुतिवलविशदादेशतन्त्रार्थसारः।
देशे विख्यातवासो विविधगुरुकृपालेशतो लब्धबोधो
न्यायाब्धिस्तर्कचूडामणिरिह कुरुते बह्वृचो धर्मराजः॥

त्रेताग्निधूमाकुलवीथिकाङ्गने गृहे गृहे यत्र वसन्ति सूरयः।
अधीतसर्वश्रुतयः कथान्तरे विनिर्जितप्रत्यनुमानवेदिनः॥

तत्र कण्डरमाणिक्यग्रामरत्ननिवासिना।
मणिप्रकाशविवृतिर्धर्मराजेन तन्यते॥

दशानामपि टीकानां भङ्गं भङ्गं क्वचित् क्वचित्।
अनुमानप्रकाशस्य विवृतिं करवाण्यहम्॥

आरब्धपरिसमाप्तये मङ्गलमाचरितं शिष्यशिक्षायै ग्रन्थतो निबध्नाति— प्रणयेति । विघ्नध्वंसमिति । यद्यपि ग्रन्थपरिसमाप्तिरेका प्रार्थनीया तथापि सति विघ्नध्वंसे लोकान्तरगतकारणादेव समाप्तिरिति विघ्नध्वंसमात्रं प्रार्थितम् । अत एव मङ्गलस्य विघ्नध्वंसमात्रं फलम् इत्युक्तम् । स्वकर्तव्यग्रन्थोपादेयता-हेतुभूतं संप्रदायाभिज्ञत्वं स्वस्य दर्शयति—निशम्येति ।

End:

यद्यपि 'अमन्त्रकं तु' इति वचनात् वृषोत्सर्जनकर्मणि विद्याप्रयुक्तिर-प्रसक्ता, तथापि विद्याप्रयुक्तिभयमिव भयं विद्याप्रयुक्तिभयमित्यर्थो बोध्यः । अनेका-यासयुक्तकर्मकल्पनं नाभयेनेति यावत् । नन्वेवं श्राद्धविधिना तदुपयुक्तमन्त्र-कल्पन शूद्रस्यापि स्यादत आह—श्राद्धादाविति । विशेषश्रुतेरिति सूतं विशेषस्य श्रूयमाणत्वादित्यर्थः । उत्तरो ग्रन्थः स्पष्टार्थः ।

Colophon:

इति श्रीमत्कण्डरमाणिक्यग्रामवासिना त्रिवेदिनारायणयज्वानुजधर्मराजा-ध्वरीन्द्रेण कौण्डिन्येन विपश्चिता विरचिते तर्कचूडामणौ शब्दखण्डः समाप्तः ।

क्वाहं मन्दतरप्रज्ञः क्व च चिन्तामणिः खरः ।
तथापि परिहासाय कृता टीका विपश्चिताम् ॥

Remarks:

The Ms. is in a fairly good condition. The author of this work is Dharmarājādhvarin of the village of Kaṇḍaramāṇikkam in Tanjore District. He is the same as the author of the *Yuktisaṇgraha* and the *Vedantaparibhāṣā*. He should have flourished in the 17th century A. D. He belonged to the Ṛg–Veda and the Kauṇḍinya-gotra. The colophon gives the name of his elder

brother also as Trivedi Nārāyaṇa. From the first verse, we see that he had the title of Tarkacūdāmani, and the colophon gives that name to the work also. It seems he has commented upon Rucidatta from *Anumāna-khaṇḍa* only. Dr. Burnell's remark that he is the son of Trivedi Nārāyaṇayajjvan is incorrect as it is clear from the colophon of the Ms. that the latter is the elder of Dharmarāja. परं तु अनन्तरतालकोशपुष्पिकादर्शनेन त्रिवेदि-नारायणपुत्रत्वमेषामवगम्यते ।

द्वितीया—अडयार् कोशालयस्था TR 536 संख्याङ्किता । तस्याः प्रति-लिपिं कारयित्वा तस्याः उपयोगः कृतः । तस्याः 'ख' इति चिह्नम् । अत्रानु-मानखण्डे आदितः हेत्वाभासप्रकरणे किंचिद्दूरपर्यन्तं लभ्यते ।

तृतीया—मद्रास् राजकीयहस्तलिखितपुस्तकभाण्डागारस्था D. No. 4102 संख्यायाङ्किता तालपत्रमयी मातृका । तस्याः 'ग' इति चिह्नम् । तस्याः विवरणं यथा—

No. 4102 तत्त्वचिन्तामणिप्रकाशव्याख्या — तर्कचूडामणिः Palm leaf. size, 17½ × 1¼ inches. page, 277. lines 8 on a page. character Grantha. condition, fair. Appearance old.

Contains Anumāna to the end of Mokṣavāda.

Beginning:

.... .... .... ....मप्रतिहततममां मण्डिते पण्डितानां
बृन्दैः श्रीरामचन्द्रस्मृतिबलविशदाशेषतन्त्रार्थसारः ।
देशे विख्यातनामो विविधगुरुकृपालेशतो लब्धबोधो
न्यायाब्धि तर्कचूडामणिमिह कुरुते बह्वृचो धर्मराजः ॥

त्रेताग्निधूमाकुलवीथिकाङ्गणे गृहे गृहे यत्र वसन्ति सूरयः ।
अधीतसर्वश्रुतयः कथान्तरे विनिर्जितप्रत्यनुमानवादिनः ॥
तत्र कण्डरमाणिक्कग्रामरत्ननिवासिना ।
मणिप्रकाशविवृतिर्धर्मराजेन तन्यते ॥

**End:**

न्यायशास्त्रजन्यबोधस्योपयोग इत्याह—इतरेति । सिद्धान्तिग्रन्थत्वशङ्कां वारयति—ज्ञानेति । समुच्चमाह— ज्ञानेति । उत्तरग्रन्थः स्पष्टार्थः ।

**colophon:**

इति धर्मराजविरचिते तर्कचूडामणौ मोक्षवादः समाप्तः । इति श्रीमत्कण्डरमाणिक्कग्रामरत्ननिवासिना त्रिवेदिनारायणात्मजेन धर्मराजेन विरचिते तर्कचूडामणौ अनुमानपरिच्छेदः समाप्तः ।

अस्याः प्रतिलिपिं कारयित्वा संपादने उपयोगः कृतः ।

चतुर्थी—तञ्जापुरसरस्वतीमहालपुस्तकालयीया E No 6220 संख्याङ्किता अपूर्णा मातृका । तस्याः (घ) इति चिह्नम् । तद्विवरणं यथा—

तत्त्वचिन्तामणिप्रकाशव्याख्या

Paper. size — 10 × 4½ inches. sheets—22 (129-150) linse 10 to a page. Script—Devanagari. No, of granthas — 550. incomplete. fragment.

अत्र व्यतिरेक्यनुमानप्रकरणे मध्यतः आरभ्य अर्थापत्तिप्रकरणान्तं, अवयवप्रकरणप्रारम्भे च कश्चिद्भागः उपलभ्यते ।

एवमेतेषां कोशानां साहाय्येन यथामति संशोध्य प्राकाश्यं नीयतेऽयं ग्रन्थः । तत्र प्रत्यक्षखण्डः मद्रास् नगरस्थ 'रत्न'मुद्रणालये मुद्रापितः । तत्र यन्त्रदोषाभावात् लिपिदोषाभावाच्च मुद्रणं सुष्ठु संपन्नम् । अस्यानुमानभागस्य

मुद्रणं तिरुपतिस्थ—श्रीनिवासमुद्रणालये संपन्नम् । विलम्बो मा भूदिति मत्वा अधिकारिभिः अस्मिन्मुद्रणालये मुद्रणव्यवस्था अकारि । परं तु मुद्रितपत्रेषु (Proofs) अक्षराणि सम्यगेव संलग्नानि । अन्तिमपत्रेषु तु लिपीनां यन्त्रारोपणकाले यन्त्रदोषात् प्रायः सर्वेष्वक्षरेषु उपरितनरेखाः अधस्तनरेखाश्च यथा े ै ॅ ि ो ु ृ ू : इत्यादयः नैव संलग्नाः । ताः रेखाः बहुत्र न दृश्यन्ते पुस्तके । अतो वाचकमहाशयान् प्रार्थये अवर्जनीयापतिताम् एतां न्यूनतां कृपया क्षमन्तामिति ।

## कृतज्ञतानिवेदनम्

महतोऽस्य कार्यस्य प्राथमिकं निर्देशं कृतवतां दिवं गतानां विख्यातानां प्राध्यापकानां डा० वे० राघवन्महोदयानां कृतज्ञतां प्रथमतः निवेदयामि ।

अस्यानुमानभागस्य प्रकाशनार्थं प्रयासं स्वीकृतवतां विद्यापीठाधिकारिणां राष्ट्रियसंस्कृतसंस्थानाधिकृतानां च हार्दस्य कृतज्ञत्वस्य प्रकटनेन धन्यमात्मानं मन्ये ।

उपयुक्तानां सूचीनां निर्माणे उपकृतवतां विद्यापीठस्य अनुसन्धानविभागस्य अध्यक्षाणां ड० आर्. महादेवन् महोदयानां सविधे भवामि कृतज्ञः ।

बहुषु कार्येषु सत्स्वपि सावधानं ग्रन्थमिममवलोक्य प्रस्तावनालेखनेनानुगृहीतवतां विदितवेदितव्यानां पण्डितवर्याणां डा० मल्लादि. बालसुब्रह्मण्यमहाशयानां संनिधौ हार्दीं कृतज्ञतामाविष्करोमि ।

समुचिते समये ग्रन्थमेतं मुद्रापितवतां दक्षिणप्रान्ते देवनागरीलिपिमुद्रणालयपरिपालनमशक्यमिति दशायामपि कथंचित् तया लिप्या मुद्रण निर्वहतां तिरुपतिस्थश्रीनिवासमुद्रणालयाधिकारिणां श्रीरामानुजाचार्यमहाभागानां सविधे कृतज्ञतावाकं व्याहरामि ।

अपेक्षितानां मातृकाणां प्रतिलिपिद्वारा साक्षाच्च दानेन उपकृतवतां मद्रास् राजकीयकोशालयाधिकारिणां अडयार् कोशालयाधिकारिणां तञ्जापुरीस्थ-सरस्वतीमहाल् कोशालयाधिकारिणां च संनिधौ कृतज्ञतां प्रकाशयामि ।

मदीयसेवाकाले यथा इतरे भागा अपि प्रकाशमागच्छेयुः तथा कृपां मयि वर्षतु इति भगवन्तं वेंकटाचलाधीशं श्रीनिवासं प्रार्थये ।

यद्यत्रावधानतोऽनवधानतः प्रकारान्तरतो वा दोषाः संवृत्ताः तान् क्षमन्तां गुणैकपक्षपातिनो विद्वांस इति प्रार्थये ।

इति विद्वज्जनविधेयः

तिरुपतिः
31—3—82

एन्. एस्. रामानुजताताचार्यः
(न्यायव्याकरणमीमांसावेदान्तशिरोमणिः,
विद्यावारिधिः, तर्कवाचस्पतिः, शास्त्ररत्नाकरः,
चतुश्शास्त्रप्रवीणः)

## प्रकरणार्थसंग्रहः

## अनुमितिप्रकरणम्

अत्र प्रकरणे प्रत्यक्षानन्तरम् उपमानात्प्राक् च अनुमाननिरूपणे संगतिहेतू, अनुमानलक्षणम्, अनुमानप्रामाण्यमिति त्रयो विषया: मणौ प्रतिपाद्यन्ते ।

**संगतिः**

प्रत्यक्षानन्तरमनुमाननिरूपणे उपजीव्योपजीवकभावः संगतिः । उपजीव्यं कारणम्, उपजीवकं कार्यम् । प्रत्यक्षमुपजीव्यम्, अनुमानमुपजीवकम् । प्रत्यक्षानुमानप्रमाणयोः प्रत्यक्षानुमित्यात्मकप्रमित्योश्च हेतुहेतुमद्भावः संगतिः । तथा हि— इन्द्रियेण महानसादौ व्याप्तिप्रत्यक्षादेव अनुमानं भवति । व्याप्तिस्मरणरूपानुमानं प्रति व्याप्तिप्रत्यक्षस्यानुभवविधया कारणत्वात् । तथा चेन्द्रियात्मकस्य प्रत्यक्षप्रमाणस्य व्याप्तिप्रत्यक्षद्वारा व्याप्तिस्मरणात्मकानुमानप्रमाणं प्रति हेतुत्वम् । अनुमित्यात्मकप्रमितेः परामर्शात्मकमानसप्रत्यक्षजन्यत्वात् प्रमित्योः कार्यकारणभावः । इत्थं च प्रत्यक्षानुमानप्रमाणयोः परंपरया कार्यकारणभावः प्रत्यक्षानुमितिप्रमित्योः साक्षात्कार्यकारणभावश्च संगतिरिति फलितम् । तदेतन्मनसिकृत्योक्तं **प्रकाशे** (पृ. 1) "अत्र प्रत्यक्षस्यानुमानं प्रति साक्षात्परंपरया वा हेतुत्वमुपजीव्यत्वम्" इति । अतः कारणनिरूपणानन्तर्यं कार्यनिरूपणस्य युक्तम् ।

ननु यत्र स्पर्शेन वायोरनुमानानन्तरमनुमित्यात्मकज्ञानलक्षणप्रत्यासत्त्या वायुं विषयीकुर्वत् 'वायौ रूपं नास्ती'त्याकारकं प्रत्यक्षं जायते तत्र प्रत्यक्षस्यानुमानोपजीवकत्वमस्तीति अनुमाननिरूपणानन्तरमेव प्रत्यक्षं कुतो न निरूपितमिति चेत्—अत्र **प्रकाशकाराः** (पृ. 1) प्राहुः—'तथापि न प्रत्यक्षत्वावच्छेदेन तथा, प्रत्यक्षं तु अनुमानत्वावच्छेदेनैव तथा' इति । प्रत्यक्षप्रमाणसामान्यं

नानुमानजन्यं, प्रत्यक्षप्रमाणान्तर्गतयोः मनःश्रोत्रयोः अजन्यत्वात्। अनुमानं च नखिलमेव मनोरूपेन्द्रियजन्यमिति, तथा प्रत्यक्षप्रमितिसामान्यं नानुमितिजन्यं कासांचित् उपनीतप्रत्यक्षप्रमितीनां तथात्वेऽपि घटादिप्रत्यक्षाणामनुमितिजन्यत्व-विरहादिति च तेषामाशयः।

परं तु ईश्वरीयव्याप्तिज्ञानस्यापि अनुमितिस्वरूपयोग्यत्वेनानुमापकतया तत्र प्रत्यक्षजन्यत्वाभावेन प्रत्यक्षानन्तरमनुमाननिरूपणस्याप्यनुपपत्तिरिति शङ्का भवति।

अत्रेदं तत्त्वम्। न हि यत् यत्संगतं भवति तत् तदनन्तरं निरूपणीय-मिति नियमः, येनानुमाननिरूपणानन्तरं प्रत्यक्षनिरूपणापत्तिः। किं तु यत् यदनन्तरं निरूप्यं भवति तत् तत्संगतं भवेत् इत्येव नियमः, 'नासंगतं प्रयुञ्जीत' इत्यभियुक्तोक्तेः। एवं च कारणे कार्ये वा निरूपिते किमस्य कार्यं कारणं वेति जिज्ञासोदयेन उपजीवकत्वमुपजीव्यत्वं च द्वयमपि संगतिः। अत एव चिन्तामणौ अनुमितिनिरूपणानन्तरमनुमाननिरूपणमपि संगच्छते। तदुक्तं दीधितौ (P. 14) 'न हि संगतिरनन्तराभिधानव्याप्ता' इति।

## संगतौ सूत्रकारसंमतिः

'अथ तत्पूर्वकमनुमानम्' न्या. सू. (1–1–5) इत्यादिसूत्रे अनुमानस्य प्रत्यक्षपूर्वकत्वं वदतः सूत्रकारस्य प्रत्यक्षानन्तरमनुमाननिरूपणे अनुमानगतं प्रत्यक्षोपजीवकत्वं संगतिरित्यभिमतम्। तथा च **भाष्यम्**—

> तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः संबन्धदर्शनम्, लिङ्गदर्शनं चाभिप्रेतम् इति।

**तात्पर्यटीकायां वाचस्पतिमिश्रैः स्पष्टीकृतं च—(.P 303)**

> अथेत्यानन्तर्ये। उक्तं प्रत्यक्षम् अनुमानस्य हेतुः। अथेदानीमनुमानं हेतुमत् व्युत्पाद्यत इत्यर्थः इति।

## उपमानात् प्रागनुमाननिरूपणे हेतुः

अनुमानस्येव उपमानस्यापि प्रत्यक्षोपजीवकत्वमस्ति, गोसादृश्यविशिष्टपिण्ड-दर्शनमुपजीव्यैव गवयो गवयपदवाच्य इत्युपमितेरुत्पत्तेः । तथा च संगतितौल्ये प्रत्यक्षनिरूपणानन्तरमुपमानमेव कुतो न निरूप्यत इति शङ्कानिरासायोक्तं **मणौ** (पृ. 1)—'बहुवादिसंमतत्वादुपमानात्प्राक्' इति । अनुमानप्रामाण्यविषये संप्रतिपद्यमाना बहवः, विप्रतिपद्यमानाः स्वल्पाः । उपमानप्रामाण्यविषये तु विप्रतिपद्यमाना बहवः, संप्रतिपद्यमानाः स्वल्पाः । तथा चोपमानापेक्षया अनुमानस्य बहुवादिसंमतत्वात् आदौ अनुमानं निरूप्यते । किं च उपमानप्रामाण्यनिरूपणावसरे उपमानस्यानुमानेऽन्तर्भाववादिनां वैशेषिकादीनां मतं निरस्य अनुमाने तस्यान्तर्भावः साधयिष्यते । एतच्चानुमानस्वरूपं येन सम्यग्ज्ञातं भवति तं प्रत्येव कर्तुं शक्यम् । तदर्थमपि उपमानात् प्राक् अनुमानं निरूप्यते । तदुक्तं **प्रकाशे** (पृ. 3)—

> यत्रोपमानं परैरन्तर्भावनीयम्, यस्माच्चास्माभिर्बहिर्भावनीयम्, तदनुप-दर्शने उपमानमपि विचारयितुं न शक्यत इत्यनुमानप्राथम्यम्—

इति ।

## अनुमितिलक्षणम्

अनुमानस्यैव वस्तुतः आदौ लक्षणं वक्तव्यम् । परं तु अनुमितिकरणत्व-रूपस्यानुमानलक्षणस्य अनुमितिस्वरूपज्ञानं विना ज्ञातुमशक्यतया आदावनुमिति-लक्षणमुक्त्वा अनन्तरमनुमानलक्षणमुक्तं मणौ ।

'तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः' इत्यनुमितिलक्षणपरो **मणिग्रन्थः** (पृ. 5)

अत्र केचित्—व्याप्तिविशिष्टेति भावप्रधानो निर्देशः । व्याप्तिविशिष्टश्च पक्षधर्मता चेति द्वन्द्वसमासः । तेन व्याप्तिविशिष्टत्वपक्षधर्मत्वोभयप्रकारकज्ञानजन्यं

ज्ञानमनुमितिरिति व्याख्यान्ति । तत्त न युक्तम् । वह्न्याप्यधूमवानय पर्वत इति परामर्शे व्याप्तेः प्रकारत्वेऽपि व्याप्तिविशिष्टत्वस्याप्रकारतया लक्षणस्यासंभवापत्तेः ॥ पक्षधर्मत्वस्य संसर्गरूपत्वेन सर्वथैवाप्रकारतया असंभवापत्तेश्च ।

अन्ये तु—व्याप्तिविशिष्टश्चासौ पक्षधर्मश्चेति कर्मधारयोत्तरं तल्प्रत्ययः । कर्मधारयोत्तरस्तल्प्रत्ययश्च समस्यमानपदार्थतावच्छेदकयोः सामानाधिकरण्यं ब्रवीतीति व्युत्पत्तिः । अतः व्याप्तिविशिष्टत्वसमानाधिकरणा पक्षधर्मता लभ्यते । तथा च व्याप्तिविशिष्टत्वसामानाधिकरण्येन पक्षधर्मतां यत् ज्ञानं विषयीकरोति तज्ज्ञानजन्यं ज्ञानमनुमितिरिति व्याचक्षते । तदपि न युक्तम् । पूर्वोक्तपरामर्शस्य व्याप्तिविशिष्टत्व-सामानाधिकरण्याविषयत्वात् तेन रूपेण पक्षधर्मत्वाविषयकत्वाच्च ।

तस्मात् व्याप्तिविशिष्टं, च तत् पक्षधर्मताज्ञानं चेत्येव कर्मधारयः । व्याप्ति-विशिष्टमित्यस्य व्याप्तिप्रकारकमित्यर्थः । पक्षधर्मताज्ञानमित्यस्य पक्षधर्मत्वविषयकं ज्ञानमित्यर्थः । तथा च व्याप्तिप्रकारकं पक्षधर्मत्वविषयकं च यज्ज्ञानं तज्जन्यं ज्ञानमनुमितिरिति व्याख्यानमेव युक्तमिति निरूपयन्ति **प्रकाशकृतः** (पृ. 5) । **दीधितिकृतोऽपि** (पृ· 50)—'व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत् पक्षधर्मता-ज्ञानं तज्जन्यमिति तु स्यात्' इति ग्रन्थेन प्रकाशकृतां व्याख्यानमन्वमन्यन्त । परं तु मणिकारोक्ते अस्मिन् लक्षणेऽपि अस्वारस्यं प्रकटयन्तः शिरोमणयः "साध्यादेर-ननुगमात् एकोपादाने अन्यानुमितौ दैवात् व्याप्तिविषयिण्यां च तस्यामव्याप्तिः परमवशिष्यते । सापि तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरसनीया" इत्यादिना जातिघटितानि लक्षणान्तराणि प्रादर्शयन् ।

## सूत्रप्रस्थानेऽनुमितिलक्षणप्रकारः

**न्यायसूत्रकारस्तु** 'अथ तत्पूर्वकं त्रिविधमनुमानम्' इति अनुमानविषयक-मेकमेव सूत्रं प्रणिनाय । 'अनुमानविशेषणार्थं सूत्रम् । तत्पूर्वकमनुमानमित्यनेन

समानासमानजातीयेभ्योऽनुमानं व्यवच्छिद्यते' इति तत्रत्यवार्तिकबलात् लक्षण-मप्यनुमानस्यात्र विवक्षितमित्यवगम्यते। अथेत्यत्र संगतिरभिप्रेता। तत्पूर्वकमित्यनेन अनुमानस्य लक्षणमुच्यते। त्रिविधं पूर्ववदित्यादिना अनुमानस्य विभागः। तथा च तात्पर्यटीका—(पृ. 303) "लक्ष्यं प्रमाणभेदमनुमानमनूद्य तत्पूर्वकमिति लक्षणं विधत्ते" इति।

अनुमीयतेऽनेनेत्यनुमानमिति करणव्युत्पत्त्या अनुमानशब्दः लिङ्गपरामर्श-मभिधत्ते। तत्पूर्वकमित्यत्र तच्छब्देन व्याप्तिप्रत्यक्षं लिङ्गप्रत्यक्षं चाभिप्रेयते। आदौ महानसादौ हेतुसाध्ययोर्व्याप्तिरूपसंबन्धस्य प्रत्यक्षं भवति। तदनन्तरं पक्षे पर्वतादौ हेतोः धूमस्य प्रत्यक्षं भवति। तदनन्तरं 'धूमो वह्निव्याप्य' इति व्याप्तिस्मृतिर्भवति। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति परामर्शो भवति। ततोऽनुमितिरिति क्रमः। अत्र परामर्शः अनुमानम्। तदनन्तरमनुमितेर्जाय-मानत्वात्। परामर्शश्च व्याप्तिप्रत्यक्षलिङ्गप्रत्यक्षाभ्यां व्याप्तिस्मृतिसहकृताभ्यां भवतीति प्रत्यक्षपूर्वकत्वमनुमानस्य। तथा च भाष्यम्—(पृ. 291):

> तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः संबन्धदर्शनं लिङ्गदर्शनं चाभि-संबध्यते। लिङ्गलिङ्गिनोः संबद्धयोर्दर्शनेन लिङ्गस्मृतिरभिसंबध्यते। स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते—इति।

यद्यप्येतद्भाष्यबलात् पक्षे लिङ्गदर्शनव्याप्तिस्मृतिभ्यामनुमितिरित्येव लभ्यते। मध्ये परामर्शात्मकविशिष्टज्ञानं न लभ्यते। तथापि वार्तिकात् मणिकारैः स्वीकृतः परामर्शः। तथा हि (पृ. 292)—

> लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षम्, लिङ्गदर्शनं च द्वितीयम्। बुभुत्सावतो द्वितीयाल्लिङ्गदर्शनात् संस्काराभिव्यक्त्यनन्तरकालं स्मृतिः। स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनम् अयं धूम इति। तदिद-

मन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं लिङ्ग-परामर्शरूपमनुमानं भवति—

इति वार्तिकग्रन्थः। अत एवास्य परामर्शस्य लिङ्गविषयकतृतीयप्रत्यक्ष-रूपत्वात् तृतीयलिङ्गपरामर्श इति नव्यग्रन्थेषु व्यवहारो भवति। यद्याप्यस्मादपि वार्तिकात् परामर्शस्य अयं धूम इत्याकारकत्वमेवावगम्यते न तु वह्निव्याप्यधूमवानयं पर्वत इत्याकारकत्वम्। तथापि व्याप्तिस्मृत्यनन्तरकालिकत्वोक्त्यैव स्मृत्युपनीत-व्याप्तिप्रकारेण धूमविषयकत्वं परामर्शस्य वार्तिकाभप्रतमिति निर्णयामः। स्पष्टी-कृतश्चायमर्थस्तात्पर्यटीकायाम्—(पृ. 311)

संबन्धस्मृतिसहकारिणा इन्द्रियेण स्वसाध्याविनाभूतलिङ्गविज्ञानं यदुपजायते तत् परामर्श इत्याख्यायते। तथाभूतलिङ्गगोचर एव चतुर्थो वाक्यावयव उपनय इत्याख्यायते—

इति। तस्मात् 'व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः' इति मणिकारैर्यल्लक्षणमुक्तं तत् सूत्रभाष्यादिसंमतमेव। परं तु सूत्रेण अनुमानशब्दवाच्यस्य परामर्शस्य तत्पूर्वकमिति लक्षणमुक्तम्। तज्जन्यत्वे सति ज्ञानत्वमनुमितेर्लक्षणं तु ऊहितुं शक्यमिति कण्ठरवेण नोक्तमिति ध्येयम्।

## अनुमानप्रामाण्यनिरूपणम्

यद्यपि सूत्रकारेण अनुमानाप्रामाण्यवादिमतनिराकरणपूर्वकम् अनुमानप्रामाण्यं न व्यवस्थापितम्। तथापि प्रमाणत्वेन सिद्धमनुमानमनूद्य तस्य लक्षणकथनेनैव अनुमानाप्रामाण्यं प्रतिक्षिप्तप्रायम्। तथा च टीकायाम् (पृ. ३०२)—

अत्रानुमानमिति सिद्धवत्प्रमाणविशेषरूपलक्ष्यानुवाद एव 'नाप्रत्यक्षं प्रमाणम्' इत्यप्रामाण्यम् अनुमानस्य सुदूरं प्रतिक्षिपति—

इति । प्रत्यक्षातिरिक्तं न प्रमाणमिति वादो न युक्तः। कासांचित् ज्ञानव्यक्तीनां प्रामाण्यमप्रामाण्यं वा यासां ज्ञानव्यक्तीनां पूर्वं प्रामाण्यमप्रामाण्यं वा निश्चितं तत्सा-धर्म्येणैव साधनीयम् । तथा साधनं चानुमानमेवेति कथमनुमानस्याप्रामाण्यम् ।

अपि च 'अनुमानमप्रमाणम्' इति चार्वाकस्य योऽयं वाक्यप्रयोगः सः अनुमानाप्रामाण्यविषयेऽज्ञानं संशयो विप्रतिपत्तिर्वा यस्य पुरुषस्य वर्तते तं प्रत्येवार्थ-वान् भवति । परपुरुषवर्तिनः अज्ञानसंशयविपर्यासाः प्रत्यक्षेणानवगम्यमानाः अनुमानेनैव ज्ञातव्या भवन्ति । न च यं पुरुषं प्रति 'अनुमानमप्रमाणम्' इति वाक्यं प्रयुज्यते तस्य पुरुषस्य वाक्यात् तदीयाज्ञानसंशयविपर्ययाः ज्ञायन्त इति वाच्यम् । त्वया प्रत्यक्षातिरिक्तस्य वाक्यस्यापि प्रामाण्यानङ्गीकारात् । न च पुरुष-विशेषमनुद्दिश्यैव अनुमानमप्रमाणमिति वाक्यं प्रयुज्यत इति वाच्यम् । उन्मत्तत्व-प्रसङ्गात् । न ह्यनुन्मत्तः कोऽपि लौकिकः परीक्षको वा पुरुषविशेषमनुद्दिश्य किमपि वाक्यं प्रयुङ्क्ते । तस्मादकामेनापि अनुमानप्रामाण्यमङ्गीकरणीयम् इति वाचस्पतिमिश्राः निरूपयन्ति । (पृ. 302—303)

## मणिकृतामनुमानप्रामाण्यनिरूपणप्रकारः

अत्रैवमनुमानप्रामाण्यमसहमानस्य चार्वाकस्याक्षेपः । सर्वेष्वप्यनुमानेषु उपाधि-शङ्कया व्यभिचारसंशयो भवति । अतः अनुमानमप्रमाणम् । यद्यपि सद्धेतुत्वे-नाभिमतेषु योग्यानामुपाधीनां योग्यानुपलब्ध्यैवाभावो निश्चितः । तथापि अयोग्या-नामुपाधीनामनुपलब्ध्या अभावो न निश्चेतुं शक्यत इति अतीन्द्रिया उपाधयो भविष्यन्तीति शङ्का भवितुमर्हति । तन्मूलाच्च व्यभिचारसंशयः स्यात् । न च तथाविधो व्यभिचारसंशयः भूयस्सहचारदर्शनान्निवर्तिष्यत इति वाच्यम् । यत्र पार्थिवत्वं तत्र लोहलेख्यत्वमिति पार्थिवत्वलोहलेख्यत्वयोः शतशः सहचार-दर्शनेऽपि वज्रमणौ पार्थिवे लोहलेख्यत्वाभावेन व्यभिचारदर्शनात् भूयस्सह-चारज्ञानस्य व्यभिचारज्ञानाप्रतिबन्धकत्वात् । एवं चानुमानस्याप्रामाण्ये स्थिते

अनुमानाधीनप्रथमसंकेतग्रहमूलकशब्दस्याप्यप्रामाण्यम्, अनुमानमूलकातिदेशवाक्यरूपशब्दमूलकत्वादुपमानस्य चाप्रामाण्यं सिद्धमिति प्रत्यक्षातिरिक्तं न प्रमाणमिति ।

अत्र समाधानं तु — अप्रमाणभूतानामनुमानानां यथा व्यभिचारज्ञानविषयत्वं तथा प्रमाणत्वेनाभिमतानामनुमानानामपि व्यभिचारज्ञानविषयत्वमस्ति, अतोऽनुमानमप्रमाणमिति हि भवतामभिमतम् । इदं चानुमानप्रामाण्यं विना न निर्वहति । विवादाध्यासितमनुमानमप्रमाणम् व्यभिचारसंशयविषयत्वात् संप्रतिपन्नानुमानवत् इति अनुमानेनैव अनुमानाप्रामाण्यस्य साधनीयत्वात् । न च अनुमानेनानुमानाप्रामाण्यं न साधयामः, किं तु 'प्रत्यक्षातिरिक्तं न प्रमाणम्' इति शब्देन तत् साधयाम इति वाच्यम् । यः अनुमानाप्रामाण्यविषये संशयविपर्ययवान् तं प्रति हि 'प्रत्यक्षातिरिक्तं न प्रमाणम्' इति शब्दः अर्थवान् । परस्य च संशयो विपर्ययो वा अप्रत्यक्षत्वात् अनुमानेनैवावगन्तव्यः । तथा चानुमानमनुपजीव्य दर्शितवाक्यमपि न स्वार्थसाधनाय प्रभवतीति । अपि च 'प्रत्यक्षातिरिक्तं न प्रमाणम्' इति वाक्यं प्रमाणं न वा? आद्ये स्वव्याघातः । प्रत्यक्षातिरिक्तस्योक्तवाक्यस्य प्रामाण्याभ्युपगमात् । द्वितीये उक्तवाक्यस्याप्रमाणतया प्रत्यक्षातिरिक्ताप्रामाण्यसाधनासमर्थतया प्रत्यक्षातिरिक्तस्य प्रामाण्यं सुस्थिरमिति । अपि चानुमानं यदि न प्रमाणं तर्हि प्रत्यक्षस्यापि प्रामाण्यं न सिध्येत् । प्रामाण्यस्यानुमेयत्वात् स्वतःप्रामाण्यपक्षस्य अनभ्यासदशायां प्रामाण्यसंशयानुपपत्त्या प्रामाण्यवादे दूषितत्वात् ।

## पञ्चलक्षणी

पूर्वं स्थापितमनुमानप्रामाण्यं व्याप्तिग्रहाधीनम् । तत्र च किं व्याप्तिस्वरूपमिति जिज्ञासायां व्यभिचाराभावरूपाणि पञ्च व्याप्तिस्वरूपाण्यनूद्य तेषां केवलान्वयिसाध्यकसद्धेतौ साध्याभावाप्रसिद्ध्या अव्याप्तिदूषितत्वमुक्तं पञ्चलक्षणीप्रकरणे ।

ततः विद्वद्भ्यां सिंहव्याघ्रनामकाभ्यामुक्ते व्याप्तिलक्षणे अनूद्य ते अपि साध्यानधिकरणानधिकरणत्वपर्यवसिते केवलान्वयिनि साध्यानधिकरणाप्रसिद्ध्या अव्याप्तिप्रसक्त्या दूषिते ।

## व्यधिकरणम्

इदं वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिसाध्यकहेतौ साध्याभावाप्रसिद्ध्या हि 'साध्याभाववदवृत्तित्वम्' इत्यादीनि व्याप्तिलक्षणानि दूषितानि । तत्र सौन्दडोपाध्याया वदन्ति । साध्याभावाप्रसिद्धिनिबन्धनेयमव्याप्तिर्न भवति । तथा हि अभावो द्विविधः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावश्चेति । प्रतियोगिवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावः आद्यः, यथा घटत्वेन घटो नास्तीति । प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावो द्वितीयः यथा घटत्वेन पटो नास्तीति । तत्र केवलान्वयिसाध्यकस्थले यद्यपि समानाधिकरणधर्मावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावोऽप्रसिद्धः वाच्यत्वत्वेन वाच्यत्वाभावस्य कुत्राप्यसत्त्वात् । सर्वत्र वाच्यत्वत्वेन वाच्यत्वस्यैव सत्त्वात् । तथापि व्यधिकरणधर्मावच्छिन्नसाध्यनिष्ठप्रतियोगिताकाभावः प्रसिद्ध एव । वाच्यत्वरूपप्रतियोगिन्यविद्यमानः यः समवायित्वरूपो धर्मः तेन रूपेण वाच्यत्वाभावस्य सर्वत्र सत्त्वात् । न हि वाच्यत्वं समवायित्वेन रूपेण कुत्राप्यस्ति । तथा च समवायित्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगिताकाभावरूपस्य साध्याभावस्य 'समवायित्वेन वाच्यत्वं नास्ति' इति प्रतीतिसिद्धस्य सर्वत्र वर्तमानतया साध्याभावाप्रसिद्धिनिबन्धनो दोषो नास्तीति ।

इदं च **सौन्दडाचार्यमतं** मणावित्थं निरस्तम् । उक्तरीत्या साध्याभावस्य प्रसिद्धावपि तादृशसाध्याभाववति घटादौ ज्ञेयत्वरूपहेतोर्वर्तमानतया तस्य व्यभिचारित्वापत्तिः । यदि तु साध्याभाववदवृत्तित्वरूपव्यभिचारशरीरे साध्याभावपदेन तत्तद्व्यधिकरणधर्मावच्छिन्नाभावमादाय दोषवारणाय साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगिताका-

भाव एव विवक्षितः । समवायितया वाच्यत्वाभावस्य चाताद्दशतया न तमादाय व्यभिचारित्वापत्तिः इति विभाव्यते, तर्हि व्यभिचाराभावरूपव्याप्तिशरीरेऽपि तादृशसाध्याभाव एव विवक्षणीयः । अन्यथा तत्तद्वह्न्यभावमादायाव्याप्त्यापत्तेः व्याप्तेरव्यभिचाररूपतानुपपत्तेश्च । इत्थं च साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वमेव व्याप्तिः । समवायितया वाच्यत्वाभावस्य प्रसिद्धावपि न तस्य साध्यतावच्छेदकवाच्यत्वत्वावच्छिन्नप्रतियोगिताकत्वमिति न लक्षणघटकता । वाच्यत्वत्वावच्छिन्नवाच्यत्वनिष्ठप्रतियोगिताकोऽभावश्चाप्रसिद्ध इति अप्रसिद्धिनिबन्धनाव्याप्तिस्तदवस्था । वस्तुतस्तु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव एव अप्रामाणिकः । अभावबुद्धिर्हि विशिष्टवैशिष्ट्यावगाहिमर्यादामनतिवर्तमाना प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानमपेक्षते । समवायित्वविशिष्टवाच्यत्वं चाप्रसिद्धमिति समवायित्वेन वाच्यत्वाभावबुद्धिर्न भवितुमर्हतीति । अतोऽप्रसिद्धिनिबन्धनाव्याप्तिर्दुरुद्धरेति मणौ निरूपितम् । व्यधिकरणधर्मावच्छिन्नाभावमवलम्ब्य प्रकरणस्यास्य प्रवृत्तत्वात् व्यधिकरणमिति व्यपदेशः ।

## पूर्वपक्षप्रकरणम्

अस्मिन् प्रकरणे द्वादश व्याप्तिलक्षणानि अनूद्य दूषितानि । तथा हि—साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिरित्याद्यं लक्षणम् । वह्निमान् धूमादित्यादौ वह्न्यसामानाधिकरण्याधिकरणं घटादि तदनधिकरणत्वं धूमेऽस्तीति समन्वयः । अत्र साध्यासामानाधिकरण्यपदेन साध्यानधिकरणाधिकरणकत्वविवक्षायां केवलान्वयिनि साध्यानधिकरणाप्रसिद्ध्याव्याप्तिः । साध्याधिकरणानधिकरणकत्वविवक्षायां वह्निमान् धूमादित्यादौ यत्किंचिन्महानसीयवह्न्यधिकरणमहानसानधिकरणकत्वस्यैव पर्वतीयधूमे सत्त्वेन तदनधिकरणत्वविरहादव्याप्तिश्च इति दूषणमुक्तम् ।

स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति द्वितीयं लक्षणम्। स्वपदं हेतुपरम्। वह्निमान् धूमादित्यादौ स्वं धूमः तदधिकरणवृत्तिर्योऽत्यन्ताभावः न वह्न्यभावः अपि तु घटाद्यभावः। तदप्रतियोगि यत् साध्यं वह्निः तदधिकरणवृत्तित्वं धूमेऽस्तीति लक्षणसमन्वयः। परं तु सर्वेषां वह्नीनां चालिनीन्याये तत्तद्धूमसमानाधिकरणात्यन्ताभावप्रतियोगितया अव्याप्त्यापत्त्या इदं लक्षणं दूषितम्। अपि च इदं संयोगि द्रव्यत्वादित्यादावव्याप्यवृत्तिसाध्यकसद्धेतौ साध्यस्य संयोगस्य द्रव्यत्वसमानाधिकरणात्यन्ताभावप्रतियोगितया अव्याप्तिश्चेति दूषणमभिहितम्।

साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं व्याप्तिरिति तृतीयं व्याप्तिलक्षणम्। धूमवन्निष्ठो योऽन्योन्याभावः न वह्निमद्भेदः अपि तु घटादिमद्भेदः तत्प्रतियोगि घटादिमत् तदप्रतियोगि वह्निमत् तत्कत्वं धूमेऽस्तीति समन्वयः। परं तु कपिसंयोगी एतद्वृक्षत्वादित्यादौ साधनवति वृक्षे वर्तते यो भेदः 'मूले वृक्षः कपिसंयोगवान्न' इति प्रतीतिसिद्धः तत्प्रतियोग्येव कपिसंयोगवान् भवति, न तु तदप्रतियोगीति अव्याप्त्यापत्त्या, साधनवन्निष्ठान्योन्याभावाप्रतियोगि साध्यवद्यस्येति विग्रहे व्याप्यव्यापकभावरूपसंबन्धस्यैव षष्ठ्यर्थतया आत्माश्रयापत्त्या च लक्षणमिदमदूषि।

साधनसमानाधिकरणयावद्धर्मनिरूपितवैयधिकरण्यानधिकरणसाध्यसामानाधिकरण्यमिति चतुर्थं व्याप्तिलक्षणम्। साधनसमानाधिकरणाः यावन्तो धर्माः तद्वैयधिकरण्यानधिकरणं यत् साध्यं तत्सामानाधिकरण्यमिति तदर्थः। वह्निमान् धूमात् इत्यादौ धूमाधिकरणपर्वतादिवृत्तयो यावन्तः धर्माः तत्सामानाधिकरण्यमेव साध्येऽस्ति न तु तद्वैयधिकरण्यमिति तद्वैयधिकरण्यानधिकरणत्वस्य साध्ये सत्त्वात् तत्सामानाधिकरण्यस्य धूमे सत्त्वाल्लक्षणसमन्वयः। अत्र वैयधिकरण्यपदेन तदनधिकरणाधिकरणकत्वस्य विवक्षायां धूमसमानाधिकरणयावद्धर्मान्तर्गतप्रमेयत्वा-

नधिकरणाप्रसिद्ध्या अव्याप्तिः । तदधिकरणानधिकरणत्वविवक्षायां किमिदं तदधिकरणानधिकरणत्वं नाम ? किं तद्वन्निष्ठात्यन्ताभावप्रतियोगित्वं किं वा तद्वन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वम् ? उभयथापि वह्निमान् धूमादित्यादौ धूमसमानाधिकरण यावन्तो धर्माः तद्वन्महानसादिनिष्ठो यः समवायेन वह्न्यभावः समवायेन वह्निमद्भेदो वा तत्प्रतियोगित्वरूपस्य तत्प्रतियोगितावच्छेदकत्वरूपस्य वा वैयधिकरण्यस्य वह्नौ सत्त्वेन तादृशवैयधिकरण्यानधिकरणत्वं साध्ये नास्तीत्यव्याप्तिरिति लक्षणमेतद्दूषितम् ।

अनौपाधिकः संबन्धो व्याप्तिरिति पञ्चमं लक्षणम् । उपाधिरहितत्वे सति साध्यसामानाधिकरण्यं व्याप्तिरिति यावत् । व्यभिचारिण्यतिव्याप्तिवारणाय सत्यन्तम् । उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः । न च व्यापकत्वं व्याप्तिनिरूपकत्वम् । तथा च व्याप्तिलक्षणे व्याप्तेः प्रवेशात् आत्माश्रय इति वाच्यम् । साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वस्य व्यापकत्वरूपत्वात् । उपाधिरहितत्वस्य बहुधा विकल्पेन तत्र दोषप्रदर्शनपूर्वकं लक्षणमिदं दूषितम् ।

कार्त्स्न्येन संबन्धो व्याप्तिरिति षष्ठं व्याप्तिलक्षणम् । कृत्स्नेन साधनेन साध्यस्य संबन्धो व्याप्तिः इति वा कृत्स्नेन साध्येन हेतोः संबन्धो व्याप्तिरिति वा द्वेधा तस्य व्याख्यानं कर्तुं शक्यम् । आद्ये यत्र हेतुरेकव्यक्तिर्भवति तत्र अशेषानेकत्वरूपस्य कार्त्स्न्यस्याभावात् अव्याप्तिः । अशेषत्वमात्रविवक्षायामपि अशेषधूमसंबन्धस्य प्रत्येकवह्नावभावाद्वह्निमान् धूमादित्यादावव्याप्तिः । द्वितीये एकव्यक्तिसाध्यकसद्धेतौ साध्ये कार्त्स्न्याभावादव्याप्तिः सकलवह्निसंबन्धः एकस्मिन् धूमे नास्तीत्यव्याप्तिश्चेति लक्षणमिदं दूषितम् ।

यावत्साधनाश्रयाश्रितसाध्यसंबन्धो व्याप्तिरिति सप्तमं लक्षणम् । यावन्तः साधनाश्रयाः तदाश्रितं यत् साध्यं तत्सामानाधिकरण्यं व्याप्तिरित्यर्थः । वह्नि-

मान् धूमादित्यादौ धूमाश्रये पर्वतादो वह्नेराश्रितत्वात् समन्वयः । धूमवान् वह्नेरित्यादो साधनवह्न्याश्रययावदन्तर्गतायोगोलकाश्रितत्वं साध्ये धूमे नास्तीति नातिव्याप्तिः ।

अत्र साध्यस्य प्रत्येकवह्नेः यावत्सु साधनाश्रयेषु महानसादिषु आश्रितत्वं नास्तीत्यव्याप्त्या लक्षणमिदं दूषितम् ।

साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यमिति अष्टमं लक्षणम् । साधनसमानाधिकरणाः यावन्तो धर्माः तत्समानाधिकरणं यत् साध्यं तत्सामानाधिकरण्यं व्याप्तिरिति तदर्थः । वह्निमान् धूमादित्यादौ धूमाधिकरणपर्वतादिवृत्तयो यावन्तः धर्माः पर्वतत्वादयः तदधिकरणपर्वतादिवृत्तित्वं वह्नेरस्तीति तदधिकरणवृत्तित्वमादाय लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ तु वह्निसमानाधिकरणयावद्धर्मान्तर्गतायोगोलकत्वसामानाधिकरण्यं साध्ये धूमे नास्तीति नातिव्याप्तिः ।

परं तु साधनसमानाधिकरणानां पर्वतत्वमहानसत्वादीनां यावतां धर्माणामधिकरणस्यैकस्याप्रसिद्ध्या लक्षणेऽत्रासंभवो दोषः ।

स्वाभाविकः संबन्धो व्याप्तिरिति नवमं लक्षणम् । स्वाभाविकपदस्य स्वभावजन्य इति वा स्वभावाश्रित इति वा अर्थः ? आद्ये द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः । पृथिवीत्वजातेरजन्यत्वात् । द्वितीये शब्दादावाकाशाश्रिते आकाशव्याप्यतापत्तिः आकाशवान् शब्दादित्यत्रातिव्याप्तिरिति यावत् । स्वभावाश्रयत्वविवक्षायां तु शब्दवान् आकाशत्वादित्यत्रातिव्याप्तिः इति रीत्या लक्षणमेतत् दूषितम् ।

अविनाभावो व्याप्तिरिति दशमं लक्षणम्। अस्यापि शोधने क्रियमाणे साध्यं विना—साध्याभाववति यो भावः वृत्तिः तद्विरहः इति वा, साध्यं विना

न भावः साध्याभावप्रयुक्तो हेत्वभावः इति वा अर्थो भवितुमर्हति । आद्ये साध्याभाववदवृत्तित्वं व्याप्तिः, द्वितीये साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्याप्तिः । उभयथापि केवलान्वयिसाध्यकसद्धेतौ साध्याभावाप्रसिद्ध्या अव्याप्तिरिति दूषितं लक्षणमिदम् ।

संबन्धमात्रं व्याप्तिरिति एकादशं लक्षणम् । संबन्धशब्दस्य सामानाधिकरण्यमित्यर्थः । अत्रैवं दूषणमुक्तम्—किमिदं संबन्धत्वं व्याप्तिस्वरूपम् अथवा व्याप्तिपदप्रवृत्तिनिमित्तम् । आद्येऽर्थान्तरम् । येन रूपेण व्याप्तिज्ञानमनुमितिहेतुः, तेन रूपेण तन्निरूपणमिह प्रस्तुतम्, तच्च न संबन्धत्वमात्रमित्यप्रस्तुताभिधानात् । द्वितीयेऽपि अर्थान्तरमेव, संबन्धज्ञानेऽपि व्याप्तिपदस्याप्रयोगात् इति ।

केवलान्वयिसाध्यकसद्धेतौ केवलान्वयिसाध्यसामानाधिकरण्यं व्याप्तिः । व्यतिरेकिसाध्यकसद्धेतौ च साध्यवदन्यावृत्तित्वं व्याप्तिरिति पक्षान्तरमपि न युक्तम् । यत्किंचित्साध्यवदन्यत्वविवक्षायां वह्निमत्पर्वतान्यमहानसवृत्तितया धूमेऽव्याप्तेः । यावत्साध्यवदन्यत्वविवक्षायां च एकं नोभयमिति न्यायेन प्रत्येकपर्वतादौ साध्यवत्सकलभेदसत्त्वेन तद्वृत्तौ धूमेऽव्याप्तिरिति ।

इत्थंरीत्या प्राचीनग्रन्थेषु स्थितानि व्याप्तिलक्षणान्यनूद्य दूषितानि पूर्वपक्षव्याप्तिप्रकरणे मणौ ।

## सिद्धान्तलक्षणानि

अस्मिन् प्रकरणे गङ्गेशोक्तानि सिद्धान्तभूतानि व्याप्तलक्षणानि संग्रहेणात्र अनूद्यन्ते मया । आदौ 'अव्यभिचरितः संबन्धो व्याप्तिः' इत्यस्य विवरणरूपाणि कानिचिल्लक्षणानि प्रदर्शितानि । तत्राप्यत्यन्ताभावगर्भाणि कानिचित् अन्योन्याभावगर्भाणि कानिचिल्लक्षणानि । तत्रापि धूमजातीयानां सर्वेषां धूमानां वह्निजातीयैः सर्वैर्वह्निभिर्व्याप्तिरिति मतावलम्बीनि कानिचित् लक्षणानि । समानाधिकरणयोरेव

वह्निधूमव्यक्तिविशेषयोर्व्याप्तिरिति मतविशेषाश्रितानि कानिचिल्लक्षणानि । एवम् 'अनौपाधिकः संबन्धो व्याप्तिः' इत्यस्य विवरणरूपाणि तत्रापि साध्यव्यापकेषु साधनाव्यापकत्वनिषेधे पर्यवसितानि कानिचित्, साधनाव्यापकेषु साध्यव्यापकत्व-निषेधे पर्यवसितानि कानिचित् । एवं 'स्वाभाविकः संबन्धो व्याप्तिः' इत्यस्य विवरणरूपाणि कानिचिल्लक्षणानि । सर्वेष्वपि व्याप्तिलक्षणेषु साध्यहेत्वोः सामा-नाधिकरण्यं प्रवेशितमस्ति । क्रमशस्तानि विवृणुमः ।

प्रतियोग्यसमानाधिकरणयत्सामानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकाव-च्छिन्नं यन्न भवति, तेन समं तस्य समानाधिकरण्यं व्याप्तिः । पर्वतो वह्नि-मान् धूमादित्यादौ यच्छब्दनिर्दिष्टसाधनधूमादिकरणवृत्तिः प्रतियोग्यसमानाधि-करणश्च योऽत्यन्ताभावः घटाद्यत्यन्ताभावः तत्प्रतियोगितावच्छेदकं घटत्वादिकं तदवच्छिन्नो न भवति यो वह्निः तेन सामानाधिकरण्यं धूमस्यास्तीति लक्षणसमन्वयः । इयं व्याप्तिः वह्निजातीयेन साकं धूमजातीयस्य व्याप्तिरिति मतमाश्रित्य ।

पर्वतीयवह्नि-पर्वतीयधूमयोर्व्याप्तिरिति मते तु प्रतियोग्यसमानाधिकरण-यत्समानाधिकरणात्यन्तभावप्रतियोगि यन्न भवति तेन समं तस्य सामानाधि-करण्यमिति । प्रतियोग्यसमानाधिकरणः यत्पदग्राह्यपर्वतीयधूमसमानाधिकरणो योऽत्यन्ताभावः घटाद्यत्यन्ताभावः तत्प्रतियोगी घटादिः तद्भिन्नः पर्वतीयवह्निः तत्सामानाधिकरण्यं पर्वतीयधूमस्यास्तीति समन्वयः । उभयोरप्यनयोर्लक्षणयोः अव्याप्यवृत्तिकपिसंयोगादिसाध्यकसद्धेतावव्याप्तिवारणाय प्रतियोग्यसमानाधिकरणेति अत्यन्ताभावे विशेषणं दत्तम् ।

अत्यन्ताभावस्याव्याप्यवृत्तित्वेऽप्यन्योन्याभावस्य व्याप्यवृत्तित्वेन अन्योन्या-भावघटिते लक्षणे कृते प्रतियोग्यसामानाधिकरण्यविशेषणस्य नास्त्यावश्यकतेति मत्वा तथैव कानिचिल्लक्षणानि कृतानि । यथा — यत्सामानाधिकरणान्योन्या-

भावप्रतियोगितावच्छेदकं यन्न भवति, तेन समं तस्य सामानाधिकरण्यं व्याप्तिः यत्पदेन साधनं धूमादि गृह्यते, तदधिकरणं पर्वतादि तद्वृत्तिर्योऽन्योन्याभावः घटादिमद्भेदः न तु वह्निमद्भेदः, पर्वतो घटादिमान्नेतिवत् पर्वतो वह्निमान्नेत्य-प्रतीतेः। घटादिमद्भेदप्रतियोगितावच्छेदकं घटादि तद्भिन्नः वह्निः तेन समं सामानाधिकरण्यं धूमस्यास्तीति समन्वयः।

अथ वा यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः। धूमसमानाधिकरणो योऽन्योन्याभावः घटवद्भेदः तत्प्रतियोगी घटवान् न तु वह्निमानिति तेन वह्निना समानाधिकरणत्वं धूमेऽस्तीति लक्षणसमन्वयः।

अथ 'अनौपाधिकः संबन्धो व्याप्तिः' इत्यस्य विवरणरूपं लक्षणमुच्यते। हेतौ यः साध्यसंबन्धः तस्यानौपाधिकत्वं तत्रोपाध्यभावे भवति। उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः। तादृशोपाध्यभावश्च साध्यव्यापकानां साधनव्यापकत्वेन वा साधनाव्यापकानां साध्याव्यापकत्वेन वेति द्वेधेति हृदि निधाय लक्षणद्वयं कृतम्।

तत्र साध्यव्यापकेषु साधनाव्यापकत्वाभावपर्यवसितं लक्षणं यथा— यावन्तः साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगिनः तत्प्रतियोगिकात्यन्ताभावासामानाधिकरण्यं व्याप्तिरिति। अप्रतियोगिन इत्यन्तस्य साध्यव्यापका इत्यर्थः। वह्निमान् धूमादित्यादौ साध्यो वह्निः तदधिकरणं पर्वतादि तद्वृत्तिर्योऽत्यन्ताभावः घटाद्यत्यन्ताभावः तत्प्रतियोगिनः घटादयः तदप्रतियोगिनः द्रव्यत्वपृथिवीत्वादयः तत्प्रतियोगिकात्यन्ताभावः द्रव्यत्वाभावपृथिवीत्वाभावादिः तदधिकरणगुणजलाद्यवृत्तितया धूमस्य तदसामानाधिकरण्यमस्तीति समन्वयः। सोपाधिके तु धूमवान् वह्नेरित्यादौ साध्यधूमवन्निष्ठात्यन्ताभावाप्रतियोगी आर्द्रेन्धनसंयोगादिः तत्प्रतियोगिकाभावसामानाधिकरण्यमेव वह्नावस्तीति नातिव्याप्तिः।

साधनाव्यापकेषु साध्यव्यापकत्वनिषेधपर्यवसितं लक्षणं यथा—यावन्तः साधनसमानाधिकरणात्यन्ताभावप्रतियोगिनः तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणसाध्यसामानाधिकरण्यं व्याप्तिरिति। वह्निमान् धूमादित्यादौ साधनधूमाधिकरणपर्वतादिवृत्त्यत्यन्ताभावप्रतियोगिनः घटादयः तत्प्रतियोगिकात्यन्ताभावाधिकरणपर्वतादिवृत्ति साध्यं वह्निः तदधिकरणवृत्तित्वं धूमेऽस्तीति समन्वयः। सोपाधौ धूमवान् वह्नेरित्यादौ साधनवह्न्यधिकरणपक्षपर्वतवृत्त्यत्यन्ताभावप्रतियोगियावदन्तर्गतः आर्द्रेन्धनसंयोगोऽपि तत्प्रतियोगिकात्यन्ताभावसामानाधिकरण्यं साध्ये धूमे नास्ति, धूमस्यार्द्रेन्धनसंयोगसमानाधिकरणत्वात्। अतो नातिव्याप्तिः।

अथ स्वाभाविकः संबन्धो व्याप्तिः' इत्यस्य विवरणरूपं लक्षणं यथा—साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वमिति। धूमे वह्निसामानाधिकरण्यावच्छेदकं रूपं धूमत्वमस्तीति समन्वयः। सोपाधौ तु धूमवान् वह्नेरित्यादौ धूमसामानाधिकरण्यावच्छेदकं वह्नित्वं न भवति, धूमसामानधिकरण्यशून्ये अयोगोलकीयवह्नावपि वह्नित्वसत्त्वेन वह्नित्वस्यातिप्रसक्तत्वात्, अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वादित नातिव्याप्तिः।

## आक्षेपसमाधानम्

सर्वेष्वप्येतेषु मण्युक्तेषु लक्षणेषु साध्यहेत्वोः सामानाधिकरण्यस्य प्रवेशात् व्यधिकरणसाध्यसाधनयोरपि व्याप्तेरिष्टत्वात् तत्राव्याप्तिः। तथा हि—अधोदेशे नदीपूर्त्या ऊर्ध्वदेशे वृष्टिरनुमीयते। पद्मस्य विकासेन सूर्यस्योदयोऽनुमीयते, समुद्रस्य वृद्ध्या चन्द्रस्योदयोऽनुमीयते। तथा भूमिष्ठेनालोकेन उपरिस्थितः सविता, चक्रस्य भ्रमणेन भ्रामकस्य कुलालस्य संनिहितत्वम्, कृत्तिकोदयेन रोहिण्युदयासत्तिः ऊर्ध्वभागस्थधूमेनाधोभागस्थवह्निश्चानुमीयते। एतादृशस्थलेषु सामानाधिकरण्यगर्भव्याप्तेरभावात् लक्षणाव्याप्तिः इति आक्षिपन्ति केचित् तर्कताण्डवकारादयः।

तत्रेदं समाधीयते। व्यधिकरणतया भवदुदाहृतस्थलेष्वपि नदी वृष्टिमदूर्ध्वदेशसंबद्धा पूरवदधोदेशसंबद्धत्वात्, अयं कालः सूर्योदयवान् पद्मविकासवत्कालत्वात् अयं प्रदेशः कुलालासत्तिमान् भ्रमच्चक्राधिकरणत्वात् इत्याद्यनुमानानां विवक्षितत्वात् तत्र सामानाधिकरण्यस्योपपत्तिः। देशतो व्यधिकरणेषु स्थलेषु कालतः सामानाधिकरण्यसद्भावात् कालिकसंबन्धस्य साध्यहेतुतावच्छेदकत्वं स्वीकृत्य व्याप्तिः संपादनीयेति।

## सामान्याभावप्रकरणम्

एतावता सिद्धान्तलक्षणप्रकरणे विशेषव्याप्तिप्रकरणे च विद्यमाना विषयाः संगृहीताः। तन्मध्ये सामान्याभावप्रकरणमिति किंचित् प्रकरणमस्ति। तत्प्रतिपाद्यविषयस्तावत् विशेषाभावकूटातिरिक्तः सामान्याभावः पृथगेवेति। सिद्धान्तलक्षणे वह्निमान् धूमादित्यादौ वह्निविशेषाभावान् पर्वतीयवह्न्यभावमहानसीयवह्न्यभावादीन् गृहीत्वा तत्प्रतियोगित्वमेव चालिनीन्यायेन साध्ये पर्वतीयवह्न्यादावस्ति इत्यव्याप्तिमालोच्य साध्ये हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमुपेक्ष्य साध्यतावच्छेदकावच्छिन्ने हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नान्यत्वं साध्यतावच्छेदके तादृशाभावप्रतियोगितानवच्छेदकत्वं वा निवेशितम्। तदुपरि एवमाशङ्का भवति—विशेषाभावकूटातिरिक्तः सामान्याभावो नाम नास्त्येव। तत्र सामान्यधर्मः विशेषाभावप्रतियोगितावच्छेदको भवति न वा? आद्ये वह्नित्वरूपसामान्यधर्मस्यापि हेतुसमानाधिकरणविशेषाभावप्रतियोगितावच्छेदकतया तदवच्छिन्नान्यत्वं वह्नित्वावच्छिन्ने नास्तीत्यव्याप्तिस्तदवस्था। द्वितीये सामान्यधर्मः यदि न विशेषाभावप्रतियोगितावच्छेदकः तदा सः अभावप्रतियोगितावच्छेदक एवं न भवतीत्यायातम्, विशेषाभावकूटातिरिक्तस्य सामान्याभावस्याभावात्। तथा च धूमवान् वह्नेरित्यादौ वह्निसमानाधिकरणधूमविशेषाभावप्रतियोगितानवच्छेदकत्वं धूमत्वेऽस्तीत्यतिव्याप्तिः इति।

तत्समाधानार्थमिदं प्रकरणमवतारितम् । अनेन प्रकरणेन सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावात्मकः सामान्याभावः विशेषाभावादन्यः । तथा च सद्धेतुस्थले विशेषाभावस्य हेतुसमानाधिकरणत्वेऽपि तत्प्रतियोगितावच्छेदकः विशेषधर्म एव, वह्नित्वात्मकसामान्यधर्मस्त्वनवच्छेदक इति नाव्याप्तिः । धूमवान् वह्नेरित्यादौ धूमसामान्याभावस्यापि हेतुसमानाधिकरणतया तत्प्रतियोगितावच्छेदकमेव धूमत्वमिति नातिव्याप्तिः । तत्र युक्तिस्तु—विशेषाभावकूटस्यैव सामान्याभावरूपत्वे वायौ रूपविशेषाभावकूटस्य निश्चितत्वेन संशयविषयत्वायोगात् वायौ रूपं न वेति संशयो न स्यादिति मणावभिहिता । अत्र प्रकाशे तर्कचूडामणौ च बहु पराक्रान्तमिति तत एवावगन्तव्ययुक्तिशेषा अवसेयाः ।

## अत एवचतुष्टयप्रकरणम्

पूर्वं विशेषव्याप्तिप्रकरणे ' साध्यसामानाधिकरण्यावच्छेदकावच्छिन्नं व्याप्यम् । वह्निसामानाधिकरण्यं हि धूमे धूमत्वेनावच्छिद्यते सोपाधौ तूपाधिना ' इति मणौ निगमनं कृतम् । सोपाधौ उपाधेः साध्यसामानाधिकरण्यावच्छेदकत्वे उपष्टम्भकतया प्राभाकरमतमुपन्यस्तमस्मिन्नतएवचतुष्टयप्रकरणे । अत्र चत्वारि उपष्टम्भकानि प्रदर्शितानीति कृत्वा अस्य प्रकरणस्येत्थं नाम समजनि । प्राभाकरैः साधनतावच्छेदकभिन्नत्वे सति साध्यसामानाधिकरण्यावच्छेदकत्वमुपाधेर्लक्षणमुक्तम् । तत् सोपाधौ उपाधेः साध्यसामानाधिकरण्यावच्छेदकत्वे उपष्टम्भकं भवति । एवमग्रिमाण्युपष्टम्भकान्यपि योजनीयानि ।

## व्याप्तिग्रहोपायप्रकरणम्

आदावनुमानप्रामाण्यपरीक्षा आरब्धा । अनुमानप्रामाण्यं व्याप्तिनिश्चयाधीनम् । व्याप्तिनिश्चयश्च व्याप्तिग्रहोपायं विना न संभवतीति आदौ व्याप्तिग्रहोपाय एव प्रतिपादनीयः । परं तु व्याप्तिस्वरूपप्रतिपादनं विना तदुपायप्रतिपादनस्याशक्यत्वात् व्याप्तिस्वरूपमेतावता प्रत्यपादि । अथास्मिन् प्रकरणे व्याप्तिग्रहो-

पायः प्रतिपाद्यते । व्याप्तिर्भूयोदर्शनगम्या वा सकृद्दर्शनगम्या वा इति वादिनां विवादं शमयितुं भूयोदर्शनगम्येति पक्षं बहुधा विकल्प्य निरस्य सकृद्दर्शनगम्येति पक्षमुपक्षिप्य तत्राप्यनुपपत्तीराशङ्क्य व्यभिचारज्ञानाभावसहकृतं सहचारदर्शनमेव व्याप्तिग्रहस्य साधनम् । सहचारदर्शनं च सकृदसकृद्वेति नास्ति निबन्ध इति सिद्धान्तितमत्र ।

## तर्कप्रकरणम्

पूर्वस्मिन् प्रकरणे अन्ते व्यभिचारज्ञानाभावसहकृतं सहचारदर्शनं व्याप्तिज्ञान-जनकम् । व्यभिचारज्ञानं निश्चयरूपं संशयरूपं वा । संशयोऽपि क्वचित् उपाधि-संदेहात् क्वचित् विशेषादर्शनसहितसाधारणधर्मदर्शनात् । व्यभिचारज्ञानविरहश्च क्वचित् विपक्षबाधकतर्कात् क्वचित् स्वतस्सिद्ध एवेत्युक्तम् । तदुपरि व्यभिचार-शङ्कानिवर्तकत्वेनाभिमतः यदि वह्निर्न स्यात् तर्हि धूमोऽपि न स्यादित्यादिरूप-स्तर्कोऽपि वह्न्यभावधूमाभावयोर्व्याप्यव्यापकभावसापेक्ष इति तत्रापि वह्न्यभावोऽस्तु धूमाभावो मास्तु इति व्यभिचारशङ्कायां तन्निवर्तकतर्कान्तरानुसरणे तत्राप्ये-वमित्यनवस्था प्रसज्यत इत्याक्षेपे 'यावदाशङ्कं तर्कानुसरणात्' इत्यादिना तत्समाधानार्थमिदं प्रकरणमवतीर्णम् । तथा च व्याप्तिग्रहोपायप्रकरणस्य शेषभूतमिदं प्रकरणम् । अयमत्राशयः—शङ्का तावत् व्याघातावधिका । यद्विषयकशङ्कायां हि स्वव्यापारविघातः स्वोक्तिव्याघातः स्वाभिमतिव्याघातो वा न भवति तदेव आशङ्क्यत इति लोकव्यवस्था । न खलु स्वकीयमनोवाक्कायव्यापारविरुद्धां शङ्कां कश्चिदजुगतिरुद्भावयेत् । तथा च प्रकृते यदि वह्न्यभावेऽपि धूमः स्यात् धूमार्थिनो वह्निघटितसामग्र्यामेव प्रवृत्तिर्न स्यात् इति प्रवृत्तिविघातः प्रसज्येत । न चेदमिष्टम्, प्रवृत्तेरेव क्रियमाणत्वात् । तथा च प्रवृत्तिर्दृश्यमाना वह्न्यभावेऽपि धूमस्थितेरिष्टत्वशङ्कां तर्कान्तरनिरपेक्षमेव रुणद्धि । एवं यदि धूमो वह्निं विनाप्यस्तु इति शङ्कते तदा यदि धूमो वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यादिति तर्कः प्रयोक्तव्यः । तत्रापीष्टापत्तौ तु यदि कारणं विनापि कार्यं स्यात् तदा

धूमार्थं वह्नेः तृप्त्यर्थं भोजनस्य वा परबोधनार्थं शब्दस्य वा नियमत उपादानं न स्यादिति प्रवृत्तिविघात आपादनीयः। तथा च नानवस्थेति।

अत्रेदमपरं विमर्शनीयम्। मणिकाराः व्यभिचारज्ञानाभावविशिष्टसहचार-ज्ञानं व्याप्तिग्रहोपायः। व्यभिचारशङ्काविघटनं च तर्केण क्रियते। ततो व्याप्तिग्रह इति प्रतिपादयन्ति। उदयनाचार्यास्तु विपक्षेच्छाविरहविशिष्टसाहचर्यज्ञानं व्याप्ति-ग्रहोपाय इत्याशेरते। उक्तं हि तैः कुसुमाञ्जलौ—(पृ. 176—178)

याबदाशङ्कं तर्कप्रवृत्तेः। तेन हि वर्तमानेनोपाधिकोटौ तदायत्तव्यभि-चारकोटौ वा अनिष्टमुपनयता इच्छा विच्छिद्यते। विच्छिन्नविपक्षे-च्छश्च प्रमाता भूयोदर्शनोपलब्धसाहचर्यं लिङ्गमनाकुलोऽधितिष्ठति। अधिष्ठिताच्च करणात् क्रियापरिनिष्पत्तिः—

इति। अस्याशयस्त्वेवं विस्तरटीकायामस्मद्गुरुचरणैर्विस्तृतः—शङ्कायां सत्यां विना निश्चयं प्रवर्तितुमनिच्छतः पुंसः धूमवानयं विपक्षोऽस्तु वह्न्यभाववान-स्त्विति विपक्षेच्छा वह्न्यभाववत्ताज्ञानेच्छा जायते। सा च तादृशज्ञानोपायान्वेषणे पुरुषं प्रवर्तयन्ती व्याप्तिज्ञानोत्पत्तिं प्रतिबध्नाति। शङ्का च सोपाधिकत्वविषयिणी व्यभिचारविषयिणी वापि भवति। आद्ये तत्परिहाराय यद्ययं धूमः सोपाधिकः स्यात् स्वाव्यापकवह्निव्यापककिंचित्पदार्थकः स्यात् वह्निजन्यो न स्यात् इति, यद्वा यदि वह्निर्धूमाव्यापककिंचिद्व्याप्यः स्यात् धूमजनको न स्यादिति तर्कः। अन्त्ये, यदि धूमो वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादिति तर्कः। तत्रोपाधिशङ्कापि व्यभिचारशङ्कायामेव पर्यवस्यति। अयं हेतुः साध्यव्यभिचारी साध्यव्यापकोपाधिव्यभिचरितत्वादिति व्यभिचारोन्नयनं ह्युपाधिना क्रियते। तथा चोक्तस्तर्कः वह्निजन्यत्वाभावरूपापाद्यकोटिविषयकः सोपाधिकत्वरूपायां शङ्कितुरभि-मतायामापादककोटौ अनिष्टमुपनयति, धूमे वह्निजन्यत्वाभावस्य तज्ज्ञानस्य च

शङ्कितुरनिष्टत्वात् सोपाधिकत्वसव्यभिचारत्वयोश्चापादकत्वात् सोपाधिकत्वादि-ज्ञानमनिष्टसाधनमिति बुद्धिं जनयतीति यावत् । अनिष्टं च प्रामाणिकत्यागोऽ-प्रामाणिकार्थस्वीकारो वा यथायथम् । तर्काकार एव च स्याद्घटितोऽनिष्टत्वादि-व्यञ्जकः । एवं व्यभिचारज्ञानेऽनिष्टसाधनत्वज्ञाने सति तत्र द्वेषात् धूमे व्यभिचरितत्वेच्छायाः पक्षे विपक्षत्वेच्छायाश्च विच्छेदात् प्रमाता विपक्षत्व-ज्ञानोपायव्यग्रतारूपवैयाकुलीरहितः भूयोदर्शनात् सहचरितत्वेन स्मृतं हेतुं व्याप्ति-पक्षधर्मताविशिष्टत्वेन परामृशति । ततः परामर्शविषयात् लिङ्गात् करणात् अनुमितिक्रियानिष्पत्तिः इति । मणिकारोदयनमतयोर्युक्तायुक्तत्वविवेचनं तत्रैव विस्तर-व्याख्याने कृतं विस्तरभयादिह न क्रियते ।

## व्याप्त्यनुगमप्रकरणम्

पूर्वम् अत्यन्ताभावगर्भाः अन्योन्याभावगर्भाश्च बह्वयः व्याप्तयः निरुक्ताः । तासु कीदृशव्याप्तिज्ञानमनुमितिहेतुरिति जिज्ञासायाम् अन्योन्याभावगर्भव्याप्ति-ज्ञानमेवानुमितिहेतुः लाघवात् । तस्मात् अनेकविधव्याप्तीनामनुगमकरूपाभावात् तज्ज्ञानस्यैकरूपेण कारणत्वं न भवतीत्यननुगमशङ्कायाः नावसर इति मणौ प्रत्यपादि प्रकरणेऽस्मिन् । अन्योन्याभावगर्भव्याप्तौ प्रतियोगिवैयधिकरण्यं न निवेश्यते इति लाघवम् । अत्यन्ताभावगर्भव्याप्तौ तु तन्निवेश्यते इति गौरवमत्राभिप्रेतम् ।

अत्र प्रकाशकारैः अत्यन्ताभावगर्भव्याप्तिज्ञानस्यानुमितिहेतुत्वेऽपि न गौरव-मिति निरूपितम् । तर्कचूडामणिकारैस्तु प्रकाशकृन्मतखण्डनपूर्वकं मणिकारोक्तं समर्थितम् । सुदूरं विचार्य अन्ते (पृ. 213)—

> तस्मादत्यन्ताभावगर्भव्याप्तिज्ञानस्य प्रतियोग्यसामानाधिकरण्यविषयत-यापि जनकत्वम्, अन्योन्याभावगर्भव्याप्तिज्ञानस्य तदविषयतयैव जनकत्वमिति साधूक्तं मणिकृता' लाघवादन्योन्याभावगर्भव्याप्ति-ज्ञानमेवानुमितिहेतुरिति ' इति वयं युक्तमुत्पश्यामः—

इति तैरभिधानात् ।

तथा हेतावुपाधिज्ञानदशायां व्यभिचारनिश्चयेन व्याप्तिनिश्चयाभावात् अनुमितिकरणव्याप्तिनिश्चयप्रतिबन्धकज्ञानविषयतया उपाधेरपि हेत्वाभासलक्षणाक्रान्तत्वेन हेत्वाभासत्वं स्यादित्याशङ्कायाम् अनुमितौ वा तत्करणपरामर्शे वा साक्षात् यद्विषयकज्ञानस्य प्रतिबन्धकत्वं तस्यैव हेत्वाभासत्वम् । उपाधिज्ञानं तु व्यभिचारज्ञानोत्पादनद्वारैव परामर्शं प्रतिबध्नाति न साक्षादिति न तस्य हेत्वाभासत्वम् इत्यपि प्रतिपादितम् ।

एवं व्यभिचाराभावस्य व्याप्तित्वे व्यभिचारस्य व्याप्यत्वासिद्धावन्तर्भावापत्त्या व्यभिचारस्य पृथग्घेत्वाभासत्वं न स्यादित्याशङ्क्य व्याप्तिर्न व्यभिचाराभावरूपा व्यभिचारो वा न व्याप्त्यभावरूपः साध्याभाववद्वृत्तित्वस्य व्यभिचारपदार्थत्वात् हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यस्य व्याप्तिपदार्थत्वात् उभयोः परस्परविरहरूपत्वानङ्गीकारादिति समाहितम् ।

## सामान्यलक्षणाप्रकरणम्

महानसादौ वह्निधूमयोर्भूयस्सहचारदर्शनेन यत्र धूमस्तत्राग्निरिति व्याप्तिग्रहो भवति । ततः पर्वते धूमं पश्यतः धूमो वह्निव्याप्य इति व्याप्तिस्मृतिर्भवति । ततः वह्निव्याप्यधूमवानयं पर्वत इति परामर्शात् पर्वतो वह्निमानित्यनुमितिर्भवतीति क्रमः । तत्र महानसीयधूमे पूर्वं महानसीयवह्निव्याप्यत्वस्य गृहीतत्वेऽपि पर्वतीयधूमे पर्वतीयवह्निव्याप्यत्वस्य पूर्वमगृहीतत्वात् कथं पर्वतीयधूमात् पर्वते वह्न्यनुमितिर्भवितुमर्हतीति शङ्का जायते । तत्परिहारार्थं सामान्यलक्षणाख्यः संनिकर्षः स्वीकरणीय इति अत्र प्रकरणे उपपाद्यते । तथा हि महानसादौ भूयोदर्शनादिना व्याप्तिग्रहवेलायां न महानसीयधूममात्रे वह्निव्याप्तिर्गृह्यते । अपि तु सामान्यलक्षणया

प्रत्यासत्त्या (इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतधर्माख्येन संनिकर्षेण) सकलवह्नीनां सकलधूमानां चोपस्थितौ सकलधूमेषु सकलवह्निव्याप्यत्वं गृह्यते। व्याप्तिग्रहाकारश्च धूमो वह्निव्याप्य इति। तथा च पर्वतीयधूमेऽपि धूमत्वेन रूपेण पूर्वं वह्निव्याप्तेर्गृहीततया पर्वतीयधूमदर्शनानन्तरं पूर्वगृहीतव्याप्तिस्मरणे ततः परामर्शे ततः पर्वतो वह्निमानित्यनुमितौ न काप्यनुपपत्तिरिति।

अत्र मीमांसकाः वस्तुतः सकलधूमवृत्तिर्या धूमत्वावच्छिन्ना व्याप्तिः सा महानसीयधूमवृत्तितयैव महानसे प्रत्यक्षेण ज्ञायते न तु पर्वतीयधूमादिवृत्तितया। तथा च व्याप्त्यनुभवः महानसीयधूमविशेष्यकः धूमत्वप्रकारकः। ततः व्याप्तिस्मृतिरपि महानसीयधूमविशेष्यिका धूमत्वप्रकारका च। ततः व्याप्तिस्मृतौ प्रकारीभूत यत् धूमत्वं तेन रूपेण पर्वतवृत्तिधूमावगाहिनः धूमवानयं पर्वत इति ज्ञानात् पर्वतो वह्निमानित्यनुमितिर्भवति। व्याप्त्यनुभवव्याप्तिस्मरणपक्षधर्मताज्ञानानामेकप्रकारकत्वेनैवानुमितिहेतुत्वं न त्वेकविशेष्यकत्वेन। इत्थं च पर्वतीयधूमे व्याप्त्यग्रहेऽप्यनुमितिनिर्वाहात् सामान्यलक्षणा प्रत्यासत्तिः व्यर्था इत्याहुः।

मणिकारास्तु अभ्युपगम्यैतदुपपादनं युक्त्यन्तरेण सामान्यप्रत्यासत्तिं साधयन्ति। तथा हि—यदि सामान्यलक्षणा नास्ति तदा धूमो वह्निव्याप्यो न वेति संशयो न स्यात्। प्रत्यक्षे महानसीयधूमे वह्निव्याप्तेर्निश्चितत्वेन तद्विशेष्यकव्याप्तिसंशयानुपपत्तेः, इतरधूमानामनुपस्थितत्वेन धर्मिज्ञानाभावात् तद्विशेष्यकसंशयासंभवाच्च। मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयं देशान्तरीयं च यत् धूमान्तरं तद्विशेष्यकः धूमो वह्निव्याप्यो न वेति संशयो भवितुमर्हतीति।

अत्र विषये संभवन्तः संभाविताश्च परैः ये आक्षेपाः ते सर्वे प्रायेणानन्द्ये समाहिताः साधु साधितं च सामान्यलक्षणायाः प्रत्यासत्तित्वं विस्तरेण प्रकाशे तर्कचूडामणौ च। विद्वांसस्ततो वैशद्यं लभेरन् ।

## उपाधिप्रकरणम्

उपाधिज्ञानस्य व्यभिचारज्ञानद्वारा व्याप्तिनिश्चयविघटनेन अनुमितिप्रतिबन्धकत्वात् अनौपाधिकत्वज्ञानस्याव्यभिचारज्ञानद्वारा व्याप्तिग्राहेतुत्वाच्च उपाधिज्ञानस्य प्रतियोगिज्ञानविधया व्याप्तिनिश्चयोपयोगितया उपाधिलक्षणादिकमत्र प्रकरणे निरूप्यते। साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वम्, साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वम्, साध्यप्रयोजकधर्मत्वम्, यदभावो व्यभिचारविरोधी तत्त्वम्, पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्, साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्, पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्, इति उपाधिलक्षणानि अनूद्य पूर्वपक्षे तत्र दोषाः प्रदर्शिताः।

ततः सिद्धान्ते—शुद्धसाध्यव्यापकपक्षधर्मावच्छिन्नसाध्यव्यापकसाधनावच्छिन्नसाध्यव्यापकानां त्रयाणां साधारणमुपाधिलक्षणमुक्तम्। तच्च पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वमिति। यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं पर्यवसितं साध्यम्। साध्यप्रसिद्ध्यवच्छेदकधर्मावच्छिन्नत्वं पर्यवसितत्वम्। स च साध्यप्रसिद्ध्यवच्छेदकीभूतो धर्मः क्वचित् साधनम्, क्वचित् द्रव्यत्वादि, क्वचिन्महानसत्वादि। आद्ये ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं पक्षान्तर्भावेण जन्यत्वाव्यापकं च भावत्वमुपाधिः। द्वितीये वायुः बहिरिन्द्रियजन्यप्रत्यक्षविषयः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र पक्षधर्मः द्रव्यत्वं साध्यप्रसिद्ध्यवच्छेदकं तदवच्छिन्नबहिरिन्द्रियजन्यप्रत्यक्षविषयत्वव्यापकं प्रत्यक्षस्पर्शा-

श्रयत्वाव्यापकं च रूपवत्त्वमुपाधिः। तृतीये अयं धूमवान् वह्नेरित्यादौ महानसत्वं तादृशो धर्मः। तदवच्छेदेन धूमस्य प्रसिद्धत्वात्। तथा च महानसत्वावच्छिन्नधूमव्यापकः वह्न्यव्यापकश्च आर्द्रेन्धनसंयोग उपाधिः।

अत्र लक्षणे संभावितान् दोषानुद्भाव्य महता परिकरेण समाधाय प्रकाशकारै रुचिदत्तमिश्रैः—(पृ. 295) पर्यवसितसाध्यव्यापकत्वे सति साध्यसमानाधिकरणत्वे सति वा साध्यव्यभिचारिसाधनाव्यापकत्वमुपाधेर्लक्षणमुक्तम्। निरधिकरणे गगनादौ, इयं गौः पशुत्वादित्यत्र साध्यविरुद्धेऽश्वत्वे च उपाधिव्यवहाररहितेऽतिव्याप्तिवारणाय सत्यन्तम्,। पर्वतो वह्निमान् धूमादित्यत्र साध्यप्रसिद्ध्यवच्छेदकमहानसत्वाद्यवच्छिन्नवह्निव्यापके धूमाव्यापके च व्यञ्जनवत्त्वादावुपाधित्वप्रसङ्गवारणाय साध्यव्यभिचरीति साधनविशेषणं दत्तम्।

तर्कचूडामणिकारैरपि सुदूरं विचार्य—(पृ. 2'9) साधननिष्ठसाध्याव्याप्यत्वानुमापकाव्याप्यत्वप्रतियोगित्वे सति साध्यसमानाधिकरणत्वमुपाधेर्लक्षणम्। साधननिष्ठस्य उपाधिव्याप्तिविरहस्य साधननिष्ठसाध्यव्याप्तिविरहे लिङ्गत्वात् नासंभवः। वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात् यो यद्व्यापकव्यभिचारी स तव्यभिचारीति रीत्या अनुमानस्येष्टत्वात्। आकाशसाध्यकहेतौ घटादेरुपाधित्ववारणाय साध्यसमानाधिकरणत्वविशेषणम्। साध्याव्याप्यत्वं च शुद्धसाध्याव्याप्यत्वं, तेन विशिष्टसाध्याव्याप्यत्वानुमापकाव्याप्यत्वप्रतियोगिनि व्यञ्जनवत्त्वादौ नातिव्याप्तिः। विशिष्टसाध्ये च तस्योपाधित्वमिष्टमेव। अवच्छिन्नसाध्यव्यापकस्थलेऽपि ध्वंसो विनाशी जन्यत्वादित्यादौ वायुर्बहिरिन्द्रियजन्यप्रत्यक्षविषयः प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ च जन्यत्वं जन्यत्वविशिष्टविनाशित्वाव्याप्यं जन्यत्वविशिष्टविनाशित्वव्यापकभावत्वव्यभिचारित्वात्, प्रत्यक्षस्पर्शाश्रयत्वं द्रव्यत्वविशिष्टबहिरिन्द्रियजन्यप्रत्यक्षविषयत्वव्यभिचारि तव्यापकरूपवत्त्वव्यभिचारित्वात्

इत्यनुमानमिष्यते। अत्र यद्यपि विशिष्टव्यभिचारित्वमेव साध्यम्। तथापि विशेषणाव्यभिचारिणः विशिष्टव्यभिचारित्वस्य विशेष्यव्यभिचारित्वरूपतया विशेष्यव्यभिचार एवानुमानपर्यवसानम्। तदुक्तं मणौ—"विशेषणाव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारः सिध्यन् विशेष्यसाध्यव्यभिचारमादायैव सिध्यति, पक्षधर्मताबलात्" इति। इत्थं चावच्छिन्नसाध्यव्यापकोपाधेरपि शुद्धसाध्याव्याप्यत्वानुमापकतायाः सत्त्वान्नाव्याप्तिः इति सुष्ठु न्यरूप्यत।

ततः मणौ उपाधिर्द्विविधः निश्चितोपाधिः संदिग्धोपाधिश्चेति। साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितः व्यभिचारनिश्चयाधायकः निश्चितोपाधिः। यथा पर्वतो धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोगः। यत्र साध्यव्यापकत्वसंदेहो वा साधनाव्यापकत्वसंदेहो वा तदुभयसंदेहो वा स व्यभिचारसंशयाधायकतया संदिग्धोपाधिरित्युच्यते यथा स श्यामो मित्रातनयत्वादित्यत्र शाकाद्याहारपरिणतिजन्यत्वम् इति निरूपितम्।

ततः उपाधेर्व्यभिचारोन्नायकतया दूषकत्वमुपपादितम्। "तस्मादुपाधिनिश्चयात् व्यभिचारनिश्चयः तत्संशयात्तत्संशय इति व्यभिचारज्ञानद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वा उपाधेर्दूषकत्वम्। यद्वा साध्यव्यापकाभाववद्वृत्तितया साध्यव्यभिचारित्वमुन्नेयम्" इति **मणिग्रन्थः**। उपाधेः सत्प्रतिपक्षोन्नायकतया दूषकत्वपक्षस्तु मणौ दूषितः। **प्रकाशकारैस्तु**—व्यभिचारानुन्नयनदशायां सत्प्रतिपक्षोत्थापनेन अनुमितिप्रतिबन्धात् तदुत्थापनद्वाराप्यस्य दूषकत्वमेव इत्यभिहितमिति विशेषोऽत्रानुसन्धानार्हः। **मुक्तावल्यां**—केचित्तु सत्प्रतिपक्षोत्थापनमुपाधेः फलम्। तथा हि अयोगोलकं धूमवत् वह्नेरित्यादौ अयोगोलकं धूमाभाववत् आर्द्रेन्धनाभावादिति सत्प्रतिपक्षसंभवात्" इत्यादिना अयं पक्षः उपपादितः। ततः मणौ उपाध्याभासाः प्रदर्शिताः।

अत्रेदमपरमालोचनीयम् । उदयनाचार्यैः साधनाव्यापकत्वे सति साध्यसमव्याप्तो धर्म उपाधिरिति लक्षणमुक्तम् । समशब्दं परित्यज्य साधनाव्यापकत्वे सति साध्यव्यापको धर्म उपाधिरिति महाविद्याविडम्बनकर्तृवादीन्द्रादिभिरुक्तम् । मणावुभयमनूदितमन्यच्च । तत्र समशब्दं घटयित्वा लक्षणं वदतामुदयनादीनामयमाशयः—उप आधत्त इत्युपाधिः । स्वसमीपस्थे स्वधर्मं य आधत्ते स उपाधिः । यथा जपाकुसुमं स्वगतां रक्ततां स्वसमीपस्थे स्फटिके आधत्त इति तत् उपाधिः । एवमनुमाने उपाधित्वेनाभिमतः पदार्थः स्वगतां साध्यव्याप्तिं हेताववभासयति, उपाधिनिष्ठा व्याप्तिरेव हेतौ चकास्ति इति स उपाधिः । तदुक्तं भट्टपादैः—

अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥ (मी. श्लो. वा)—इति । तदिदमुपाधेर्व्याप्यत्व एव उपाधिशब्दप्रवृत्तिनिमित्तं परत्र स्वगतधर्माधायकरूपं संगच्छत इति सूचनार्थमेव साध्यव्याप्यत्वस्याप्यवगमकः समशब्दः लक्षणे निवेशित इति । यद्यपि कुसुमाञ्जलौ—

तत्रोपाधिस्तु साधनाव्यापकत्वे सति साध्यव्यापकः—

इति समशब्दं विनैव पठितम् । तथापि तदनन्तरवाक्ये (पृ. 182)—

तद्धर्मभूता हि व्याप्तिः जपाकुसुमरक्ततेव स्फटिके,
साधनाभिमते चकास्तीत्युपाधिरसावुच्यते—

इति व्याप्यत्वस्योपपादनात् समव्याप्तत्वनिवेशस्तदभिप्रेत इत्युन्नीयते । अत एव समशब्दघटितं लक्षणमुदयनाभिमतमिति सर्वार्थसिद्धौ वेदान्तदेशिकै रनूदितम् । ननु तर्हि साध्यव्याप्यत्वे सति साधनाव्यापक इत्येवास्तु साध्यव्यापकत्वनिवेशः किमर्थ इति चेत्—उच्यते । व्यापकाभावात् व्याप्याभाव इति रीत्या हि साध्यव्यापक उपाधिः पक्षे व्यावर्तमानः साध्यं व्यावर्तयन् दूषको भवति । तथ

च दूषकतोपयोगित्वात् लक्षणे साध्यव्यापकत्वस्य निवेश इति। अतश्च उपाधि-शब्दप्रवृत्तिनिमित्तानुसारेण साध्यव्याप्यत्वस्य, दूषकत्वानुसारेण साध्यव्यापकत्वस्य च लक्षणे निवेशनमुचितमित्याशयेन साध्यसमव्याप्तत्वमुक्तमिति।

समशब्दं परित्यज्य साध्यव्यापकत्वं लक्षणे निवेशयतां त्वयमाशयः—उपाधिशब्दार्थो यः कोऽप्यस्तु। लक्षणे व्याप्यत्वनिवेशनमनावश्यकम्। साध्याभावसाधकत्वोपयुक्तव्यापकत्वमात्रोपादानस्यैव पर्याप्तत्वादिति।

## पक्षेतरत्वस्योपाधित्वम्

अत्र मणौ पक्षेतरत्वमुपाधिर्भवति न वेति सुदूरं विवेचितम्। तत्रायं निष्कर्षः बाधोन्नीतपक्षेतरत्वमुपाधिः बाधानुन्नीतपक्षेतरत्वं तु नोपाधिरिति। अयमाशयः—यत्र पक्षे साध्याभावरूपो बाधो निश्चितः तत्र वह्निरनुष्णः पदार्थत्वात् इत्यादौ पक्षेतरत्वं वह्नीतरत्वम् उपाधिः। साध्यव्यापकत्वनिश्चयात्। यत्र तु पक्षे साध्याभावो न निश्चितः तत्र पक्षेतरत्वं नोपाधिः। तथा सति सर्वेष्वपि अनुमानेषु पक्षेतरत्वस्योपाधित्वसंभवेन अनुमानमात्रस्योच्छेदापत्त्या उपाधेर्व्यभिचारानुमितजनकत्वरूपं दूषकत्वमेव भज्येत। व्यभिचारानुमितेरपि पक्षेतरत्वोपाधिना दूषितत्वात्। तदिदमुक्तं मणौ—

अत एव बाधानुन्नीतपक्षेतरस्यानुपाधित्वम्

स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्तकत्वात्—इति। तत्र स्वव्याघातकत्वमित्यस्य उपाधिसामान्यस्य दूषकत्वव्याघातकत्वमित्यर्थः इति। बाधोन्नीतपक्षेतरत्वं नाम साध्याभाववत्तया निश्चितो यः पक्षः तद्भिन्नत्वम्। बाधानुन्नीतपक्षेतरत्वं नाम प्रकृतसाध्याभाववत्तया अनिर्णीतः यः पक्षः प्रकृतपक्षतावच्छेदकावच्छिन्नः तद्भिन्नत्वमिति ध्येयम्।

## पक्षताप्रकरणम्

पक्षः साध्यवानित्याकारकनिर्णयरूपसिद्धिमत्त्वेऽनुमितेः अनुदयात् तन्निर्वाहाय पक्षतायाः स्वरूपसत्याः अनुमितिहेतुत्वं प्राचीना अङ्गीकुर्वन्ति । पक्षता नाम साध्यसंशयः । सिद्धौ सत्यां च साध्यसंशयरूपपक्षताया अभावान्नानुमितिरिति तेषामाशयः । मणिकारास्तु साध्यसंशयो न पक्षता । तथा हि साध्यसंशयो हि किम् अनुमित्यव्यवहितपूर्ववृत्तिः सन् अनुमितिहेतुः उत पूर्वं यदा कदाचिद्वर्तमानः सन् । आद्ये परामर्शात् पूर्वमेव लिङ्गदर्शनव्याप्तिस्मरणादिना संदेहस्य नाशात् अनुमित्यव्यवहितपूर्ववर्तित्वं साध्यसंदेहस्य दुरुपपादमिति दोषः । द्वितीये चिरकालात् पूर्वं साध्यसंदेहे अधुना सिद्धावप्यनुमित्यापत्तिरिति निरूपयन्ति । नापि सिद्ध्यभावः पक्षता । श्रवणात्मकस्य आत्मनिर्णयस्य सत्त्वेऽपि मननात्मिकायाः अनुमितेः श्रुत्यैव बोधनात्, प्रत्यक्षदृष्टेऽप्यर्थे अनुमित्सया अनुमितेर्दर्शनात्, एकेन लिङ्गेन निर्णीते साध्ये लिङ्गान्तरेण अनुमितेर्दर्शनाच्च । नापि सिषाधयिषा पक्षता, संशयपक्षतात्ववत् दोषाक्रान्तत्वात् । अतः सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । अस्य च उत्तेजकाभावविशिष्टप्रतिबन्धकाभावविधया अनुमितिहेतुत्वमिति मणिकारा आशेरते ।

कुसुमाञ्जलिविस्तरकारास्तु 'तत्र चरमा सिद्धसाधनमिति व्यपदिश्यते, व्याप्तिस्थितौ पक्षत्वस्य आहत्य विघटनात् न त्वेवं बाधे' इति पङ्क्तिव्याख्यानावसरे एवं निरूपयन्ति — प्रत्यक्षितविषयेऽपि संनिकर्षे सति धारावाहिप्रत्यक्षस्य, प्रतीतार्थकशब्दश्रवणेऽपि पुनर्बोधस्य च संमतत्वात् तद्वदेव सिद्धिविषये परामर्शसत्त्वेऽनुमित्युत्पत्तौ न किंचिद्बाधकम् । अतः सिद्धेर्नानुमितिं प्रत्यपि प्रतिबन्धकत्वम् । एवं पक्षताप्यनुमितौ न कारणम् । असत्यपि साध्यसंशये असत्यामपि सिषाधयिषायां सत्यामपि सिद्धावनुमितेरङ्गीकारसंभवात् । समानविषये प्रत्यक्षादिसामग्र्याः प्रबलत्वात्

क्वचित प्रत्यक्षादिसामग्रीरूपप्रतिबन्धकवशात् अनुमितिः कामं मा जायताम्। ' न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः ' इति वाचस्पतिमिश्रवचनं च प्रत्यक्षसामग्रीसद्भावकालाभिप्रायम्. अनुमितिसामग्रीसंपादनप्रयासाभावपरं च न तु सिद्धे; प्रतिबन्धकत्वपरम्। अतः प्रत्यक्षे जाते पुनः प्रत्यक्षोत्पादकसामग्र्यभावे च स्वय संपन्नपरामर्शबलादनुमितिरपीष्यत एव इत्यादि। अधिका युक्तयश्च मध्यस्थदृष्ट्या तत्र प्रदर्शिताः विमर्शकानामवधानमर्हन्ति।

## परामर्शप्रकरणम्

महानसादौ वह्निधूमयोः भूयस्सहचारदर्शनादिना धूमे वह्निव्याप्तिं गृहीतवतः कदाचित् पर्वतसमीपं गत्वा धूमं पश्यतः पुंसः धूमो वह्निव्याप्य इति व्याप्तिस्मृतिर्भवति। ततः वह्निव्याप्यधूमवानयमिति व्याप्तिपक्षधर्मतावगाही विशिष्टपरामर्शो भवति। अयमेव तृतीयलिङ्गपरामर्श इत्युच्यते। ततः पर्वतो वह्निमानित्यनुमितिर्जायते। तत्र व्याप्तिस्मृतिः करणं परामर्शो व्यापार इति कश्चन पक्षः। परामर्श एव करणमिति कश्चित् पक्षश्चेति नैयायिकानां मतस्थितिः। तथा च वार्तिकम् (पृ. 292-293 )—

> लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षम्, लिङ्गदर्शनं च द्वितीयम्। बुभुत्सावतो द्वितीयात् लिङ्गदर्शनात् संस्काराभिव्यक्त्यनन्तरकालं स्मृतिः, स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनम् अयं धूम इति। तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं लिङ्गपरामर्शरूपमनुमानं भवति — ० ० ०, एके तावत् वर्णयन्ति लिङ्गलिङ्गिसंबन्धस्मृतिरनुमानम् इतरैर्लिङ्गलिङ्गिसंबन्धदर्शनादिभिरनुगृह्यमाणा। अपरे पुनर्मन्यन्ते लिङ्गपरामर्शोऽनुमानमितरैरनुगृह्यमाणमिति। वयं तु पश्यामः सर्वमनुमानम्, अनुमितेस्तन्नान्तरीयकत्वात्। प्रधानोपसर्जनभाव-

विवक्षायां तु लिङ्गपरामर्श इति न्याय्यम् । कः पुनरत्र न्यायः ? आनन्तर्य-प्रतिपत्तिः । तस्मात् लिङ्गपरामर्शात् अनन्तरं शेषार्थप्रतिपत्तिरिति । तस्माल्लिङ्गपरामर्शो न्याय्य इति—इति । तात्पर्यटीकायां च [पृ. 311 )—

संबन्धस्मृतिसहकारिणा इन्द्रियेण स्वसाध्याविनाभूतलिङ्गविज्ञान
यदुपजन्यते तत् परामर्श इत्याख्यायते । तथाभूतलिङ्गगोचरो
वाक्यावयव एव उपनय इत्याख्यायते—

इति । प्राभाकरमीमांसकास्तु 'धूमो वह्निव्याप्यः' इति व्याप्तिस्मरणसहितात् 'धूमवान् पर्वतः' इति पक्षधर्मताज्ञानादेव 'पर्वतो वह्निमान्' इत्यनुमितेः संभवात् विशिष्टपरामर्शस्य हेतुत्वकल्पनं गौरवाय । व्याप्तिस्मृतिपक्षधर्मताज्ञानयोः परामर्शहेतुत्वेन नैयायिकैरपि स्वीकारात् 'तद्धेतोरेव तदुत्पत्तौ मध्ये किं तेन' इति न्यायात् इत्याहुः ।

मणिकाराः अस्मिन् प्रकरणे उक्तं प्राभाकरमतं विस्तरेणानूद्य परिपोष्य च दूषयन्ति स्म । तथा विशिष्टपरामर्शस्य अनुमितिहेतुत्वं स्थापयन्ति स्म । एवं स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वम्, तत्सामानाधिकरण्यं च व्याप्यत्वम् । तत्र व्याप्यत्वापेक्षया व्यापकत्वस्य लघुत्वात् व्यापकताज्ञानमेव अनुमितिहेतुः । न तु साध्यव्याप्तस्य पक्षधर्मताज्ञानं साध्यव्याप्यवत्पक्षधर्मताज्ञानं वा गौरवादिति मतान्तरमपि नैयायिकसंमतं सविस्तरमुपापीपदन् ।

प्रकाशकारैः व्यापकताज्ञानं परामर्श इति मतं दूषितम् । चूडामणि-कारैस्तु तद्दूषणोद्धारपूर्वकं तन्मतं समर्थितमिति विशेषोऽपि विदुषां परामर्शमर्हति ।

## लिङ्गकारणतावादः

अस्मिन् प्रकरणे लिङ्गपरामर्शोऽनुमितौ करणम्, न तु परामृश्यमानं लिङ्गम्, अतीतानागतधूमादिज्ञानेऽप्यनुमितिदर्शनेन लिङ्गे व्यापारपूर्ववर्तितयोरभावात् इति सोपपत्तिकं मतं प्रत्यपादयत। तथा व्यापाराभावात् न परामर्शः करणम्, किं तु व्याप्तिज्ञानमेव करणं परामर्शो व्यापार इत्यपि न्यरूप्यत।

तत्र व्याप्तिज्ञानं न करणम्, किं तु मन एव परामर्शद्वारा अनुमितिहेतुत्वात्करणम्। यत्र विशकलितानां व्याप्तिशरीरप्रविष्टसहचारादिपदार्थानां स्मरणे सति विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन विशिष्टवैशिष्ट्यावगाहिपरामर्शोत्पादादनुमितिस्तत्र परामर्शद्वारा व्याप्तिज्ञानस्य कारणत्वं न संभवति, तत्पूर्वं तस्यासत्त्वात् इति यज्ञपत्युपाध्यायमतमनूद्य तत्र संभावितान् दोषान् निरस्य तन्मतं स्थापितं प्रकाशे। चूडामणौ तु अनुमितेर्मनःकरणकत्वपक्षं बहुधा दूषयित्वा अन्ते—

वस्तुतस्तु पूर्वानुभवरूपव्याप्तिज्ञानमेव तत्रानुमितौ करणम्। तस्यानुमितिजनकसंस्कारेण व्यवहितत्वेऽपि फलाव्यवहितपूर्ववर्तिस्मृतिरूपपरामर्शव्यापारवत्तया हेतुत्वाविरोधात्। स्वनाशक्षणावधिफलाव्यवहितपूर्ववर्तिव्यापारवत्त्वस्य गौरवेण, मननादिव्यापारकश्रवणादेर्हेतुतापत्त्या चाप्रयोजकत्वात्। तस्मात् गङ्गाप्रवाहवत् निर्मले गङ्गेशवचसि बाधितार्थकत्वं न शङ्कनीयमित्यलमतिविस्तरेण—

इत्युपपादि। अनेन गङ्गेशोपाध्यायकृतेषु उपपादनेषु कियानादरश्चूडामणिकाराणामस्तीति अवगन्तुं शक्यते।

## केवलान्वयिप्रकरणम्

अथ व्याप्यं लिङ्गं केवलान्वयि केवलव्यतिरेक्यन्वयव्यतिरेकिभेदात् त्रेधा विभज्य प्रत्येकं लक्षणमुच्यते मणौ। अयं विभागः किमुपज्ञ इति किंचिद्विचारयामः। न्यायसूत्रे पूर्ववत् शेषवत् सामान्यतोदृष्टमिति त्रिविधमनुमानमित्येवोक्तम्। यत्र कारणेन कार्यमनुमीयते तत् पूर्ववत् यथा मेघोन्नत्या भविष्यति वृष्टिरिति, यत्र कार्येण कारणमनुमीयते तच्छेषवत् यथा नद्याः पूर्वोदकविपरीतमुदकं पूर्णत्वं स्रोतसः शीघ्रत्वं च दृष्ट्वा भूता वृष्टिरिति, अन्यत्र दृष्टस्यान्यत्र दर्शनं गतिपूर्वकमिति सामान्यतो दर्शनेन अन्यत्रदृष्टस्यादित्यस्यान्यत्र दर्शनेन गत्यनुमानं सामान्यतोदृष्टम् इत्येवं भाष्यकारैः प्रतिपादितम्। प्रकारान्तरमपि भाष्ये उक्तम्। परं तु केवलान्वयित्वादिकृतो विभागः न सूत्रभाष्ययोः प्रस्तुतः।

वार्तिककारैश्च बहुधा पूर्ववदादिशब्दस्यार्थमुक्त्वा अन्वयव्यतिरेकी, अन्वयी व्यतिरेकी चेति त्रेधा विभागोऽपि प्रदर्शितः। अयं तु विभागः भाष्यानारूढ इति टीकाकाराः प्राहुः। त्रिविधमिति सूत्रावयवमर्थगौरवादरात् वार्तिककारः उद्धाप्यं व्याचष्टे—इति तात्पर्यटीकाग्रन्थः द्रष्टव्यः। तत्रान्वयव्यतिरेकी नाम पक्षवृत्तित्वे सति सपक्षावृत्तित्वे सति विपक्षावृत्तिः, यथा शब्दः अनित्यः सामान्यविशेषवत्त्वे सति अस्मदादिबाह्यकरणजन्यप्रत्यक्षविषयत्वात् घटादिवत् इति। सामान्यविशेषः व्याप्यजातिः। घटत्वादौ व्यभिचारवारणाय सामान्यविशेषवत्त्वे सतीति, योगिनां बाह्यकरणप्रत्यक्षविषयेषु परमाणुषु व्यभिचारवारणाय अस्मदादीति, आत्मनि व्यभिचारवारणाय बाह्यकरणेति च विशेषणानि। अन्वयी नाम पक्षवृत्तित्वे सति सपक्षवृत्तित्वे सति विपक्षहीनः यथा सर्वानित्यत्ववादिनां शब्दः अनित्यः कृतकत्वादिति। अस्य हि विपक्षो नास्ति। व्यतिरेकी नाम पक्षवृत्तित्वे सति सपक्षरहितत्वे सति विपक्षावृत्तिः,

यथा इदं जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् इति वार्तिकस्था प्रतिपादनसरणिः। टीकायां 'विशेषः अभिधेयः प्रमेयत्वात् सामान्यवत्, परमाण्वाकाशादयः कस्यचित् प्रत्यक्षाः प्रमेयत्वात् घटवत्' इति अन्वयिनः उदाहरणान्तरे दत्ते।

एतद्वार्तिकमवलम्ब्यैव मणिकाराः त्रिधा लिङ्गं व्यभाक्षुरिति प्रतिभाति। तत्र मणौ—असद्विपक्षं केवलान्वयीति लक्षणमभ्यधायि। वार्तिके विपक्षहीन इत्यनेन सूचितमिदम्। यद्यपि वार्तिके पक्षवृत्तित्वे सति सपक्षवृत्तित्वे सति इत्यप्युक्तम्। तथापि तयोः विशेषणयोः स्वरूपकथनमात्रार्थता, तदनुपादानेऽपि लक्षणे नातिव्याप्त्यादिदोष इति मणिकृतामाशयः। इदं तु केवलान्वयिसाध्यकहेतो-र्लक्षणम्। साध्यनिष्ठं केवलान्वयित्वं तु अत्यन्ताभावाप्रतियोगित्वरूपम्। तथोक्तावपि अव्याप्यवृत्त्यभावस्य संयोगाभावादेः केवलान्वयित्वं न स्यात्, तस्य संयोगात्मकात्यन्ताभवप्रतियोगित्वात्। एवम् आकाशाभावस्य केवलान्वयित्वं न स्यात्, आकाशरूपात्यन्ताभावप्रतियोगित्वात्। अतः अत्यन्ताभावे स्वविरोधित्वं वृत्तिमत्त्वं चेति विशेषणद्वयं दातव्यम्। स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्।

एवं केवलान्वयिसाध्यकस्थले साध्याभावाप्रसिद्ध्या साध्यसंशयरूपपक्षता-विरहात् कथमनुमितिरिति शङ्का जायते। तत्रेत्थं समाहितं मणौ—तत्र पक्षः साध्यवान्न वेति संशयासंभवेऽपि साध्यं पक्षवृत्ति न वा, प्रमेयत्वं (साध्यं) पक्षानिष्ठात्यन्ताभावप्रतियोगि न वेति वा संशयो भवत्येव। सोऽपि संशयः साध्य-सिद्धिविरोधित्वात् अनुमानाङ्गम् इति।

ततः पक्षसत्त्वम्, सपक्षसत्त्वम्, विपक्षासत्त्वम्, अबाधितत्वम्, असत्प्रति-पक्षत्वं चेति पञ्च रूपाणि अनुमापकत्वौपयिकानि। केवलान्वयिसाध्यकस्थले तु विपक्षासत्त्वं नास्ति। तथा चैकरूपविकलं कथमनुमापकं स्यात् इत्याशङ्क्य

विपक्षासत्त्वं तावत् विपक्षवृत्तित्वशङ्कानिरासद्वारा व्यतिरेकव्याप्तावुपयुज्यते। केवलान्वयिनि तु विपक्षाभावेन विपक्षवृत्तित्वशङ्कैव नोदेतीति तन्निगमकस्य विपक्षासत्त्वस्य नास्त्यावश्यकता, अन्वयव्याप्तिमात्रेणानुमितिर्निर्वहतीति समाधानमुक्तं मणौ।

## केवलव्यतिरेकिप्रकरणम्

असत्सपक्षः केवलव्यतिरेकी। यस्य हेतोः सपक्षो नास्ति सः। अत्र तु व्यतिरेकयोः सहचारेण अन्वयव्याप्तिग्रहो भवति। गन्धवत्त्वावच्छेदेन इतरभेदसिद्धिरुद्देश्या। अतो न सिद्धसाधनम् इत्यादिकं निरूपितमादौ। ततः 'जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्' इति वार्तिकप्रदर्शिते व्यतिरेकिणि साध्याप्रसिद्धिमाशङ्क्य बहुधा तत्प्रसिद्धिरुपपादिता। अथ 'इच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति गुणत्वात्' इत्यत्र साध्यप्रसिद्धिप्रकारः प्रादर्शि।

## अर्थापत्तिप्रकरणम्

केवलव्यतिरेकिणा अनुमानेन गतार्थत्वात् अर्थापत्तिर्न प्रमाणान्तरमिति अत्र प्रकरणे न्यरूपि। अत्र मीमांसकमतनिराकरणाय बहु पराक्रान्तं मणिकारैः। अत्रेदं किंचित् स्पष्टीक्रियते। शबरस्वामिनः—(पृ. 46)

अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत
इत्यर्थकल्पना। यथा जीवतो देवदत्तस्य गृहेऽभावदर्शनेन
बहिर्भावस्यादृष्टस्य परिकल्पना—

इति अभाषन्त। कुमारिलभट्टपादाः श्लोकवार्तिके—

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवन्।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता॥

इति प्राहुः । अनयोर्भाष्यवार्तिकयोरयमाशयः—भाष्ये अर्थापत्तिरिति लक्ष्यनिर्देशः दृष्टः श्रुतो वेत्यादि लक्षणम् । यथाश्रुतभाष्यात् प्रत्यक्षदृष्टः शब्दावगतो वा अर्थः यमर्थं विना नोपपद्यते तस्यार्थस्य परिकल्पनमर्थापत्तिरिति लभ्यते । तथा सति अर्थापत्तिद्वयस्यैवोपादानेन अनुमानादिपूर्विकाणामर्थापत्तीनामनुपादानेन तासु लक्षणस्याव्याप्तिः स्यात् । यदि तु भाष्यस्थदृष्टशब्दः प्रमाणोपलब्ध इत्यर्थपरः तदा श्रुतस्यापि दृष्टपदेनैव संग्रहात् 'श्रुतो वा' इति पुनरुपादानमनर्थकं स्यात् । अतो वार्तिककारैः किंचित् परिष्कृत्य लक्षणमभ्यधायि । प्रत्यक्षादि-प्रमाणषट्कप्रमितोऽर्थः अन्यथानुपपत्त्या यत् अर्थान्तरं कल्पयति सा अर्थापत्तिरिति लक्षणम् । अतः सर्वासामर्थापत्तीनां संग्रहात् न लक्षणस्याव्यापकत्वमिति दोषः । 'श्रुतो वा' इत्यस्य सार्थक्यं तु—

दृष्टः पञ्चभिरप्यस्मात् भेदेनोक्ता श्रुतोद्भवा ।
प्रमाणग्राहिणीत्वेन यस्मात् पूर्वविलक्षणा ॥

इति श्लोकेन प्रत्यपादि । दृष्टार्थापत्तिः अर्थकल्पिका । श्रुतार्थापत्तिस्तु वाक्या-वयवरूपप्रमाणकल्पनद्वारा अर्थकल्पिकेति श्रुतार्थापत्तेः दृष्टार्थापत्त्यपेक्षया वैलक्षण्य-स्फोरणाय 'श्रुतो वा' इति पृथगुक्तिर्भाष्ये इति भावः । सर्वमिदं मनसि कुर्वाणैः पार्थसारथिमिश्रैः शास्त्रदीपिकायाम्—

प्रमितस्यार्थस्यार्थान्तरेण विनानुपपत्तिमालोच्य
तदुपपत्तये यार्थान्तरकल्पना सा अर्थापत्तिः—

इति लक्षणमभ्यधायि । अत्र प्रमितस्येत्यनेन प्रत्यक्षादिप्रमाणषट्कपूर्विका अर्थापत्तिः सूचिता । तत्र प्रत्यक्षपूर्विका यथा—प्रत्यक्षतोऽवगतात् दाहरूपात् कार्यात् वह्नौ

दाहशक्तेः कल्पना । अनुमानपूर्विका अर्थापत्तिर्यथा — देशान्तरप्राप्तिरूपेण लिङ्गेन आदित्यस्य गतिमनुमाय तदन्यथानुपपत्त्या आदित्यस्य गमनशक्तिमत्त्वकल्पनम् । शब्दपूर्विका अर्थापत्तिर्यथा— 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति शब्दतोऽवगतेन पीनस्य सतो देवदत्तस्य दिवा अभोजनेन रात्रिभोजनस्य कल्पनम् । इयमेव श्रुतार्थापत्तिरित्युच्यते । उपमानपूर्विका अर्थापत्तिर्यथा— गवयदर्शनानन्तरं 'एतत्सदृशो गौः' इति गवि गवयसादृश्ये उपमानेनावगते सति सदृशज्ञानग्राह्या काचन शक्तिर्गोरस्तीति कल्पनम् । ईदृशी च तत्रानुपपत्तिर्भवति—कथं गवयदर्शनानन्तरमेव गवि गवयसादृश्यज्ञानं जायते, प्रथमदर्शन एव किं न जायते ? सन्ति हि तदापि गवि गवयावयवसामान्यानि । तदेवं जातमपि गवि गवयसादृश्यज्ञानम् अनुपपत्त्या व्याकुलं भवति । तच्च शक्तिकल्पनयोपपाद्यते अस्ति काचन गोः शक्तिः या प्रतियोगिदर्शनेनाभिव्यक्ता सती गवि गवयसदृशीं धियमुपजनयतीति । अर्थापत्तिपूर्विका अर्थापत्तिर्यथा— अभिधानान्यथानुपपत्तिरूपया अर्थापत्त्या शब्दस्य वाचकशक्तिं कल्पयित्वा पुनस्तदन्यथानुपपत्त्या शब्दस्य नित्यत्वकल्पनम् । प्रत्युच्चारणं शब्दान्यत्वे सति अस्मिन् गृहीतसंबन्धेऽन्यस्य वाचकत्वं न स्यात् । सादृश्येन तदर्थप्रतिपादकत्वाभ्युपगमे लिङ्गाभासोत्पन्नज्ञानवदप्रमाणं स्यात् । न च चात्र सदृशप्रतीतिरस्ति, तत्त्वेनैव प्रत्ययात् । अतो वाचकशक्त्यनुपपत्त्या नित्यत्वकल्पनम् । अभावपूर्विका अर्थापत्तिर्यथा — जीवतो देवदत्तस्यानुपलब्ध्या गृहेऽभावमवगम्य तदन्यथानुपपत्त्या बहिस्सत्त्वस्य कल्पनमिति । सर्वमिदमुक्तं वार्तिके—

तत्र प्रत्यक्षतो ज्ञातात् दाहाद्दहनशक्तता ।
वह्नेरनुमितात्सूर्ये यानात् तच्छक्तियोग्यता ॥
श्रुतार्थापत्तिरत्रैव परस्तादभिधास्यते ।

गवयोपमितायां गोस्तज्ज्ञानग्राह्यता मता ॥

अभिधानप्रसिद्ध्यर्थमर्थापत्त्यावबोधितात् ।

शब्दे बोधकसामर्थ्यात् तन्नित्यत्वप्रकल्पनम् ॥

प्रमाणाभावनिर्णीताच्चैत्राभावविशेषितात् ॥

गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह दर्शिता ॥

तामभावोत्थितामन्यामर्थापत्तिमुदाहरत् ॥

इति । नन्वनुपपन्नात् प्रमाणप्रमितादर्थात् उपपादकस्यार्थस्य कल्पनमर्थापत्तिरिति पर्यवसितम् । इदं चानुमानमेव । अनुमानस्थलेऽपि हि वह्निमन्तरेणानुपपद्यमानात् धूमात् वह्निः कल्प्यते । तथा चार्थापत्तिरनुमानेऽन्तर्भवतीति चेत्—अत्रोच्यते । अनुमानस्थले हि यत् गमकं तन्निश्चितं भवति । निश्चितस्यैव धूमादेर्वह्नि-गमकत्वात् । अर्थापत्तिस्थले तु यत् गमकं तत् संदिग्धमित्यनयोर्वैषम्यात् । तथा हि, बहिः सत्त्वं प्रति न केवलं गृहासत्त्वं गमकम्, बहिस्सत्त्वशून्ये मृतेऽपि गृहासत्त्वस्य सद्भावेन व्यभिचारित्वात् । अपि तु गृहासत्त्वविशिष्टं जीवनं बहिस्स-त्वस्य गमकम् । जीवनं तु संदिग्धम् । देवदत्तस्य जीवनं प्रायशो गृहसंबन्ध्येव दृष्टमिति गृहाभावे दृष्टे सांशयिकं जीवनं स्वसंशयापनोदनार्थं बहिर्भावं कल्पयतीति मीमांसकानामाशयः ।

अथ नैयायिकानां मतमुपन्यस्यते । शब्दपूर्विकामभावपूर्विकां चार्थापत्तिं विहाय अन्यास्तस्रोऽर्थापत्तयः शक्त्याख्यपदार्थविशेषसाधनार्थमुपकल्पिताः शक्तेः पदार्थत्वाभावात् अनावश्यिक्यः इति जयन्तभट्टैर्न्यायमञ्जर्यां विस्तरेण न्यरूपि । इतरे शब्दपूर्वकाभावपूर्वकार्थापत्ती अन्वयव्यतिरेक्यनुमाने वा केवलव्यतिरेक्यनुमाने वा अन्तर्भवतः, न पृथक्प्रमाणभावम् अश्नुवाते इति कुसुमाञ्जलौ उदयनाचार्याः न्यरूरुपन् । तथा हि—जीवतो देवदत्तस्य गृहेऽभावः बहिरसद्भावेऽनुपपन्नः सन्

तस्य बहिस्सद्भावं कल्पयतीति अर्थापत्तेरुदाहरणमाहुः मीमांसकाः। तत्र अव्याप्यस्यानुपपन्नता न भवति, अव्यापकश्च उपपादको न भवति। व्याप्यमेव व्यापकं विना नोपपद्यते। अव्याप्यस्य अव्यापकं विनानुपपत्तिस्वीकारे गर्दभं विना धूमोऽनुपपन्न इत्यपि स्यात्। तथा च जीवतो देवदत्तस्य गृहाभावसंबन्धो बहिःसत्त्वं विना अनुपपन्न इति वदता गृहाभावसंबन्धः व्याप्यः बहिःसत्त्वं व्यापकमित्युक्तं भवति। विना न भवतीत्यनेन तदभाववदवृत्तित्वरूपव्याप्तेरेव निर्देशात्। तथा च व्याप्यात् व्यापकज्ञानरूपा अर्थापत्तिप्रमितिरनुमितिरूपैव न ततो विलक्षणा ।

नन्वर्थापत्तिस्थलेऽविनाभावरूपां व्याप्तिं न वयम् अपजानीमहे, किं तु तज्ज्ञानम्। अनुमाने त्वविनाभावज्ञानमावश्यकमिति विशेष इति चेत्—उच्यते। अर्थापत्तौ तावत् अनुपपत्तिज्ञानमावश्यकम्। अन्यथा यत्र वस्तुगत्या अनुपपत्तिरस्ति तज्ज्ञानं तु नास्ति तत्राप्यर्थप्रमा प्रसज्येत। अपि चार्थापत्त्याभास एव न स्यात्। अनुपपत्त्यभावस्थलेऽप्यनुपपत्तिभ्रमेण किंचित्कल्पनं ह्यर्थापत्त्याभासः। अनुपपत्तेः स्वरूपसत्याः कारणत्वे च आभासस्थलेऽनुपपत्तेरसत्त्वात् कथं तत्कार्यभूतभ्रमात्मककल्पनस्यावकाशः? तथा चानुपपत्तिज्ञानस्यावश्यकत्वात् तदेव ज्ञानमविनाभावरूपव्याप्तिज्ञानमिति नानुमानतो वैलक्षण्यमीक्ष्यते। तथापि दृष्टान्ताभावात् कथं व्याप्तिर्गृह्यतामिति चेत्—श्रूयताम्। एकैकस्यापि पुरुषस्य स्वात्मविषये एकत्र देशे सत्त्वेऽन्यत्रासत्त्वस्य, अन्यत्र सत्त्वेऽत्रासत्त्वस्य च प्रत्यक्षसिद्धत्वात् तद्दृष्टान्तेन व्याप्तिः सुग्रहैव। तथा चेत्थमनुमानप्रयोगः—देवदत्तः बहिरस्ति जीवित्वे सति गृहेऽसत्त्वात्, यः जीवन् सन् गृहे नास्ति स बहिरस्ति यथा अहम् इति।

अत्रेदं विवेचनीयम्। शास्त्रदीपिकायाम्—भवत्वर्थापत्तिः प्रमाणम्,

अनुमानं त्वर्थापत्तावेवान्तर्भवति । पर्वतस्य च धूमवत्तावगता । यदि पर्वतेऽग्निर्न स्यात् तदा धूमवत्ता वा मिथ्या स्यात्, सर्वधूमवतामग्निमत्त्वं वा मिथ्या स्यात् । दुतभयस्यामिथ्यात्वार्थमग्निमत्त्वं कल्प्यत इत्यर्थापत्तिरेषेत्याशङ्क्य, स्यादेतदेवं यदि सर्वधूमवतामग्निमत्त्वमनुमानादन्येनावगतं स्यात् । न त्वेवमस्ति । दृष्टान्तधर्मिष्वेव हि धूमस्याग्निनियमोऽवगतो न सर्वत्र । अनुमानात्तु सर्वधूमवतामग्निमत्त्वावगतिः । अनुमानप्रयोगस्तु, अन्येऽप्यतीतानागतव्यवहितविप्रकृष्टाः सर्व एव धूमवन्तोऽग्निमन्तः धूमवत्त्वात् परिदृश्यमानमहानसादिवदिति । न हि दृष्टान्तेष्वेवावगतस्य अग्निनियमस्य सर्वधूमवतामग्निमत्तां विना कश्चिद्विरोधोऽस्ति, येनार्थापत्तिः स्यात् । तस्मात् परस्परसंकीर्णविषयसद्भावात् अनुमानमपि प्रमाणान्तरम् अर्थापत्तिरपि । सिद्धे च द्वयोः प्रामाण्ये पर्वतादिषु धूमदर्शनात् यदग्निविज्ञानं तद् द्वेधापि संभवति- दृष्टान्तदृष्टव्याप्तिस्मरणाद्वा अनुमानम्, विरोधपर्यालोचनया वा अर्थापत्तिः इति समाधानमुक्तम् । तथा च व्याप्तिस्मरणपूर्वकार्थापत्तिस्थलेऽनुमानम्, प्रमाणद्वयविरोधपर्यालोचनस्थलेऽर्थापत्तिरिति व्यवस्थां मीमांसका मन्यन्ते ।

प्रतिघातालोचनया अर्थकल्पनस्थलेऽपि निरवकाशविरोधिविशेषसंनिधौ (गेहे देवदत्ताद्यभावप्रत्यक्षसंनिधौ) क्वचिदस्तीति सावकाशं सामान्यं संकोचयितव्यमिति व्याप्तिमालोच्यैव हि बहिरस्तीत्यर्थकल्पनं भवति । तस्मात् व्याप्तिज्ञानपूर्वकत्वस्यावर्जनीयत्वात् अर्थापत्तिरनुमानान्नातिरिच्यत इति नैयायिकाः ।

दुरूहमेतदेव तत्त्वं तत्त्वचिन्तामणावत्र प्रकरणे विस्तरेण निरूपितम् । सावधानं सश्रद्धं च मुहुर्मुहुः प्रकरणमिदं पश्यतां अर्थापत्तितत्त्वनिर्णयो भविष्यति नेतरेषाम् ।

## अवयवप्रकरणम्

स्वार्थपरार्थभेदेन द्विविधेऽनुमाने परार्थानुमानस्य न्यायसाध्यत्वात् न्यायः तवदयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि अत्र प्रकरणे निरूप्यन्ते । सूत्रकारस्तु न्यायशब्दस्यायमर्थ इति कुत्रापि न निरदिशत् तथापि पञ्चानामवयवानां प्रत्येकं लक्षणानि उक्तवान् । तेनैव पञ्चावयवकं वाक्यं न्याय इति ज्ञातुं शक्यत इति मेने इति भाति । अवयवलक्षणेष्वपि सूत्रोक्तेषु अनुपपत्तीरालक्ष्य अव्याप्त्यादिदोषरहितानि लक्षणानि मणौ प्रादर्श्यन्त । तथा अवयवत्रयवादं निरस्य पञ्चानामवयवानामावश्यकत्वमत्र अतिष्ठिपत् मणिकारः । तथा प्रतिज्ञादीनां क्रमेऽपि विपर्यासो न कार्यः , क्रमे हेतुविशेषसद्भावादिति मत्वा उत्तरोत्तरावयवाभिधाने आकाङ्क्षाक्रममपि साधु न्यरूपयत् । उदाहरणे यत्तच्छब्दयोर्वीप्साविषये यो विचारोऽत्र कृतः स नूतनः विदुषां तुष्टिमावहति ।



श्रीरस्तु

# तत्त्वचिन्तामणिः

## अनुमानखण्डः

—— : o : ——

प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसंमतत्वात् उपमानात् प्राक् अनुमानं निरूप्यते ।

---

### प्रकाशः

प्रणयकलहकाले भीषणं भीतिहेतोः
प्रकटयति समन्तान्मायया कायमस्मिन् ।
[1]सभयमिव भवान्या गाढमालिङ्ग्यमानो[2]
घटयतु घनविघ्नध्वंसमस्माकमीशः ॥

निशम्य सकलं शास्त्रं नानागुरुमुखाम्बुजात् ।
अनुमानप्रकाशोऽयं रुचिदत्तेन तन्यते ॥

संगतिं दर्शयन्नेव शिष्यावधानार्थं[3]मनुमानं निरूप्यत इति प्रतिजानीते— प्रत्यक्षेति । अत्र प्रत्यक्षस्यानुमानं प्रति साक्षात्परम्परया वा हेतुत्वमुपजीव्यत्वम् । यद्यप्यनुमानोपनीतप्रत्यक्षेऽनुमानस्योपजीव्यत्वम्, प्रामाण्यग्राहकत्वेन च तत्र तस्योपजीव्यत्वम्, तथापि न प्रत्यक्षत्वावच्छेदेन तथा, प्रत्यक्षं त्वनुमानत्वावच्छेदेनैव तथेति ॥

---

1. ख. सभयमथ
2. ख. मालिङ्गमानः
3. ख. मनुमाननिरूपणं क्रियत इति

## तर्कचूडामणिः

कावेरीवारिपानप्रतिहततमसां मण्डिते पण्डितानां
वृन्दैः श्रीरामचन्द्रस्मृति[1]बलविशदाशेषतन्त्रार्थसारः ।
देशे विख्यातवासो विविधगुरुकृपालेशतो लब्धबोधो
[2]न्यायाब्धि तर्कचूडामणिमिह कुरुते बहवृचो धर्मराजः ॥ १ ॥

त्रेताग्निधूमाकुल[3]वीथिकाङ्गणे गृहे गृहे यत्र वसन्ति सूरयः ।
अधीतसर्वश्रुतयः कथान्तरे विनिर्जितप्रत्यनुमानवादिनः[4] ॥ २ ॥

तत्र कण्डर[5]माणिक्यग्रामरत्ननिवासिना ।
मणिप्रकाशविवृतिर्धर्मराजेन तन्यते ॥ ३ ॥

दशानामपि टीकानां [6]भङ्गं कुर्वन् क्वचित् क्वचित् ।
अनुमानप्रकाशस्य विवृतिं करवाण्यहम् ॥ ४ ॥

[7]आरब्धपरिसमाप्तये मङ्गलमाचरितं शिष्यशिक्षायै ग्रन्थतो निबध्नाति— **प्रणयेति । विघ्नध्वंसमिति ।** यद्यपि [8]ग्रन्थपरिसमाप्तिरेव प्रार्थनीया ; तथापि सति विघ्नध्वंसे लोकावगतकारणादेव समाप्तिरिति विघ्नध्वंसमात्रं प्रार्थितम् । अत एव मङ्गलस्य विघ्नध्वंसमात्रं फलमित्युक्तम् । स्वकर्तव्यग्रन्थोपादेयताहेतुभूतं[9] सम्प्रदायाभिज्ञत्वं स्वस्य दर्शयति—**निशम्येति ।** नन्वनुमितिलक्षणमेव क्रियताम्, [10]किमनेन

---

1. ख. फल
2. ख. न्यायाब्धिस्तर्कचूडामणिरिह
3. ख. वीथिकाङ्कणे
4. क. वेदिनः
5. ख. ग. माणिक्कग्रामरत्ननिवासिना ।
6. भङ्गं भङ्गं
7. ख. अथारब्ध
   ग. अविघ्नपरिसमाप्तये
8. ख. ग्रन्थसमाप्तः प्रार्थनीया
   ग. ग्रन्थसमाप्तिरेव
9. ख. ग. हेतुं संप्र-
10. ग. किमनुमानं निरूप्यते

## प्रकाशः

बहुवादीति। तथा चाल्पवादिविप्रतिपत्तिनिरासपूर्वकनिरूपणतया प्रथमअनुमानं शिष्यजिज्ञासाविषय इति [1]उपमाननिरूपणात्पूर्वभावोऽनुमाननिरूपणस्येति भावः। यद्यपि प्रथमत्वेन बहुवादिविप्रतिपत्तिनिरासः अक्लिष्टेन कर्तुं शक्यत इति वैपरीत्यमर्हम्; तथापि यत्रोपमानं परैरन्तर्भावनीयं [2]यस्माच्चास्माभिर्बहिर्भावनीयम् [3]तदनुपदर्शने उपमानमपि विचारयितुं न शक्यत इत्यनुमानप्राथम्यम्। 'अथानुमानं निरूप्यते' इति पाठे अथशब्दस्यैवायमर्थः। प्रत्यक्षानन्तरमनुमानस्योद्देशात् तल्लक्षणानन्तरमनुमानलक्षणं क्रियत इत्यर्थः।

---

## तर्कचूडामणिः

निरूप्यत इत्यन्तेन? [4]न च शिष्यावधानार्थं तदिति वाच्यम्। अनुमानं निरूप्यत इत्येतावतैव [5]तस्य सिद्धेरित्यत आह—**संगतिमिति**। हेतुहेतुमद्भावसंगतिमित्यर्थः। नन्वाकाशं नित्यं निरवयवद्रव्यत्वादित्यादौ पक्षसाध्य[6]हेतूनामतीन्द्रियत्वान्न प्रत्यक्षस्यानुमितिहेतुत्वमित्यत आह—**अत्रेति**। हेतुत्वं प्रयोजकत्वमित्यर्थः। अत्र [7]करणयोरुपजीव्योपजीवकभावो [8]नाभिमतः। मनःकरणत्वपक्षे प्रत्यक्षस्य [9]तदुपजीव्यत्वायोगात्। किं तु तत्फलयोः [10]प्रत्यक्षज्ञानानुमित्योरिति बोध्यम्। **प्रामाण्येति**। यद्यप्यनुमानस्य प्रत्यक्षगतप्रामाण्यानुमितिहेतुत्वेऽपि न प्रत्यक्षहेतुत्वम्, तत्पूर्ववृत्तित्वस्यैवासिद्धेः। न च प्रामाण्यज्ञानवानहमित्युपनीतप्रामाण्यप्रत्यक्षे तस्य

---

1. ख. 'उपमाननिरूपणात् ........ तथापि यत्र' इति ग्रन्थस्त्रुटितः'
2. ख. यतो वास्माभिः
3. ख. तददर्शने
4. क. च सिध्यावधानार्थ
5. ख. ग शिष्यावधानसिद्धे-
6. ख. साधनानाम्
   ग. साधनानां द्रव्यत्वात्
7. ख. ग. कारणयोः
8. ग. न विवक्षितः
9. ख. ग. 'तद्' नास्ति।
10. ख. ग. प्रत्यक्षानुमित्योरिति

## तर्कचूडामणिः

हेतुत्वमिति वाच्यम् । अनुमानोपनीतेत्यनेनैवोक्ततया [1]पृथगुक्त्यनुपपत्तेः । न च [2]तदुत्पादकस्येव तत्प्रामाण्यग्राहकस्यापि तदुपजीव्यत्वमिति वाच्यम् । तदुभयगतस्योपजीव्यत्वस्य दुर्निरूपत्वात् । सकलप्रत्यक्षप्रामाण्य[3]स्यानुमानाधीनग्रहतया सिद्धान्तेऽपि [4]तदनिवारणापाताच्च । तथापि प्रामाण्यनिश्चयाधीनार्थनिश्चये प्रामाण्यानुमानस्य हेतुत्वादुपजीव्यत्वं बोध्यम् ।

ननु बहुसंमतत्वमात्रात् कथं प्राथम्यमित्यत आह—तथा चेति । [5]बहुवादिविप्रतिपत्तिनि[6]रासस्य [7]दुर्विज्ञानतया तत्पूर्वकोपमाननिरूपणे शिष्यस्य प्रथमं [न] [8]जिज्ञासेति तदनुरोधेनानुमाननिरूपणस्य प्राथम्यमित्यर्थः । ननु [9]शिष्यस्यापटुत्वे चार्वाकविप्रतिपत्तिनिरासस्यापि दुर्विज्ञानतया अनुमानमपि न [10]शिष्यजिज्ञासाविषयः स्यात् । [11]पटुत्वे च उपमानविप्रतिपत्तिनिरासस्यपि सुकरतया तत्रापि [12]शिष्यजिज्ञासा युक्ता । प्रत्युत समर्थस्य [13]बहुवादिविप्रतिपत्तिनिरास एव जिज्ञासा[14]विषय इति तन्निरासपूर्वकमुपमानमेव जिज्ञासाविषयः स्यादित्याशङ्क्य तात्पर्यान्तरमाह—**यद्यपीत्यादिना** । [15]**अक्लिष्टेन** कुशलेन । परैः [16]भूषणकारादिभिः ।

---

1. ख. प्रागुक्त्यनुप-
2. ख. तद्द्रूपत्वात्तस्येव
3. ग. स्यानुमानग्रहतया
4. ख. तदनिराकरणापाताच्च
5. क. बहुविप्रतिपत्ति-
6. ग. विचारस्य
7. ग. दुर्विहततया
8. ग. तज्जिज्ञासेति
9. ख. शिष्यस्यापरत्वे ग. शिष्यव्यापकत्वे
10. ख. ग. 'शिष्य' नास्ति ।
11. ख. ग. परत्वे च
12. ख. ग. 'शिष्य' नास्ति
13. क. बहुविप्रतिपत्ति-
14. ख. ग. 'विषय इति तन्निरासपूर्वकमुपमानमेव' नास्ति ।
15. क. क्लिष्टेन
16. ख. दूषण

**तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः ।**

---

## प्रकाशः

तत्रानुमाने निरूपणीये । क्रियाद्वारा करणं लक्षयितुं प्रथमं क्रियालक्षणमाह—व्याप्तीति । व्याप्तिविशिष्टं च तत् पक्षधर्मताज्ञानं चेति कर्मधारयः । व्याप्तिवैशिष्ट्यं च [1]तद्विषयत्वं तत्प्रकारकत्वमिति यावत् । एवं च व्याप्तिप्रकारकपक्षधर्मताज्ञानजन्यत्वं पर्यवस्यति ।

---

## तर्कचूडामणिः

[2]नन्वथानुमानमिति पाठे उक्तसंगतेरभावात् असंगतिमाशङ्क्याह—**अथेति ।** **अयमिति ।** उपजीव्यत्वादित्यर्थः । ननु [3]निरुक्तोपजीव्यत्वस्य प्रथमनिरूपणप्रयोजकत्वे उपमाननिरूपणस्य शब्द[4]पूर्ववृत्तित्वं न स्यात् । तस्य [5]शब्दत्वावच्छिन्नशब्दं प्रत्यनुपजीव्यत्वात् । किं चानन्तर्यादि[6]प्रतिपादकाथशब्दस्य नोपजीव्यत्वादिरर्थ इत्यरुचेराह—**प्रत्यक्षेति ।** [7]आनन्तर्यादिमात्रमथशब्दार्थः । **तस्य** प्रतियोग्याकाङ्क्षायाम् प्रत्यक्षेति लभ्यते । आनन्तर्ये हेतुः प्रत्यक्षेति । एवं चात्र पाठे अवसरसंगतिरेवेति द्रष्टव्यम् । [8]न चोद्देशो [9]वा विपर्ययेण किं न स्यादिति वाच्यम् । स्वतन्त्रस्य [10]महर्षेर्नियोगाद्यविषयत्वादित्यर्थः । बहूनां प्रक्रान्तत्वेन निर्धारणायोगादर्थान्तरमाह—[11]**अनुमान इति ।** ननु निरूपणीय[12]करणलक्षणपरित्यागेन क्रियालक्षण[13]करणमनुपपन्नमित्यत आह—**क्रियेति ।** क्रियालक्षण[14]-

---

1. ख, तद्विषयकत्वं
2. क. नन्वथानुमान इति
3. क. निरुक्त्योपजीव्य-
4. ख. ग. पूर्वभावित्वम्
5. ख. क. शब्दत्वावच्छिन्नं प्रति
6. क. प्रतिपादकार्थशब्दस्य
7. ख. आनन्तर्यमात्रम्
   ग. आनन्तर्यमथशब्दार्थे
8. ग. अनुद्देशो विपर्ययेण
9. ख. 'वा' नास्ति
10. ख. महर्षेर्नियोगविषय-
11. ग. अनुमानमिति
12. क. कारण-
13. ख. ग. कथनमनुप-
14. क. करणमन्तरेण

## तर्कचूडामणिः

कथनमन्तरेण करणलक्षणस्य वक्तुमशक्यत्वादित्यर्थः । ननु निरुक्तपक्ष[1]धर्मज्ञानत्वमेव लक्षणमस्तु, लाघवात् । न च [2]गुरुमतेऽसम्भवान्नेदं [3]लक्षणम्, अनुमितिकरणत्वं तु तन्मतेऽप्यस्तीति वाच्यम् । [4]न्यायमतेनैव तल्लक्षणप्रणयनात् । अन्यथा [5]तन्मतेऽप्यनुमितिमात्र एव लक्षणाभावेन तद्घटितानुमान[6]लक्षणेऽप्यसंभवापत्तेः । न चैवं संशयोत्तरप्रत्यक्षजनकपरामर्शेऽतिव्याप्तिः । तस्यापि लक्ष्यत्वात् । [7]न च तज्जन्यत्वे प्रत्यक्षस्यानुमितित्वापत्तिः, अनुमानजन्यत्वादिति वाच्यम् । तत्त्वेन तज्जन्यत्वस्यैवानुमितित्वप्रयोजकत्वात् । अन्यथा त्वन्मतेऽपि [8]परामर्शस्यानुव्यवसायादावनुमितित्वापत्तेः । अजनितफलक[9]परामर्शसंग्रहायानुमितिकरणत्वेनानुमिति[10]जननस्वरूपयोग्यत्वस्यैव वक्तव्यतया उक्तप्रत्यक्षजनकपरामर्शस्यापि लक्ष्यत्वावश्यंभावाच्चेति चेन्न । उक्तज्ञानत्वस्य लक्षणत्वे प्राचीनमते लिङ्गतत्परामर्शयोः, मणिकृन्मते व्याप्तिज्ञानस्य, [11]मतान्तरे [12]मनसश्च करणत्वेन [13]लक्षणस्यान्यतमासिद्धिप्रसङ्गः स्यात् । क्रियाद्वारा करणलक्षणाभिधाने तु न दोषः । करणविप्रतिपत्तावप्यनुमितेः परामर्शजन्यत्वे [14]नैयायिकानां विवादाभावात् ।

ननु व्याप्तिविशिष्टा या पक्षधर्मता व्याप्तिविशिष्टस्य पक्षधर्मतेति वा समासादरे भ्रमानुमित्यव्याप्तिः । व्याप्तिविशिष्टश्च पक्षधर्मश्चेति द्वन्द्वादरे प्रमानुमित्यव्याप्तिरित्यत आह—व्याप्तीति । ननु व्याप्त्यनाश्रयज्ञानस्य कथं तद्वैशिष्ट्यमित्यत आह—व्याप्तीति । ननु व्याप्तिविषयकोक्तज्ञानत्वं नानुमितिहेतुतावच्छे-

---

1. ग. धर्मताज्ञान-
2. ग. तन्मते
3. क. लक्षणमितिकरणत्वं
4. ख. न्यायमतेनैव तल्लक्षण
5. ख. तन्मतेऽनुमिति-
6. क. लक्षेऽप्यसंभवापत्तेः
7. क. अतज्जन्यत्वे
8. म. परामर्शानु-
9. ख. परामर्शसंग्राहकतया अनुमितिजननस्वरूपयोग्यस्यैव
10. क. जनकस्वरूप
11. ख. मानान्तरे मनसश्च करणत्वेन
12. क. मनसस्त्वकरणत्वेन
13. ग. लक्षणस्यान्यतरासिद्धिप्रसङ्गः स्यात्
14. ग. 'नैयायिकानाम्' नास्ति ।

## प्रकाशः

ननु विशकलितं व्यभिचाराभावं सहचारं च स्मरतः पक्षवृत्तिहेतौ तदुभय-वैशिष्ट्यज्ञानाद्यत्रानुमितिस्तत्राव्याप्तिः। [1]व्याप्तेः पूर्वमनुपस्थितत्वेन तत्राप्रकारत्वात्। न च [2]तत्रानुमितिर्न भवत्येवेति वाच्यम्। अनुभवविरोधादिति चेन्न। व्यभिचार-ज्ञानविरोधि[3]प्रकारापन्नव्याप्तिविषयत्वस्यैव व्याप्ति[4]प्रकारकपदेन विवक्षितत्वात्। तादृशश्च प्रकारो व्याप्तिघटकयत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वादिरूपः। अत एव [5]प्रमेयत्वप्रकारकव्याप्तिज्ञानान्नानुमितिः। तज्ज्ञानस्य च व्याप्तिविशिष्ट-पक्षधर्मताज्ञानत्वेन जनकत्वं विवक्षितम्। तेन तदनुव्यवसाये [6]तज्ज्ञानजन्यतत्स्मरणे न्यायजन्यवाक्यार्थज्ञानादौ च नातिव्याप्तिः।

---

## तर्कचूडामणिः

दकम्, प्रमेयत्वादिप्रकारकपक्षधर्मताज्ञानादनुमित्यापत्तेरित्यत आह—**तत्प्रकारकत्व-मिति। नन्विति।** यत्र धूमसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं वह्नौ वह्नि-सामानाधिकरण्यं च धूमे विशकलितमेवावगतम्, तत्रापि विशेष्ये विशेषणमिति न्यायेन पक्षवृत्तिहेतौ साध्यसामानाधिकरण्यं साध्ये चोक्ताभावाप्रतियोगित्वं विषयीकृत्य विशिष्टपरामर्शसम्भवेन तज्जन्यानुमितावव्याप्तिरित्यर्थः। **तदुभयेति।** अव्यभिचारवैशिष्ट्यं परम्परया, सहचारवैशिष्ट्यं तु साक्षादेव [7]भासत इति भावः। **न चेति।** व्याप्तिप्रकारकत्वस्य हेतुतावच्छेदकत्वादिति भावः। **[8]अनु-भवेति।** [9]लाघवेनाव्यभिचारप्रकारकत्वमेव तदवच्छेदकमिति भावः। विरोधि [विरोधित्वं] तत्प्रतिबन्धकज्ञानविषयत्वं बोध्यम्। [10]न च व्यभिचारप्रकारक-

---

1. ख. व्याप्तेस्तत्र पूर्वानुपस्थितत्वेनाप्रकारत्वात्
2. क. ततोऽनुमिति
3. ख. प्रकारेण व्याप्ति-
4. क. प्रकारपदेन
5. क. प्रमेयप्रकारक-
6. ख. तज्जनितस्मरणन्यायजन्यवाक्यार्थज्ञानादौ च नातिव्याप्तिः।
7. क. संभासते
8. क. अनुभवेनेति
9. क. लाघवाव्यभिचारकत्वमेव
10. ग. न चाव्यभिचारि-

## प्रकाशः

यत्तु [1]व्याप्तिविशिष्टेति भावप्रधाननिर्देशात् द्वन्द्वसमासः । एवं च व्याप्तिविशिष्टत्वपक्षधर्मत्वप्रकारकज्ञानजन्यत्वं तत्त्वमिति । तत्तुच्छम् । वह्निव्याप्य-धूमवानयमिति परामर्शे व्याप्तेः प्रकारत्वेऽपि तद्वैशिष्ट्यस्याप्रकारत्वात्। पक्षधर्मत्वस्य संसर्गरूपतया सर्वथैवाप्रकारत्वाच्चाव्याप्तेः । न चैतादृशपरामर्शादनुमितिर्न भवत्येवेति वाच्यम् । अनुभवविरोधात् । [2]लाघवेन [3]तादृशस्यैव हेतुत्वाच्च ।

---

## तर्कचूडामणिः

त्वमेव लाघवेन [4]विवक्ष्यतामिति वाच्यम् । अन्योन्याभावादिगर्भाव्यभिचारस्य [5]नानाप्रकारत्वेनोक्तरूपेण तदनुगम[6]स्यावश्यं वाच्यत्वादिति भावः ।

ननु विशकलितस्थलीयव्यभिचारपरिहाराय [7]व्याप्तिविषयकत्वमेव [8]विवक्ष्य-ताम्, तत्रापि [9]संसर्गविधया व्याप्तेर्भासमानत्वादित्यत आह—अत एवेति । **ज्ञानादाविति** । आदिपदेन परामर्शजनितपरामर्शान्तरसंग्रहः । **नातिव्याप्तिरिति** । [10]अनुव्यवसाये विषयत्वेन, स्मृतौ समानविषयकानुभवत्वेन, महावाक्यार्थज्ञाने पदार्थ-ज्ञानत्वेन [11]अवान्तरवाक्यार्थज्ञानत्वेन वा, परामर्शान्तरे विशेषणज्ञानत्वेन परामर्शस्य हेतुतयोक्तरूपेणाहेतुत्वादिति भावः ।

---

1. ख. विशिष्टश्चेति भावप्रधानो निर्देशः । द्वन्द्वश्च समासः । एवं च
2. क. लाघवेनैव
3. क. तादृशस्य च
4. क. लक्ष्यतामिति
5. क. नान्यत्वेनोक्त- ग. नानात्वेनोक्त-
6. ख. स्यावश्यवाच्य-
7. क. व्याप्तिविषयत्व-
8. ग. विवक्षितम्
9. क. संसर्गविषया
10. क. अनुव्यवसायो
11. ख. 'अवान्तरवाक्यार्थज्ञानत्वेन वा' नास्ति

## प्रकाशः

नन्वेवमपि विशेषदर्शनजन्ये [1]संशयोत्तरप्रत्यक्षे विपर्ययोत्तरप्रत्यक्षे चातिव्याप्तिः। तस्य व्याप्तिविशिष्टपक्षधर्मताज्ञानत्वेनैव तत्र जनकत्वादिति चेत्—अत्र केचित्। विशेषदर्शनस्य न तत्त्वेन जनकत्वम्। किं तु भ्रमविरोधिप्रत्यक्षविशेषदर्शनत्वादिना।

---

## तर्कचूडामणिः

न्वयायोगात्। [2]प्रतिपाद्यतावच्छेदकान्वयित्वस्य विभक्त्यर्थेऽव्युत्पत्तेः। तथा सति [3]घटा इति बहुवचनानुपपत्तेः। अपि च एकशेषस्य द्वन्द्वापवादकत्वानुपपत्तिः। तत्र प्रतिपाद्यतावच्छेदकभेदाभावेन द्वन्द्वस्याप्रसक्तौ तदपवादकत्वायोगात्। अपि च प्रतिपाद्यभेदस्य [4]तदवच्छेदकभेदापेक्षया लघुत्वेन [5]स द्वन्द्वप्रयोजकः। न चैवं प्रमाणप्रमेयेत्यादौ का गतिरिति वाच्यम्। तत्रापि प्रमाणस्य प्रमेयप्रतियोगिकभेदाभावेऽपि प्रमेयस्य प्रमाणप्रतियोगिक[6]भेदसत्त्वात्। परस्परभेदस्य गौरवेणाप्रयोजकत्वात्। न चैवमपि "नीलघटयो[7]रभेदसंसर्गानुभवबलात्" इति मणिविरोधः। तत्र प्रतिपाद्यतन्नीलघटयोर्व्यक्त्योर्भेदाभावादिति वाच्यम्। तत्रापि घटपदं घटत्वपरम्, नीलपदं नीलत्वपरम्, तयोरभेदः आश्रयाभेद इत्यर्थात्।

तस्येति। [8]विशेषदर्शनस्येत्यर्थः। यद्यपि व्यञ्जकाभावप्रयुक्तसंशयोत्तरप्रत्यक्षे न विशेषदर्शनं हेतुः। [9]तथापि तदप्रयुक्तसंशयोत्तरप्रत्यक्षे [10]तस्य हेतुत्वमिति भावः। न चोक्तज्ञानकरणत्वं विवक्षितमिति वाच्यम्। तत्त्वेन [11]तज्जनकत्व-

---

1. ख. संशयविपर्ययोत्तरप्रत्यक्षेऽतिव्याप्तिः
2. क. प्रतिपादितावच्छेदक
3. क. घटातिबहु-
4. ग. तदवच्छेदकत्वभेदा-
5. क. स द्वन्द्वः प्रयोजकः ग. स एव द्वन्द्वप्रयोजकः
6. क. भेदस्य सत्त्वात् ग. भेदवत्त्वम्
7. ख. ग. अभेदानुभवबलात्
8. ग. विशिष्टदर्शन-
9. क. तथापि प्रयुक्त-
10. क. तस्याहेतुत्व- ग. तस्यापि हेतुत्व-
11. ख. ग. तज्जन्यत्वमित्यस्य व्यर्थतापत्तेः

## प्रकाशः

अन्यथा शङ्खे पीतत्वभ्रमानन्तरं श्वैत्यव्याप्यशङ्खत्वरूपविशेषदर्शने श्वैत्य-प्रत्यक्षापत्तिरिति ।

तन्न । एवमपि संशयोत्तरप्रत्यक्षेऽ[1]तिव्याप्त्यवारणात् । न हि तत्रापि तस्य [2]तत्त्वेनाजनकत्वम् । व्याप्यदर्शनमात्रस्य [3]भ्रममात्राविरोधित्वेऽपि संशयमात्र-विरोधित्वात् ।

अन्ये तु संशयोत्तरप्रत्यक्षे विशेषदर्शनं न परामर्शरूपम्; किं तु करादि पुरुषत्वव्याप्यम् अयं च करादिमानित्यादिज्ञानद्वयात्मकमेव । तत एव तदुत्पत्तौ [4]तत्कल्पने मानाभावात् । तथा च [5]न तत्रातिव्याप्तिरिति । तन्न । यत्र [6]दैववशात् प्रथममेव तादृशः परामर्शः तत्र तज्जन्यप्रत्यक्षे

## तर्कचूडामणिः

मित्यस्य व्यर्थत्वापत्तेः । अनुव्यवसायादौ परामर्शस्य करणत्वाभावात् । [7]व्याप्ति-ज्ञानादिकरणत्वमते [8]असम्भवाच्च । **भ्रमविरोधीति** । यद्यपि [9]प्रत्यक्षपदं व्यर्थम् । तथापि भ्रमविरोधिविशेषदर्शनत्वं प्रत्यक्षविशेषदर्शनत्वं चेति प्रयोजकद्वये तात्पर्यम् । भ्रमविरोधिविशेषदर्शनत्वम् आदिपदग्राह्यम् । प्रत्यक्षपदं स्वव्यापकप्रत्यक्षसामग्री-कालीनपरम् । तेन श्वैत्यव्याप्यदर्शनस्य न श्वैत्य[10]प्रत्यक्षहेतुत्वमिति भावः । **तत्त्वेन** । [11]भ्रमविरोधिविशेषदर्शनत्वादिनेत्यर्थः । [12]**व्याप्येति** । यदि च विशेषदर्शनं किंचिदपि [13]संशयाविरोधि [14]तदैव तद्विरोधित्वं व्यावर्तकतया विशेषणं स्यादिति भावः ।

1. क. अतिव्याप्तिवारणात्
2. ख. तत्त्वेन न जनकत्वम्
3. क. भ्रमाविरोधित्वेऽपि
4. क. तत्र कल्पने
5. क. नात्र तत्रातिव्याप्तिरिति
6. क. देववशात्
7. ग. व्याप्तिज्ञानकरणत्व-
8. ख. सम्भवाच्च
9. ख. प्रत्यक्षत्वं पदस्यार्थः
10. ख. प्रत्यय
11. क. भ्रमविरोधप्रत्यक्षविशेषदर्शन- [त्वादित्यर्थः
12. क. व्याप्ये यदि
13. ग. संशयविरोधि
14. ख. तदेव

## प्रकाशः

[1]तथाप्यतिव्याप्तेः । लाघवेन तादृशपरामर्शस्यैव तत्र कारणत्वाच्च । अन्यथा अनुमितावपि ज्ञानद्वयस्यैव कारणत्वापत्तौ असम्भवापत्तेश्च[2] ।

[3]अन्ये तु सिषाधयिषाविरह[4]दशायां सिद्धेरनुमानेतरसाधकमानस्य वानुमितौ प्रतिबन्धकत्वमिति सर्वजनसिद्धम् । तथा च सिषाधयिषाविरहसहकृतसिद्ध्यनुमानातिरिक्तसिद्धिकारणान्योन्याभावः पक्षता ।- [5]एवं च तत्र प्रत्यक्षादौ सिषधयिषाविरहसहकृतस्यानुमानातिरिक्तस्य प्रत्यक्षस्यैव साधकमानस्य सत्त्वेन पक्षताविरहादुक्तलक्षणागमनान्न तत्रातिव्याप्तिः । न च सिषाधयिषावि[6]रहसहकृतसिद्धिदशायामेव न पक्षता, न त्वनुमानातिरिक्तसाधकमानदशायामपीति वाच्यम् । तर्हि पक्षतासत्त्वे

---

## तर्कचूडामणिः

[7]वाचस्पतिमिश्रमतमाह—अन्ये त्विति । [8]तादृश इति । तदुभयवैशिष्ट्यावगाहीत्यर्थः । ननु क्वचिद्विशेषदर्शनसत्त्वेऽपि तस्य न हेतुत्वम् । ज्ञानद्वयजन्यप्रत्यक्षे व्यभिचारादित्यरुचेराह—लाघवेनेति । व्याप्यतावच्छेदक[9]प्रकारकत्वापेक्षया व्याप्यत्वप्रकारकत्वस्य लघुत्वादित्यर्थः । [10]असम्भवेति । [11]अनुमितिलक्षणस्येति शेषः । उपाध्यायमतमाह—अन्ये त्विति । तदुभयाभावस्य हेतुत्वसिद्धये तयोः प्रतिबन्धकत्वमाह—सिषाधयिषेति । साधक-

---

1. क. तथातिव्याप्तेः
2. ख. 'च' नास्ति
3. क. अपरे तु
4. क. दशायामसिद्धे-
5. ख. एवं च तत्र प्रत्यक्षादौ
6. ख. विरहे सति सिद्धि-
7. क. वाचस्पतिमतमाह
8. क. तादृशेति ।
9. क. प्रकारापेक्षया
10. ख. असंभव इति
11. ग. 'अनुमिति.......तिरिक्तेति' नास्ति

## प्रकाशः

तत्र अनुमित्यापत्तेः। प्रत्यक्ष[1]सामग्र्या प्रतिबन्धादिति चेत्—तर्हि प्रत्यक्ष-सामग्र्यां सत्यामनुमित्सादशायामप्यनुमितिर्न स्यात्। अनुमित्सयापि हि पक्षतैवा-पादनीया। सा च तत्र प्रत्यक्षसामग्रीसत्त्वे सत्यनुमितिं प्रत्यप्रयोजिकैव त्वया कृतेति।

तदपि न। सिषाधयिषाविरहसहकृतसिद्ध्यभावस्यैव पक्षतात्वेन तत्र तत्सत्त्वात्। न चैवं तत्रानुमितिः स्यादित्युक्तमिति वाच्यम्। [2]समानविषयेऽपि सिषाधयिषाविरह[3]सहकृतानुमानातिरिक्तसाधकमानस्यैव प्रतिबन्धकत्वात्।

ननु यत एव सिषाधयिषाविरहसहकृतसिद्धिवत्तथाभूत[4]साधकमानस्यापि प्रतिबन्धकत्वम्, अत एव विनिगमनाविरहादुभयान्योन्याभावः पक्षतेति चेन्न। भवेदेवं यदि तदुभयान्योन्याभावत्वेन कारणत्वं स्यात्, न चैवम्। येन हि रूपेण यत्र प्रतिबन्धकत्वं तदवच्छिन्नाभावत्वेनैव तत्र तदभावस्य प्रयोजकत्वात्। अन्यथा

---

## तर्कचूडामणिः

मानमात्रस्य [5][प्रतिबन्धकत्वे] परामर्शस्यापि प्रतिबन्धकत्वापत्तिरित्यत उक्तम् **अनुमानातिरिक्तेति**॥ **उक्तलक्षणेति**। पक्षधर्मतापदेन [6]पक्षताश्रयवृत्तित्वस्यैव विवक्षितत्वादिति भावः। ननु शिलादौ [7]देवत्वारोपे इच्छाघटितसामग्र्या बलवत्त्वात् [8]अनुमित्सासहकृतानुमितिसामग्र्या अनुमितिरेव भवतीत्यत आह—**अनुमित्सयेति**।

---

1. क. सामग्र्याः प्रति-
2. ख. समाने विषयेऽपि
3. क. सहचरितानु-
4. क. 'साधक' नास्ति
5. ग. प्रतिबन्धकत्वस्य ख. क. 'प्रतिबन्धकत्वे' नास्ति
6. क. पक्षतासंशय-
7. क. देवतारोपेच्छा-
8. क. अनुमितिसह-

## प्रकाशः

अत एव व्याप्तिविशिष्टश्चासौ पक्षधर्मश्चेति कर्मधारयोत्तरतल्प्रत्ययेन व्याप्तिविशिष्टत्वसमानाधिकरणा पक्षधर्मता लभ्यते। तथा च व्याप्तिविशिष्टत्व-सामानाधिकरण्येन पक्षधर्मत्वं यज्ज्ञानं विषयीकरोति वह्निव्याप्यधूमवानय[1]मित्याद्याकारं तृतीयलिङ्गपरामर्शात्मकं तज्जन्यं ज्ञानमनुमितिरित्यर्थ इत्यपास्तम्।

---

## तर्कचूडामणिः

जयदेवमतमाह — **यत्त्विति**। [2]ननु प्रमानुमितौ प्रतिपाद्यभेदाभावात् द्वन्द्वानुपपत्तिरित्यत आह — **भावेति**। [3]ननु व्याप्तिविशिष्टत्वपक्षधर्मत्वज्ञानं न हेतुः, प्रमेयत्वप्रकारकतज्ज्ञानादनुमित्यापत्तेरित्यत आह—**एवं चेति**। यद्यपि पूर्वोक्तविशकलितस्थले व्यभिचारः। तथापि तत्रानु[4]मित्यनुत्पादमङ्गीकृत्य दूषयति—**तन्नेति**। **संसर्गरूपतयेति**। भासमानत्वेनेति शेषः। **सर्वथैवेति**। यद्यप्युभयोरपि संसर्गविधया भानेन सर्वथेति वैषम्योक्तिरयुक्ता; तथापि परामर्शपूर्व-समये व्याप्तिवैशिष्ट्यस्य नियमेनोपस्थितत्वेन [5]प्रकारत्वसम्भावनायामपि पक्षधर्मत्वस्य प्रागुपस्थितिनियमाभावेन न [6]तत्प्रकारत्वसम्भावनापि। न च विशकलितस्थले व्याप्तिवैशिष्ट्यमपि नोपस्थितमिति वाच्यम्। व्याप्तेः प्रागुपस्थितिनियमाङ्गी-कारेण एतद्ग्रन्थावतारात्। अत एव [7]तद्दूषणमत्र नोक्तमिति ध्येयम्। [8]ननु व्याप्तिविशिष्टत्वादिप्रकारकत्वेन परामर्शस्यानुमितिहेतुतया [9]तदभावेऽनुमित्यनुभव एव नेत्यत आह—**लाघवेनेति**। **उपाध्यायमतमाह—अत एवेति**। न च

---

1. ख. इत्याकारतृतीय-
2. ख. 'ननु' नास्ति
3. क अनुव्याप्ति-
4. ग. मित्युत्पाद-
5. ख. ग. प्रकारकत्व-
6. क. ग. तत्प्रकारकत्व-
7. ख. इदं दूषणं नोक्तमत्रेति
   ग. दूषणमात्रं नोत्तरमिति
8. क. अनुव्याप्ति
9. ग. तदभावेऽनुमानाभाव एव

## तर्कचूडामणिः

कर्मधारयाङ्गीकारे [1]भ्रमानुमित्यव्याप्तिः । तत्रापि वैज्ञानिकसम्बन्धेनाभेदस्य विद्यमानत्वात् । तन्निष्ठतया ज्ञायमानत्वं हि वैज्ञानिकसम्बन्ध इति भावः ।

न च कर्मधारयसमासादेव पदार्थतावच्छेदकसामानाधिकरण्यलाभे [2]तत्प्रत्यय-वैयर्थ्यम् इति वाच्यम् । कर्मधारयविग्रहवाक्यादभेदस्यैव भासमानतया तत्समा-सस्याप्यभेदमात्रार्थकत्वात् । व्याससमासयोः समानार्थकत्वनियमात् । न च व्याप्ति-विशिष्टपक्ष[3]धर्माभेदज्ञानजन्यत्वमेव लक्षणमस्तु लाघवादिति वाच्यम् । [4]तद्धर्म-सामानाधिकरण्यज्ञानजन्यत्वे तदभेदज्ञान[5]जन्यत्वस्याप्रवेशेन व्यर्थत्वाभावादिति भावः । [6]तत्प्रत्ययेनेति । पदार्थतावच्छेदकसामानाधिकरण्ये [7]तस्य व्युत्पन्नत्वादिति भावः । सामानाधिकरण्येनेति । [8]एतच्च संसर्गविधया भासत इति भावः । वह्निव्याप्येति। न चात्र व्याप्तिवैशिष्ट्यमेव भासते; न तु वैशिष्ट्यवैशिष्ट्यम्, वैशिष्ट्यस्या-[9]प्रकारत्वादिति वाच्यम् । व्याप्तिप्रकारकत्वनिर्वाहायैव [10]तद्वैशिष्ट्यस्य वैशिष्ट्य-भानकल्पनात् । न हि भासमानं [11]यद्वैशिष्ट्यं तत्प्रतियोगितामात्रेण[12] प्रकारत्वम् । किं तु तत्प्रतियोगित्व[13]भानेन । अन्यथा दण्डपुरुष[14]संयोगा इत्यस्य [15]दण्डप्रकार-कत्वापत्तेरिति भावः ।

---

1. क. भ्रमानुमित्यव्याप्तेः
   ग. प्रमानुमित्यव्याप्तेः ।
2. ख. तत्प्रत्यय-
3. ख. ग. धर्मताभेद-
4. ग. तद्धि सामाना-
5. क. जन्यस्याप्रवेशेन
   ग. जन्यत्वस्य प्रवेशेन
6. क. तत्प्रत्ययेनेति
7. क. तस्याव्युत्पन्न-
8. क. तत्संसर्ग-
9. क. स्याप्रकारकत्वादिति
10. ख. तद्वैशिष्ट्यभान-
11. क. 'यद्' नास्ति
12. क. प्रकारकत्वं
13. क. भावेन
14. ख. ग. संयोग इत्यस्य
15. ख. ग. दण्डप्रकारतापत्तेः

## प्रकाशः

उक्तपरामर्शस्य [1]व्याप्तिवैशिष्ट्यसामानाधिकरण्याविषयत्वात् । [2]वैशिष्ट्यज्ञानस्य वैशिष्ट्याप्रकारतया तत्सम्बन्धागोचरत्वात्, [3]उक्तन्यायेन पक्षधर्मतासामानाधिकरण्याविषयत्वाच्च ।

---

## तर्कचूडामणिः

उक्तेति । न च वैशिष्ट्यद्वयाभाने [4]समूहालम्बनाभेदापत्तिः । सम्बन्धतावच्छेदकरूपेण भासमान[5]वैशिष्ट्यप्रतियोगित्वस्यैव [6]प्रकारत्वात् । अन्यथा दण्डपुरुष[7]सम्बन्ध[8]प्रतियोगित्वानीति समूहालम्बनस्य विशिष्टज्ञानभेदानुपपत्तेः । न च घटे घटत्वमिति ज्ञानस्य [9]घटत्वप्रकारकत्वापत्तिः । भासमानवैशिष्ट्यं प्रति तस्य प्रतियोगित्वात् । अन्यथा घटोऽयमिति पुरुषान्तरीयज्ञाने घटत्वस्य प्रकारत्वानुपपत्तेः । न हि तदेव [10]प्रतियोग्यप्रतियोगि चेति सम्भवति । वस्तुनो द्वैरूप्यायोगात् । [11]प्रतियोगित्वाभाने तु न दोषः । घटे घटत्वमिति ज्ञानदशायां घटत्वे प्रतियोगित्वसत्त्वेऽपि [12]तदभानात् । घट इति ज्ञाने च तद्भानादिति वाच्यम् । घटे घटत्वमित्यत्र हि आधाराधेयभावसम्बन्धो भासते, न तु समवायः । तत्र घटत्वस्यानुयोगित्वमेव । घटोऽयमित्यत्र तु समवायो भासते । [13]तत्र घटत्वानुयोगित्वे त्वदुक्तदोषानवकाशात् । यथा चैतत्तथोक्तं प्रत्यक्षपरिच्छेदे । उक्तेति । पक्षधर्मताया अप्रकारत्वादेवेत्यर्थः ।

---

1. क. व्याप्तिविशिष्ट
2. ख. तद्वैशिष्ट्याप्रकारतया
3. क. उक्तन्यायेनेव
4. क. समूह्रालम्बनाभेदाय त्रिः सम्बन्धि-
5. क. विशिष्ट-
6. क. प्रकारकत्वात्
7. ग. संयोगत्वादीति
8. ख. प्रतियोगित्ववानिति
9. ख. घटत्वप्रकारापत्तिः
10. क. प्रतियोगित्वप्रतियोगि चेति
11. क. प्रतियोगित्वभाने
12. क. तदभावात्
13. क. तत्र च घट-

## प्रकाशः

तस्मादुक्तकर्मधारयोऽ[1]नुसर्तव्यः । एवं च व्याप्तिविशिष्टपक्षधर्मतेत्यत्र यदि कर्मधारयस्तदा भ्रमानुमित्यव्याप्तिः । तत्प्रतिपाद्याभेदस्य तत्र बाधितत्वात् । न चात्र [2]प्रमैव ग्राह्येति वाच्यम् । भ्रमानुमितौ धर्म्यंशप्रमानुपसंग्रहापत्तेः । यदि च द्वन्द्वः तदा प्रमानुमित्यव्याप्तिः । [3]तत्प्रतिपाद्यभेदस्य तत्र बाधितत्वादित्यादिदूषण-भलग्नकं [4]बोद्धव्यम् ।

केचित्तु समस्यमानपदार्थयोरभेदेऽपि पदार्थतावच्छेदकभेदादेव द्वन्द्वस्य साधुत्वम् । यथा प्रमाणप्रमेयेत्यादिसूत्रे । एवं चात्रापि स एव समास इत्याहुः ।

---

## तर्कचूडामणिः

तत्प्रतिपाद्येति । वैज्ञानिकसम्बन्धस्य तदर्थत्वे मानाभावादिति भावः । भ्रमानुमिताविति । एतच्चोपलक्षणम् । साध्यवति लिङ्गभ्रमजन्यानुमिते[5]र्यथार्थत्वेन साध्यांशप्रमायामव्याप्तेः, गन्धप्रागभावस्थले [6]चातिव्याप्तिरित्यपि द्रष्टव्यम् । जयदेवमतमाह—केचित्त्विति । अत्रेदमस्वरसबीजम्[7]—यत्रार्थे यस्यानुशासनं सोऽर्थः तत्प्रतिपाद्य इत्यविवादम् । इयांस्तु विशेषः यद्वैयाकरणानां मते तत्र [8]शक्तिरिति नियमः । अस्माकं तु क्वचिच्छक्तिः क्वचिल्लक्षणेति । [9]तथा च 'चार्थे द्वन्द्वः' (पा. सू. २-२-२९) इति धर्मिभेदे द्वन्द्वानुशासनविरोधः । [10]किं च [11]प्रतिपाद्याभेदस्थलेऽपि द्वन्द्व[द्वन्द्वे द्वि]वचनानुपपत्तिः । प्रकृत्यर्थस्यैकतया द्वित्वाद्य-

---

1. ख. अनुस्मर्तव्यः
2. क. प्रमेव संग्राह्येति
3. क. तत्र प्रतिपाद्याभेदस्य
4. ख. वेदितव्यम्
5. क. याथार्थ्यत्वेन
6. क. स्थलेऽतिव्याप्ति
7. ख. अस्वरसताबीजम्
8. ख. ग. शक्तिनियमः
9. क. तथा चार्थे
10. ख. 'किं च' नास्ति
11. ख. ग. प्रतिपाद्यभेदस्थलीयद्वन्द्वे द्विवचनाद्यनुपपत्तिः

## तर्कचूडामणिः

अनुमित्सायाः विशेषणाभावप्रयुक्तविशिष्टाभाव[1]रूपपक्षतासम्पादकत्वेन अनुमित्यहेतुत्वादित्यर्थः। अस्तु तर्हि पक्षता[2]सत्त्वादेव तत्रानुमितिस्तत्राह—सा चेति। पक्षतेत्यर्थः। त्वयेति। प्रत्यक्षसामग्री[3]प्रतिबन्धकत्ववादिनेत्यर्थः। अनुमित्सादशायां प्रत्यक्षस्याप्रतिबन्धकत्वादाह— सिषाधयिषेति। [4]अनुमित्सेत्यर्थः। प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वे परामर्शानुव्यवसायादिः स्यात् नानुमितिरित्यत आह—समानेति। नन्वन्योन्याभाव[5]स्याहेतुत्वेऽपि तस्य [6]पक्षतात्वमस्त्वित्यत आह—कारणीभूतेति। उभयोः कारणत्वेऽपि[7] कस्य पक्षतात्वेन हेतुत्वमिति न प्रश्नः। उभयोरपि सिद्ध्यभावत्वेन [8]साधकमानाभावत्वेन कारणत्वस्य वादिद्वयसम्मतत्वात्। अतः प्रश्नविषयं दर्शयति—उभयोरिति। लाघवादिति। सिद्ध्यभावत्वस्य [9]साधकमानाभावत्वापेक्षया लघुशरीरत्वादित्यर्थः। योग्यत्वेनेति। [10]सिद्धेर्योग्यत्वेन तदभावस्य प्रत्यक्षत्वादिति भावः। [11]साधकमानस्य चक्षुरादेरतीन्द्रियतया तदभावस्यायोग्यत्वादिति भावः। न च सिद्ध्यभावस्यापि व्यधिकरणसिषाधयिषागर्भत्वेन न योग्यत्वमिति वाच्यम्।

---

1. ग. 'रूपपक्षता' नास्ति।
2. क. रूपपक्षतासम्पादकत्वेन
3. क. प्रतिबन्धकत्वादिनेत्यर्थः
4. क. अनुमितयेत्यर्थः
5. क. स्य हेतुत्वे
6. क. पक्षतात्वमित्यत
7. ख. ग. 'अपि' नास्ति
8. ग. 'साधकमानाभावत्वेन' नास्ति।
9. क. साधकमानापेक्षया
10. क. सिद्धेर्योग्यतायाः
    ग. सिद्धेर्योग्यतया
11. क. 'साधकमानस्य ...... तदभावस्यायोग्यत्वादिति भावः' इति ग्रन्थस्त्रुटितः

## प्रकाशः

मणिमन्त्रान्योन्याभावत्वेन दाहादिप्रयोजकत्वेन[1] मण्याद्यभावकूटस्य हेतुत्वमिति सिद्धान्तो व्याकुप्येत। एवं च तथाभूतसिद्धित्वेन तथाभूतसाधकमानत्वेन चानुमितौ प्रतिबन्धकत्वमिति [2]तादृशसिद्ध्यभावत्वेन तादृशमानाभावत्वेन चाभावद्वयस्य कारणत्वं भवति न त्वेकस्य, तदुभयान्यान्यत्वावच्छिन्नविशिष्टाभावस्य कारणीभूताभावस्य [3]च पक्षतात्वौचित्यात्।

ननु तथापि कारणत्वाविशेषे तादृशसिद्ध्यभाव एव पक्षता न तु तादृश[4]साधकमानाभाव इत्यत्र किं विनिगमकम्, येन संशयोत्तरप्रत्यक्षस्थले पक्षता स्यादिति चेत्—न। उभयोः कारणत्वे किं पक्षपदप्रवृत्ति-

## तर्कचूडामणिः

समानाधिकरणव्यधिकरण[5]साधारणसिषाधयिषा[6]सामान्यस्यैव तत्प्रविष्टतया[7]योग्यत्वाभावात्। किंचित्प्रतियोगियोग्यतामात्रेण प्रतियोगित[8]व्याप्येत्यादियोग्यतासत्त्वादिति भावः। ननु पक्षतासहकृतपरामर्शस्यानुमित्यविना[9]भावादुक्तप्रत्यक्षस्थलेऽनुमितिः स्यादित्यत आह—**तादृशेति**। बाधादिस्थले व्यभिचारात् [10]उक्तनियमासिद्धिरिति भावः। न च सिद्ध्यभावस्य पक्षतात्वे [11]तस्यानुमितिमानंसहकारित्वानुपपत्तिः। सिद्ध्यभावस्य[12]प्रागभावरूपतया तस्य कार्यमात्रहेतुत्वात्।

---

1. क. 'न' नास्ति
2. ख. तादृशसाधकमानाभावत्वेन तादृशसिद्ध्यभावत्वेन वा।
3. क. 'च' नास्ति।
4. क. 'साधक' नास्ति।
5. क. साधिकरण-
6. क. सामान्यस्यैतत्प्रविष्ट-
7. क. अयोग्यत्वाभावात्
8. क. तव्द्याप्यादि-
9. क. भाव उक्त-
10. ख. नियमाभावादिति भावः
11. ख. तस्यानुमितिमान-
12. क. प्रागभावतया

## प्रकाशः

[1]निमित्तमिति प्रश्नस्य फलितार्थः । [2]लाघवात् योग्यत्वेन प्रथमोपस्थितत्वाच्च तादृश[3]सिद्ध्यभावत्वमित्युत्तरम् । तादृशसाधक[4]मानाभावः पक्षपदाप्रतिपाद्योऽपि पक्षतावदनुमितौ कारणमिति संशयोत्तरप्रत्यक्षस्थले पक्षतासत्त्वेऽपि तदभावान्नानुमितिरिति युक्तमुत्पश्यामः ।

अपि च मास्तु संशयोत्तरप्रत्यक्षस्थले पक्षता, तथापि तस्याः पृथक्कारणत्वेन कारणतावच्छेदकत्वे मानाभावात् पक्षधर्मतापदेन साध्याधिकरणत्वाभिमतधर्मि[5]धर्मता विवक्षणीया । तज्ज्ञानजन्यत्वं च तत्रापीत्यतिव्याप्तिर्वज्रलेपायितैवेति ।

---

## तर्कचूडामणिः

साधकमानाभावस्य पक्षतात्वे [6]तु न दोष इति वाच्यम् । अनुमितौ तस्य [7]सिषाधयिषादिघटिततया हेतुत्वेनासाधारण्योपपत्तेरिति भावः ।

नन्वेवं कारणादिवाचकपदानां नियतपूर्ववर्तित्वमात्रे शक्तिः स्यात् । [8]अन्यथासिद्धत्वांशेऽपि तत्कल्पने गौरवात् । यदि च तत्र नियतपूर्ववर्तित्वमात्रे तत्पदाप्रयोगात् [9]विशिष्टे च [10]तत्प्रयोगात् विशिष्ट एव शक्तिः, गौरवस्यापि प्रामाणिकत्वादिति मतम्, तदा उक्तसिद्ध्यभावसत्त्वेऽपि संशयोत्तरप्रत्यक्षस्थले पक्षपदाप्रयोगात् साधकमानाभावसहिततत्सत्त्वे [11]तत्पदप्रयोगात् उभयाभाव एव पक्षपदप्रवृत्तिनिमित्तमस्तु । तद्वदेव गौरवस्यापि

---

1. क. निमित्तप्रश्नस्य
2. ख. तत्र च लाघवात्
3. ख. सिद्ध्यभाववत्त्व-
4. क. मानाभावश्च पदा-
5. क. 'धर्मि' नास्ति
6. क. 'तु' नास्ति
7. क. सिषाधयिषाघटिततया
8. ग. अनन्यथा
9. ग. 'विशिष्टे ........ च तत्प्रयोगात्' नास्ति ।
10. क. तत्प्रतियोगात्
11. ख, तत्प्रयोगात्

## प्रकाशः

यत्तु संशयोत्तरप्रत्यक्षे विशेषदर्शनस्य न तत्त्वेन जनकत्वम्। प्रत्यक्षप्रतिबन्धकीभूतस्य विशेषदर्शनाभावविशिष्टस्य संशयस्य विशेषणाभावप्रयुक्तमभावमापादयतः तत्र तस्योपयोगित्वेनान्यथासिद्धत्वादिति।

तदपि चिन्त्यम्। संशयस्य हि प्रतिबन्धकता तत्कोटिकज्ञानमात्रे तन्मात्रकोटिकज्ञाने वा। नाद्यः; संशयानन्तरमपि संशयान्तरोदयात्। नान्त्यः; तन्मात्रकोटिकज्ञानानुत्पत्तिर्हि तत्रापरकोटिकज्ञानसामग्रीसत्त्वप्रयुक्ता, न तु तदुभयकोट्यारोपरूपसंशयरूप[1]प्रतिबन्धकसत्त्वप्रयुक्ता, मानाभावात्। अन्यथा घटपटसमूहालम्बनकाले घटमात्रगोचरज्ञाने तत्समूहालम्बनस्य प्रतिबन्धकत्वाभ्युपगमापत्तिः, तत्सत्त्वे तदनुत्पत्तेः। [2]पटज्ञानसामग्रीसमावेशात् पटगोचरत्वे न [3]घटमात्रगोचरं तत्र ज्ञानं, न तु समूहालम्बनेन प्रतिबन्धादिति यदि तदेतदत्रापि तुल्यम्।

---

## तर्कचूडामणिः

प्रामाणिकत्वात्। न चैवमपि नोभयाभावस्तन्निमित्तम्, वह्न्यादिसिद्ध्यनन्तरमपि [4]पर्वतादौ पक्षपदप्रयोगादिति वाच्यम्। एवं हि साधकमानाभावमात्रं तत्पदप्रवृत्तिनिमित्तमस्तु, तावताप्युक्तप्र[5]त्यक्षस्थलेऽतिव्याप्तिनिरासात्। अपि चोक्तसाधकमानाभावस्य [6]पक्षपदप्रवृत्तिनिमित्तत्वेऽपि अनुमितिलक्षणप्रविष्ट[7]पक्षपदेन तादृशसाधक[8]मानाभाववत एव विवक्षितत्वेन अतिव्याप्त्यनवकाशा[9]दित्यस्वरसादाह—अपि चेति। हेतुत्वेऽप्युद्भूतरूपवत् [10]अवच्छेदकत्वमस्त्येवेत्यत आह—

---

1. क. प्रतिबन्धकत्वप्रयुक्ता
2. ख. घटज्ञान
3. ख. न घटमात्र-
4. क. यत्पर्वतादौ
   ग. 'पर्वतादौ' नास्ति।
5. क. प्रत्यक्षेऽति-
6. क. पक्षपदाप्रवृत्ति-
7. क. पक्षतापदेन
8. क. मानाभावत एव
9. क, दिति पूर्वास्वरसादाह
10. ख. ग. अवच्छेदकमस्तित्वत्यतः

## तर्कचूडामणिः

पृथगिति । पृथगन्वयाद्यवगत[1]कारणताकत्वेनेत्यर्थः । उद्भूतरूपे तु न पृथगन्वय-[2]व्यतिरेकाविति भावः । क्वचित् साध्यानधिकरणस्यापि पक्षत्वादाह—अभिमतेति । तदधिकरणत्वेनाभिमतो यः पर्वतादिः [3]तद्वृत्तितेत्यर्थः । यज्ञपतिमतान्तरमाह—यत्त्विति । [4]तत्त्वेनेति । स्वरूपकथनपरम् । जनकत्वमेव नास्तीत्यर्थः । अत एव वक्ष्यति—'अन्यथासिद्धत्वादिति । तत्कोटिकेति । [5]पुरुषत्वादिमात्रकोटिकेत्यर्थः । तन्मात्रकोटिक[6]ज्ञानत्वं हि [7]तत्कोटिविषयत्वे [8]सति अपरकोट्यविषयत्वम् । तत्र विशेषणांशस्य सिद्धत्वेन विशेष्यमात्रमापादनीयम् । तच्च न सम्भवति । [9]अपरकोटिविषयक-ज्ञानसामग्रीस[10]त्त्वे तदविषयत्वापादनासम्भवादित्याशयेनाह—तन्मात्रेति । माना-भावादिति । अपरकोटिसामग्रीबलादेव तदविषयकत्वाभावोपपत्तौ तत्र [11]संशयस्य प्रतिबन्धकत्वे मानाभावादित्यर्थः । किं च तस्य प्रतिबन्धकत्वेऽपि संशयदशायां [12]तदुत्पत्त्यापत्त्या संशय[13]सामग्र्या अपि प्रतिबन्धकत्वमास्थेयम् । तथा च [14]गौरवमिति । अन्यथेति । संशयदशायां तन्मात्रकोटिकज्ञानानुत्पत्तिमात्रेण [15]तस्य प्रतिबन्धकत्वे [16]इष्टापत्तावपसिद्धान्तापत्तेरित्याह—अभ्युपगमेति । अस्तु तत्रापि प्रतिबन्धकत्वमिति तटस्थशङ्कां परिहरन्नुपसंहरति—तस्मादिति । नन्विति । संशयस्य हि प्रतिबन्धकत्वमुक्तन्यायेनापरकोट्यविषयकत्वे

---

1. ग. कारणतावच्छेदकत्वेनेत्यर्थः
2. क. व्यतिरिक्तादिति-
3. ग. तद्वृत्तिरित्यर्थः
4. ग. 'तत्त्वेनेति ......तत्कोटि-केति' नास्ति
5. ख. ग. संशयकोटिकेत्यर्थः
6. ख. ग. ज्ञानत्वं हि
7. क. तत्कोटिक-
8. ख. सति परकोट्यविषय
9. ग. परकोटि-
10. ख. सत्त्वेन तदविषयकत्वा-
11. क. संशयप्रतिबन्धकत्वे माना-
12. क. तदुत्पत्त्या
13. क. सामग्रयामपि
14. ख. ग. अतिगौरवमिति
15. ख. तत्प्रतिबन्धकत्वे
16. ख. 'इष्टापत्ता......कोट्यविषय-कत्वं प्रत्येव' इति ग्रन्थस्त्रुटितः ।

## प्रकाशः

तस्माद्यथा घटपटोभय[1]ज्ञानसामग्र्यामुभयज्ञानमेव, [2]एकमात्रज्ञानसामग्र्या एकमात्रज्ञानम् । तथोभयकोट्यारोपसामग्र्यां सत्यामुभयारोप[3]रूपः संशयः, [4]एककोटिसामग्रीवैकल्ये एकमात्रकोटिकज्ञानम्, न त्वेकस्यापरत्र प्रतिबन्धकत्वमिति ।

अयमेव विशेषो यदेकधर्मिगतत्वेन भासमानयोः स्थाणुत्वपुरुषत्वयोर्विरोध[5]भानसामग्र्या विरोधोऽपि प्रकाश्यत इति तदुभयारोपः संशयत्वमापद्यते। एकस्मिन् धर्मिणि भासमानविरोधिनानाकोटिकज्ञानस्यैव संशयत्वात् । घटपटोभयज्ञाने तु न तथेति तस्य निश्चयत्वमेव। अत एव यत्र स्थाणुत्वपुरुषत्वयोरविरोधभ्रमः तत्र स्थाणुः पुरुषश्चेति निश्चय एव भवति वृक्षः शिंशपा चेतिवत् ।

---

## तर्कचूडामणिः

[6]प्रत्येव तत्प्रतिबन्धकत्वं च [7]तदभावरूपापरकोटिविषयकत्वप्रयोजकत्वम् । प्रकृते [8]तदभावेऽपरकोटिविषयकत्वमेव, तत्र च [9]न संशयः । [10]प्रयोजकत्वं सामान्यत एव [11]तत्तदविषयकत्वं [12]प्रति तत्तत्कोटिसामग्र्या एव [13]प्रयोजकत्वादित्यर्थः । एतेन समूहालम्बनस्य ग्राह्याभावानवगाहितया अप्रतिबन्धकत्वेऽपि संशयस्य तदवगाहितया प्रतिबन्धकत्वं स्यादेवेति परास्तम् । उक्तन्यायेनोभयो[14]रप्रतिबन्धकत्वात् ।

---

1. क. 'ज्ञान' नास्ति ।
2. क. एकसामग्र्या
3. क. 'रूप' नास्ति
4. क. एककोटिसामग्री
5. क. विरोधाभान
6. ग. 'प्रत्येव तत्प्रतिबन्धकत्वमेवेत्यर्थः । अत एव वक्ष्यति अन्यथासिद्धत्वादिति । तत्कोटिकेति । संशयकोटिकेत्यर्थः । प्रतिबन्धकत्वं च तदभावप्रयोजकत्वम्, प्रकृते
7. ख. तदभावप्रयोजकत्वम्
8. ख. ग. तदभावोऽपर-
9. ग. 'न' नास्ति ।
10. ख. प्रयोजकः
11. क. ग. तत्तद्विषयकत्वम्
12. क. प्रति एवं च तत्कोटि
13. क. तत्प्रयोजक-
14. ख. उभयोः प्रति-

## प्रकाशः

ननु [1]पक्षतासहकृततद्धीजन्यत्वं विवक्षितम् । तथा च संशयोत्तर-प्रत्यक्षस्थले पक्षतायाः सत्त्वेऽपि [2]जनकत्वाभावान्नातिव्याप्तिः । न चैवं पक्षताजन्यत्वमेवास्तु इति वाच्यम् । तत्त्वेन जनकत्वस्याविवक्षिततया सिषाधयिषाविरहसहकृतसिद्ध्यभावरूपायाः योग्यत्वेन तद्गोचरप्रत्यक्षेऽतिव्याप्तेः । न च पक्षतासहकृतव्याप्तिज्ञानजन्यत्वमेवास्तामिति वाच्यम् । व्याप्तिधी-

---

## तर्कचूडामणिः

ननु [3]समूहालम्बनस्याप्रतिबन्धकत्वे तद्वदेव विरोधि[4]भानं न स्यादित्यत आह—**अयमिति** । न हि तस्य[5]प्रतिबन्धकत्वाय विरोधिभानम् । किं तु [6]सामग्रीवशादिति भावः । एकधर्मिणि [7]तद्धानमात्रेण कथं संशयत्वं, [8]तत्राह—**एकस्मिन्निति** । **भासमानविरोधीति** । विरोधित्वेन भासमानेत्यर्थः । **न तथेति** । नैकस्मिन् धर्मिणि [9]तद्धानमित्यर्थः । विरोधित्वेन [10]भासमानपदस्य प्रयोजनमाह—**अत एवेति** । [11]जयदेवमत-माशङ्कते—**नन्विति** । **पक्षताया इति** । सिद्ध्यभावरूपाया इत्यर्थः । **न चेति** । तत्त्वेन [12]तज्जन्यत्वस्याभावादित्यर्थः ।

---

1. ख. वृक्षता
2. ख. अजनकत्वात्
3. ख. ग. समूहालम्बनवदस्याप्रति-बन्धकत्वे
4. ग. विरोधभावं ख. भावं
5. क. प्रतिबन्धकत्वाविरोधभानम्
6. ख. तत्सामग्री-
7. क. तद्धावमात्रेण
8. ग. तदाह
9. ख. तदभावमित्यर्थः ।
10. ग. अभिमतपदस्य
11. ग. जयदेवोक्तमाशङ्कते
12. ख. ग. तज्जन्यत्वस्यान्यत्रा-भावादित्यर्थः ।

## प्रकाशः

विषयक[1]पक्षताधीविषयकसमूहालम्बनसम्भवेनातिव्याप्तेः। पक्षतासहकृतधूमपरामर्शसत्त्वेऽनुमितेरेवोत्पत्तेः[2]। तदुभयगोचर[3]समूहालम्बनानुव्यवसायाभावान्नातिव्याप्तिरिति चेत्—न। बाधसत्प्रतिपक्षावतारकालीनपरामर्शेन पक्षतासहकृतेन जनिते [4]तदुभयविषयकसमूहालम्बने तथाप्यतिव्याप्तेः। न च परामर्शांशे तत्त्वेन जनकत्वं विवक्षितम्, अनुव्यवसाये न तथेति वाच्यम्।

## तर्कचूडामणिः

अनुमितेरेवेति। न चैवं तादृशपरामर्शस्याप्रामाणिकत्वापत्तिरिति वाच्यम्। अनुमित्यनन्तरं तदनुव्यवसाय[5]सम्भवादिति भावः। बाधेति। न च सर्वांशावच्छेदेन पक्षताजन्यत्वं [6]विवक्षितम्, उक्तसमूहालम्बनं तु न तथेति [7]नोक्तदोष इति वाच्यम्। [8]पक्षधर्मतापदवैयर्थ्यापत्तेः। उक्तन्यायेन [9]व्याप्तिधीपक्षताविषयकसमूहालम्बनेऽतिव्याप्त्यभावात्। न च साध्य[10]विरोधिविषयकज्ञानानुपरागकालीनत्वं परामर्शविशेषणं विवक्षितम्। उक्तानुव्यवसायश्च तदुपराग[11]कालीनपरामर्शजन्य एवेति वाच्यम्। [12]साध्यविरोधिविषयकज्ञानानुपरागकालीनत्वविवक्षायां [13]शैत्याभावप्रत्यक्षकालीनपरामर्शजन्य[14]शैत्यानुमितावव्याप्तिः। [15]न चाप्रामाण्यशङ्काशून्यत्वं [16]ज्ञानविशेषणम्,

1. ख. पक्षताविषयक
2. ख. एवोपपत्तेः
3. क. समूहालम्बनाभावात्
4. क. तदुभयसमूहालम्बने तत्रातिव्याप्तिः
5. क. सम्भवादित्यर्थः
6. क. विवक्षितमित्युक्तम्
7. क. नोक्तदोष इति
8. ख. ग. पक्षतापद-
9. क. व्याप्तिविषयक
10. क. विरोधिज्ञाना-
11. ख. कालीनतज्जन्य एवेति
12. क. साध्यविरोधिज्ञाना-
13. ग. शैत्या-
14. ग. शैत्या-
15. क. नराप्रामाण्य-
16. क. न ज्ञान-

## प्रकाशः

एवं पक्षतासहकृतेत्यस्य [1]वैयर्थ्यापत्तेः। तावन्मात्रेणैव [2]सामञ्जस्यादित्यनुपदमेव वक्ष्यते। [3]किं च पक्षता व्यधिकरणसिषाधयिषागर्भत्वेन अवश्यमग्रे निर्वाच्या। तथा चायोग्यत्वेन व्यर्थविशेष्यत्वघ्रौव्यादिति वैयर्थ्यापत्तेः।

अत्रोच्यते। विशेषदर्शनस्य प्रत्यक्षमात्रे हेतुत्वम्, संशयोत्तरप्रत्यक्षमात्रे वा, संशयोत्तरैकमात्रकोटिकप्रत्यक्षे वा। नाद्यः, व्यभिचारात्। न द्वितीयः,

---

## तर्कचूडामणिः

उक्तस्थले च तच्छङ्केति विशेषणाभावायत्तो विशिष्टाभाव इति वाच्यम्। सत्प्रतिपक्षात्मकपरामर्शस्याप्रामाण्यशङ्काविषयत्वसम्भवेनोक्तानुव्यवसायेऽ[4]तिव्याप्तय-परिहारात्।

किं च वस्तुतो यत् साध्यविरोधि [5]तद्विषयत्वविवक्षायां [6]भ्रमानुमितावव्याप्तिः। तत्परामर्शस्य साध्यविरोधिपक्षतावच्छेदकविषयत्वात्। साध्य-विरोधित्व[7]प्रकारकज्ञानविवक्षायां बाधावतारकालीनोक्तसमूहालम्बनेऽतिव्याप्तिः। [8]बाधज्ञानस्य विरोधित्वाप्रकारकत्वात्। यद्यपि साध्यविरोधि यत् ज्ञानं तदनुपरागकालीनत्वविवक्षायां [9]नोक्तदोषः, तथापि यथाश्रुतेनैव [10]सामञ्जस्ये किं विशेषान्तरानुसरणायासेनेति भावः। संशयोत्तरप्रत्यक्षे तद्वारणाय तदस्त्वित्यत आह—तावदिति।

---

1. ख. वैयर्थ्यापातात्
2. क. सामञ्जस्यं स्यादित्यनु-
3. ख. 'किं च...... वैयर्थ्यापत्तेः' इति ग्रन्थस्त्रुटितः।
4. क. तिव्याप्तिपरि-
5. ख. ग. तद्विषयविव-
6. ख. भ्रान्त्यनुमितौ
7. ख. 'त्व' नास्ति
8. क. बाधाज्ञानस्य
9. ख. ग. न कोऽपि दोषः
10. क. सामञ्जस्यादिति किं विशेषान्तरानुसरणप्रयासेनेति

## प्रकाशः

संशयान्तरं विशेषदर्शनं विना संशयान्तरस्याप्यनुदयप्रसङ्गात् । न तृतीयः, एवमपि विशेषदर्शने सत्येकमात्रकोटिकज्ञानं भवतु, उभयकोट्यारोपरूपसंशयानुत्पादः कथम् ? उभयकोट्यारोपसामग्र्या एव संशयहेतुत्वेन तत्सत्त्वे तदवश्यंभावात् । कार्याभावस्य सामग्रीविरहप्रयोज्यत्वनियमात् ।

अथैककोटिकव्याप्यदर्शनस्यैव तद्धर्मिकापरकोटिकज्ञानप्रतिबन्धकतया अपरकोटिकज्ञानसामग्रीविरहादेव न संशय इति चेत्——[1]हन्तैवमपरकोटिकज्ञानसामग्रीविरहे सामान्यसामग्रीत एव तन्मात्रकोटिकज्ञानमस्तु । न तु तन्मात्रकोटिकप्रत्यक्षज्ञानत्वं कार्यतावच्छेदकं तत्कोटिव्याप्यदर्शनत्वं च कारणतावच्छेदकम्, मानाभावात् । यथा पटादिज्ञानसामग्रीविरहे सति घटज्ञानसामान्यसामग्रीत एव घटमात्रगोचरज्ञानं न तु तज्ज्ञानत्वावच्छिन्नं [2]प्रति विशेषसामग्र्यन्तरमपि

---

## तर्कचूडामणिः

यद्यपि तदुक्तैकमात्रकोटिकप्रत्यक्ष एव तस्य हेतुत्वमिति[3] परोक्तम् । तथापि परस्य [4]पक्षान्तरपरिग्रहवारणाय विकल्पयति—**विशेषदर्शनस्येति** । उभयकोट्यारोप[5]सामग्री यद्यस्ति उत न ? आद्य[6] आह—**उभयेति** । द्वितीयमुत्थापयति—**अथेति** । **सामान्येति** । प्राथमिक[7]पुरुषप्रत्यक्षे बलृप्तसामग्रीत इत्यर्थः । अन्वयव्यतिरेकानुविधानमेव मानमत आह—[8]**यथेति** । तथा च न [9]तन्मात्राद्धेतुत्वनिश्चय इति भावः । [10]तर्ह्यन्वयाद्यनुविधायिविशेषदर्शनस्य का

---

1. ख. हन्तैवं पर-
2. क. ज्ञानं प्रति
3. ख. ग. 'इति' नास्ति ।
4. क. पक्षान्तराय परिग्रहणाय
5. क. रूपसामग्री
6. ख. 'आद्ये' नास्ति
   ग. 'आह' नास्ति
7. क. 'प्राथमिक' नास्ति ।
8. क. 'अथेति'
9. क. तन्मात्राहेतुत्व-
10. क. न ह्यन्वयाद्यनु-

## प्रकाशः

कल्प्यते। तथा च विशेषदर्शनस्यापर[1]कोटिव्याप्यदर्शनस्यानन्यगत्या प्रतिबन्धकत्वेनैवोपयोगः न तु तज्जनकत्वेनेति नोक्तातिव्याप्तिः। न चैवं विशेषदर्शनकाल एव पुरुषप्रत्यक्षापत्तिः, इष्टापत्तेः। [2]विशेषदर्शनहेतुजन्यत्वमत इव एतन्मते व्याप्यविषयकव्यापकप्रत्यक्षापगमात्।

ननु यदि व्याप्यदर्शनस्यापरकोटिकज्ञानप्रतिबन्धकत्वम् तदा श्वैत्यव्याप्यशङ्खत्वादिदर्शने सति पीतप्रत्यक्षं न स्यादिति चेत्—न। तत्कोटिप्रत्यक्षसामग्रीकालीनतत्कोटिव्याप्यदर्शनस्यानन्यगत्या प्रतिबन्धकत्वस्वीकारात्, श्वैत्यप्रत्यक्षसामग्र्याश्च तत्राभावात्।

---

## तर्कचूडामणिः

गतिस्तत्राह—तथा चेति। एवंशब्दार्थमाह—[3]विशेषेति। [4]विशेषदर्शनजन्यत्वमेव ज्ञानस्य [5]बाधकत्वावधारणत्वयोः प्रयोजकमिति भावः।

विशेषेति। अन्यथासिद्धिघटिततज्जन्यत्वस्य [6]तन्त्रत्वे गौरवादिति भावः[7]। [8]अपरकोटिव्यवच्छेदो हि तदत्यन्ताभावस्तद्वदन्योन्याभावो वा, तज्ज्ञाने च अन्यत्र क्लृप्त[9]प्रतियोगिज्ञानादिकमेव हेतुः, न विशेषदर्शनम्। [10]अत एव विशेषदर्शनं विनापि [11]घटत्वादिप्रकारकप्रतियोगिज्ञानदशायां [12]घटवानयमित्यनुभवादिति भावः।

---

1. ख. कोटिज्ञानप्रतिबन्धकत्वेनोपयोगः
2. क. विशेषदर्शनजन्यत्ववादिमते
3. क विशेषेणेति
4. क. विशेषणदर्शन-
5. ख. बाधकालावधारणत्वयोः
   ग- सर्वसाधकत्वावधारणयोः
6. ख. तत्त्वे
7. ग. एतदनन्तरं 'आर्येति' इत्यधिकपाठः
8. क. अपरकोटयवच्छेदे हि
9. क. प्रतियोगिकज्ञाना-
10. ख. 'अत एव विशेषदर्शनं' [नास्ति।
11. ख. पटत्वादि
12. ख. ग. घट एवायमित्यनुभव इति

## प्रकाशः

नन्वेवं विशेषदर्शनस्याहेतुत्वे [1]बाध्यबाधकव्यवस्था अवधारणानवधारण[2]-व्यवस्था च ज्ञाने न स्यात्। सामग्र्यवैचित्र्ये फलावैचित्र्यादिति चेत्—न। विशेषदर्शनाव्यवहितोत्तरोत्पत्तिकत्वेन[3] बाधकत्वसम्भवात्। अवधारणत्वं च ज्ञाने तत्कोटिविषयत्वे सति अपरकोटि[4]व्यवच्छेदविषयत्वम् अपरकोटि[5]व्यवच्छेदभान-सामग्रीसमाजात् आर्थसमाजमहिम्नैवोपपन्नं न विशेषसामग्र्यन्तरं कल्पयतीति।

अस्तु वा [6]तत्रापि विशेषदर्शनस्य हेतुत्वम्, तथापि न तत्त्वेन, किं तु संशयविरोधिदर्शनत्वादिनैव। अन्यथा स्थाणुपुरुषसंशयानन्तरम् अयं न

---

## तर्कचूडामणिः

ननु विचित्रकार्यमात्रस्य विचित्रकारणजन्यत्व[7]नियमेन [8]बाधकत्वासम्भ-वादिवैचित्र्यानुपपत्त्या विशेषदर्शनजन्यत्वमावश्यकम्। अन्यथा कार्यवैचित्र्यानुप-पत्तेः। अत एवोक्तं **मणिकृता**—'विशेषदर्शनजन्यत्वं बाधकत्व'मिति। किं च त्वन्मते विशेषदर्शनस्याहेतुतया व्याप्यव्यापकोभयविषय[9]परामर्शस्यैकदासम्भवेन [10]तत्प्रत्यक्षस्याबाधकत्वापत्तिः। न च [11]संशयप्रतिबन्धाय [12]पूर्वं तदावश्यकमिति वाच्यम्। विशेषदर्शनसामग्र्या अपि तत्प्रतिबन्धकत्वात्। न चैवमपि तत्सामग्र्यव्यवहितोत्तरोत्पत्तिकत्वं [13]तत्र तन्त्रमिति वाच्यम्। यत्र शब्दात् प्रथमतो विशेषदर्शनमात्रं तत्र तदुत्तरप्रत्यक्षस्याबाधकत्वापत्तेरित्यरुचेराह—**अस्तु वेति**।

---

1. क. साध्यबाधक-
2. ख. णत्वविभागश्च
3. ख. कत्वेनापि
4. क. व्यवच्छेदकत्वविषयः
5. क. व्यवच्छेदकभान-
6. ख. तत्र विशेष-
7. ग. नियमस्यैव
8. ख. बाधकत्वादिवैचित्र्या-
   ग. बाधकत्वादिति वैचित्र्या-
9. ख. ग. ज्ञानस्यैकदा
10. क. तत्प्रत्यक्षाबाधकत्वापत्तिः
11. ग. संशयप्रतिसमवायमिति तदावश्यकमिति
12. ख. पूर्ववत्तदावश्यकमिति
13. क. 'तत्र' नास्ति।

## प्रकाशः

स्थाणुरित्याप्तवाक्यात् पुरोवर्तिनि स्थाणुत्वाभावावगतौ पुरुषत्वव्याप्यदर्शनं विना पुरुषप्रत्यक्षानुदयप्रसङ्गात् । न चैवमेवेति वाच्यम् । स्थाणुत्वभावानिश्चयेन संशये निरस्ते इन्द्रियसंनिकर्षादौ सत्यपि न पुरुषप्रत्यक्षमित्यस्यानुभवबाधितत्वात् । संशयविरोधित्वेन तत्प्रयोजकत्वे विपरीतनिश्चयस्यापि संशयविरोधित्वात् [1]ततः पुरुषप्रत्यक्षाविरोध इति वयं पश्यामः । न चैवमग्रिमज्ञानपदवैयर्थ्यम्, अन्यत्र परामर्शस्य [2]तत्त्वेनाजनकत्वादिति वाच्यम् । सत्प्रतिपक्षस्थले [3]प्रकृतसाध्यद्वयहेत्वोः किं तत्त्वमिति जिज्ञासायामतिव्याप्तिवारकत्वात् तत्र [4]परामर्शस्य तत्त्वेनैव

---

## तर्कचूडामणिः

आदिपदग्राह्यं व्यञ्जकाभावप्रयुक्तसंशयोत्तरप्रत्यक्ष[5]साधारणसंशयविरोधित्वमात्रम् । [6]एतदेव वक्ष्यति **संशयविरोधित्वेनेति । अन्यथेति ।** व्याप्यदर्शनत्वेन तज्जन्यत्वविवक्षायाम् ।

**अन्यत्र**—ध्वंसादौ । नन्वन्यत्र क्लृप्तेष्ट[7]साधनतादिरेव हेतुर्न परामर्शः । तत्त्वेऽपि [8]वा जिज्ञासायां विरुद्धोभयव्याप्यज्ञानत्वेन हेतुत्वम् । न तु व्याप्यदर्शनत्वेन, एकहेतावपि तादृशजिज्ञासापत्तेरित्यस्वरसादाह—**यद्वेति ।** [9]**ज्ञानपदबहिर्भावेनेति ।** [10]जिज्ञासायामुक्तरूपेण जनकत्वाभावे[11]नातिव्याप्त्यभावादिति

---

1. ख. न ततः पुरुषप्रत्यक्षोदयविरोधः
2. क. तत्त्वेन जनकत्वादिति
3. क. प्रकृतसाध्यहेत्वोः
4. ख. परामर्शस्यापि
5. क. साधारणं संशय-
6. ख. तदेव
7. क. साधनत्वाज्ञानादिरेव
8. क. विजिज्ञासायां
9. क. ज्ञानपदे
10. ग. जिज्ञासाया उक्त-
11. क. नातिव्याप्तिरिति

## प्रकाशः

जनकत्वात् । प्रकृत[1]साध्यद्वयहेत्वोः किं तत्त्वमिति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः प्रकरणसम [2]इत्यादिग्रन्थेन तथैव ग्रन्थकृताप्यग्रे दर्शयिष्यमाणत्वात् ।

यद्वा भ्रमानुमितावतिव्याप्तिवारणायाग्रिमज्ञानपदं प्रमापरम् । प्रमाणलक्षणाय प्रमाया [3]एवात्र लक्ष्यत्वात् । प्रथमज्ञानपदस्यैव तदर्थं प्रमापरत्वे भ्रमांशप्रमानुपसंग्रहापत्तेः । गन्धप्रागभावावच्छिन्नो घटो गन्धवानिति बाधानवतारे जायमानानुमिता[4]वतिव्याप्त्यापत्तेश्च अग्रिमज्ञान[पद]बहिर्भावेनानुमितिसामान्यलक्षणमपि स्मारितमिति सामान्य[5]लक्षणानभिधाने कथमनुमितिविशेषलक्षणाभिधानमिति दूषणमलग्नकं बोध्यम् । केवलव्यतिरेकिणि तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यत इति [6]मतेनैतल्लक्षणाभिधानान्न तल्लिङ्गकानुमितावव्याप्तिरिति[7] द्रष्टव्यम् ।

---

## तर्कचूडामणिः

भावः । केवलेति । न च व्याप्तिपदस्य व्यभिचार[8]विरोधिपरतया [9]व्यतिरेकिलिङ्गस्य परामर्शस्य व्यतिरेकव्याप्ति[10]प्रकारकतया मतान्तरेऽपि नाव्याप्तिशङ्केति वाच्यम् । तथापि तस्य हेतौ [11]तद्वैशिष्ट्याविषयत्वात् [12]पक्षवृत्तिहेत्ववच्छेदेन व्यभिचारज्ञानविरोधिवैशिष्ट्य[13]विषयकत्वस्य विवक्षितत्वात् । अन्यथा धूमो वह्निव्याप्यः अयं च धूमवानिति समूहालम्बनादनुमित्यापत्तिरिति[14] भावः ।

---

1. क. साध्यहेत्वोः
2. ख. इत्यग्रिमग्रन्थेन ग्रन्थकृतापि तथैवाग्रे दर्शितत्वात् ।
3. क. एव लक्ष्यत्वात्
4. क. वतिव्याप्तेश्च
5. क. लक्षणाभिधाने
6. ख. मतेनैतल्लक्षणप्रणयनात्
7. ख. वव्यव्याप्तिरिति
8. क. विरोधपरतया
9. क. व्यतिरेकलिङ्गस्य
10. ख. प्रकारतया
11. ख ग. तद्वैशिष्ट्यविषयकत्वात्
12. क. पदवृत्तिहेत्वसिद्ध्यवच्छेदेन
13. ख. विषयजत्वस्य
14. ख. इत्यापत्तेरिति

## प्रकाशः

अन्ये तु व्याप्तिविशिष्टपदेन साध्यगोचरसाधनसमानाधिकरणात्यन्ताभावप्रतियोगित्वधीविरोधिज्ञानविषय[1]व्याप्तिवैशिष्ट्यं विवक्षितम्। अन्वयिनि लिङ्गे अन्वयव्याप्तेः साक्षाद्वैशिष्ट्यमेव तथा। व्यतिरेकिणि तु व्यतिरेकव्याप्तेस्तत्प्रतियोग्यभावप्रतियोगित्वरूपपरम्परावैशिष्ट्यं तथा। [2]तदेव च तत्रानुमितिजनके लिङ्गपरामर्शे विषय इति न तज्जन्यानुमितावव्याप्तिरित्याहुः।

---

## तर्कचूडामणिः

यन्नपतिमतमाह—अन्ये त्विति। व्याप्तिद्वय[3]साधारणं रूपमाह व्याप्तीति। साध्यगोचरा या तादृशाभावप्रतियोगित्वधीः [4]व्यभिचारधीरिति यावत् तद्विरोधिनी या धीः तद्विषय इत्यर्थः। [5]तथा च व्यभिचारज्ञानविरोधिज्ञानविषय इत्यर्थः। सकलसाधनवति साध्यसम्बन्धग्रहस्य साध्ये उक्तप्रतियोगित्व[6]धीविरोधित्वादित्यर्थः। तदिति। तत्पदं व्यतिरेकव्याप्तिपरम्। तत्प्रतियोगी तन्निरूपकः योऽभावः साधनाभावः तत्प्रतियोगित्वं हेतौ वर्तत इत्यर्थः। [7]तथा व्यभिचारधीविरोधिधीविषयः। [8]साध्याभाववति सर्वत्र साधनाभावज्ञानस्यापि साध्ये उक्तप्रतियोगित्वधीविरोधित्वादिति भावः। तदेवेति। परम्परावैशिष्ट्यमेवेत्यर्थः। साध्याभावव्यापकाभावप्रतियोगिहेतुमानयमिति परामर्शस्य तद्विषयकत्वेनानुभूयमान-

---

1. क. 'व्याप्ति' नास्ति।
2. क. तदेवात्रानु-
3. क. साधारणरूप-
4. ख. व्यभिचारत्वधी
5. ख. 'तथा च .......... इत्यर्थः' नास्ति।
6. क. धीविषयत्वात्
7. ख. ग. 'तथा व्यभिचारधीविरोधिधीविषयः' नास्ति
8. ग. 'साध्याभाववति .......... साक्षाद्वैशिष्ट्यमेव विषयः' इति ग्रन्थः लुप्तः

## प्रकाशः

[1]नन्वनुमितावनुमितित्वं गृहीतं न वा ? आद्य तदेव लक्षणमस्तु, कृतं तद्ग्रहाधीनग्रहेण प्रकृतलक्षणेन । अन्त्ये अनुमितिगतधर्मग्रहं विना तत्रोक्तज्ञानजन्यत्वग्रहासम्भवादिति चेत्—न । तत्र हि अनुमितित्वं गृहीतमेव किं तु लक्ष्यतावच्छेदकतयोपयोगि । न ह्येकमेव लक्षणं लक्ष्यतावच्छेदकं च । [2]इतरभेदसाधने तयोरभेदेऽन्वयव्याप्तिग्राहकेणैव [3]पक्षतावच्छेदकावच्छिन्ने साध्यसिद्धिसंभवेन सिद्धसाधनात् । व्यतिरेकिण्यन्वयव्याप्तिरेव गृह्यत इति [4]मतेनास्याभिधानात् । यथा च तन्मतं नायुक्तं तथाग्रे वक्ष्यते । तृणारणिमणिन्यायेनावच्छेदकग्रहं विनापि हेतुत्वग्रहसम्भवाच्च ।

---

## तर्कचूडामणिः

त्वादिति भावः । व्यतिरेकिण्यपि[5] अन्वयव्याप्तिग्रहस्य वक्ष्यमाणतया तत्रापि साक्षाद्वैशिष्ट्यमेव विषयः । न तु तद्वैशिष्ट्यान्तरमित्यस्वरसो [6]बोद्धव्यः । विनिगमकाभावादुभयमपि लक्षणमस्त्वित्यत आह—[7]तद्ग्रहेति । [8]नन्वत्र व्यतिरेकव्याप्तिग्रहान्न सिद्धसाधनमित्यत आह—**व्यतिरेकिणीति** । नन्वनुमितित्वस्य लक्षणत्वेऽपि व्याप्तिग्रहदशायां सर्वानुमितित्वावच्छेदेन साध्यासिद्धेः तत्सिद्ध्यर्थं [9]व्यतिरेकयादरः । अत एव पृथिवीत्वेन व्याप्तिग्रहदशायां साध्यसिद्धावपि सर्वपृथिवीत्वावच्छेदेन तत्सिद्ध्यर्थं व्यतिरेकीति वक्ष्यत इत्यस्वरसाद्वाचस्पतिमतमाह—**तृणेति** । तत्तद्व्यक्तिपुरस्कारेणेति शेषः ।

---

1. ख. नन्वनुमितित्वं
2. ख. अन्यथेतरभेदसाधनेऽन्वय-
3. ख. लक्ष्यता-
4. ख. मतेनैव तल्लक्षणाभिधानात्
5. ख. 'अपि' नास्ति ।
6. ख. द्रष्टव्यः
7. ख. तद्ग्रहेति
8. ख. अनुभवव्यतिरेकव्याप्तेरेव ग्रहात् सिद्धसाधनम्
9. ख. व्यतिरेकादरः

## प्रकाशः

ननु व्याप्तिज्ञानत्वेन तज्ज्ञानजन्यत्वस्य पक्षधर्मताज्ञानत्वेन तज्ज्ञानजन्यत्वस्य चानुमितिलक्षणत्व[1]संभवात् प्रकृतलक्षणे गौरवमिति चेत्—न। तदुभयरूपेण तदुभयज्ञानस्यानुमितिहेतुत्वासिद्धेः। न हि व्याप्तिपक्षधर्मतोभयविषयकपरामर्शस्य व्याप्तिज्ञानत्वेन पक्षधर्मताज्ञानत्वेन च जनकत्वम्; समुदितविषयत्वेनैव तस्य तथात्वात्। अन्यथा अन्यतर[2]वैकल्यमेव स्यात्। न च परामर्शजनक-

## तर्कचूडामणिः

नन्विति। [3]अन्यत्रोक्तरूपेण तयोर्जनकत्वाभावादिति भावः। व्याप्ति-ज्ञानत्वेन पक्षधर्मताज्ञानत्वेन जनकत्वं [4]किं विशिष्टज्ञानात्मकपरामर्शस्य ? किं वा द्वितीयलिङ्गपरामर्शस्य पक्षधर्मताज्ञानत्वेन [5]हेतुत्वम्, व्याप्तिस्मृतेः व्याप्तिज्ञानत्वेन करणत्वमभिमतम् ? आद्य आह—[6]न हीति। समुदितेति। व्याप्तिविशिष्ट-पक्षधर्मता[7]विषयकत्वेन परामर्शस्य [8]हेतुत्वादित्यर्थः। अन्यथेति। व्याप्तिज्ञान-त्वेन पक्षधर्मताज्ञानत्वेन च तस्य हेतुत्वे[9]ऽन्यतरवैकल्यम् अन्यतरधर्मस्य हेतुतावच्छेदकत्वाभावः[10] स्यादित्यर्थः। [11]एकधर्मपुरस्कारेणैव एकस्य एककार्य-तावच्छेदकावच्छिन्नहेतुत्वादिति भावः। वैफल्यमिति पाठेऽप्ययमेवार्थः।

यद्यप्येवं सति एकस्यैव [12]ज्ञानस्येष्टसाधनत्वप्रकारकत्वादिना प्रवर्तकत्वं न स्यात्। न च तत्रापि कृतिसाध्यत्वविशिष्टेष्टसाधनत्व[13]प्रकारकत्वमेव हेतु-

1. ख. सम्भवे
2. क. वैफल्यमेव
3. घ. अन्यथोक्त
4. क. किं च शिष्ट
5. क. 'हेतुत्वं' नास्ति।
6. क. तदिति
7. ख. विषयत्वेनैव
8. क. हेतुत्वमित्यर्थः
9. ग. ऽन्यतरवैमुख्यम्
10. ख. त्वाभासः
11. ग. एकधर्मव्याप्त्यतिरेकेण अपेक्षितकार्यतावच्छेदका वच्छिन्नत्वात्
12. क. ज्ञानस्येष्टसाधनत्वं प्र-
13. क. प्रकारकज्ञानमेव

## प्रकाशः

व्याप्तिस्मृतिद्वारा द्वितीयलिङ्गपरामर्शस्य पक्षधर्मताज्ञानत्वेन तत्र हेतुत्वमिति वाच्यम्। यत्र धूमादौ व्याप्तिवैशिष्ट्यग्रहानन्तरमेव पक्षधर्मताग्रहः तत्र व्यभिचारेण तस्यानुमितावजनकत्वात्। व्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्य यथा नानुमितिकारणत्वं तथाग्रे वक्ष्यते। तदुभयरूपेण तत्र जनकत्वसंभवेऽपि प्रकृतलक्षणे तयोरप्रवेशेन व्यर्थविशेषणत्वाद्यनवकाशाच्चेति सर्वमवदातम्।

---

## तर्कचूडामणिः

तावच्छेदकमिति वाच्यम्। निरन्तरोत्पन्नप्रत्येकज्ञानादप्रवृत्तिप्रसङ्गात्। [1]तथाप्यापातत इदम्। वस्तुतस्तु प्रत्येकधर्मस्य हेतुतावच्छेदकत्वे [2]यत्र न विशिष्टपरामर्शः विशकलितं च ज्ञानद्वयं तत्रापि कारणतावच्छेदकावच्छिन्नस्य सत्त्वेनानुमितिः स्यादिति बोध्यम्। द्वितीय आह—**न चेति**। **पक्षधर्मताग्रह इति**। विशिष्टलिङ्गपरामर्शात्मक इति शेषः। **व्यभिचारेणेति**। पक्षधर्मताज्ञानत्वावच्छिन्न[3]हेतुताश्रयाभावादिति भावः। [4]तृतीय आह—**व्याप्तीति**। [5]अभ्युपगमवादेन परिहारान्तरमाह—[6]**तदुभयेति**।

**केचित्त्विति**। एतन्मते ज्ञाने विषये [7]च द्वन्द्वोऽभिमत। तथा च [8]व्याप्तिविशिष्टपक्षधर्मताज्ञानाभ्यां व्यापारव्यापारिभावापन्नाभ्यां यत् ज्ञानं [9]जायते

---

1. क. तथाप्यन्तत इदम्
2. क. यत्र विशिष्ट-
3. क. हेतुतासमाभावादिति
4. क. तृतीयमाह
5. क. अभ्युपगमेन
6. ख. उभयेति
7. क. ग. 'च' नास्ति।
8. ग. व्याप्तिवैशिष्ट्यज्ञानपक्षधर्मताज्ञानाभ्यां
9. ख. अन्यते

## प्रकाशः

केचित्तु [1]विशिष्टपदं वैशिष्ट्यपरम्। तथा च [2]व्याप्तिवैशिष्ट्यविषयकज्ञानस्य [3]पक्षधर्मताज्ञानस्य च यत्र व्यापारव्यापारिभावापन्नतया कारणत्वम् [4]तत् अनुमितिः। एवं चोक्तरूपप्रत्यक्षादौ नातिव्याप्तिः। एवं चान्वयिनि व्यतिरेकिण्यपि तज्ज्ञानं तथेति न कश्चिद्दोष इति वदन्ति।

---

## तर्कचूडामणिः

तत् अनुमितिरित्यर्थः। ननु व्याप्तिविशिष्टत्व[5]प्रकारकं ज्ञानं न हेतुः, व्याप्तिप्रकारक[6]ज्ञानादप्यनुमितिदर्शनात्। नापि [7]व्याप्तिविशिष्टविषयकज्ञानमात्रम्, धूमत्वादिना तज्ज्ञानादनुमित्यापत्तेरित्यत आह—**विशिष्टेति**। [8]अत्र च व्याप्तिविशेष्यकज्ञानं तद्वैशिष्ट्यविषयकतया अनुमितिकरणमिति बोध्यम्। **उक्तरूपेति**। संशयविपर्ययोत्तरेत्यर्थः। तत्र चक्षुरादेरेव [9]करणतया व्यापारित्वेन व्याप्तिज्ञानस्याव्यापारित्वात् पक्षधर्मता[10]ज्ञानस्याव्यापारत्वाच्चेति भावः। अनुमितौ [11]व्याप्तिज्ञानस्य करणत्वं ग्रन्थकार एव वक्ष्यतीति भावः। **तज्ज्ञानम्**—अन्वयव्यतिरेकोभयव्याप्तिज्ञानम्। **तथा**—व्यापारीत्यर्थः। **तदुभयेति**। अव्यभिचारवैशिष्ट्यं परम्परया, सहचारवैशिष्ट्यं साक्षादिति बोध्यम्। **न चैवमिति**। तथा च मणिविरोध इति भावः। न चाव्यभिचारज्ञानमेव व्यापारित्वेन विवक्षितमिति वाच्यम्। मनसः करणतया व्यापारित्वेन

---

1. ख. व्याप्तिविशिष्ट-
2. क. व्याप्तिविशिष्टविषयकस्य
3. क. पक्षताविषयत्वस्य ज्ञानस्य च
4. क. न त्वनुमितिः
5. क. प्रकारज्ञानं
6. ख. ज्ञानादनुमिति-
7. ख. 'व्याप्ति' नास्ति।
8. ख. अतो व्याप्ति-
9. ख. कारणतया
10. क. ज्ञानस्याव्यापारित्वाच्चेति।
11. ख. व्याप्तिज्ञानकारणत्वम्

## प्रकाशः

तत्र । विशकलितव्यभिचाराभावसहचारस्मरणानन्तरं यत्र लिङ्गे तदुभय-वैशिष्ट्यं पक्षे च लिङ्गवैशिष्ट्यं युगपदेव भासते तज्ज्ञानजन्यानुमितावव्याप्तेः। तत्र परामर्शपूर्वं व्याप्तिज्ञानाभावात्। न चैवं [1]व्याप्तिज्ञानस्य कारणत्वमपि न स्यात् [2]तत्रैव व्यभिचारादिति वाच्यम्। यथाश्रुतस्याग्रे दूष्यत्वेनेष्टापत्तेः।

---

## तर्कचूडामणिः

[3]तस्याप्यव्यापारित्वादिति भावः। किं च व्यापारित्वेन व्याप्तिज्ञनजन्यत्वविवक्षायामसम्भवः। अनुमितौ व्याप्तिज्ञानस्य [4]व्यापारित्वेनाहेतुत्वात्। [5]वस्तुतस्तु व्याप्तिज्ञानस्य व्यापारित्वविवक्षायामुक्तप्रत्यक्षयोरतिव्याप्तिः। तत्र चक्षुरादेः करणत्वेऽपि व्याप्तिज्ञनस्यानुभवसिद्धव्यापारित्वापह्नवायोगात् इत्यादिदूषणं द्रष्टव्यम्।

ननु तत्करणमित्यत्र तत्पदस्य प्रकृतानुमितिपरत्वेन अनुमितिकरणमित्यर्थः। तथा चानुमिति[6]करणमनुमानमिति स्यात्। तथा च पौनरुक्त्यम् अनुमान-[7]शब्दस्याप्यनुमितिकरणवाचित्वात् अनुमितिकरणत्वस्यानुमानाभासेऽपि गतत्वेनातिव्याप्तिश्च, [8]अनुमानप्रमाणस्यैव लक्ष्यत्वादित्यत आह—व्याप्तीति। तत्करण-[9]पदस्यार्थान्तरप्रतिपादनेन तत्करणमनुमानमिति वाक्यं व्याख्याय अनुमान[10]पद-

---

1. क. व्याप्तिज्ञानकारणत्वमपि
2. ख. अत्रैव
3. ख. तस्याव्यापारि-
4. ख. अव्याप्तित्वेन
   ग. व्यापारत्वेन हेतुत्वाच्च।
5. ख. वस्तुतो व्याप्ति-
6. क. करणमिति स्यात्
7. ख. ग. शब्दस्यानु-
8. क. प्रमाणानुमानस्यैव
9. ख. पदेनार्थान्तर-
10. ख. पदान्तरकथनेनापि
    ग. पदस्यार्थान्तरकल्पनेनापि

तत्करणमनुमानम् । तच्च लिङ्गपरामर्शो न तु परामृश्यमानं लिङ्गमिति वक्ष्यते ।

---

## प्रकाशः

तदिति । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यप्रमाकरणमित्यर्थः । यद्वा [1]अनुमानम् अनुमानपदवाच्यं प्रमाणमित्यर्थः । तेन [2]न पौनरुक्त्यम्, न वा [3]अनुमानाभाससाधारण्यम् । [4]ननु तत्कारणत्वमनुमानलक्षणं न सम्भवति, लिङ्गस्यातीतानागतत्वेनाकारणत्वात्, तस्य चानुमानत्वेनाभिमतत्वादित्यत आह—तच्चेति ।

---

## तर्कचूडामणिः

स्यार्थान्तरकथनेनापि तद्वाक्यं व्याचष्टे—यद्वेति । ननु [5]पौनरुक्त्यपरिहारेऽसाधारण्यं [6]तदवस्थमेवेत्यत आह—प्रमाणमिति । अनुमितिकरणत्वे सति प्रमाणत्वं लक्षणमित्यर्थः । अत्र प्रमानुमितिकरणत्वं लक्षणमित्यत्र तात्पर्यम् । अत्र यद्यपि मणिकृन्मते व्याप्ति[7]ज्ञानस्यैव करणतया 'तच्च लिङ्गपरामर्शः' इति मूलानुपपत्तिः । तथापि मतान्तरेणेदम् । यद्वा लिङ्गपरामर्शो लिङ्गत्वेन परामर्शो व्याप्तिज्ञानमिति यावत् । परामृश्यमानमित्यत्र विशिष्टनिषेधरूपस्य उभयनिषेध[8]परत्वेन न लिङ्गं नापि तद्व्यावरतृतीयलिङ्गपरामर्शः कारणमित्यर्थपर्यवसाने स्वमतमेतदिति मन्तव्यम् ।

[9]ननु प्रमाणस्य पक्षत्वे बाधः । अप्रमाणस्य पक्षत्वे सिद्धसाधनम् । प्रमाणाप्रमाणसाधारणानुमानमात्रस्य [10]तत्त्वेऽप्यंशतः सिद्धसाधनम् । किं च

---

1. क. 'अनुमानम्' नास्ति ॥
2. क. 'न' नास्ति ।
3. क. अनुमानाभाव-
4. ख. 'ननु तत्कारणत्व तच्चेति' इति ग्रन्थस्त्रुटितः ।
5. क. पौनरुक्त्यापरि-
6. क. तद्वदेव
7. ख. ज्ञानस्य करणतया
8. क. रूपत्वेन लिङ्गेनापि परामर्शः करणं
9. ख. नन्वप्रमाणस्य पक्षत्वे सिद्धसाधनं
10. ख. पक्षत्वेंऽशतः

**अथानुमानं न प्रमाणम्, योग्योपाधीनां योग्यानुपलब्ध्या अभाव-निश्चयेऽपि अयोग्योपाधिशङ्कया व्यभिचारसंशयात्, शतशः सहचरित-**

---

## प्रकाशः

अनुमानप्रामाण्यमसहमानश्चार्वाकः प्रत्यवतिष्ठते—**अथेति**। अनुमान-प्रमाणत्वाभिमतं धूमादि [1]इन्द्रियासंनिकृष्टे न प्रमाणम्, व्यभिचारसंशयविषयत्वात् संप्रतिपन्नवदित्यर्थः। न च व्यभिचारसंशयस्य योग्यतासंशयपर्यवसन्नतया शब्देन व्याप्तिग्रहः स्यादिति वाच्यम्। तेन शब्दप्रामाण्य[2]स्याप्यनङ्गीकारात्। **अयोग्योपाधीति**। न चातीन्द्रियोपाधिसंशयः तज्ज्ञानात् तज्ज्ञानं च न प्रत्यक्षेण

---

## तर्कचूडामणिः

व्यभिचारसंशयादिति हेतोः पक्षावृत्तित्वेनासिद्धिरित्यत्राह[3]—**अनुमानेति**। लिङ्ग-करणतामाश्रित्येदम्। मतान्तरे धूमादिपदं [4]तज्ज्ञानपरम्। [5]व्यभिचारसंशय-विषयविषयकत्वं [6]हेतुरिति बोध्यम्। ननु व्यभिचारसंशयविषयत्वेऽपि भवतु प्रामाण्यम्। न च तस्य [7]व्याप्तिग्रहप्रतिबन्धकतया तत्सत्त्वे कथमनुमान-प्रामाण्यमिति वाच्यम्। तस्य व्याप्तिप्रत्यक्षे[8] प्रतिबन्धकत्वेऽपि [9]तद्गोचरशाब्द-व्याप्तिग्रहाप्रतिबन्धकत्वादित्याशङ्क्य निराकरोति—**न चेति**। [10]**अनादीति**।

---

1. क. 'इन्द्रियासंनिकृष्टे' नास्ति।
2. क. स्यानङ्गीकारात्
3. ख. असिद्धिस्तत्राह
4. ख. धूमज्ञान-
5. ख. ग. व्याभिचारि-
6. क. हेतुर्बोध्यः ग. हेतुरिति ध्येयम्
7. ख. 'व्याप्तिग्रह......तस्य' इति ग्रन्थस्त्रुटितः।
8. ख. ग. प्रत्यक्षप्रति-
9. ख. तद्गोचरज्ञानग्रहप्रति-
10. क. 'अनादीति' नास्ति।

योरपि व्यभिचारोपलब्धेश्च । लोके धूमादिदर्शनानन्तरं वह्न्यादिव्यवहारश्च सम्भावनामात्रात्, संवादेन च प्रामाण्याभिमानादिति नाप्रत्यक्षं प्रमाणमिति ।

---

## प्रकाशः

तस्यातीन्द्रियत्वात् । अतिरिक्त[1]प्रमाणाभ्युपगमे चापसिद्धान्तापत्तिरिति वाच्यम् । तस्यानादिवासनात उपस्थितावदोषत्वादिति भावः । ननु भूयःसहचार[2]दर्शनात्तन्निरासो भविष्यतीत्यत आह—शतश इति । न च कोटिस्मरणादिविरहाद्यत्र न व्यभिचारसंशयस्तत्रैवानुमानप्रामाण्यं सिद्धमिति वाच्यम् । [3]धूमादिदर्शनेऽनुमित्यभावेऽपि संभवनातः प्रवृत्त्युपपत्तावन्यत्रापि तत्प्रमाणत्वे मानाभावादिति भावः ।

---

## तर्कचूडामणिः

प्रवाहानादित्वमत्र[4] बोध्यम् । एतच्च न्यायमतमाश्रित्योक्तम् । तन्मते आत्मन [5]एवादिमत्त्वेन अनादिवासनाभावादिति [6]ध्येयम् । शतश इति । पार्थिवत्वलोहलेख्यत्वादावित्यर्थः । धूमादीति । व्यभिचारसंशयविषयीभूतधूमादिदर्शनस्थले [7]वह्न्याद्यनुमित्यभावेऽपि सम्भावनामात्रेण प्रवृत्तिसिद्धौ व्यभिचारसंशयविरहस्थलेऽत्कटसंभावनयैव [8]प्रवृत्तिसिद्धौ तत्राप्यनुमानप्रामाण्यकल्पने गौरवादित्यर्थः । तर्हि [9]सम्भावनाया मानान्तरत्वापत्तिः, तत्राह—उत्कटेति । तर्हि संवादे सति प्रामाण्यमपि स्यात्, तत्राह—स्मृतिवदिति ।

---

1. क. प्रामाण्याभ्युपगमे
2. क. दर्शनान्निरासा
3. क. धूमदर्शनेऽनुमित्यभावेऽपि प्रवृत्त्युपपत्तौ
4. ग. मात्रम् बोध्यम्
5. क. एवादित्वेन
6. क. बोध्यम्
7. ग. वह्न्याद्यभावेऽपि क्रमसम्भावना-
8. क. अन्यथासिद्धौ
9. ख. सम्भावनायां

## प्रकाशः

**सम्भावनामात्रादिति।** उत्कटकोटिक[1]ज्ञानमात्रादित्यर्थः। एवं सति प्रमाणबुद्धिं समर्थयति—[2]**संवादेनेति।** स्मृतिवदिति भावः। इतीति [3]हेतौ। तथा च यतोऽनुमानं न प्रमाणम् [4]अतोऽप्रत्यक्षं शब्दादिकमप्यप्रमाणम्; शब्दस्यानुमानाधीनप्रथमसंकेत[5]ग्रहमूलकत्वात् उपमानस्य चानुमानमूलकातिदेशवाक्यरूपशब्द[6]मूलकत्वादित्यर्थः। अतो नोपक्रमोपसंहारविरोधः। सम्प्रति शब्दादि-

---

## तर्कचूडामणिः

[7]नन्वनुमानाप्रामाण्यस्यैवोपपादितत्वात् [8]अन्येन प्रकारेण अप्रत्यक्षशब्दादिकं न प्रमाणमित्युक्तिरसंगता, [9]शब्दाप्रामाण्यस्यानुपपादितत्वादित्यत आह—[10]**इतीति।** इतिशब्दस्य प्रकारपरत्वाभावात् [11]नोक्तदोष इति भावः। अन्वनुमानं विनापि व्याकरणादिना संकेत[12]ग्रहोऽस्त्वित्यत आह—**प्रथमेति।** अत एव दोषान्तरमपि निरस्तमित्याह—**अत इति।** [13]इतिशब्दात्पूर्वमेवानु[14]मानाप्रामाण्यस्योपसंहृतत्वादित्यर्थः। **सम्प्रतीति।** अनुमाननिरूपणावसर इत्यर्थः। [15]तथा चेतिशब्दः प्रकारवाचीति भावः। अपीत्यस्वरसोद्भावनम्। तद्बीजं तु सम्प्रति शब्दप्रामाण्ये विवादाभावेन शब्दाधीनव्याप्तिग्रहप्रसङ्गेन तद्विवाद आवश्यक एव। [16]अत्र शब्दप्रामाण्याप्रतिपादने [17]वक्ष्यमाणव्याघातानुपपत्तिश्चेति।

---

1. क. संशयमात्रात्
2. क. संवादादिति
3. क. 'हेतौ' नास्ति।
4. ख: अतो नाप्रत्यक्षशब्दादिकमपि प्रमाणम्
5. क. 'ग्रह' नास्ति।
6. क. मूलत्वादित्यर्थः
7. क. अनुमाने प्रामाण्य-
8. क. अनेन
9. ख. शब्दप्रामाण्य-
10. ख. इति हीति।
11. ख. नोक्तशेष इति
12. ख. ग्रहोऽस्तीत्यतः
13. क. शङ्कात् पूर्वं-
14. ख. मानप्रामाण्य-
15. क. 'तथा च' नास्ति।
16. क. 'तत्र'
17. ख. वक्ष्यमाणानुपपत्तिश्चेति।

न। अप्रमाणसाधर्म्येणाप्रामाण्यसाधने दृष्टसाधर्म्यस्यानुमानत्वात्। एतद्वाक्यस्य सन्दिग्धविपर्यस्तान्यतरं प्रत्यर्थवत्त्वात्। तयोश्च परकीययोरप्रत्यक्षत्वात्। अनुमानमप्रमाणमिति वाक्यस्य प्रामाण्याप्रामाण्ययोर्व्या-

---

## प्रकाशः

प्रामाण्ये विवादाभावात् अप्रत्यक्षपदमनुमानपरम्, सामान्यशब्दस्य विशेषपरत्वा-दित्यप्याहुः।

[1]अनुमानाप्रामाण्यमनुमानविधयोच्यते? शब्दविधया वा? आद्य आह—अप्रमाणेति। अप्रमाणसाधर्म्यं व्यभिचारसंशयविषयत्वादि। तथा चाप्रमाणेनैवाप्रामाण्यसाधने व्याघात इत्यर्थः। अन्त्य आह—एतद्वाक्यस्येति। तयोः संदेहविपर्यासयोः। तथा चैतद्वाक्य[2]प्रयोगाय परकीय[3]संदेहादिज्ञानार्थ-

---

## तर्कचूडामणिः

ननु व्यभिचारसंशयविषयत्वमेव [4]लिङ्गतयोक्तम्, न तु अप्रमाणसाधर्म्य-मित्यत आह—**व्यभिचारेति**। अप्रमाणेन [5]समानो धर्मो यस्य स तथा तस्य भावः उक्तसंशयविषयत्वमेवेत्यर्थः। ननु भवतु [6]दृष्टसाधर्म्यस्यानुमानत्वम्, तथापि न [7]तस्य प्रामाण्यमित्यत आह—**तथा चेति**। तस्याप्रामाण्ये [8]अनुमाना-प्रामाण्यासिद्धेः तत्प्रामाण्यमास्थेयम्, तथा च व्याघात इत्यर्थः। तत्पदस्य संदिग्ध-विपर्यस्तपरत्वे परकीययोरित्यनन्वयः स्यादित्यत आह—**संदेहेति**। यन्म।

---

1. ख. अनुमानमप्रमाणमित्यनुमान-
2. ख. प्रयोगार्थम्
3. ख. संदेहादिज्ञानानुमान-
5 ख- हेतुत्वेनोक्तम्
5. क. समानधर्मो
6 क. दृष्टान्तसाधर्म्य-
7. ग. तस्याप्रामाण्य-
8. क. अनुमानप्रामाण्या-

घाताच्च । अपि चानुमानाप्रामाण्ये प्रत्यक्षस्याप्यप्रमाणतापत्तेः, प्रामाण्यस्यानुमेयत्वात् । स्वतश्च प्रामाण्यग्रहे तत्संशयानुपपत्तेः ।

---

### प्रकाशः

मनुमानमवश्यमभ्युपेयमिति भावः । नन्वेतत्सर्वं सम्भावनयैवान्यथासिद्धमिति दूषणान्तरमाह—अनुमानमिति । [1]अनुमानमप्रमाणमिति वाक्यस्य प्रामाण्यपक्षे शब्दप्रामाण्यसिद्धेः, अप्रामाण्यपक्षे [2]त्वनुमानस्यैव प्रामाण्यसिद्धेः 'नाप्रत्यक्षं प्रमाणम्' इत्यनेन व्याघात इत्यर्थः । यद्वा एतद्वाक्यस्य प्रामाण्यं यदि निश्चितम्, तदा[3] तन्निश्चायकत्वेनैव अनुमानं स्वीकृतम् । [4]अप्रामाण्यं चेत् तथाप्यनुमानप्रामाण्यमिति व्याघात इत्यर्थः । [5]स्वमतावष्टम्भेन दूषणान्तरमाह—अपि चेति ।

---

### तर्कचूडामणिः

अप्रत्यक्षपदमनुमानपरं तन्मते व्याघातमाह—यद्वेति । [6]न चैवं पूर्वोक्तासरसानुपपत्तिरिति वाच्यम् । प्रामाण्यस्यानुमानाग्राह्यत्वेऽपि सम्भावनामात्रेण प्रामाण्यनिश्चयकार्य[7]प्रवृत्त्युपपत्तेः । अत एव परमते [8]दूषणमलग्नकमित्यभिप्रायेणोक्तं स्वमतेति ।

---

1. क. अनुमानं प्रमाण- दूषणान्तर—
2. क. अप्यनुमानस्यैव सिद्धेः
3. क. 'तत्' नास्ति ।
4. क. अप्रमाणत्वे तदाप्यनुमानं प्रमाणमित्यर्थः
5. क. स्वमतावष्टम्भे तदुभय-
6. ग. इदं त्वापाततः प्रामाण्यस्यानुमानग्राह्यत्वेऽपि
7. म, प्रत्यक्षाद्युपपत्तेः
8. ग. दूषणमित्यभि-

## पञ्चलक्षणी

व्याप्तिग्रहोपायश्च वक्ष्यते । नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः? न तावदव्यभिचरितत्वम् । तद्धि न साध्याभाववदवृत्तित्वम्, साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्, साध्यवत्प्रतियोगिकान्योन्याभावा-

---

## प्रकाशः

ननु योग्योपाधि[1]शङ्कया व्यभिचारसंशयात् व्याप्तिग्रहाभावादेव नानुमान-मित्यत आह—व्याप्तीति । निरूपणप्रयोजकत्वेनाह—अनुमितिहेत्विति । [2]संयोगसाध्यकसद्धेतावव्याप्तेर्लक्षणान्तरमाह—साध्यवदिति । ननु यत्किंचित्-साध्यवत्प्रतियोगिकान्योन्याभावसामानाधिकरण्यं धूमादावप्यस्तीत्यरुचेराह —

---

## तर्कचूडामणिः

ननु न वयमनुमानप्रामाण्यमाक्षिपामः येनोक्तव्याघातः स्यात् । किं तु कारणाभावे [3]कथं कार्यमिति [4]पृच्छाम इत्याशयेन शङ्कते—नन्विति । ननु केय व्याप्तिरिति वक्तव्ये [5]अनुमितिहेत्वित्यादिकमपार्थमित्यत आह—निरूपणेति । इदानीं व्याप्तिनिरूपणस्य कः प्रसङ्गः? इति शङ्कां [6]निराकर्तुं तदुपादानमित्यर्थः । [7]एवं च साध्यवद्भिन्नत्वप्रवेशेन । (?)

ननु सकलपदस्य साध्याभावविशेषणत्वे सकलधूमाभाववन्महाह्रदनिष्ठात्य-न्ताभावप्रतियोगिनि वह्नावतिव्याप्तिरिति तस्य साध्याभाववद्विशेषणत्वं वाच्यम् ।

---

1. क. संदेहेन
2. ख. संयोगादिसाध्यक-
3. ग. कार्यं कथमिति
4. क, पृच्छामि
5. क. अनुमितिहेत्वित्युक्तं व्यर्थमित्यत
6. ख. ग. परिहर्तुं
7. ख. एवमिति साध्य-
   ग. एवं साध्यवद्भिन्नत्वपर्याये प्रवेशे

**सामानाधिकरण्यम्, सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्, साध्यवदन्यावृत्तित्वं वा। केवलान्वयिन्यभावात्। नापि साध्यासामानाधि-**

## प्रकाशः

**सकलेति।** सकलपदमशेषपरम्, न त्वनेकाशेषपरम्। अतो [1]यत्रैकमेव साध्यं तत्र न साकल्याप्रसिद्धिरिति ध्येयम्। ननु संयोगादिसाध्यकसद्धेतावव्याप्तिरित्यनुशयेनाह—**साध्यवदिति।** साध्यवत्त्वावच्छिन्नप्रतियोगिताकान्योन्याभाववदवृत्तित्वमित्यर्थः[2]। अन्योन्याभावश्च व्याप्यवृत्तिरिति नोक्तदोषः। अत्र वृत्तिमत्त्वे सतीति विशेषणम्, अतो [3]नाकाशादावतिव्याप्तिः। **केवलान्वयिनीति।** केवलान्वयिधर्मसाध्यक इत्यर्थः।

## तर्कचूडामणिः

एवं च अयमाकाशत्वाभाववान् शब्दानाश्रयत्वादित्यत्राव्याप्तिः, तत्र साध्याभावाधिकरणस्य [4]साकल्याप्रसिद्धेरित्यत आह—**सकलेति।** यतोऽन्यन्न शिष्यते सोऽशेषः [5]अनेकश्चासावशेषः। ननु यत्किंचित्साध्यवदन्यवृत्तिधूमादिहेतावव्याप्तिरित्यत आह—**साध्यवत्त्वेति।**

अत्र सर्वत्र [6]लक्षणे इत्यर्थः। केचित्तु [7]एतल्लक्षणे गगनादेरपि व्याप्यत्वमिष्टमेव, पक्षधर्मताविरहादेव[8] ततोऽनुमित्यभावोपपत्तेरिति यथाश्रुतमेव युक्तमित्याहुः। ननु लिङ्गस्य केवलान्वयित्वेऽपि साध्याभावप्रसिद्धिः सम्भवत्येवेत्यत आह—**केवलेति।** नन्वसामानाधिकरण्यवैयधिकरण्ययो[9]स्तदनधिकरणाधिकरण-

1. ख. यत्रैक एव साध्याभाववान्
2. क. अप्रतिपत्तित्वमित्यर्थः
3. क. नाकाशादावव्याप्तिः
4. क. साकल्याप्रसिद्धिः
5. क. न त्वशेकश्चासौ
6. क. लक्षणद्वये
7. क. अत्र लक्षणे
8. ख. ग. विरहादपि
9. ख. 'तद्' नास्ति

करण्यानधिकरणत्वं साध्यवैयधिकरण्यानधिकरणत्वं वा। तदुभयमपि साध्यानधिकरणानधिकरणत्वम्। तच्च तत्र, यत्किञ्चित्साध्यानधिकरणाधिकरणे धूमे चाप्रसिद्धम्।

---

## प्रकाशः

नापीति। अत्र साध्यासामानाधिकरण्यं साध्यसामानाधिकरण्यनिषेधः। साध्यवैयधिकरण्यं तु विशब्दमहिम्ना साध्याधिकरणभिन्नाधिकरणत्वमिति [1]नाभेदः। प्रथमपक्षे साध्याधिकरणानधिकरण[2]त्वानधिकरणताविवक्षायां व्यभिचारिसाधारण्यापत्त्या [3]साध्यानधिकरणत्वानधिकरणत्वं वाच्यम्। द्वितीयपक्षस्य साध्यानधि-

---

## तर्कचूडामणिः

[4]त्वरूपत्वेनाभेदः। न चासामानाधिकरण्यं तदधिकरणानधिकरणत्वम्, वैयधिकरण्यं तु तदनधिकरणाधिकरणत्वमिति भेद इति वाच्यम्। प्रथमकल्पस्य [5]तदनधिकरणानधिकरणत्वपर्यवसानाभावप्रसङ्गादित्यत आह — अत्रेति। विशब्देति। विलक्षणमधिकरणं यस्य [6]तत्तथा तस्य भावो वैयधिकरण्यमिति [7]साध्याधिकरणभिन्नाधिकरणत्वलाभादित्यर्थः।

ननु सामानाधिकरण्याभावस्य साध्याधिकरणानधिकरणत्व[8]रूपत्वेनाप्युपपत्तौ कथं [9]तदनधिकरणानधिकरणत्वपर्यवसायित्वम्? तत्राह—प्रथमेति। व्यभिचारीति। व्यभिचारिणोऽपि साध्याधिकरणाधिकरणतया तदधिकरणा-

---

1. ख. न भेदः
2. क. त्वाधिकरणविवक्षायां
3. क. साध्यानधिकरणाधिकरणत्वानधिकरणत्वं
4. ख. ग. 'त्व' नास्ति
5. ख. तदधिकरणानधिकरणत्व-
6. ख. 'तद्' नास्ति
7. क. त्वाधिकरण-
8. ख. रूपत्वेऽप्युप-
9. ख. तदनधिकरणाधिकरणत्व-

## चतुर्दशलक्षणी

अथेदं वाच्यं ज्ञेयत्वादित्यादौ समवायित्वया वाच्यत्वाभावो घट एव प्रसिद्धः, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात् । न चैवं घट एव व्यभिचारः, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वं हि व्यभिचारः, न च वाच्यत्वाभावस्तादृशो घटे

---

## प्रकाशः

करणानधिकरणत्व एव पर्यवसानात् उभयपक्षे तदेव तात्पर्यविषयं वर्णयित्वा दूषयति—तदुभयमपीति । [1]यद्वा साध्यासामानाधिकरण्यं साध्यवन्मात्रावृत्तित्वम् । साध्यवैयधिकरण्यं तु साध्यानधिकरणवृत्तित्वम् । एवं चोभयलक्षणस्य साध्यानधिकरणानधिकरणत्व एव पर्यवसानमित्याह—तदुभयमपीति । तत्र—केवलान्वयिनोत्यर्थः ।

---

## तर्कचूडामणिः

नधिकरणत्वरूपासामानाधिकरण्याभावत्त्वादिति भावः । ननु [2]साध्यानधिकरणाधिकरणत्वानधिकरणत्वमपि कथं साध्यानधिकरणानधिकरणत्वरूपम्, प्रतियोगिभेदेन तद्भेदात् [3]अत एव साध्यानधिकरणभिन्नाधिकरणत्वानधिकरणत्वमपि न साध्यानधिकरणानधिकरणत्वमित्यत आह—तात्पर्यविषयमिति । शक्त्या तदप्रतिपादनेऽपि लक्षणया तत्सम्भवादिति भावः । ननु साध्यासामानाधिकरण्यं यदि साध्यसामानाधिकरण्यनिषेधः तदा व्यभिचारिण्यतिव्याप्तिरित्येव ग्रन्थकारो दूषणं ब्रूयात् । न हि लक्षणदूषणवादिनः [4]तत्रातिव्याप्तिपरिहाराय विवक्षा युज्यते

---

1. ख. 'यद्वा ......... तदुभयमपीति' इति ग्रन्थस्त्रुटितः । ग. अत एव साध्याधिकरणभिन्नाधिकरणत्वमपि न साध्यानधिकरणत्वम्
2. क. साध्याधिकरणानधिकरणत्वमपि
3. क. अत एव न साध्याधिकरणभिन्नाधिकरणत्वानधिकरणत्वम् इत्यतः ।
4. ग. तदतिव्याप्ति-

## प्रकाशः

यथाकथञ्चित् साध्याभावप्रसिद्धिमात्रेणैव प्रकृतसंगतिरिति मन्वानः शङ्कते--अथेति । [ननु] प्रतियोगिमति कथं तदभाव इत्यत आह---व्यधिकरणेति । प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यमभावस्य विरुद्धम्, न तु प्रतियोगिसामानाधिकरण्यमात्रमिति भावः । पराभिमतं खण्डयति---तर्हीति । साध्यता-

---

## तर्कचूडामणिः

अव्याप्तिवदतिव्याप्तिसत्त्वेऽपि तदिष्टमिद्धेः । तद्विवक्षा[1]पूर्वकाव्याप्त्यभिधाने यत्नगौरवाच्चेत्यस्वरसादाह---यद्वेति । साध्यवन्मात्रवृत्तित्वं हि साध्यवदितरावृत्तित्वे सति साध्यवद्वृत्तित्वम्, तदभावो व्यभिचारिणि विशेष्यवति विशेषणाभावात्मक एव [2]साध्यवदन्यवृत्तित्वमिति यावत्साध्यवदन्यपदं साध्यानधिकरणपरम्, [3]न तु तद्भिन्नपरम् । अन्यथा साध्यवदन्यावृत्तित्वलक्षणादस्याभेदापत्तेः । तथा च साध्यानधिकरणवृत्तित्वे प्रथमस्य पर्यवसानम् । द्वितीयस्य तु स एवार्थ इत्यर्थः । एवं चेति । न च प्रतियोगिभेदेन साध्यानधिकरणवृत्तित्वाभावोऽपि [4]साध्यानधिकरणानधिकरणत्वादन्य एवेति वाच्यम् । साध्यानधिकरणमधिकरणं यस्य न [5]भवतीत्यर्थपर्यालोचनया साध्यानधिकरणानधिकरणत्वस्य साध्यानधिकरणावृत्तित्वरूपतयात्यन्तमभेदात्[6] । केवलेति । केवलान्वयिसाध्यक इत्यर्थः ।

इति पञ्चलक्षणी समाप्ता

---

1. क. पूर्विकाव्याप्य-
2. ग- साध्यवदन्यावृत्तित्व-
3. क. एतदनन्तरम् 'अपि साध्यानधिकरणानधिकरणत्वम्' इत्यधिकपाठः ।
4. क. साध्यानधिकरणाधिकरणत्वात् ख साध्यानधिकरणत्वात्
5. ख. भवतीत्यस्य पर्या-
6. ख. अत्यन्तभेदात्

## प्रकाशः

वच्छेदकावच्छिन्नसाध्याभावासामानाधिकरण्यमव्यभिचारो वाच्यः, तथा चाप्रसिद्धिरिति भावः ।

---

## तर्कचूडामणिः

ननु व्यधिकरणधर्मावच्छिन्नाभावसिद्धावपि न [1]प्रकृतसंगतिः । साध्यतावच्छेदकावच्छिन्न[2]साध्याभावाप्रसिद्धौ तद्धर्माव्यभिचारस्याप्यप्रसिद्धेरित्यत आह—**यथाकथंचिदिति । नन्विति ।** प्रतियोगिसत्त्वस्याभावविरोधित्वादिति भावः । प्रतियोगिमति [3]तदभावासम्भववादिनं प्रति तस्य [4]केवलान्वयित्वाभिधानमयुक्तमित्यत आह—**प्रतियोगितेति । न त्विति ।** अनुभवबलेन गौरवस्यापि प्रामाणिकत्वादित्यर्थः । ननु पूर्ववाद्यभिमततादृशाभावे निराकरणीये तदङ्गीकारेण [5]दोषान्तरकथनमयुक्तमित्यत आह—**परेति ।** [6]प्रकृतलक्षणसंगतेरेव पराभिमतत्वात् [7]तदभिमानं खण्डयतीत्यर्थः । ननु व्यधिकरणधर्मावच्छिन्नाभावस्य प्रकृतत्वात् तादृशपदेन तदुपादाने [8]धूमादावव्याप्तिः तादृशाभावस्य केवलान्वयित्वे सर्वस्यैव हेतोस्तत्समानाधिकरणत्वात् । किं च तादृशाभावसामानाधिकरण्याभावस्य [9]अव्यभिचाररूपत्वमेवेति व्याप्तिपदप्रयोगानुपपत्तिरित्यत आह—**साध्येति ।**

---

1. क. प्रकृतसाध्यता-
2. क' साध्यभावाप्रसिद्धौ
   ख. साध्यभावप्रसिद्धौ
3. ख तदभाववादिनं
4. ख. केवलान्वयित्वमेवासिद्धमित्यत आह
5. ख. ग. दोषान्तराभिधानमसंगतम्
6. क. प्रकृतिलक्षण-
7. क. 'तद्' नास्ति ।
8. ख. धूमादावतिव्याप्तिः ।
9. क. अस्य व्यभिचाररूपत्व-

इति चेत् — तर्हि तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिः, तथा चाप्रसिद्धिः ।

प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः, तद्विशिष्ट-[तद्वैशिष्ट्य]ज्ञानस्याभावधीहेतुत्वात् । अन्यथा तन्निर्विकल्पकादपि घटो नास्तीति बुद्ध्यापत्तेः ।

---

## प्रकाशः

तद्वैशिष्ट्येति । प्रतियोगिनि प्रतियोगितावच्छेदक[1]वैशिष्ट्यज्ञानस्याभाव-[2]ज्ञानकारणत्वादिति भावः । अन्यथेति । [3]प्रतियोगिधीमात्रस्याभावधी-हेतुत्व इत्यर्थः ।

ननु व्यधिकरणधर्मवैशिष्ट्यज्ञानं भ्रमरूपं सम्भवत्येव । न हि प्रतियोगिता-वच्छेदकधर्मप्रकारकप्रतियोगिप्रमात्वेन तद्धेतुत्वम्, गौरवात् । किं तु तादृश-प्रतियोगिज्ञानत्वेन, लाघवात् । अत एव न निर्विकल्पकादप्यभावधीः । न चास्य

---

## तर्कचूडामणिः

नन्वत्रापि गुणादौ समवेतत्वरूपप्रतियोगितावच्छेदकवैशिष्ट्यज्ञानमस्त्येवेत्यत आह — **प्रतियोगिनीति** । उक्तवैशिष्ट्य[4]ज्ञानाहेतुत्वस्य अन्यथाशब्दार्थत्वे निर्विकल्पकेन तदुत्पत्त्यापादनं न सम्भवति, तद्धेतुत्वस्य परेणानभिधानात्, तत्राह — **प्रतियोगीति** । **अत एवेति** । प्रतियोगितावच्छेदकवैशिष्ट्यज्ञानस्य हेतुत्वादित्यर्थः । न हि विशिष्टस्य प्रतियोगित्वम्, येन तस्यासत्त्वेन [5]असत्ख्यातिः

---

1. ख. धर्मवैशिष्ट्य
2. ख. धीहेतुत्वादिति
3. क. प्रतियोगिज्ञानस्य
4. ख. ज्ञानहेतुत्वस्य
   ग. ज्ञानान्याहेतुत्वस्य
5. क. असत्त्याति:

## प्रकाशः

व्यधिकरणधर्मावच्छिन्नस्य प्रतियोगिनः सर्वथा [1]असत्त्वेन असत्ख्यात्यापत्तिः। वाच्यत्वमात्रस्यैव प्रतियोगित्वात्। तत्र च व्यधिकरणधर्मोऽवच्छेदकः। तद्वैशिष्ट्यज्ञानं च तत्राप्यन्यथाख्यातिरूपमेव। अथ वाच्यत्वं न क्वचित्समवेतमिति विशेषदर्शने सत्येव वाच्यत्वं समवायितया घटे नास्तीति प्रतीतेः [2]तेनाभ्युपगमः। अन्यथा [3]तादृशाभावाप्रतिपत्त्या तस्य केवलान्वयित्वग्रहा-

## तर्कचूडामणिः

स्यात्। किं तु विशेष्यमात्रस्य तत्त्वमित्याह—[4]वाच्यत्वेति। तथापि वाच्यत्वे समवेतत्व[5]वैशिष्ट्यस्यासत्त्वेन असत्ख्यात्यापत्तिरित्यत आह—तदिति। अन्यत्र सत एव वैशिष्ट्यस्य वाच्यत्वे भानादिति भावः। विशेषदर्शने [6]इति। [7]विपरीतदर्शन इत्यर्थः। सत्येवेति। सत्यपीत्यर्थः। [8]यथाश्रुते तादृशविशेषदर्शनस्य व्यधिकरणधर्मावच्छिन्नाभावप्रतीत्यहेतुत्वादिति बोध्यम्। ननु तादृशविशेषदर्शनस्थले [9]तादृशाभावज्ञानमेव नेत्यत आह—अन्यथेति। यत्र [10]न तद्विशेषदर्शनं तत्र [11]तदभावाप्रतीतौ तस्य सर्वाधिकरणवृत्तित्वरूपकेवलान्वयित्वग्रहो न स्यादित्यर्थः। यद्वा [12]अथेत्यादिग्रन्थस्यायमर्थः—वाच्यत्वं न क्वचिदपि समवेतमिति ज्ञानवत एव समवेतत्वावच्छिन्न[13]वाच्यत्वाभावज्ञानं सम्भवति।

1. क. 'असत्त्वेन' नास्ति।
2. क. तेनाभ्युपगमात्
3. ख. तादृशाभावस्य प्रतिपत्त्या
4. ग. साध्यत्वेति
5. क. वैशिष्ट्याभावेन
6. ग. 'इति ......... ननु तादृशविशेषदर्शन' नास्ति।
7. क. विपरीतदर्शनत्वात्
8. क. तथाश्रुतं
   ग. यथाश्रुततादृश-
9. ख. ग. तादृशभाव एव
10. ख. ग. 'न' नास्ति
11. क. तदभावप्रतीतौ तत्र
12. क. ग. यद्वेत्यादि-
13. ख. 'वाच्यत्वाभाव' नास्ति

## प्रकाशः

सम्भवात् । तथा च तादृशभ्रमस्यापि तत्राभावात् कथं तदभावधीरिति चेत्— न । प्रतियोग्यधिकरणसंसर्गज्ञानवत् व्यधिकरणधर्मावच्छिन्नप्रतियोगिज्ञानस्याहार्यस्यैव [1]तत्रोपयोगात् । आहार्यज्ञानस्य विशेषदर्शनाप्रतिबध्यत्वात् । [2]अत एवाभावज्ञानमपि तदंशे आहार्यमेव । अन्यथा व्यधिकरणधर्मस्य प्रतियोगिनि बाधनिश्चये तद्विशिष्ट-वैशिष्ट्यज्ञानानुपपत्तेः ।

अथ प्रतियोग्यधिकरणसंसर्गज्ञानस्य निषेधधीप्रतिक्षेप्यविषयासञ्जकत्वमात्रेणोपयोगात् आहार्यस्यापि तस्याभावप्रतीतावुपयोगित्वमुचितम् । प्रतियोगितावच्छे-

---

## तर्कचूडामणिः

विशेष्यवत्तयावगते विशिष्टाभाव[3]ज्ञानस्य विशेष्यनिष्ठविशेषणाभावज्ञानाधीनत्वादित्यर्थः । प्रतियोगीति । प्रतियोग्यधिकरणसंसर्ग[4]ज्ञानस्यानाहार्यरूपत्वे घटाभाव-[5]ज्ञानानुपपत्त्या आहार्य[6]रूपस्यैव तत्र [7]हेतुत्वादिति भावः । आहार्येति । [8]शिलादौ देवतारोपे तथा दर्शनादिति भावः । नन्वेवमभावज्ञाने प्रतियोगिनि वाच्यत्वे [9]समवेतत्ववैशिष्ट्यं न भासते । विपरीतनिश्चयस्यैव[10] तदंशे प्रतिबन्धकत्वात् । न चेष्टापत्तिः । अभावप्रत्यक्षस्य प्रतियोगितावच्छेदकवैशिष्ट्यावगाहित्वनियमादित्यत आह—अत एवेति । विपरीतनिश्चयस्यानाहार्यज्ञानप्रतिबन्धकत्वादेवेत्यर्थः ।

---

1. ख. तत्रोपयोगित्वात्
2. ख. 'अत' एव 'ज्ञानानुपपत्तेः' इति ग्रन्थस्त्रुटितः ।
3. क. प्रत्यक्षस्य
4. क. ज्ञानस्यानाहार्यारोपत्वे  
   ग. ज्ञानस्यानाहार्यस्वरूपत्वे
5. ग. ज्ञानापत्त्या
6. क. रूपस्येव
7. क. हेतुत्वमिति
8. ग. धर्मादौ
9. क. समवेतत्वस्य वैशिष्ट्यम्
10. ख. ग. 'एव' नास्ति ।

## प्रकाशः

दक[1]धर्मवैशिष्ट्यज्ञानस्य तु अभावरूपससम्बन्धिकपदार्थज्ञाने सम्बन्धितावच्छेदकावच्छिन्नसम्बन्धिज्ञानत्वेनोपयोगित्वादनाहार्यस्यैव तस्यान्वयव्यतिरेकाभ्यां तत्र प्रयोजकत्वमभ्युपेयमिति चेत् — न। अनाहार्यताद्दशज्ञानत्वेन हेतुत्वे गौरवात्।

नन्वेवमाहार्यघट[2]पटादिज्ञानेऽपि तत्संयोगप्रत्यक्षापत्तिरिति चेत् — न। संयोगादिप्रत्यक्षे सम्बन्धितावच्छेदकप्रकारकानाहार्यसम्बन्धिप्रत्यक्षरूपविशेषसामग्र्या अवश्यं कल्पनीयत्वात् तदभावादेव तदभावोपपत्तेः। अन्यथा अनाहार्य-

## तर्कचूडामणिः

[3]उपाध्यायमतमाशङ्कते — अथेति। निषेधज्ञानेन[4] प्रतिक्षेप्यः तिरस्करणीयः विपर्ययः (विषयः) तदा संशयजनकत्वेन (तदासञ्जकत्वेन) तत्प्रसक्तिनेत्यर्थः। प्रसक्तस्यैव प्रतिषेधादिति भावः। ज्ञाने—प्रत्यक्ष इत्यर्थः। [5]अन्वयेति। संयोगविभागादिस्थले लाघवेन ससम्बन्धिक [6]पदार्थप्रत्यक्षत्वावच्छेदेनैव ताद्दशानाहार्यज्ञानस्य हेतुत्वकल्पनादित्यर्थः। तत्र प्रगल्भदोषमाह—अनाहार्येति। सम्बन्धितावच्छेदकावच्छिन्नसम्बन्धिज्ञानत्वेनैव हेतुत्वे लाघवमिति भावः।

नन्वेवमिति। न च विषयसत्त्व इष्टापत्तिः, तदसत्त्वे [7]तद्विलम्बादेव तद्विलम्बः। न च [8]संयोगभ्रमापत्तिः। दोषसत्त्वे इष्टत्वात्। तदसत्त्वे तद्वि-

1. ख. 'धर्म' नास्ति
2. ख. पटादिज्ञाने सति
3. ख. 'उपाध्याय ......... तत्प्रसक्तिनेत्यर्थः' नास्ति।
4. ग. एतदनन्तरम् 'अभावज्ञानेन' इत्यधिकपाठः।
5. क. 'अन्वयेति' नास्ति। घ. अन्यथेति।
6. ग. पदार्थत्वावच्छेदेनैव
7. ख. तद्विलम्बनादेव
8. ख. संयोगत्वापत्तिः

## प्रकाशः

घट[1]पटादिज्ञाने सति तत्संयोगप्रत्यक्षापत्तिः । [2]न चानाहार्यत्वं सामान्यसामग्र्यामेव विशेषणमस्त्विति वाच्यम् । विशेषसमग्र्यां तद्विशेषणस्यावश्यकत्वात् । अन्यथा अनाहार्यघटपटस्मरणे आहार्यघटपटप्रत्यक्षे च सति संयोगप्रत्यक्षापत्तिः ।

---

## तर्कचूडामणिः

लम्बादेव तद्विलम्ब इति वाच्यम् । यत्र घटपटयोरेव दोषवशात् घटपटभेदभ्रमो ातः तत्र प्रतियोगितावच्छेदकघटत्वपटत्ववैशिष्ट्यज्ञानस्य [3]अनाहार्यस्य सत्त्वेन त्र प्रत्यक्षतापादनात् । न च तत्प्रत्यक्षं [4]जायत एवेति वाच्यम् । अनुभव- ाधादिति भावः । न चेति । तथा च तद्विलम्बान्न [5]शशीयत्वावच्छिन्न- ाभावप्रतीतिरित्यर्थः ।

वयं तु—अनाहार्यत्वं सामग्रीद्वयेऽपि न विशेषणम् । न चोक्तस्थले [6]सं गप्रत्यक्षतापत्तिः । किं घटपटौ संयुक्तावित्याकारमापाद्यम्, इमौ संयुक्ता- वित्य कारं वा । नाद्यः ; भ्रमसामग्र्याः प्रतिबन्धकत्वात् । नान्त्यः ; [7]इष्ट ात् । अन्यथा [8]घटपटवति तदुभयात्यन्ताभावग्रहपूर्वकालीनतदुभय-

---

. क. पटादिविस्मरणे सति

. ख. 'न चानाहार्यत्वं ........ संयोगप्रत्यक्षापत्तिः' इति ग्रन्थः लुप्तः ।

3. क. आहार्यस्य

4. क. ज्ञायते

5. ग. 'शशीयत्वावच्छिन्न' नास्ति ।

6. क. संशयोत्तरप्रत्यक्षतापत्तिः

7. ख. ग. इष्टापत्तेः

8. ख. 'घटपटवति' नास्ति
ग. घटपटाविति

## प्रकाशः

अथ गवि [1]शशीयतया शृङ्गाभावनिश्चयो नानुपलब्धिमात्रात् । अतीन्द्रियोच्छेदापत्तेः । किं तु योग्यानुपलब्धेः । योग्यता च शशीयत्वावच्छिन्न[2]शृङ्गस्य तदुपलम्भकसामग्रीरूपा वाच्या । सा च तादृशशृङ्गस्यापारमार्थिकत्वाद्दोषघटितैव [3]वाच्या । तथा च तस्यां सत्यां न तादृशशृङ्गानुपलब्धिः । तदनुपलब्धौ न सेति

## तर्कचूडामणिः

[4]ज्ञानात्तत्संयोगस्य प्रत्यक्षतापत्तेः । घटपटज्ञानस्य प्रतियोग्यधिकरणसंसर्गांशे अहार्यरूपत्वेऽपि [5]सम्बन्धितावच्छेदकघटत्वाद्यंशे अनाहार्यरूपत्वादिति ब्रूमः ।

**उपाध्यायोक्तसमाध्यन्तरमाशङ्कते — अथेति** । यद्यपि योग्यतायाः अनुपलब्धिविशेषणतया [6]शशीयत्वावच्छिन्नशृङ्गानुपलब्धेरित्येवं वाच्यम्, न तु **शृङ्गस्येति** । तथापि योग्यता प्रतियोगिविशेषणमिति मतानुरोधेनेदम् । **तदुपलम्भकेति** । प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकेत्यर्थः । **तस्यामिति** । दोषसहितसामग्र्यामित्यर्थः । दोषसहितसामग्र्या बलवत्त्वेन तत्सत्त्वे तादृशशृङ्गोपलब्धेरेवोत्पादादिति भावः । **तदनुपलब्धाविति** । तादृशशशशृङ्गोपलब्ध्यभावे उपलब्ध्युन्नेयदोषाभावेन यावत्प्रतियोग्युपलम्भकरूपयोग्यता नास्तीत्यर्थः ।

---

1. ख. शशीयत्वावच्छिन्नशृङ्गाभाव-
2. क. शृङ्गस्यानुपलम्भक-
3. क. स्वीक्रियताम् । तथा च न तस्यां सत्याम् ।
4. क. ज्ञानं यत्र तत्र तत्संयोगप्रत्यक्षतापत्तेः
5. क. सम्बन्धतावच्छेदकघटत्वसंशये
6. क. शशीयत्वावच्छिन्नशृङ्गानुपलब्धिवत्तादृशशृङ्गोपलब्ध्यभावे उपलब्ध्युन्नेयदोषाभावेन यावत्प्रतियोग्युपलम्भकरूपयोग्यता नास्तीत्यर्थः

## प्रकाशः

कथं तादृशशृङ्गाभावो गवि प्रतीयेत। तस्मात् गवि शशशृङ्गं नास्तीत्याकारापि यदि धीः तदा गोशृङ्गाधिकरणशशीयत्वप्रतियोगिकाभावविषयतया कथंचिदुपपादनीयेति चेत् —

न। प्रतियोग्युपलम्भकसामग्र्याः दोषभिन्नायाः अवश्यं वाच्यत्वात्। अन्यथा प्रतियोगिग्राहकदोषाभावे घटाद्यभावग्रहोऽपि न स्यात्। तत्सत्त्वे तदनुपलब्धेरेवाभावात्। न च प्रकृते दोषभिन्ना तदुपलम्भकसामग्री नास्त्येवेति वाच्यम्। चक्षुरादेरेव तथात्वात्। न हि दोषमात्रादेव शशीयत्वावच्छिन्न[1]शृङ्गोपलब्धिः।

## तर्कचूडामणिः

[2]ननु प्रतियोग्युपलम्भकत्वं प्रत्यक्षत्वव्याप्यशशशृङ्गादिप्रतियोग्युपलब्धित्वावच्छिन्नोपलब्धिजनकत्वं विवक्षितम्। घटाद्यभावस्थले घटाद्युपलम्भकदोषस्य नोक्तरूपत्वम्, घटादिप्रत्यक्षप्रमायां तस्याहेतुत्वात्। शृङ्गस्थले तादृश[3]प्रतियोग्युपलम्भमात्रस्य भ्रमत्वेन [4]दोषोऽपि तदुपलम्भककोटिनिविष्ट एव। ननु दोषस्यापि शृङ्गत्वेन शृङ्गोपलब्धावहेतुत्वेन[5] नोक्तप्रतियोग्युपलम्भकत्वम्। न च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्युपलम्भकसमवधानमपि[6] विवक्षितमिति वाच्यम्। लाघवेन प्रतियोग्युपलम्भकसमवधानस्यैव तत्र तन्त्रत्वादिति चेत् — न। द्रव्यत्वप्रमेयत्वज्ञानस्यापि[7] [8]द्रव्यत्वाद्यवच्छिन्नघटाद्युपलम्भकतया तद्विरहदशायां

1. शृङ्गोपस्थितिः
2. क. ग. न च प्रतियोग्युपलम्भकत्वं प्रत्यक्षत्वव्याप्यजात्या प्रति-
3. ख. क. प्रतियोग्युपलब्धि-
4. क. दोषेऽपि
5. क. शृङ्गोपलब्ध्यहेतुत्वेन
6. ख. ग. 'अपि' नास्ति
7. ग. प्रमेयत्वादिज्ञानस्यापि
8. क. द्रव्यत्वावच्छिन्न-

## प्रकाशः

अपि च नैषा योग्यानुपलब्धिरभावग्राहिका संयोगा(व्य)भावस्याप्रत्यक्षतापत्तेः। किं तु यत्र हि यत्सत्त्वमनुपलब्धिविरोधीत्यादिका। सा च [1]प्रकृतेऽप्यस्त्येव। गवि शशीयत्वावच्छिन्नशृङ्गसत्त्वस्यानुपलब्धिविरोधित्वात्।

---

## तर्कचूडामणिः

[2]घटत्वेन तदज्ञानदशायां अभावप्रत्यक्षत्वापत्त्या प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोग्युपलम्भकस्यैव वाच्यत्वात्। तथा च तादृशोपलब्धिमात्र एव दोषस्य हेतुतया तदभावे शशीयत्वावच्छिन्नशृङ्गाभावो न [3]प्रतीयेतैवेत्यस्वरसादाह— अपि चेति। संयोगाभावस्येति। [4]संयोग्यभावस्थलीयसंयोगाभावस्येत्यर्थः। [5]तत्प्रतियोगितव्याप्येतरसंयोगिनोरभावादिति भावः।

ननु व्याप्यपदमसाधारणोपसम्भकपरम्। अन्यथा [6]कालिकव्याप्त्या घटेन्द्रियसंनिकर्षवारणे घटोपलम्भप्रागभावस्य [7]घटाव्याप्यस्य घटाभावोपलम्भकत्वाभावादसम्भवः स्यात्। न च तत्रापि भावप्रतियोग्युपलम्भप्रागभावो हेतुरेव। प्रागभावस्य तत्त्वेन प्रतियोगिमात्रहेतुत्वेऽपि आकारान्तरेणान्यत्रापि[8] हेतुत्वाविरोधात्। अत एव [9]स्वप्रत्यक्षेऽपि तस्य हेतुत्वमिति वाच्यम्। एवमपि मुक्तिपूर्वकालीन-[10]घटाभावप्रत्यक्षे घटोपलम्भप्रागभावस्य व्यभिचारादिति चेत्—न। एवं हि तस्याप्यसाधारणोपलम्भकतया व्याप्यपदेनैव तन्निरासकरणादिति भावः।

---

1. क. प्रकृतेऽस्त्येव
2. क. घटत्वज्ञानदशायाम् अप्रत्यक्षानापत्त्या
3. क प्रतीयेतेत्यस्वर-
4. ख. संयोगाभाव-
5. ग. तत्र प्रति-
6. क. कालिकव्याप्तिघटे-
7. ख. ग. घटव्याप्यस्य
8. क. 'अपि' नास्ति
9. ख. 'स्व' नास्ति।
10. क. घटाभावे प्रत्यक्षे

## प्रकाशः

यत्तु अधिकरणे प्रतियोगिसंसर्गारोपपूर्विकैव [1]संसर्गाभावप्रतीतिरुत्पद्यते। न च गवि शृङ्गसंसर्गारोपः सम्भवति। तत्र तस्य सत्त्वादेव। तथा च तत्र कथं [2]शृङ्गसंसर्गाभावः प्रतीयेतेति। तदपि न। नहि प्रतियोगिसंसर्गारोपत्वेनैव[3] तत्र हेतुत्वम्, [4]गौरवात्। किं तु भ्रमप्रमा[5]साधारणेन प्रतियोगिसंसर्गज्ञानत्वेन, लाघवात्। अन्यथा घटवति तदभावभ्रमानुपपत्तेः। तद्वति तत्संसर्गज्ञानस्यानारोपरूपत्वात्। न च गवि शृङ्गस्य प्रतियोगिन उपलब्धेः अनुपलब्धिरेव नास्तीति वाच्यम्। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनुपलब्धेरभावग्राहकत्वात् तस्याश्चात्रापि सत्त्वात्।

---

## तर्कचूडामणिः

यच्चापत्युक्तं मतान्तरमाह—यस्त्विति। न च द्रव्यत्वेन घटसंसर्गारोपेऽपि [6]घटाभावप्रत्यक्षाभावेन प्रतियोगितावच्छेदकावच्छिन्न[7]प्रतियोगिसंसर्गारोपो हेतुत्वेन वाच्यः, स [8]चात्राप्यस्त्येवेति वाच्यम्। तादृशशृङ्गस्यात्यन्तासत्त्वेन तत्संसर्गारोपासम्भवादिति भावः। तत्र अप्रगल्भदूषणमाह — तदपीति। न च [9]प्रतियोगिसंसर्गारोपत्वेनाहेतुत्वेऽपि [10]तदाहार्यज्ञानत्वेनैव हेतुत्वं वाच्यम्; अन्यथा अधिकरणे प्रतियोगिसंसर्गस्यानाहार्यज्ञाने सति [11]तदभावप्रत्यक्षतापत्तिः; गवि चानाहार्यशृङ्गज्ञानमिति वाच्यम्। लाघवेन [12]प्रतियोगिसंसर्गज्ञानत्वेनैव हेतुत्वात्।

---

1. ख. संसर्गनिषेध
2. ख. शृङ्गाभावः
3. ख. 'एव' नास्ति
4. ख. 'गौरवात्' नास्ति
5. क साधारणप्रतियोगि-
6. ख. घटाभावस्य
7. ख. 'प्रतियोगि' नास्ति
8. क. चास्त्येवेति
9. ग. प्रतियोग्यधिकरणसंसर्गा-
10. क. तदनाहार्यज्ञानहेतुत्वं
11. ख. तदभावप्रत्यक्षज्ञानापत्तेः
    ग. तदभावापत्तेः
12. क प्रतियोगिज्ञानहेतुत्वात्

## प्रकाशः

नन्वत्र यदि शशीयत्वं प्रतियोगितावच्छेदकं तदा शशीयमिह नास्तीति प्रतीत्यापत्तिः । अथ शृङ्गत्वम्, तदपि न । तदवच्छिन्नस्य गवि सत्त्वेन तदवच्छिन्नाभावासम्भवात् । शशशृङ्गत्वं चात्राप्रामाणिकमिति [1]तवापि संमतमिति तादृशप्रतीतिरसिद्धैवेति चेत्—न । शशीयत्वस्यैव प्रतियोगितावच्छेदकत्वात् । शृङ्गत्वभानसामग्र्या प्रतियोगिनि शृङ्गत्वमपि भातमिति न शशीयमिह [2]नास्त्येवेति प्रतीतिः । न हि प्रतियोगितावच्छेदकमेव प्रतियोगिनि भासते । प्रमेयो घटो नास्तीत्यत्रातादृशस्यापि प्रमेयत्वस्य घटे भानात् ।

---

## तर्कचूडामणिः

[3]अनाहार्यज्ञानदशायां तस्य प्रतिबन्धकतया कार्यानुत्पत्त्युपपत्तेः । [4]न चैवं तदभावकारणत्वे गौरवात् क्लृप्तप्रतियोगिसंसर्गज्ञाने आहार्यत्वमेवावच्छेदकं कल्प्यताम्, लाघवादिति वाच्यम् । सामान्यत एव ग्राह्यज्ञानमात्रे ग्राह्याभावगोचरानाहार्यज्ञानस्य प्रतिबन्धकत्वेन क्लृप्ततया तदभावहेतुत्वस्याप्यावश्यकत्वात् । **प्रतियोगितेति** । न च लाघवात् प्रतियोग्यनुपलब्धित्वेन हेतुत्वमिति वाच्यम् । [5]घटवति द्रव्यत्वेनैव घटज्ञानदशायां घटाभावभ्रमानुपपत्तेरिति भावः ।

**प्रगल्भमतमाह—अत्रेति । सविशेषणे हीति ।** यत्र निषेधो [6]विशिष्टान्वयितया प्रतीयते तत्र विशेष्यस्य तदन्वयायोग्यत्वे[7] विशेषणस्यैव तदन्वयित्वम् । तथा च यत्र विशिष्टेन सह आधाराधेयभावरूपान्वयोऽभिमतः तत्र [8]विशेष्ये

---

1. ख 'तत्रापि संमतमिति' इति नास्ति
2. क. नास्तीत्येव प्रतीतिः
3. ख अनाहार्यतदज्ञान-
4. क न च तदभावहेतुत्वे
5. क. घटवति तज्ज्ञान-
6. क. विशिष्टान्वयतया
7. क. त्वेऽपि
8. क. विशेष्यबाधे
   ख. विशेष्ये तत्त्वादेर्बाधे

## प्रकाशः

अत्र ब्रूमः । यदि गवि शशीयं शृङ्गं नास्तीति प्रतीत्या व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावोऽभ्युपेयः, तदा पटत्वावच्छिन्ने घटे घटत्वं नास्तीति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाधिकरणताकोऽप्यतिरिक्ताभावोऽभ्युपेयः स्यात् । न चेष्टापत्तिः । अपसिद्धान्तात् । [1]न चाधिकरणभेदवत् तदवच्छेदकभेदोऽपि नाभाव(भेद)प्रयोजक इति वाच्यम् । क्लृप्ताभावेनैव तत्र प्रतीत्युपपत्तेः । अन्यत्र तथात्वेऽपि प्रकृते प्रतीतेः क्लृप्तेनानुपपत्त्या तत्कल्पनात् । किं च यत एव तत्र नाभावभेदः अत एव तत्र प्रतिबन्दी । अथ घटे घटत्वस्य सत्त्वात् सविशेषण हीति न्यायेन तत्प्रतीतेर्घटे पटत्वाभावमात्रविषयत्वमिति चेत्—हन्तैवं गवि शृङ्गस्य सत्त्वात् तत्प्रतीतेः सविशेषणे हीति न्यायेन शृङ्गे शशीयत्वाभावमात्रविषयत्वमिति तुल्यम् ।

---

## तर्कचूडामणिः

बाधे विशेषण एव तदन्वयः । यत्र विशिष्टेन सह प्रतियोग्यनुयोगिभावेनान्वयः,[2] तत्र [3]विशेष्ये तद्बाधे विशेषण एव तदन्वयः । यथा प्रागभावविशिष्टे घटे रूपं नास्तीत्यत्र विशेष्ये आधारत्वान्वयायोगात् प्रागभाव एव रूपाभावान्वयः । [4]यथा स्वर्गी ध्वस्त इत्यत्र आत्मनि ध्वंसप्रतियोगित्वान्वयायोगात् स्वर्ग एव [5]ध्वंसान्वय इति सविशेषणे हीति न्यायार्थः । तत्प्रतीतेरिति । [6]पटत्वावच्छिन्ने घटे घटत्वं नास्तीति पटत्वावच्छिन्नघटाधिकरण[7]काभावप्रतीतेर्विशेषणीभूतपटत्वाधिकरणकाभावविषयत्वमित्यर्थः ।

---

1. ख. 'न चाधिकरणभेदवत् ...... ......प्रतिबन्दी' इति ग्रन्थस्त्रुटितः ।
2. क. 'अन्वयः' नास्ति ।
3. क. विशिष्टे
4. ग. यथा वा स्वर्गी
5. क. ध्वस्त इति
6. क. पटत्वावच्छिन्नघटत्वं
   ग. पटत्वावच्छिन्नघटे घटत्वं
7. क. काभाव एव प्रतीतेः

## प्रकाशः

अत एव पाकरक्ते घटे इदानीमयं न श्याम इति धीः [1]श्यामत्वस्यैव विशेषणस्याभावमवगाहते। यदि च गवि [2]शृङ्गत्वावच्छिन्नशृङ्गसत्त्वेऽपि प्रतियोगितावच्छेदकावच्छिन्न[3]सत्त्वस्याभावविरोधित्वात् शशीयत्वावच्छिन्नशृङ्गाभावो न विरुद्धः तदा घटे घटत्वावच्छिन्ने घटत्वसत्त्वेऽपि स्वाधिकरणतावच्छेदकावच्छिन्ने [4]प्रतियोगितावच्छेदकावच्छिन्नसत्त्वस्याभावविरोधित्वात् पटत्वावच्छिन्ने घटे [5]घटत्वाभावोऽपि न विरुद्धः। [6]यदि चातिप्रसक्तं तन्नाधिकरणतावच्छेदकम्, तदा प्रतियोगितावच्छेदकेऽपि तुल्यम्। तदिदं वक्ष्यति — 'न ह्यतिप्रसक्तमवच्छेदकम्' इति। अन्यथा द्रव्यत्ववस्तुत्वादेरपि घटाभावप्रतियोगितावच्छेदकतापत्तिः। न चैवं वायौ रूपयावद्विशेषाभावप्रत्यक्षाभ्युपगमो विरुध्येत, तावत्प्रतियोगितावच्छेदकाज्ञानादिति वाच्यम्। तावता ह्यतिप्रसक्तधर्मप्रकारकप्रतियोगि-

---

## तर्कचूडामणिः

[7]पटत्वे अभावः पटत्वाभावः गृहे अभावः गृहाभावः इतिवत्। न तु षष्ठीसमासः तत्रोक्तन्यायानवकाशादिति [8]भावः। वस्तुतस्तु विशेष्यबाधे[9] विशेषणमित्यस्य यथाकथंचित् विशेषणविषयत्वमेवाभिमतम् न तु [10]तेन सम्बन्धेन। अत एव स्नेहावच्छिन्न[11]गन्धे गुणत्वं नास्तीत्यादौ अधिकरणे [12]स्नेहावच्छिन्नत्वाभाव एव विषयः न तु [13]स्नेहे गुणत्वाभाव इति भावः।

---

1. ख. श्यामस्यैव
2. ख. 'शृङ्गत्वावच्छिन्न' नास्ति।
3. ख. 'सत्त्व' नास्ति।
4. ख. 'प्रतियोगितावच्छेदकावच्छिन्न' नास्ति।
5. ख. पटत्वाभावोऽपि
6. ख. 'यदि चातिप्रसक्तं ......... तदित्यन्ते इति ग्रन्थस्त्रुटितः।
7. क. पटत्वाभावपटत्वाग्रहे अभाव-गृहाभाव इति चेन्न षष्ठ-समासः
8. ख. बोध्यम्
9. ख. बोधे
10. तेन तेन
11. ग. 'गन्धे' नास्ति।
12. ग. स्नेहत्वाव-
13. ख. ग. स्नेहगुणत्वाभावः

## प्रकाशः

ज्ञानस्याप्यभावधीहेतुत्वमस्तु, न त्वतिप्रसक्तस्यावच्छेदकत्वमिति। पृथिवीरूपत्वाद्यवच्छिन्नयावद्विशेषाभावप्रत्यक्षताभिप्रायकं तदित्यन्ये।

वस्तुतस्तु शृङ्गस्य प्रतियोगिनो गवि सत्त्वात् कथं तदभावः, प्रतियोगितदभावयोरेकत्र विरोधात्। न च प्रतियोगितावच्छेदकावच्छिन्नस्य तद्विरोधित्वम्, तादृशश्च तत्र नास्तीति वाच्यम्। लाघवेन [1]प्रतियोगित्वेनैव विरोधित्वात्, न तु तदवच्छेदकावच्छिन्नत्वेन, गौरवात्। अत एव [2]घटवति घटपटौ न स्त इति प्रतीत्या व्यासज्यवृत्तिप्रतियोगिताको विद्यमानघटप्रतियोगिकोऽभावो न सिध्यतीति वक्ष्यते।

---

## तर्कचूडामणिः

ननु विशेष्यस्य प्रतियोगिनो विशेष्यतावच्छेदक[3]रूपेणाभावान्वयायोग्यत्वेऽपि [4]विशेषणावच्छिन्नरूपेण योग्यत्वात् विशिष्ट एवाभावान्वयः न विशेषणमात्रे। अत एव धवखदिरावित्यत्र [5]प्रकृत्यर्थयोर्धवत्वादिरूपेण द्वित्वान्वयायोग्यत्वेऽपि साहित्येन रूपेण तयोर्द्वित्वान्वययोग्यता इति ग्रन्थकार एवाग्रे वक्ष्यति। तथा च शशीयत्वावच्छिन्नशृङ्गाभावस्तत्प्रतीतिविषयः[6] न तु शशीयत्वाभावः। [7]न चोक्ताधिकरणताकाभावप्रतीतेर्विशिष्टाधिकरणकाभावविषयत्वम्। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनोऽधिकरणे सत्त्वेन तत्र [8]तदभावविरोधात्। किं चान्यत्र प्रतियोगितावच्छेदकभेदादेव अभावभेदः, न त्वधिकरणतावच्छेदकभेदादपि [9]गोत्वाद्यवच्छेदकभेदेन घटाभावभेदापत्तेः।

---

1. क. प्रतियोगिसत्त्वेनैव
2. ख. 'घटवति' नास्ति
3. क. रूपेणाभावत्वान्वया-
4. ख. विशेषणत्वावच्छिन्नत्वरूपेण तद्योग्यत्वात्
   ग. विशेषणावच्छिन्नत्वरूपेण
5. क. प्रवृत्त्ययोग्यत्वादिरूपेण द्वित्वान्वययोग्यत्वेऽपि
6. क. तत्र विषयः
7. ग. न च पृथक् द्वित्वाधिकरणताकाभावप्रतीतेः
8. क. तदभावाविरोधित्वात्
9. क. गोष्ठत्वाद्यवच्छेदक-

## प्रकाशः

[1]नन्वेवमपि तादृशान्योन्याभावोऽस्तु, प्रतियोगितावच्छेदकस्य तद्विरोधित्वात्, तस्य च व्यधिकरणस्य तत्र सत्त्वनियमादिति चेत्—न। प्रतियोगितादात्म्यस्य तद्विरोधित्वात्। अत एव तादात्म्यप्रतियोगिकोऽन्योन्याभाव इति सिद्धान्तः। अत एव च न संयोगवदन्योन्याभावो व्याप्यवृत्तिः। अन्यथा संयोगस्य तत्र तथात्वे तस्याव्याप्यवृत्तितापत्तेरिति।

---

## तर्कचूडामणिः

तथा च व्यधिकरणधर्मावच्छिन्नाभावसिद्धावपि न तदधिकरणताकाभावसिद्धि-रित्यस्वरसादाह—वस्तुतस्त्विति। अत एवेति। प्रतियोगितदभावयोरेकत्र [2]विरोधादित्यर्थः। व्यासज्येति। व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताक इत्यर्थः। यत्र नोभयं तत्र विरोधाभावेन तदभावः स्यादेवेत्याशङ्क्य इष्टापत्त्यभिप्रायेणाह—विद्यमानेति। [3]नन्विति। तथा[4]चान्योन्याभावगर्भाव्यभिचारलक्षणस्य न केवलान्वयिनि प्रसिद्धिरिति भावः।

नन्वेवं विशेष्यमात्रवति विशिष्टाभावासिद्धौ मणिसमवधाने उत्तेजककाले दाहो न स्यात्। मणिरूप[5]प्रतियोगिसत्त्वस्याभावविरोधित्वात्। न च विशिष्टाभावे विशेष्यविशेषणसम्बन्धस्यैव प्रतियोगितया [6]मणिर्न विरोधीति वाच्यम्। एवं [7]हि द्वित्वावच्छिन्नप्रतियोगिकाभावेऽपि[8] द्वित्वघटसम्बन्धस्यैव प्रतियोगितया [9]एकसत्त्वेऽपि तदभावाभ्युपगमापत्तेः। विशेषणविशेष्यसम्बन्धो न प्रतियोगीति

---

1. ख. 'नन्वेवमपि .... ...तस्याव्याप्यवृत्तितापत्तेरिति' इति लुप्तः।
2. क. 'विरोधादित्यर्थः....... यत्र नोभयं तत्र' इति ग्रन्थस्त्रुटितः।
3. क. नेति।
4. क अन्योन्याभावस्याव्यभिचारलक्षणेन केवलान्वयिन्यप्रसिद्धि-
5. क प्रतियोगिसत्त्वस्यात्र दाहोपाधित्वात्
   ख. प्रतियोगिसत्त्वस्य तद्विरोधित्वात्।
6. क. मणिविरोधीति
7. क 'हि' नास्ति।
8. क. 'अपि' नास्ति
9. क. 'एक' नास्ति।

गवि शशशृङ्गं नास्तीति प्रतीतेरसिद्धेः। शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थः।

## तर्कचूडामणिः

वक्ष्यमाणत्वाच्च। किं च गवि शशशृङ्गं नास्तीति [1]प्रतीतिरेव तादृशाभावे मानम्। [2]न च (तस्याः) सविशेषणे हीति न्यायेन शशीयत्वप्रतियोगिकाभावविषयकत्वमिति वाच्यम्। शशीयत्वानुपस्थितावपि[3] तत्प्रत्ययोत्पादेन [4]तस्य शशीयत्वाभावाविषयत्वात्। अत एव [5]घटभेदज्ञानं न घटत्वात्यन्ताभावविषयमिति वक्ष्यते। यत्र विशेष्यसत्त्वेऽपि विशिष्टध्वंसोऽनुभूयते तत्रैव सविशेषणे हीति न्यायोऽपि यथा स्वर्गी ध्वस्त इत्यादौ। न च विशेष्यसत्त्वेऽपि विशिष्टात्यन्ताभाववत् तद्ध्वंसोऽपि स्यादेवेति वाच्यम्। तस्य ग्रन्थकृतैवाग्रे दूष्यत्वात्। [6]तथा च रुचिदत्तोक्तं कथं युक्तमिति चिन्त्यम्।

जयदेवमिश्रास्तु अधिकरणाभावयोरिव प्रतियोगितदभावयोरपि स्वरूपसम्बन्ध [7]एव, अन्यस्याभावात्। अत एव मणिकृता प्रतियोगित्वं [8]स्वरूपसम्बन्ध एवेत्युक्तम्। स च शशीयत्वावच्छिन्न[9]शृङ्गस्वरूपं शृङ्गरूपप्रतियोगिनि नास्ति, तस्यालीकत्वात् इत्याहुः। तदपि चिन्त्यम्। [10]शृङ्गमात्रस्य प्रतियोगित्वेन तस्यालीकत्वाभावेन स्वरूपसम्बन्धसम्भवात्। वस्तुतस्तु प्रतियोगितासमानाधिकरण एव धर्मः प्रतियोगितावच्छेदकः। व्यधिकरणयोरवच्छेद्यावच्छेदकभावानुपपत्तेः।

---

1. क. प्रतीतेरेव
2. क. न चाद्यविशेषणादिति न्यायेन
3. क. 'अपि' नास्ति
4. ख. 'तस्य' नास्ति।
5. क. घटत्वे तदज्ञानम् न घटात्यन्ताभाववत् ध्वंसोऽपि स्यादिति वाच्यम्।
6. क. तथा च तदत्रोक्तं
7. क. एवम्
8. ग. 'स्वरूपसम्बन्ध ............ तस्यालीकत्वाभावेन' नास्ति
9. ख. शृङ्गं शृङ्गरूप-
10. ख. शृङ्गमात्रस्यैव प्रतियोगित्वेनालीकत्वाभावेन सम्भवात्

## प्रकाशः

ननु [1]तद्दशाभावाभावे कथमेषा प्रतीतिरित्यत आह—गवीति । गवाधिकरणत्वेन शशीयतया शृङ्गप्रतियोगिकाभावप्रमा नास्ति, [2]उक्तन्यायेन प्रमाणाभावादिति भावः । न च शुक्तौ रजतभ्रमानन्तरम् इदं रजतमिह नास्तीति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाभावसिद्धिरिति वाच्यम् । तत्रेदन्त्वस्यैव तदवच्छेदकत्वात् न हि भ्रमेण तदवच्छेदकत्वं गृहीतमिति वस्त्वपि तथा, भ्रमोच्छेदापत्तेः [3]अनवच्छेदकस्यापि रजतत्वस्य प्रमेयत्ववत् भानाविरोधाच्चेति दिक् ।

## तर्कचूडामणिः

तथा च [4]शशीयत्वस्य शृङ्गनिष्ठप्रतियोगिताव्यधिकरणत्वेन न तदवच्छेदकत्वम् । तदिदमुक्तम् न्यायविदामेकपुण्डरीकेण [5]गङ्गेशेन "प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक" इति । ननु यस्य शृङ्गे शशीयत्वारोपः तस्य शशीयं शृङ्गमिह नास्तीति शशीयत्वावच्छिन्न[6]शृङ्गप्रतियोगिताकाभावत्वेनैवानुभवात् असिद्धेरित्युक्तमयुक्तम् । तत्राह—गवाधिकरणत्वेनेति । यस्यापि तज्ज्ञानं जायते तस्यापि तज्ज्ञानं न प्रमा । प्रतियोगिमति तदभावविषयत्वात्, अनवच्छेदके अवच्छेदक[7]विषयत्वाच्चेति भावः । बाधकाभावादस्तु प्रमात्वम्, तत्राह—उक्तेति । उक्तबाधकसत्त्वाच्चेति बोध्यम् । नन्विदं रजतमिह नास्तीत्यत्रेदन्त्ववद्रजतत्वमप्यवच्छेदकतया अनुभूयत इत्यत आह—नहीति । तस्य रजतत्वस्यावच्छेदकत्वमित्यर्थः । तथा चोक्तज्ञानस्यावच्छेदकत्वांशे भ्रमत्वमेवेति भावः ।

1. ख तादृशाभावाभावे
2. ख. इत्युक्त
3. ख 'अनवच्छेदकस्यापि......... भानाविरोधाच्च' इति ग्रन्थो नास्ति ।
4. शशीयत्वावच्छिन्नशृङ्गसत्त्वानिष्ठ-
5. ख. प्रामे शशेन
6. क. शृङ्गप्रतियोगित्वेनैवानुभवात्
   ग. प्रतियोगिकत्वेनैवानुभवात्
7. क विषयत्वमित्यर्थः । वस्तुतस्तु रजतत्वं तथा अवच्छेदकमित्यर्थः । तथा चोक्त-

## तर्कचूडामणिः

ननु [1]यत्र शुक्तावन्यदीयेदन्तारोपः तदनन्तरमुक्ताभावज्ञानं तत्रेदन्त्वस्यापि व्यधिकरणतया तादृशाभावसिद्धिरप्रत्यूहा। किं च घटत्वाद्यतिरिक्तत्समनियत-प्रतियोगितादात्म्ये मानाभावेनान्योन्याभावस्य तद्विरोधित्वाभावे तदवच्छेदक-विरोधस्यैव वाच्यतया व्यधिकरणधर्मावच्छिन्नान्योन्याभावो दुर्वार एवेत्यत आह—दिगिति। [2]गोशृङ्गं शशशृङ्गं नेति प्रतीत्या व्यधिकरणधर्मावच्छिन्नान्यो-न्याभावसिद्धौ केवलान्वयिनि साध्यवदन्योन्याभावगर्भाव्यभिचारिलक्षणं सुस्थमेव। तत्रापि समवेतत्वावच्छिन्नवाच्यत्ववदन्योन्याभावस्य केवलान्वयित्वात् अन्यान्या-भावस्य प्रतियोगिविरोधित्वाभावादित्यत आह—दिगिति। अयमाशयः— न तावदन्यदीयेदन्ता अन्यत्रारोप्यत इत्यत्र प्रमाणमस्ति। इदन्ताव्यवहारस्य स्वगतेदन्ताज्ञानादेवोपपत्तेः। अन्यदीयेदन्तारोपपक्षेऽपि तदारोपात्पूर्वमेव इदन्त्वेन [3]पुरोवर्तिज्ञानस्यावश्यकत्वाच्च। [4]आरोपे धर्मितावच्छेदकप्रकारेण धर्मिज्ञानस्य हेतुत्वात्। किं च तद्देशतत्कालविशिष्टात्मकमिदन्त्वं एतद्देशैतत्कालविशिष्टे सर्वत्र एकमेव, भेदे प्रमाणाभावात्। अनुगतप्रत्ययेन [5]तदेकत्वस्यैव प्रामाणि-कत्वाच्च। [6]तथा च [7]किमन्यदीयेदन्तारोपः। नापि व्यधिकरणधर्मावच्छि-न्नान्योन्याभावसिद्धिः। पटत्वावच्छिन्नो घटो घटो नेति प्रतीत्या [8]तादृशाधि-करणताकान्योन्याभावस्यापि सिद्ध्यापत्तेः। तत्र सविशेषणे हीति न्यायेन विशेषणीभूत[9]पटत्वाधिकरणताकाभावविषयत्वे तन्न्यायेन विशेषणप्रतियोगिकाभाव-विषयत्वमिति तुल्यम्।

---

1. ख. 'यत्र' नास्ति।
2. क 'गोशृङ्गं' .........दिगिति' इति ग्रन्थस्त्रुटितः।
3. क पूर्ववर्तित्वज्ञानस्य
4. ख. आरोपिधर्मतावच्छेदकप्रकार-कारोप्यधर्मिज्ञानस्य
5. क. तावच्छृतभेदकत्वस्यैव ग. तावत्तु तदेकत्वस्यैव
6. ग, 'तथा च' नास्ति।
7. ग. कथमन्यदीय-
8. ग. तादृशाधिकरणतान्योन्या-
9. ख. ग. पटत्वाधिकरणकाभाव-

## तर्कचूडामणिः

अपि चान्योन्याभावस्य प्रतियोगितावच्छेदकेन सह विरोधेन शशीयरूपादौ [1]शशीयत्वावच्छिन्नशृङ्गान्योन्याभावो न स्यात् । यदि प्रतियोगिवृत्तित्वमेव [2]तस्याविरुद्धम् तादृशशृङ्गे तादृशान्योन्याभावो न स्यात् । प्रतियोगितावच्छेदकस्य [3]तद्विरुद्धत्वाभावे तस्यान्योन्याभावात्यन्ताभावानुपपत्तिश्च । [4]नापि प्रतियोगिवृत्तिप्रतियोगितावच्छेदकं तद्विरोधि । लाघवात् प्रतियोगितावच्छेदकमात्रस्य तद्विरोधित्वात् । अत एव [5]प्रतियोगितदवच्छेदकसम्बन्ध एवान्योन्याभावविरोधीति परास्तम् । गौरवात् । प्रतियोगितावच्छेदकस्य [6]तदत्यन्ताभावत्वानुपपत्तेश्च । अपि च व्यधिकरणधर्मस्यावच्छेदक[7]त्वमपि नेत्युक्तमिति ।

इति व्यधिकरणं समाप्तम्



1. ख. ग. शशीयत्वावच्छिन्नशृङ्ग- वृत्तित्वमेव
2. ग. ग. तस्य विरुद्धम्, तादृश- शृङ्गे
3. ख. ग. तद्विरोधित्वाभावे
4. क. नाप्रतियोगि-
5. ख, प्रतियोगिप्रतियोगितावच्छेदक-
6. ख. तदत्यन्ताभावानुपपत्तौ
7. क त्वमित्युक्तम्

पूर्वपक्षव्याप्तिः

अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिः। केवलान्वयिनि साध्यासामानाधिकरण्यं निरधिकरणे आकाशादौ प्रसिद्धमिति चेत् —

प्रकाशः

अथेति। ननु साध्यासमानाधिकरणत्वं साध्यानधिकरणाधि[1]करणत्वं साध्याधिकरणानधिकरणत्वं वा। नाद्यः, केवलान्वयिन्यप्रसिद्धेः,[2] केवलान्वयिनि इत्यग्रिमग्रन्थविरोधाच्च। नान्त्यः, [3]साधिकरणपदवैयर्थ्यापत्तेः। [4]साध्याधिकरणानधिकरणानधिकरणत्वस्य सामानाधिकरण्यमात्रपर्यवसन्नतया व्यभिचारिण्यतिव्याप्त्यापत्तेश्चेति।

अत्र वदन्ति----अन्त्यपक्षाश्रयेण पूर्वप्रतीकं साध्यसामानाधिकरण्यमात्रपर्यवसन्नम् यतो व्यभिचारिसाधारणम् अत एव तस्मिन् सति [5]साधिकरण-

तर्कचूडामणिः

ननु केवलान्वयिन्यप्रसिद्धि[6]रेतल्लक्षणदूषणत्वेन संमतैवेत्यरुचेराह — केवलेति। [7]उपाध्यायमतमाह—अत्रेति। पूर्वप्रतीकं सत्यन्तमित्यर्थः। अत एव [8]व्यभिचारिसाधारणत्वादेव। तस्मिन् [9]सति साध्यसमानाधिकरणत्वे सति। ननु व्यभिचारिण्यपि साधिकरणत्वं साध्यसामानाधिकरण्यावच्छिन्नमेवेत्यत

1. क- करणकत्वं
2. क. असिद्धेः
3. क. समानाधिकरण-
4. ख. साध्याधिकरणानधिकरणत्वा. नधिकरणत्वानधिकरणत्वस्य
5. ख, 'साधिकरणत्वमित्युक्तम्... ......विशिष्टे' इति ग्रन्थस्त्रुटितः
6. क, रेव तल्लक्षण-
7. क. उपाध्यायः स्वमत-
8. क. व्यभिचार-
9. क. 'सति' नास्ति

## प्रकाशः

त्वमित्युक्तम् । तथा च सतिसप्तम्यामहिम्ना साध्यसामानाधिकरण्यविशिष्टे साधिकरणत्ववैशिष्ट्यलाभात् साध्यसामानाधिकरण्यावच्छिन्नमधिकरणसम्बन्ध-लक्षणं साधिकरणत्वं [1]लभ्यते । तदवच्छिन्नत्वं च व्यापकीभूततत्कत्वमेव । तस्यैवाधिकरणसम्बन्धः साध्यसामानाधिकरण्यावच्छिन्नो भवति यस्याधिकरणतायाः साध्याधिकरणता व्यापिका भवति । व्यभिचारिणस्त्वधिकरणतायाः साध्याधिकरणता न व्यापिका, व्यभिचारस्थल एव तस्य साध्यसामानाधिकरण्यं विना अधिकरणसम्बन्धसत्त्वादिति भवति [2]व्यभिचारिव्यवच्छेद इति ।

एवं चात्र यद्यपि साध्यानधिकरणाधिकरणत्वं न विवक्षितम् , [3]तथाप्यक्षरार्थतासम्भवमात्रेण तदप्यग्रे दूषणाय विकल्पयिष्यतीति ध्येयम् ।

---

## तर्कचूडामणिः

आह—तदवच्छिन्नत्वं चेति । ननु हेतुनिष्ठ[4]साधिकरणतायाः व्यापकीभूत-साध्य[5]सामानाधिकरण्यकत्वं व्याप्तिरित्युक्तम् । [6]तच्च न युक्तम् । एतदपेक्षया [7]साधिकरणताव्यापकसाध्याधिकरणताकत्वस्यैव [8]लघुत्वात् । प्रमेयत्वादि[9]निष्ठ-साधिकरणतायाः अनित्यत्वसामानाधिकरण्य[10]व्यापकत्वाच्चेत्याशयेनाह—यस्येति ।

[11]नन्वेवमपि लक्षणे [12]साध्यासमानाधिकरणत्वस्याप्रवेशात् वक्ष्यमाण-विकल्पानुपपत्तिरित्यत आह—एवं चेति । विवक्षितलक्षणे तु यत्किंचित्साध-

---

1. क. लक्ष्यते
2. क. व्यभिचार-
3. क. तथाप्यक्षतार्थता-
4. क. स्वाधिकरणतायाः
5. ख. समानाधिकरणकत्वं
6. क. ग. 'तच्च न युक्तम्' नास्ति।
7. क स्वाधिकरणता-
8. क. लाघवात्
9. क. निष्ठाधिकरणतायाः
10. म. व्यापकत्वाच्चेत्यनुशयेन
11. ख. नन्वेवमत्र ग. नन्वत्र
12. क. साध्यसमाना-

## प्रकाशः

अन्ये तु सत्यन्तस्य स्वाधिकरणाधिकरणसाध्यकत्वस्वाधिकरणानधिकरणसाध्यकत्वोभयाभावे सतीति पर्यवसितोऽर्थः विवक्षितः। व्यासज्यवृत्तिप्रतियोगिका-

---

## तर्कचूडामणिः

नाधि[1]करणताव्यापकसाध्याधिकरणताकत्वं व्यभिचारिण्यपीति दूषणं द्रष्टव्यमिति भावः। नन्वेवमपि स्वव्यापकसाध्यकत्वमेव[2] विवक्ष्यताम्, लाघवात्, अपदार्थ व्याख्यानस्योभयत्रापि तुल्यत्वात्। [3]किं च सत्यन्तेन साध्यसामानाधिकरण्य-[4]मात्रप्रतिपादनमसंगतम्। न हि घटोऽस्तीति वाच्ये कश्चित् [5]अघटो नेति प्रतिपादयतीत्यस्वरसादाह——अन्ये त्विति। असमानाधिकरणेत्यत्र वर्तमानस्य नञः सत्यन्तेन [6]सम्बन्धः। [7]साध्यसमानाधिकरणत्वानधिकरणत्वाभावे सति[8] साध्यसमानाधि[9]करणत्वसाध्यानधिकरणत्वयोरभावे सतीत्यर्थः। पर्यवस्यतीति[10] (पर्यवसित इति)। साध्यपदस्योभयत्राप्यन्वयात् साध्यसमानाधिकरणत्वं स्वाधिकरणाधिकरणसाध्यकत्वमेव। (साध्यानधिकरणाधिकरणत्वमपि) साध्यानधिकरणमधिकरणं[11] यस्येति समासेन स्वाधिकरणानधिकरणसाध्यकत्वमित्यर्थः।

ननु सद्धेतौ [12]प्रथमं प्रतियोगिसत्त्वे कथमुभयाभाव इत्यत आह—[13]व्यासज्येति। वस्तुतस्तु साध्यासामानाधि[14]करण्यानधिकरणत्वे सतीत्यत्र

---

1. ख. करणव्यापक-
2. ख. साध्यवत्त्वमेव
3. ख. 'किं च' नास्ति
4. ख. 'मात्र' नास्ति।
5. क. न घट इति
6. ख. ग. अन्वयः
7. ग. 'साध्य ......... त्वाभावे सति' नास्ति।
8. क. त्वाभावेति
9. क. करणत्वानधिकरणत्वयोः
10. ख. 'इति' नास्ति।
11. ख. 'अधिकरणं' नास्ति
12. क. प्रथमप्रति-
13. ख. साध्येति
14. क. करणानधि-
    ग. करणत्वानधि-

## प्रकाशः

भावाश्रयणात् । इदं च द्विरूपशून्यत्वं स्वाधिकरणानधिकरणसाध्यकत्वमात्रवति विरुद्धेऽपि [1]साधने गतम्, अतस्तद्वारणाय साधिकरणपदम् । तदर्थश्च साध्याधिकरणाधिकरणत्वम् । तेन तद्व्युदासः ।

---

## तर्कचूडामणिः

[2]नञ्व्यत्यासेन असाध्यं साध्यविरोधि, नञो [3]विरोधित्वार्थकत्वात् । तद्विरोधित्वं च तदधिकरणानधिकरणत्वम् । तच्च केवलान्वयिन्यपि गगनादौ प्रसिद्धम् [4]एवं च असाध्यं साध्यविरोधि सामानाधिकरण्यानधिकरणत्वं[5] यस्य हेतोः स साध्यासामानाधिकरण्यानधिकरणः[6] तस्य भावस्तत्त्वम् । व्यभिचारिणि च [7]साध्यविरोधी यः साध्याभावः तस्य हेतुसामानाधिकरण्यमिति नातिव्याप्तिः । [8]अत एव केवलान्वयिनि साध्यविरोधिगगनादिसामानाधिकरण्यमप्रसिद्धमिति [9]निरस्तम् । साध्यविरोधिनिष्ठस्वसामानाधिकरण्याभावकत्वस्य विवक्षितत्वात् । यद्यप्येवं [10]साधिकरणपदवैयर्थ्यम् । अवृत्तिविरुद्धे स्वसामानाधिकरण्याप्रसिद्ध्या वृत्तिविरुद्धे स्वसामानाधिकरण्यसत्त्वेन [11]तदभावाभावादेवानतिप्रसङ्गात् । तथाप्येतज्ज्ञानस्य [12]व्यापकताज्ञानपर्यवसिततया तद्धेतुत्वस्याग्रे दूष्यत्वेन उक्तज्ञानमात्रं नानुमितिकरणम्, हेतुसाध्यसामानाधिकरण्यावगाह्युक्त[13]ज्ञानमेवेति तदर्थं साधिकरणपदम् । तच्च साध्याधिकरणाधिकरणत्वमिति ।

---

1. क. 'साधने' नास्ति ।
2. क. नञ् व्यवसायेन
3. क. विरुद्धार्थकत्वात्
4. क. एवं च साध्यविरोधि
5. ख. करणं
6. क. करणं
7. क. साध्यविरोधि यत
8. ख. न च केवला-
9. ख. वाच्यम्
10. ख. स्वाधिकरण-
11. ख. तदभावकत्वानतिप्रसङ्गात्
12. क. ग. व्यापारकज्ञान-
13. क, ज्ञानमेवेत्यर्थः साधिकरण-

न। साध्यासामानाधिकरण्यं हि न साध्यानधिकरणाधिकरणत्वं साध्याधिकरणानधिकरणत्वं वा। केवलान्वयिनि, यत्किंचित्साध्याधिकरणानधिकरणे धूमे चाव्याप्तेः। नापि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्। पर्वतीयवह्नेर्महानसीयधूमसमानाधि-

---

## प्रकाशः

न च स्वाधिकरणानधिकरण[1]साध्यकत्वाभाववत्त्वमेवास्तु लाघवात्। अस्य च विरुद्धेऽसम्भवात् तद्वारणार्थं स्वाधिकरणपदमकिंचित्करमिति वाच्यम्। उभयाभावस्यातिरिक्तत्वेन तत्र व्यर्थविशेषणत्वानवकाशात्[2]। एवं च [3]साधिकर सार्थकमेवेत्याहुः।

स्वेति। स्वं साधनत्वेनाभिमतम्। न हीति। विरोधीत्यनन्तरं व्याप्यवृत्तिर्वेति शेषः। अधिकरणेति। एकस्यैव द्रव्यकर्मादिवृत्तित्वाद्यवच्छेदभेदेनाव्याप्य-

---

## तर्कचूडामणिः

अधिकरणभेदेन प्रतियोगिविरोध्यभावाभावेऽपि तादृशव्याप्यवृत्त्यभावसत्त्वेन तद्गर्भलक्षणमदुष्टमेवेत्यत[4] आह—व्याप्येति। ननु व्याप्यवृत्तित्वाव्याप्यवृत्तित्वरूपविरुद्धधर्माश्रयतया तत्संयोगाभावभेद इत्यत आह—एकस्येति। ननु भेदस्य प्रतियोगिवृत्तित्वेऽपसिद्धान्तापत्तिस्तत्राह—एकेति। ननु साध्यवद्यस्येति हेतु[5]साध्यवतोः प्रतीयमानसम्बन्धो न व्याप्यव्यापकभावः, किं त्वाधाराधेय-

---

1. क साध्यत्वाभावकत्वमेव
2. ख. त्वाभावात्
3. ख. साधिकरणपदमपि
4. क. लक्षणं दुष्टमेवेत्यतः
5. क. ग. साध्ययोरप्रतीयमान-

करणात्यन्ताभावप्रतियोगित्वात्, द्रव्यत्वादेरव्याप्यवृत्त्यव्याप्यतापत्तेश्च। न च प्रतियोगिविरोधित्वं व्याप्यवृत्तित्वं वा अभावविशेषणं देयम्। संयोगादौ साध्ये सत्त्वादेरनैकान्तिकत्वाभावप्रसङ्गात्। न हि प्रतियोगिविरोधी संयोगादेरपरोऽत्यन्ताभावोऽस्ति, अधिकरणभेदेनाभावभेदाभावात्।

नापि साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं व्याप्तिः। मूले वृक्षः कपिसंयोगवानित्यबाधितप्रतीतेः तदन्योन्याभावस्यापि तत्र सत्त्वात्। न चैवं भेदाभेदः। अवच्छेदकभेदेन तत्सत्त्वाभ्युपगमात्।

---

प्रकाशः

वृत्तित्वव्याप्यवृत्तित्वोपपत्तौ तन्नानात्वकल्पने [1]मानाभावादित्यर्थः। एकदेशिमतेन दूषयति—**मूल** इति। अत एवापरितोषाद्दोषान्तरमाह—साधनवन्निष्ठेति। षष्ठ्यर्थेति। यस्य साधनस्य साध्यवदित्यत्र साध्यसाधननिष्ठव्याप्यव्यापकगर्भ एव सम्बन्धः षष्ठ्यर्थ इति भावः। ननु यत्पदार्थे साध्यवता सह आधाराधेय-

---

तर्कचूडामणिः

भावः। तथा च [2]षष्ठ्यर्थेति ग्रन्थानुपपत्तिः, [3]तत्राह—[4]यस्येति। [5]साध्यवद्यस्येति साध्यविशिष्टेन साधनसम्बन्धः [6]प्रतीयते। तत्र विशेषणेन व्याप्यव्यापकभावः, विशेष्येण आधाराधेयभाव इत्यर्थः, साध्यस्य न विशेषणता, किं तु परिचायकता। विशेषणत्वेऽपि तदंशे सामानाधिकरण्यं, सम्बन्ध इति

---

1. ख. मानाभाव इत्यर्थः।
2. ख. सप्तम्यर्थ इति
3. क. ग. अतस्तत्राह
4. क. यत्रेति
5. ख. सिद्धवद्यस्येति
6. क. 'प्रतीयते' नास्ति।

साधनवन्निष्ठान्योन्याभावाप्रतियोगि साध्यवद्यस्येति षष्ठ्यर्थव्याप्यव्यापकभावानिरूपणात् । साध्यसाधनयोर्व्याप्तिनिरूप्यत्वात् ।

---

## प्रकाशः

भाव एव सम्बन्धः षष्ठ्यर्थो भविष्यतीत्यनुशयेनाह—**साध्यसाधनयोरिति** । व्याप्तिप्रतियोगित्वं साध्यत्वम् , व्याप्त्याधारत्वं साधनत्वमित्यात्माश्रय इति भावः ।

ननु साध्यसाधनपदस्थाने यत्पदप्रक्षेपान्नोक्तदोष इत्यतो दोषान्तरमाह—**वह्निमदिति** । ननु साधनसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यमर्थः । न च विशेषाभावप्रतियोगितावच्छेदकः सामान्य-

---

## तर्कचूडामणिः

चोदयति—**नन्विति** । **साध्यसाधनयोरिति** । साध्यत्वसाधनत्वयोरित्यर्थः । ननु सिद्धि[1]कर्मत्वादिना साध्यत्वादिनिर्वचनसम्भवेन कथं व्याप्तेरनिरूप्यत्वम् ? तत्राह—व्याप्तीति । अन्यस्याग्रे दूष्यत्वादिति भावः ।

**प्रतियोगितानवच्छेदकेति** । यद्यपि वह्नेरपि प्रतियोगितावच्छेदकत्वमेव, तत्तद्वह्निमदन्योन्याभावस्य धूमसमानाधिकरणत्वात् । तथापि [2]प्रतियोगितावच्छेदकतायां यत् अवच्छेदकं न भवति तदवच्छिन्नसामानाधिकरण्यमित्यर्थः । **न च विशेषेति** । तत्तद्वह्निमदन्योन्याभावस्य प्रतियोगितावच्छेदकतावच्छेदकं[3] न सामान्यरूपं वह्नित्वम् , किं तु तत्तद्वह्नित्वमेवेत्यर्थः । ननु सामान्याभावाभावे

---

1. क, कमत्वादिनिर्वच-
2. क. प्रतियोगितावच्छेदकतया तत्
3. ख. दको न सामान्यधर्मो वह्नित्वम् ।

**वह्निमत्पर्वतस्य धूमवन्महानसनिष्ठान्योन्याभावप्रतियोगित्वाच्च । विशेषाभावकूटादेवाभावव्यवहारोपपत्तौ सामान्याभावे मानाभावात् ।**

## प्रकाशः

धर्म इत्यत आह—**विशेषेति** । तथा च वह्निसमानाधिकरणान्योन्याभाव-[1]प्रतियोगितानवच्छेदकं धूमवत्त्वमपि ; विशेषान्योन्याभावे विशेषस्यैवावच्छेदकत्वात्, [2]सामान्यान्योन्याभावाभावात् । तथा च व्यभिचारिसाधारण्यमित्यर्थः ।

**नापीति** । साधनसमानाधिकरणाः यावन्तो धर्माः तावद्भिः [3]प्रत्येकं निरूपितं यद्वैयधिकरण्यं [4]तदनधिकरणं यत् साध्यं [5]तत्सामानाधिकरण्यमित्यर्थः ।

## तर्कचूडामणिः

वह्नित्वं सुतरामनवच्छेदकमिति नाव्याप्तिः । [6]तथा च मूले किमपि दूषणं नोक्तमित्यत आह—**तथा चेति** । **प्रतियोगितानवच्छेदकमिति** । प्रतियोगितावच्छेदकतानवच्छेदकधूमत्वावच्छिन्नमित्यर्थः । ननु धूमस्यापि वह्निसमानाधिकरणायोगोलकत्ववैयधिकरण्ये[7] (अपि) तत्समानाधिकरणद्रव्यत्ववैयधिकरण्याभावेन तादृशसकलनिरूपितवैयधिकरण्यानधिकरणतया वह्नेस्तद्व्याप्यतापत्तिरित्यत आह—**प्रत्येकमिति** । [8]तथा च तादृशद्रव्यत्ववैयधिकरण्यानधिकरणत्वेऽपि अयोगोलकत्ववैयधिकरण्याधिकरणतया धूमस्य नातिव्याप्तिरिति भावः । ननु

1. ख. प्रतियोगितावच्छेदकं धूमवत्त्वमपि न ।
2. ख. सामान्यान्योन्याभावस्याभावात्
3. क. प्रत्येकनिरूपित तद्वैयधिकरण्यं-
4. क तदनधिकरणत्वं
5. क. तत्समानाधिकरणमित्यर्थः
6. ख. तथापि
7. क. वयधिकरण्यमपि यत्समाना-
8. ख. तथापि तादृशद्रव्यत्वादिवैयधिकरण्यात्तदधिकरणत्वेऽपि

नापि साधनसमानाधिकरणयावद्धर्मनिरूपितवैयाधिकरण्यानधिकरणसाध्यसामानाधिकरण्यम् । साधनसमानाधिकरणस्य प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धेः । महानसादौ समवायितया वह्निवह्निमतोरत्यन्तान्योन्याभावयोः सत्त्वात् धूमादावप्युक्तलक्षणाभावाच्च ।

---

## प्रकाशः

अत्र व्यभिचारिवारणाय यावदिति । अत्र वैयधिकरण्यं तदनधिकरणाधि[1]करणत्वं तदधिकरणानधिकरणत्वं वा आद्ये दोषमाह—**साधनेति** । यत्तु वह्नेर्धूमसमानाधिकरणमहानसत्वाद्यनधिकरणायःपिण्डाधिकरणतया धूमे वह्निव्याप्तिविरहप्रसङ्गात् तदनधिकरणाधिकरणत्वविवक्षायामत्रोक्तिसम्भवाभाव एवेति । तन्न । अयःपिण्डस्य महानसत्वाद्यनधिकरणत्वेऽपि [2]धूमसमानाधिकरणद्रव्यत्वाद्यधिकरणतया धूमसमानाधिकरणयावद्धर्मानधिकरणत्वाभावात् । अन्त्ये दोषमाह —

---

## तर्कचूडामणिः

[3]प्रमेयत्ववैयधिकरण्ययमि गगनादौ [4]प्रसिद्धमेवेति कथमप्रसिद्धिरित्यतो विकल्पपूर्वकमवतारयति—(तत्रेति) [अत्रेति] । [5]ननु वैयधिकरण्यं यदि तदनधिकरणाधिकरणत्वम्, तदा धूमे वह्निव्याप्तिविरहप्रसङ्गः । किं तु तदधिकरणानधिकरणत्वम् । तथा च नैवंविधानुपपत्तिरिति कैश्चिद्दूषणमुक्तम् । तत्र (तद्) दूषयति—**तन्नेति** । यद्यपि प्रत्येकनिरूपितवैयधिकरण्यविवक्षायामपि व्याप्यत्वं

---

1, क. करणमिति वा तदधिकरणानधिकरणं वा

2: ख. 'धूमसमानाधिकरणद्रव्यत्वाद्यधिकरणतया' नास्ति ।

4. ख. प्रमेयत्वादि

3. क प्रसिद्धमित्यतो विकल्प्य दूषणमवतारयति

5. ख. 'ननु वैयधिकरण्यं ....... तत्र दूषयति' नास्ति । इतः प्रारभ्य इत्याहुः इत्यन्तभागे तालकोशेषु बहवः त्रुटयः आसन् । कथंचित् पूरणादिना समीकृत्य एवं वाक्यानि न्यवेशयम ।

अथानौपाधिकः सम्बन्धो व्याप्तिः। उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः। व्यापकत्वं तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम्। व्यभिचारे चावश्यमुपाधिः। प्रतियोगित्वं न विरोधित्वं सहानवस्थान-

---

## प्रकाशः

**महानसादाविति।** तदधिकरणानधिकरणत्वं यदि तद्वन्निष्ठात्यन्ताभावप्रतियोगित्वम्, यदि वा तद्वन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वम्, उभयथापि वह्नेस्तदधिकरणानधिकरणत्वात् धूमादावुक्तलक्षणाभाव इत्यर्थः।

ननु व्याप्तिविरहोन्नायकत्वमुपाधित्वमित्यात्माश्रय इत्यत आह—**उपाधिश्चेति।** न च [1]व्यापकत्वमपि व्याप्तिप्रतियोगित्वम्, येन दोषतादवस्थ्यमित्याह—**व्यापकत्वं त्विति।** ननु यत्र व्यभिचारिणि नोपाधिस्तत्रातिव्याप्तिरित्यत आह—**व्यभिचार इति।** अतिव्याप्तिमुक्त्वा अव्याप्तिमाह—**अन्योन्येति।** [2]घटतद-

---

## तर्कचूडामणिः

तथाप्यसम्भवो नास्ति सकलनिरूपितवैयधिकरण्यविवक्षयापि तदुक्तिसम्भवादित्यर्थः। ननु महानसादौ वह्न्यन्तरात्यन्ताभावादिसत्त्वेऽपि न वह्नेर्धूमसमानाधिकरणमहानसत्वादिवैयधिकरण्यं तदधिकरणाधिकरणत्वादित्याशङ्क्य विकल्पपूर्वकमवतारयति—**तदधिकरणेति।** केचित्तु 'महानसादौ' इति वाक्यं पूर्वोक्तान्योन्यात्यन्ताभावगर्भलक्षणद्वयेऽव्याप्तिपरमित्याहुः।

---

1. क. व्यापकमपि
2. ख. घटपटान्योन्याभावयोः केवले सहैव

नियमलक्षणम् ; गोत्वाश्वत्वयोरतथात्वात्, अन्योन्याभावप्रतियोगिन्यसत्त्वाच्च। किं तु यथा अधिकरणाभावयोः स्वरूपविशेषः सम्बन्धः तथा प्रतियोगित्वमनुयोगित्वमपि, अभावविरहात्मत्वं वेति चेत्—

## प्रकाशः

न्योन्याभावयोः सहैव कपाले वृत्तेरित्यर्थः। [1]संयोगादेरतत्त्वापत्तिश्च, आकाशादेर्घटात्यन्ताभावप्रतियोगित्वापत्तिरित्यपि दूषणमत्र द्रष्टव्यम्। [2]'अनुयोगित्वमपि' इति

## तर्कचूडामणिः

[3]अतथात्वादित्यस्य [4]अविरोधित्वादित्यर्थाङ्गीकारे [5]तल्लक्षणाभाव एव प्रदर्शित इतीष्टापत्तिरित्याशङ्क्य निराकरोति—[6]**अतिव्याप्तिमिति**। तथा च अतथात्वादित्यस्य अप्रतियोगित्वादित्यर्थः। यद्वा [7]तदभावत्वे सति [8]तत्सहानवस्थितत्वमेव प्रतियोगित्वम्। अतो न गोत्वाश्वत्वयोरतिव्याप्तिरित्यत आह— **अतिव्याप्तिमिति**। [9]एवं हि घटप्रागभावतदत्यन्ताभावयोः परस्परप्रतियोगित्वं न स्यादिति यथाश्रुतमेव ग्राह्यम्, तत्र [10]चाव्याप्तिरित्यर्थः। [11]निरधिकरणेऽन्योन्याभावस्य प्रतियोगिन्यपि उक्तविरोधित्वमस्त्येवेत्यत आह—**घटेति**। [12]नन्वन्योन्याभावप्रतियोगित्वमलक्ष्यमेवेत्यत आह—**संयोगेति**। एकावच्छेदेन सहानवस्थितत्वं [13]विवक्षितम्। अतो [14]नाव्याप्तिरित्यत आह—**आकाशेति**। ननु [15]स्वरूप-

1. ख. संयोगादावेवाप्रतियोगितापत्तेश्च
2. क. अनुयोगित्वमित्यपि दृष्टान्तार्थः
3. क. तथात्वात्
4. क. विरोधित्वात्
5. क. तत्र लक्षणाभाव : प्रदर्श्यते
6. क. अव्याप्तिमिति
7. ख. तदभावार्थकत्वे
8. ख. 'तद्' नास्ति।
9. क. ग. ख· विशेष्यवैयर्थ्यापत्त्या for एवं हि न स्यादिति
10. क. चातिव्याप्तिः
11. ग. 'निरधिकरणे.........घटेति' नास्ति।
12. ख. नन्वन्योन्याभावस्य प्र.त-
13. ख. एव विवक्षितम्
14. क. नातिव्याप्तिः
15. क. स्वस्वरूप

## प्रकाशः

दृष्टान्तार्थम्, प्रतियोगित्वमित्यस्यैव प्रकृतत्वात्। अन्योन्याभावप्रतियोगिसाधारणं लक्षणं कृत्वा प्रकृते तावतापि संगतेः संसर्गाभाव[1]प्रतियोगिमात्रलक्षणमाह— **अभावेति**।

नन्वभावस्य विरह इति कः षष्ठ्यर्थः? सम्बन्धमात्रं वा प्रतियोगित्वं वा? नाद्यः, समानाधिकरणयोर्घटाभावपटाभावयोः परस्परं प्रतियोगितापत्तेः।

---

## तर्कचूडामणिः

संबन्धविशेषरूपं प्रतियोगित्वं नान्योन्याभाव[2]प्रतियोगिसाधारणम्। तथात्वे अत्यन्ताभावः कादाचित्कः [3]संसर्गाभावत्वादित्यत्र बाधोन्नीतात्यन्ताभावान्यत्वो-पाधावव्याप्तेः, तस्य [4]कादाचित्कत्वसमानाधिकरणाकाशात्यन्ताभावप्रतियोगित्वात् [5]आकाशस्यै(स्ये)वात्यन्ताभावान्यत्वस्य आकाशात्यन्ताभावेन सह स्वरूपसंबन्ध-विशेषरूपसत्त्वादित्यत आह— **अन्योन्येति**। अनुभवसिद्धस्वरूपसंबन्धविशेष-स्यात्यन्ताभावतदन्यत्वयोरभावात्। यदि चाकाशात्यन्ताभावस्य [6]आकाशेनेव [7]तादृशान्यत्वेनापि समं स्वरूपसम्बन्धविशेषः स्यात् तदा [8]आकाशेनेव तादृशा-न्यत्वेनापि कदाचिन्निरूप्येत। अत [9]एवाधिकरणप्रतियोगित्वयोरुभयोरपि [10]स्वरूप-सम्बन्धविशेषेऽपि कस्यचित् प्रतियोगित्वं कस्यचिदनुयोगित्वमित्यभिप्रायः। [11]वाशब्देनास्याप्युभयलक्षणभ्रान्तिः स्यात्। तां वारयति— **प्रकृत इति**।

---

1. क. प्रतियोगिलक्षणमात्रमाह
2. ग. 'प्रतियोगि' नास्ति।
3. क.. संसर्गाभावात्
4. क कादाचित्कत्वे
5. आकाशस्यैवेत्यन्ताभावत्वेन सह
6. क. आकाशेनैव
7. क. तादृशान्यत्वेऽपि समं
8. क. आकाशेनैव
9. ख. ग. एवाधिकरणप्रतियोगिनोरपि
10. ख. स्वरूपसम्बन्धविशेषेऽपि
11. क वाशब्देनास्याप्युभयं लक्षण-लक्षणभ्रान्तिः
    ग. वाशब्देन व्याप्त्युभयलक्षणग्राही

**यत्किंचित्साध्यव्यापकसाधनाव्यापकधर्मनिषेधो न धूमादौ, प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मश्च सिद्ध्यसिद्धिभ्यां न निषेद्धुं शक्यः। यावत्साध्यव्यापके प्रमेयत्वादौ साधनाव्यापकत्वम्, यावत्साधनाव्यापके च घटत्वादौ साध्यव्यापकत्वं निषिध्यत इति चेत्—न। व्यधिकरणत्वात्। यावत्साधनाव्यापकमव्यापकं यत्साध्यस्य, यावत्साध्यव्यापकं**

---

## प्रकाशः

नान्त्यः, आत्माश्रयादिति चेत्—न। स्वरूपसंबन्धविशेषस्यैव षष्ठ्यर्थत्वात्। न चैवं स एव प्रतियोगित्वमस्तु, लाघवादिति वाच्यम्। तावन्मात्रस्यान्योन्याभावप्रतियोगिन्यपि गतत्वात्। संसर्गाभावप्रतियोगित्वमात्रस्यैवात्र लक्ष्यत्वात् [1]पूर्वलक्षणाभेदप्रसङ्गाच्चेति भावः।

व्यधिकरणत्वादिति। हेतुवृत्ति[2]व्याप्तिशरीरत्वेनाभिमतस्य निरुक्तनिषेधस्य हेताववृत्तेः, [3]यद्वा पक्षधर्मताव्यधिकरणत्वात् पक्षधर्मतासमानाधिकरणव्याप्तेरेवानुमानाङ्गत्वादित्यर्थः।

---

## तर्कचूडामणिः

उपाधिलक्षण इत्यर्थः। [4]प्रतियोगित्वमात्रसाम्येन चाशब्द इत्यर्थः। **आत्माश्रयादिति।** अभावविरह[5]पदवैयर्थ्यं चेत्यपि द्रष्टव्यम्। ननु तदपि [6]लक्ष्यमेवेत्यत आह—**संसर्गेति।** [7]बाधकाभावादिदमप्युभयलक्षणमस्त्वित्यत आह—**पूर्वेति।** उक्तनिषेधस्य यत्किंचित्समानाधिकरणतया न वैयधिकरण्यमित्यत आह—**पक्षेति।**

---

1. ख. पूर्वलक्षणाविशेष-
2. ख व्याप्तित्वेन
3. क. 'यद्वा' नास्ति
4. क. प्रतियोगिसामान्ये वा शब्दः ग. प्रतियोगित्वसाम्येन
5. ख. पदद्वयवैयर्थ्यं ग. करणपद-
6. क. लक्षणीय-
7. क. बाधकाभावादेवमपि

व्यापकं वा यस्य तत्त्वं तदिति चेत्—न। सोपाधेरपि तथात्वात्। तथा हि—साधनस्य वह्नेरव्यापकं यावदार्द्रेन्धनं तत् प्रत्येकमव्यापकं साध्यधूमस्य, द्वितीये साध्यधूमस्य व्यापकमार्द्रेन्धनं तत् व्यापकं महानसीयवह्नेः।

---

प्रकाशः

**यावदव्यभिचारीति**। यावतां साध्यमव्यभिचारीत्यर्थः। **साध्येति**। [1]यद्यप्युक्तलक्षणे साध्याव्यभिचारित्वं न प्रविष्टम्। तथापि साध्याव्यापकाव्यभिचारित्वापेक्षया अस्यैव लघुत्वात् गमकत्वम्। एतल्लाघवपुरस्कारादेवान्योन्याभावगर्भव्याप्तेरेव गमकत्वमिति सिद्धान्ते वक्ष्यति इति भावः। इष्टापत्ति-

---

तर्कचूडामणिः

वैयधिकरण्ये च हेतुमाह—**हेत्विति**। अस्तु [2]पक्षधर्मतावैयधिकरण्यमित्यत आह—**पक्षेति**।

[3]यावत्पदस्य साध्यविशेषणत्वे यावत्साध्यं हेतोरव्यभिचारीत्यर्थः स्यात्। तथा च विषम[4]व्याप्तिकाव्याप्तिरित्यत आह— [5]**यावतामिति**। **यद्यपीति**। तथा चेतरभेदसाधने [6]लिङ्गत्वमस्याप्यविरुद्धमित्यर्थः। **तथापीति**। तथा च नेतरभेदसाधने व्यर्थविशेषणत्वं प्रकृतेऽभिमतम्, किं तु एतज्ज्ञानं नानुमितिहेतुरिति। अत एवोक्तं गमकत्वेति इति [7]भावः। **एतल्लाघवेति**। यज्ज्ञानस्य

---

1. ख. यथोक्तलक्षणसाध्याव्यभिचार्यव्यभिचारित्वापेक्षया अस्यैव लाघवात् गमकत्वम्। एतल्लाघवपुरस्कारादेव
2. ख. पक्षता- क. पक्षधर्मधर्मता-
3. ग. यावदिति पदस्य
4. म. व्याप्तावव्याप्तिः
5. क. यावतामपीति
6. त. लिङ्गभ्रमस्याप्यवि- ग. हेतुत्वमस्याप्यवि-
7. क. अर्थः

नापि साध्यं यावद्व्यभिचारि तदव्यभिचारित्वमनौपाधिकत्वम् । साध्याव्यभिचारित्वस्यैव गमकत्वसम्भवात् । तच्च दूषितम् ।

नापि कार्त्स्न्येन सम्बन्धो व्याप्तिः । एकव्यक्तिके तदभावात् । नानाव्यक्तिकेऽपि सकलग्रहसम्बन्धस्य प्रत्येकत्वग्रहनावभावात् । अत एव न कार्त्स्न्येन साध्येन सम्बन्धो व्याप्तिः ; विषमव्याप्ते तदभावाच्च ।

---

**प्रकाशः**

माशङ्क्याह—तच्चेति । लीलावतीकारमतमाशङ्कते—**नापीति** । [1]कृत्स्नेन साधनेन साध्यस्य सम्बन्धो न व्याप्तिरित्यर्थः । **एकेति** । एकव्यक्तिके लिङ्गे [2]अशेषानेकत्वरूपस्य कार्त्स्न्यस्याभावादित्यर्थः । [3]नन्वशेषत्वमात्रं कृत्स्नपदेन विवक्षितमिति नोक्तदोष इत्यत आह—**नानेति** । **विषमेति** । अयोगोलकीयवह्निना [4]समं धूमस्य सम्बन्धाभावादित्यर्थः । इदं द्रव्यं सत्त्वादित्यत्र अतिव्याप्तिश्च

---

**तर्कचूडामणिः**

[5]हेतुत्वे हेतुतावच्छेदकं लघु स एवानुमितिहेतुरिति लाघवपुरस्कारादित्यर्थः । [6]ननु कार्त्स्न्यशब्दार्थसाधनगतसाकल्येन साध्यस्य सम्बन्ध एवासिद्धः । कार्त्स्न्यशब्दस्य [7]धर्मिपरत्वे कृत्स्नेन साधनेनेति (साध्येनेति) विवक्षायां अग्रिमलक्षणाभेदः सकलधूमेत्यग्रिमग्रन्थासंगतिश्चेत्यत आह—[8]**कृत्स्नेनेति** । इदं द्रव्यं गोत्वादित्यत्र विषमव्याप्तिके सकलसाध्यसंबन्धोऽस्त्येवेत्यत आह—[9]**अयोगोलकीयेति** । यावदित्यस्य साधनविशेषणत्वे [10]तदाश्रयाप्रसिद्धिः । "महानसादौ

---

1. क. कृत्स्नसाधनेन
2. क. अशेषानेकरूपस्य
3. क. मन्वशेषमात्रम्
4. क. 'समं' नास्ति ।
5. 'हेतुत्वे' नास्ति ।
6. क नन्वेवं कार्त्स्न्यशब्दस्य साधन-
   ग. ननु कार्त्स्न्यशब्दात् साधन-
7. क. धर्मिपरत्वेऽपि कार्त्स्न्येन
8. ख. कृत्स्नेति ग 'कृत्स्नेनेति ..........ग्रन्थासंगतिश्चेत्यत आह इति ग्रन्थस्त्रुटितः ।
9. क. अयोगोलकेति
10. क. तदाश्रयासिद्धिः

न च यावत्साधनाश्रयाश्रितसाध्यसम्बन्धः। साधनाश्रयमहानसादौ सकले प्रत्येकं वह्नेराश्रितत्वाभावात्।

नापि साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यम्। यावद्धर्मसामानाधिकरण्यं हि यावत्तद्धर्माधिकरणाधिकरणत्वम्। तच्चाप्रसिद्धम्। साधनसमानाधिकरणसकलमहानसत्वाद्यधिकरणाप्रतीतेः।

---

प्रकाशः

बोद्धव्या। न चेति। यावदित्याश्रयविशेषणम् अशेषमात्रार्थकम्। तेन अयमेतत्संयोगी एतत्त्वादित्यत्र न यावत्पदार्थाभाव इति बोद्धव्यम्।

[1]तच्चाप्रसिद्धमिति। यद्यपि धूमादिसाधनसमानाधिकरणयावद्धर्माणां प्रत्येकं निरूपितं सामानाधिकरण्यं वह्न्यादावेव प्रसिद्धम्। [2]तदादाय चोक्तलक्षणमपि [3]सुस्थम्। तथापि यावत्तादृशधर्माणां साकल्यनिरूपितसामानाधि-

---

तर्कचूडामणिः

सकले" इत्यग्रिमग्रन्थासंगतिश्चेत्यत्र आह—यावदिति। तेनेति। अशेषार्थकत्वेनेत्यर्थः। [4]यद्यपीति। अत्र ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धेन[5] यत्साधनाधिकरणं तद्वृत्तित्वं साधनसामानाधिकरण्यं विवक्षितम्। तेन [6]धूमसमानाधिकरणधूमावयवत्वासमानाधिकरणत्वात् वह्नेः, धूमस्य तद्व्याप्यत्वं न स्यादित्यादिदूषणमलभकं वेदितव्यम्[7]। [8]तर्हि प्रत्येकनिरूपितसामानाधिकरण्यप क्षेन

---

1. क. तच्च प्रसिद्धमिति।
2. क. तदादायोक्त-
3. क. स्वस्थम्
4. क. ख. 'यद्यपीति।' नास्ति।
5. क. एतदनन्तरं 'यत्साधनाधिकरण्यप्रविष्टसम्बन्धेन' इत्यधिकम्।
6. क. धूममहानसाधिकरण-
   ग. धूमसमानाधिकरणत्वात्
7. ख. ग. बोध्यम्
8. ख. ग. ननु तर्हि प्रत्येकं यावद्धर्मसामानाधिकरण्याभावादव्याप्ति

**नापि स्वाभाविकः सम्बन्धो व्याप्तिः। स्वभावजन्यत्वे तदाश्रितत्वादौ वा अव्याप्त्यतिव्याप्तेः। नाप्यविनाभावः, केवलान्वयिन्यभावात्।**

---

## प्रकाशः

करण्यस्य [1]विवक्षितत्वेन दूषणमिति भावः। वस्तुतस्तु यत्किंचित्साधनसमानाधिकरणयावद्धर्मसमानाधिकरण[2]साध्यसामानाधिकरण्यं व्यभिचारिसाधारणमिति दूषणा[3]न्तरमत्र द्रष्टव्यम्। **साधनेति।** साधनसमानाधिकरणसकल[4]महानसत्वादेरेकाधिकरणाप्रतीतेरित्यर्थः।

---

## तर्कचूडामणिः

कोऽपि दोष इत्यत आह—**वस्तुतस्त्विति।** इदं चापाततः। वस्तुतस्तु व्यधिकरणवह्नेर्व्यधिकरण (सामानाधिकरण्य) धर्मसामानाधिकरण्याभावादव्याप्तिः। न च तत्रापि वह्नित्वावच्छिन्नस्य तावद्धर्मसामानाधिकरण्यमेवेति वाच्यम्। [5]प्रत्येकवह्न्यतिरिक्तवह्नित्वावच्छिन्नाभावात्। न च समानाधिकरणयोरेव [6]व्याप्यत्वं [7]विवक्षितम्। तत्र च यावद्धर्म[8]सामानाधिकरण्यप्रविष्टसम्बन्धनैयत्यमेवेति वाच्यम्। एवमपि पृथिवीत्वादौ गन्धादि[9]व्याप्यत्वाभावप्रसङ्गात्। [10]तत्र सर्वगन्धव्यक्तेरपि यावद्धर्मसामानाधिकरण्याभावादिति भावः। ननु महानसत्वादेरपि प्रत्येकमधिकरणं प्रतीतमेवेत्य आह—**साधनेति।** [11]**स्वभावेति।** यद्यपि स्वाभाविकत्वं सम्बन्धविशेषणम्, न तु लिङ्गविशेषणम्। तथा च [12]घटत्वादे-

---

1. क. विवक्षितत्वे दूषणम्
2. ख. साध्यासामाना-
3. ख. दूषणमत्र बोद्धव्यम्
4. क. महानससत्त्वादेरेकाधिकरण-
5. ख. प्रत्येकं चातिरिक्त
6. ख. अत्र व्याप्यत्वादिकं
7. ख. 'विवक्षितम्' नास्ति।
8. ख. ग. सामानाधिकरण्यमेवेति वाच्यम्
9. ख. व्याप्त्यभाव-
10. ख. तत्र गन्ध-
11. ख. स्वभावेपीति।
12. ख. धूमत्वादेः
ग. घटत्वादेस्तच्छून्यत्वेऽपि

अथ सम्बन्धमात्रं व्याप्तिः। व्यभिचारिसम्बन्धस्यापि केनचित्सह

---

## प्रकाशः

[1]नापि स्वाभाविक इति। स्वभावजन्यत्वे घटत्वादौ द्रव्यत्वाद्यव्याप्यत्वापत्तिः। स्वभावाश्रितत्वे शब्दादावाकाशव्याप्यत्वापत्तिः। [2]आदिपदसंग्राह्यं च स्वभावाश्रयत्वम्। तत्र चाकाशस्य शब्दव्याप्यतापत्तिरित्यर्थः। अव्याप्तीति। अव्याप्ति[3]सहितातिव्याप्तिरिति मध्यमपदलोपिसमासात्समाधेयम्। केवलेति। अविनाभावो हि साध्येन विना न [4]भाव इति वा साध्येन न विनाभाव इति वा।

---

## तर्कचूडामणिः

स्तद्जन्यत्वेऽपि न दोषः। तथापि [5]स्वभावजन्यवृत्तित्वादिकमेव सम्बन्धस्य स्वाभाविकत्वमित्याशयः।

नन्वव्याप्त्यतिव्याप्तेरिति [6]यदीतरेतरद्वन्द्वः तदा द्विवचनापत्तिः। यदि च तत्रैकवद्भावः तदा 'स नपुंसकम्' (पा. सू. २-४-१७) इति नपुंसकत्वात् 'इकोऽचि विभक्तौ' (पा. सू. ७-१-७३) इति नुमागमः स्यादित्यत आह— अव्याप्तीति। शाकपार्थिवादित्वादिति भावः। केचित्तु आगमविधेरनित्यतया एकवद्भावेऽपि नानुपपत्तिः। अत एव [7]स्वशरावृत्तेस्तद्दुःखमात्रस्येति प्रयोग त्याहुः। [8]साध्येन विनेति। साध्याभावप्रयुक्ताभावप्रतियोगित्वम्, [9]साध्या-

---

1. क. स्वाभावाजन्यत्वेति। घटत्वादौ
2. क. आदिपदग्राह्यत्वस्वभावाश्रयत्वम्
3. क. सहितातिव्याप्तिश्चेति
4. ख. भवतीति भावः साध्येन विना अभाव
5. क. स्वजन्यवृत्तित्वादिकमेव
6. ख. 'यदीतरेतरद्वन्द्व ........ केचित्तु आगमविधेः' इति ग्रन्थस्त्रुटितः।
7. ख. परावृत्ते दुःखमात्रस्येति
8. क. साध्येनेति
   ख. साध्येन विमतेति
9. ग. साध्याभावसमाना-

**व्याप्तित्वात् । धूमादिव्याप्तिस्तु विशिष्यैव वक्तव्येति । तन्न । लिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे लक्षणाभिधानस्यार्थान्तरत्वात् । न च सम्बन्धमात्रं तथा तद्बोधादनुमित्यनुत्पत्तेः । नापि व्याप्तिपदप्रवृत्तिनिमित्तमिदम् । सम्बन्धज्ञानेऽपि व्याप्तिपदाप्रयोगात् ।**

## प्रकाशः

उभयत्र केवलान्वयिनि साध्याभावाप्रसिद्ध्या तदप्रसिद्धेरित्यर्थः । **सम्बन्धमात्रमिति ।** [1]सामानाधिकरण्यमात्रमित्यर्थः । किमिदं सम्बन्धत्वं [2]व्याप्तिस्वरूपं वा व्याप्तिपदप्रवृत्तिनिमित्तं वा । आद्य आह—**लिङ्गेति ।** येन रूपेण व्याप्तिज्ञानमनुमितिहेतुः तेन रूपेण तन्निरूपणमिह प्रस्तुतम् । तच्च न सम्बन्धत्वमात्रम् । अतस्तदभिधानेऽर्थान्तरमित्यर्थः । अन्त्ये त्वाह— **नापीति । सम्बन्धेति ।** एवमप्यर्थान्तरं तदवस्थमेवेति [3]दूषणमत्र बोध्यम् ।

## तर्कचूडामणिः

भावाभावसमानाधिकरणत्वं [4]वेत्यर्थः । अत्र प्रथमे निरधिकरणेऽ[5]तिव्याप्तिः । [6]वृत्तिमत्त्वविशेषणेऽपि संयोगसाध्यकद्रव्यत्वेऽतिव्याप्तिः । [7]द्वितीये व्यभिचारिसाधारण्यमित्यपि बोध्यम् ।

ननु निरधिकरणेऽतिव्याप्तिः । तस्य केनापि सहाव्याप्यत्वादित्यत आह— **सामानाधिकरण्यमिति ।** ननु सम्बन्धज्ञानस्यानुमित्यहेतुत्वेपि[8] तस्य प्रवृत्तिनिमित्तत्वं स्यादेवेति मूलानुपपत्तिमाशङ्क्य [9]विकल्पपूर्वकं योजयति—**किमिदमिति ।** ननु

1. क. सामानाधिकरण्यमित्यर्थः
2. ख. व्याप्तिस्वरूपत्वं
3. ख. अपि दूषण-
4. क. चेत्यर्थः
5. ख. ऽभिव्याप्तिः
6. क. वृत्तिमत्त्वे
   ख. 'वृत्तिमत्त्व........द्रव्यत्वेऽतिव्याप्तिः' नास्ति ।
7. क. द्वितीयव्यभि-
8. क. स्यानुमितिहेतुत्वे तस्य
9. क. विकल्पपूर्वं

केवलान्वयिनि केवलान्वयिधर्मसम्बन्धः व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः एतयोरनुमितिविशेषजनकत्वम्। अनुमितिमात्रे पक्षधर्मतैव प्रयोजिका। न चातिप्रसङ्गः विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्यजनकत्वनियमादिति केचित्।

---

## प्रकाशः

केवलान्वयिसम्बन्धः केवलान्वयि[1]साध्यसामानाधिकरण्यमित्यर्थः। तदपि नेत्यापाततः। वस्तुतस्तु यदि केवलान्वयिसाध्यसामानाधिकरण्यमात्रज्ञानं केवलान्वयिन्यनुमितिप्रयोजकम्, तदा व्यभिचारभ्रमेऽप्यनुमित्यापत्तिः। तादृशज्ञानस्य तदाप्यक्षतेः। यदि च तत्र साध्यवदन्यावृत्ति[2]त्वममि प्रयोजकम्, तदा तदेवास्तु, किं [3]केवलान्वयिनि विशेषसामग्र्यन्तरकल्पनया। न चेष्टापत्तिः, केवलान्वयिनि

---

## तर्कचूडामणिः

सामानाधिकरण्यस्य [4]व्याप्तिशरीरप्रविष्टतया परामर्शविषयत्वमस्त्येवेति [5]नार्थान्तरम्, तत्राह—येनेति। [6]एवमिति। प्रवृत्तिनिमित्ताभिधानस्याप्रस्तुतत्वादिति[7] भावः।

प्रमेयत्वादि[8]सम्बन्धिगगनादेरपि [9]तव्द्याप्यत्वापत्तिं वारयति—केवलेति। आपातत इति। साध्यवत्त्वावच्छिन्नप्रतियोगिकान्योन्याभावासामानाधिकरण्यविवक्षायामदोषादिति भावः। नन्वेवं केवलान्वयिनः प्रमाणत्वसिद्धौ चार्वाकाभि-

---

1. ख. साध्यासामाना
2. क. त्वप्रयोजकम्
3. क. केवलान्वयिविशेष-
4. ख. व्याप्तिशरीरनिष्ठतया
   ग. व्याप्तिशरीराविष्टतया
5. क. 'न' नास्ति।
6. क. 'एवमिति' नास्ति।
   ग. एवमपीति
7. क. स्य प्रस्तुतत्वादिति
8. क. सम्बन्ध- ग. सम्बद्ध-
9. क. तव्द्याप्यत्वं

तदपि न। साध्यवदन्यावृत्तित्वस्य धूमेऽसत्त्वात्, वह्निमत्पर्वतान्यस्मिन् धूमसत्त्वात्। न च सकलसाध्यवदन्यावृत्तित्वम्, वह्निमतां प्रत्येकं तथात्वात्। सर्वत्र लक्षणे साध्यत्वसाधनत्वतदभिमतत्वानां व्याप्तिनिरूप्यत्वेनात्माश्रयः। साध्यत्वं हि न सिद्धिकर्मत्वं सिषाधयिषाविषयत्वं वा। महानसीयवह्नौ तदभावात्। न च सामान्यतो व्याप्त्यवगमोऽस्त्येव परस्य, कथमन्यथा दूषणेनासाधकतां साधयेदिति वाच्यम्। स्वार्थानुमानोपयोगिव्याप्तिस्वरूपनिरूपणं विना कथायामप्रवेशादिति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्वचिन्तामणौ
अनुमानखण्डे पूर्वपक्षव्याप्तिप्रकरणम् ॥



---

## प्रकाशः

तस्याप्रसिद्धेरिति दूषणमत्र द्रष्टव्यम्। **तथात्वात्**। सकलसाध्यवदन्यत्वात्। न ह्येकं सकलसाध्यवदित्यर्थः। **सर्वत्रेति**। यद्यपि स्वाभाविकः सम्बन्ध इत्यादौ साध्यादिपदं नास्ति। तथापि साध्येन साधनस्य तादृशः सम्बन्धो व्याप्तिरिति तत्रापि तदन्तर्भाव आवश्यक इति भावः। सिषाधयिषा[1]विषयत्वं वेत्यत्र घनगर्जितस्थलेऽव्याप्तिर्बोद्धव्या।

---

## तर्कचूडामणिः

मत[2]सर्वानुमानाप्रामाण्यं न सिध्येदित्यत आह—**वस्तुत इति**। तथाशब्दस्य [3]प्रकृतसाध्यवदन्यावृत्तिपरत्वभ्रमं वारयति—**सकलेति**। **घनगर्जितेति**। संशयस्थलेऽपीति बोध्यम्।

---

1. ख. विषयत्वं चेत्यत्र
2. क. सर्वानुमानप्रामाण्यं
   ग. पूर्वानुमानप्रामाण्यं
3. क. साध्यवदन्यवृत्तित्वभ्रमं
   ग. प्रकृतसाध्यवदन्यावृत्तित्वभ्रमं

## प्रकाशः

महानसीयवह्नाविति । बाधावतार इदं बोध्यम् । एवं साधनत्वमपि न सिद्धिकरणत्वं वाच्यम् । महानसीयधूमे तदभावादित्यपि द्रष्टव्यम् । स्वार्थेति । न हि कथायां परकीयव्याप्तिस्वरूपप्रश्नोत्तरदानार्थमेवेह तन्निरूपणम्, किं तु स्वार्थानुमानार्थमपि । तेन विना परं प्रति स्वयमनुमानोपन्यासाद्यसम्भवेन स्वस्यैव कथायामप्रवेशादित्यर्थः ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे पूर्वपक्षव्याप्तिप्रकरणम् ॥



---

## तर्कचूडामणिः

ननु वह्नित्वेन रूपेण महानसीय[1]वह्निस्तद्विषय एवेत्यत आह—बाधेति । महानसीयवह्निरत्र नास्तीति ज्ञानस्य [2]तत्र प्रतिबन्धकत्वादिति भावः । व्याप्तिनिरूपणस्य परार्थानुमानेऽप्युपयोगितया कथं स्वार्थानुमानोपयोगीत्युक्तमित्याशङ्क्य उपलक्षणपरतया व्याचष्टे—न हीति ।

इति श्रीमद्धर्मराजाध्वरीन्द्रविरचिते तर्कचूडामणौ
अनुमानखण्डे पूर्वपक्षव्याप्तिप्रकरणम् ॥



---

1. क. ग. वह्निरपि तद्विषयः 2. ख. 'तत्र' नास्ति ।

## अथ सिद्धान्तव्याप्तिलक्षणम्

अत्रोच्यते। प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः।

---

### प्रकाशः

**प्रतियोगीति।** प्रतियोग्यसमानाधिकर[1]णयदवच्छिन्नसमानाधिकरणात्यन्ताभावस्य प्रतियोगितावच्छेदकं यन्न भवति तदवच्छिन्नेन केनापि[2]सह सामानाधिकरण्यं तदवच्छिन्नस्य तदवच्छिन्नेन सह व्याप्तिरित्यर्थः। एवं हि सर्वस्य धूमस्य सर्वेण वह्निना सह [3]एका व्याप्तिरुक्ता भवति इति नात्रावच्छेदकपदवैयर्थ्यशङ्कापीति भावः। न चायं धूमवान् वह्नेरित्यत्रातिप्रसङ्गः प्रमेयत्वेन धूमस्यापि तथात्वादिति वाच्यम्। तेन रूपेण धूमे वह्निव्यापकत्वस्येष्टत्वात्! धूमत्वेन [4]च रूपेण तस्यातथात्वात्।

---

### तर्कचूडामणिः

ननु वह्नेरपि [5]तादृशात्यन्ताभावप्रतियोगितावच्छेदकतत्तद्वह्नित्वावच्छिन्नत्वादव्याप्तिः। न च समानाधिकरणयोरेव व्याप्तिरिति वाच्यम्। एवमपि पृथिवीत्वस्य गन्धाव्याप्यत्वप्रसङ्गात्, [6]तत्र गन्धमात्रस्य तादृशप्रतियोगितावच्छेदकतत्तद्गन्धत्वावच्छिन्नत्वादित्याशङ्क्य [7]नञ्व्यत्यासेन योजयति—**प्रतियोगीति।** धूमस्यापि महानसीयवह्निसमानाधिकरणतादृशाभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नत्वात् वह्नेरपि धूमव्याप्यतापत्तिरित्यत आह—**यदवच्छिन्नेति।** [8]धूमस्य

---

1. क. णस्य यदव
2. ख. 'सह.......तदवच्छिन्नस्य' इति ग्रन्थस्त्रुटितः
3. क. एकव्याप्तिः
4. क. 'च रूपेण' नास्ति।
5. क. तादृशात्यन्ताभावस्य प्रति-
6. ख. तस्य तादृश-
7. क. तत् व्यत्यासेन
8. क. यत्र धूमत्वस्य च

## प्रकाशः

अवच्छेदकत्वमनतिरिक्त[1]वृत्तित्वम्, न त्ववच्छिन्नत्वप्रत्ययजनकत्वम् । अतो जनकत्वस्य व्याप्तिरूपनियमगर्भतया नात्माश्रयः । एतच्चावच्छेदकत्वं व्याप्तिनिरूपणार्थं प्रकृते विवक्षितम्, न तु सर्वत्र । तेन घटजनकतावच्छेदकं दण्डत्वं न तु तत्समनियतरूपवद्दण्डत्वादिकमिति सिद्धान्तो न व्याहन्येतेति ध्येयम् ।

अत एव [2]वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं धूमत्वं लाघवात् । न तु [3]प्रमेयधूमत्वादि, गौरवात् । एवं च तादृशात्यन्ताभावप्रतियोगितानवच्छेदकप्रमेयधूमत्वाद्यवच्छिन्नधूमसामानाधिकरण्यं वह्नावपीत्यति-

---

## तर्कचूडामणिः

च वह्नित्वावच्छिन्नायोगोलकीयवह्निसमानाधिकरणतादृशाभावप्रतियोगितावच्छेदकत्व-मेवेति भावः । व्यधिकरणवह्नेरपि व्यापकत्वलाभायाह — [4](**तदवच्छिन्नेति**) [**तदवच्छिन्नेनेति**] । अयोगोलकीयवह्नेस्तल्लाभायाह — [5]**केनापीति** । लक्ष्यं निर्दिशति—**तदवच्छिन्नस्येति** । **एवं हीति** । [6]अवच्छेदकपदाभावे तादृशव्याप्तेरलाभादिति भावः । **शङ्कापीति** । [7]नन्व्यत्यासाश्रयणादव्याप्तिरपि नेत्यर्थ । धूमस्य वह्निव्यापकता प्रमेयत्वरूपेणापाद्यते धूमत्वेन वा । आद्य आह — **तेनेति** । अत एव वह्निना[8]प्रमेयत्वावच्छिन्नानुमितिरनुभवसिद्धेति भावः । द्वितीय आह—**धूमत्वेनेति** । **अतथात्वात्** [9]प्रतियोगितानवच्छेदकावच्छिन्नत्वाभावात् ।

---

1. ख. देशवृत्तित्वम्
2. क. न हि समाना-
3. क. प्रमेयत्वादि
4. क. 'तदवच्छिन्नेति' नास्ति ।
5. ख. 'केनापीति' नास्ति ।
6. ग. तदवच्छेदक-
7. क तच्च व्यत्यासा-
8. क. प्रमेयत्वावच्छिन्नानुमितिः सर्वानुभव-
   ग. प्रमेयधूमत्वावच्छिन्न-
9. क. प्रतियोगितावच्छेदकत्वाभावा-दित्यर्थः ।

## प्रकाशः

व्याप्तिरिति [1]निरस्तम् । उक्तावच्छेदकत्वस्य [2]प्रमेयधूमत्वादावपि सत्त्वात् । अवच्छेदकत्वं विशेषणताविशेषः, यथा वने सिंहनाद इत्यत्र वनस्येत्यप्याहुः[3] ।

([4]प्रतियोगित्वं चाकरग्रन्थे स्फुटम् । न च तस्यापि स्वरूपसम्बन्धत्वेन सम्बन्धस्य विशिष्टधीनियामकत्वेन आत्माश्रयशङ्कापि । प्रतियोगित्वरूपस्य नियामक-सम्बन्धस्य व्याप्तिग्रहविषयत्वेऽपि सम्बन्धत्वाविषयत्वात् । प्रतियोगितानवच्छेदकत्वं हि लाघवात् प्रथमोपस्थितिकत्वाच्च प्रतियोगितावच्छेदकान्योन्याभावः न तु प्रतियोगितावच्छेदकत्वात्यन्ताभावः गौरवात् । अभावप्रत्यक्षस्य प्रतियोगितावच्छेदका-वच्छिन्नप्रतियोगिज्ञानसाध्यत्वेन तदवच्छेदकत्वत्वावच्छिन्नतदवच्छेदकत्वज्ञाने तदि-तरावृत्तित्वस्यापेक्षणात् । )

---

## तर्कचूडामणिः

अनतिरिक्तेति । [5]न त्वन्यूनानतिरिक्तवृत्तित्वं गौरवादिति भावः । एवं-चेति । तथा च वह्निना [6]प्रमेयधूमत्वावच्छिन्नानुमितिः स्यादिति भावः । [7]विशेषणताविशेषः स्वरूपसम्बन्धविशेषः । [8]क्वचित्स्वरूपसम्बन्धविशेषसत्त्वे उक्तानतिरिक्तवृत्तित्वमेव नियामकं वाच्यम्, तथा च तदेवास्तु किमनेनेत्यस्वरसं [9]सूचयति — अपीति । प्रतियोग्यसमानाधिकरणत्वस्य[10] साधनविशेषणत्वेऽ-व्याप्तितादवस्थ्यमित्यत आह—[11]अत्यन्ताभावेति । इदं विशेषणं किं निश्चिता-व्याप्तिवारणाय, उत संदिग्धाव्याप्तिवारणाय । आद्य आह —नन्विति ।

---

1. ख. परास्तम्
2. प्रमेयधूमत्वादौ च
3. क. इत्याहुः
4. क. कुण्डलिता भागः नास्ति
5. क. नन्यूनातिरिक्तगौरवादिति
6. क. प्रमेयत्वावच्छिन्नानु-
7. ख. विशेष्यता
8. ख. कादाचित्कस्वरूप-
9. ख. ग दर्शयति
10. क. त्वं साधन-
11. क. अत्यन्ताभाव इति

## प्रकाशः

प्रतियोग्यसमानाधिकरणत्वमत्यन्ताभावविशेषणम् संयोगादिसाध्यकद्रव्यत्वादिनिष्ठव्याप्तौ अव्याप्तिवारणाय।

नन्वियमव्याप्तिर्न निश्चिता, द्रव्यत्वस्य संयोगसामान्यात्यन्ताभावसामानाधिकरण्यानिश्चयात्। गगनादावपि द्रव्ये किंचिदवच्छेदेन परमाण्वादिसंयोगो न भूतो न भावी न वर्तमान इत्यस्य प्रमाणाभावेन निश्चेतुमशक्यत्वात्, तत्र संयोगसामान्यात्यन्ताभावस्यापि[1] संदिग्धत्वात्। न च [2]सर्वत्र द्रव्ये यावत्संयोगविशेषाभावस्य सत्त्वेन तत्सामान्याभावानुमानमिति वाच्यम्। एकावच्छेदेन यावद्विशेषाभावस्य तथापि निश्चेतुमशक्यत्वात्ः एकावच्छेदकावच्छिन्नस्यैव तस्य सामान्याभावव्याप्तत्वात्। अन्यथा वृक्षादौ यत्र [3]कोऽपि प्रदेशो न संयोगरहितः तत्रापि तत्सामान्यात्यन्ताभावस्य सत्त्वे भावाभावयोरप्येकावच्छेदेन वृत्तिः स्यादिति महद्वैशसम्। न च संदिग्धाव्याप्तिवारणाय[4]तद्विशेषणोपादानमिति वाच्यम्। संदिग्धव्यर्थविशेषणतापत्तेरिति चेत्—

---

## तर्कचूडामणिः

[5]विभुद्रव्ये किंचिदवच्छेदेन संयोगसामान्याभावो[6]ऽप्यस्त्वित्यतः—**गगनादाविति**। **न भूत इति**। प्रतियोगितत्प्रागभावप्रध्वंसानामत्यन्ताभावविरोधित्वादिति भावः। एकावच्छेदेनानिश्चयेऽपि[7] यावद्विशेषाभावमात्रं [8]सामान्याभावलिङ्गं निश्चितमेवेत्यत आह—**एकेति**। विशेषाभाववत् सामान्याभावोऽप्यस्त्वित्यत आह—**भावाभावयोरिति**। अवच्छेदकभेदादविरोध इति भावः। अन्त्य आह—**न चेति**। जयदेवसमाधिमाह—**अयमिति**। **न च तत्रेति**। [9]तत्र व्याप्तिरेव

---

1. क. 'अपि' नास्ति
2. ख. सर्वत्रैव द्रव्ये
3. क. कोऽपिप्रदेशो
4. ख. वारणायैव तत्पदमिति
5. ख. 'विभुद्रव्ये किंचिदवच्छेदेन' नास्ति।
6. ख. ग. प्यस्तु तत्राह
7. क. 'अपि' नास्ति।
8. क. सामान्यलिङ्गं
9. ख. तथा चात्र व्याप्तिरेव

## प्रकाशः

न । अयमेतत्संयोगी [1]एतत्त्वादित्यत्राव्याप्तिनिश्चयेन तद्वारणार्थं तदुपादानात् । न च तत्र व्याप्तिमत्त्वे तत्संयोगाभावावच्छिन्नप्रदेशेऽपि[2] तदनुमानापत्तिरिति वाच्यम् । बाधेन तत्रानुमितिप्रतिबन्धात् । यथा गन्धप्रागभावावच्छिन्नो घटो [3]गन्धवानित्यत्रेति वक्ष्यते ।

ननु सामानाधिकरण्यं समानेनाधिकरणेन सम्बन्धः । सम्बन्धत्वं च विशिष्टधी[4]नियामकत्वं जनकत्वगर्भम् । तच्च व्याप्तिगर्भमिति आत्माश्रय इति

## तर्कचूडामणिः

नेति नाव्याप्तिरिति भावः । [5]बाधेनेति । न चास्य बाधोदाहरणत्वसम्भवे प्राचामसंकीर्णस्थलान्तरानुसरणानुपपत्तिः । अशोकवनिकान्यायेन तदुपपत्तेः । संयोगस्याव्याप्यवृत्तित्वे [6]विवादेनाविप्रतिपन्नस्यैवोदाहृतत्वाच्च । [7]ननु हेतुमति बाधे व्यभिचारध्रौव्यमत आह—यथेति । ननु [8]गन्धप्रागभावानुमाने [9]साध्यात्यन्ताभावासामानाधिकरण्येनाव्यभिचारेऽपि द्रव्यत्वस्य तादृशात्यन्ताभाव[10]सामानाधिकरण्येन व्यभिचार एवेत्यत आह— वक्ष्यत इति । "प्रतियोग्यसमानाधिकरणसाध्याभावसामानाधिकरण्यं व्यभिचारः" इति [11]बाधग्रन्थे वक्ष्यत इत्यर्थः । [12]जनकत्वेति । विशिष्ट[13]ज्ञानजनकत्वे सति अविशिष्ट[14]ज्ञानाजनकत्वं [15]नियामकत्व-

1. ख. इत्यादावव्याप्ति
2. क 'अपि' नास्ति
3. क गन्धवानितीति
4. क नियामकत्वं नियमश्च व्याप्तिगर्भ इति
5. क. 'बाधेनेति' नास्ति ।
6. क विवादेनापि प्रति-
7. क. ननु साध्याभाववति हेतुसद्भावे व्याप्ति-
8. ख. ग. गन्धप्रागभावस्थले
9. क. साध्यात्यन्ताभावसमाना-
10. क समूहाधिकरणत्वेन
11. क. 'बाध' नास्ति
12. ख 'जनकत्वेति' नास्ति
13. क. धीजनकत्वे
14. क. ज्ञानजनकत्वं
15. ग. तन्नियामकत्वम्

## प्रकाशः

चेत्—न। नियामकस्य सम्बन्धस्य व्याप्तिज्ञानविषयत्वेऽपि नियामकत्वरूपतत्सम्बन्धत्वस्य व्याप्तिज्ञानाविषयत्वात् संसर्गविधयैव तत्र तद्भानाभ्युपगमात्। प्रकारत्वे वा [1]तस्य संयोगत्वादिनैव रूपेण तथात्वात् न तु सम्बन्धत्वेन। तज्ज्ञानानां तु सम्बन्धज्ञानत्वेन जनकत्वमिति नाननुगमः।

---

## तर्कचूडामणिः

मित्यर्थः। तच्चेति। जनकत्वमित्यर्थः। यदि सम्बन्धत्वं व्याप्तिज्ञानविषयः स्यात् तदैव तज्ज्ञानस्य व्याप्तिज्ञानाधीनतया आत्माश्रयः स्यात्, न चैवम्। किं तु सम्बन्धमात्रमेव तद्विषयः। धूमवान् स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिवह्निमानित्येव व्याप्तिग्रहादित्याह—[2]नियामकस्येति। ननु सम्बन्धस्य सप्रतियोगिकतया तस्य प्रकारत्वे सम्बन्धत्वमपि प्रकारः स्यादित्यत आह—संसर्गेति। ननु व्याप्तिज्ञानं सहचारविशेष्यकं तद्विशेषणकं [3]वा। अन्यथा सहचारज्ञानस्य [4]तत्र हेतुत्वं न स्यात्। पूर्वानुपस्थितस्यापि [5]सहचारस्य संसर्गविधया भानसम्भवात् व्याप्तिज्ञानस्य सहचाराप्रकारत्वे सहचाराभाव[6]सन्देहप्रतिबन्धकत्वानुपपत्तेश्च। तथा च [7]संबन्धस्यापि प्रकारत्वमेवेत्यत आह—[8]प्रकारत्वे वेति। ननु यत्र समवायत्वस्य प्रकारत्वं तत्र सम्बन्धत्वस्यापि [9]प्रकारत्वमावश्यकम्, नित्यसम्बन्धरूपत्वात्समवायस्य[10] इत्यरुचेराह—यद्वेति। न विशिष्टेति।

---

1. क. तत्संयोगादिनैव
2. क. नियामकत्वस्येति
3. ख. ग. वा वाच्यम् अन्यथा
4. क. 'तत्र' नास्ति
5. क. 'सहचारस्य' नास्ति
6. क संदेहं प्रति प्रति-
7. ख. ग, सम्बन्धत्वस्य प्रकार-
8. ख प्रकारत्वे चेति
   ग. प्रकारत्वं चेति
9. क. प्रकारकत्वम्
10. क. ग. समवायत्वस्य

## प्रकाशः

यद्वा सम्बन्धत्वं न विशिष्टधीजनकत्वम्; किंतु विशेषणविशेष्यान्य-विशिष्टधीविषयत्वम् विशिष्टधीश्च विशेषणत्वधीः ।

तत्त्वं च स्वरूपसम्बन्धविशेषः । अन्यथा समूहालम्बनभेदानुपपत्तेः । स्वरूपसम्बन्धश्च स्वरूपेणैव भासते न तु सम्बन्धत्वेनेति नोक्तदोषः । विशेषणताविशेष एव तदित्यप्याहुः ।

---

## तर्कचूडामणिः

अतीन्द्रय[1]सम्बन्धाव्याप्तेरिति भावः । विशेषणविशेष्ययोरतिव्याप्तिवारणाय विशेषणविशेष्यान्यत्वं विषयविशेषणम् । ननु विशिष्टज्ञानत्वं वैशिष्ट्य[2]विषयक-ज्ञानत्वम् । तच्च सम्बन्ध इत्यात्माश्रयः । नापि विशेषणधीजन्यबुद्धित्वम् तज्जनकत्वस्यापि सम्बन्धघटितत्वादित्यत आह—**विशिष्टेति** । [3]विशेषणत्वमपि भासमानवैशिष्ट्यप्रतियोगित्वमिति पुनरपि स दोषस्तदवस्थ इत्यत आह—तत्त्वमिति । ननु विशिष्टज्ञाने विशेषणमेव विषयः, न तु विशेषणत्वम् । तथा च विशिष्टधीर्न [4]विशेषणत्वधीरित्याह—**अन्यथेति** । विशेषणत्वरूप[5]सम्बन्धाभाने दण्डी पुरुष इति विशिष्टज्ञानस्य दण्डपुरुषतत्सम्बन्धा इति [6]समूहालम्बनाद्वैलक्षण्यं न स्यादित्यर्थः । **उपाध्यायमतमाश्रित्येदम्** । वस्तुतस्तु विशेषणत्वं न भासत इति प्रपञ्चितमस्माभिः प्रत्यक्षपरिच्छेदे ।

---

1. क. सम्बन्धाव्याप्तिरिति
2. क. 'विषयक' नास्ति ।
3. क. 'विशेषणत्वमपि............ अन्यथेति' नास्ति ।
4. ग. विशेषणत्वधीरित्यत आह
5. ख. सम्बन्धाभावे
6. क. समूहालम्बनादभेदापत्तिरित्यर्थः

## प्रकाशः

अत्यन्ताभावपदं च विरोधिपरम्, न तु संसर्गाभावविशेषपरम्। अतोऽयं घटात्यन्ताभाववान् प्रमेयत्वादित्यत्र व्यभिचारिणि अभावप्रतियोगिकाभावानभ्युपगमेन प्रमेयत्वसमानाधिकरणात्यन्ता[1]भावप्रतियोगिघटात्यन्तभावसमानाधिकरणत्वेनातिव्याप्तिरिति दूषणमलग्नकं [2]बोध्यम्। विरोधित्वं च न नियमघटितम्, किंतु एकावच्छेदेन [3]सहानवस्थायित्वम्।

---

## तर्कचूडामणिः

ननु स्वरूपसम्बन्धस्यापि सम्बन्धत्वेन भाने [4]आत्माश्रयतादवस्थ्यमित्यत आह—**स्वरूपेति**। उक्तप्रकारेण सम्बन्धत्वनिर्वचने तस्य [5]विशेषणताविशेषरूपत्वे मानाभाव [6]इत्यस्वरसं सूचयति--**अपीति**। (तेनेति) [अत इति]। [7]न चात्यन्ताभावपदं भावाभावसाधारणपरमेवास्त्विति वाच्यम्। [8]तस्योभयपरत्वेऽपि उभयसाधारणविरोधित्वस्य वाच्यत्वेन विरोधिपरत्व एव पर्यवसानादिति भावः। **अभावप्रतियोगिकेति**। अभावमात्रप्रतियोगिकेत्यर्थः। घटतत्प्रागभाव[9]प्रतियोगिघटात्यन्ताभावस्वीकारादिति बोध्यम्। ननु विरोधित्वमपि[10] सहानवस्थाननियम इत्यात्माश्रय इत्यत आह—**विरोधित्वं चेति**। संयोगाभावस्यापि विरोधित्वलाभायाह—**एकावच्छेदेनेति**।

---

1. ख. भावाप्रतियोगि-
2. ख. वेदितव्यम्
3. ख. सहानवस्थितत्वम्
4. ख. आत्माश्रयतादवस्थ्यं तत्राह
5. क विशेषणतारूपत्वे
6. ख इत्यनुशयमाविष्करोति
7. ख. न चात्यन्ताभावसाधारणपरमेवास्तु
8. क चात्यन्ताभावसाधारणरूपत्वस्यानश्यवाच्यत्वेन
   ग. तस्योभयपरत्वेऽप्युभयसाधारणस्य विरोधित्वस्यावश्यवाच्यत्वेन
9. क. प्रतियोगिकघटा-
10. ग. 'अपि' नास्ति

## तर्कचूडामणिः

नन्वेकावच्छेदेनेति व्यर्थम् । संयोगाभावस्याविरोधित्वेऽपि अनिष्टाभावात् । अत एव प्रतियोग्यसमानाधिकरणपदमपि व्यर्थम् । उक्तलक्षणस्य द्रव्यत्वेऽपि सत्त्वेनाव्याप्तेरभावात् । न च सहानवस्थितत्वं यदि तदधिकरणानधिकरणत्वं तदा संयोगाभावस्य कर्मादिनिष्ठस्य तदधिकरणानधिकरणत्वाभावेन [1]सत्त्वादेः संयोगादिव्याप्यतापत्तिः । यदि च तदनधिकरणाधिकरणत्वं तदा [2]संयोगाभावस्यापि तथात्वेन द्रव्यत्वस्य संयोगव्याप्यतानापत्तेरिति वाच्यम् । [3]साधनसामानाधिकरण्यावच्छेदेन [4]तदनधिकरणाधिकरणत्वस्य विवक्षितत्वात् । प्रतियोग्यसमानाधि[5]करणविशेषणपक्षेऽपि तस्यावश्यवाच्यत्वात् । संयोगाभावस्य च (संयोगानधिकरणत्वं) [संयोगानधिकरणाधिकरणत्वं] कर्मादौ सत्तासामानाधिकरण्यावच्छेदेन, न तु द्रव्यत्वावच्छेदेनेति [6]नाव्याप्त्यतिव्याप्ती ।

एतेनान्योन्याभावस्यापि[7] प्रतियोग्यनधिकरणाधिकरणत्वेन विरोधित्वापत्तौ वह्न्यादेस्तादृशाभावप्रतियोगितया धूमे वह्निव्याप्यता न स्यात् । तदनधिकरणमात्राधिकरणत्वविवक्षायां संयोगाभावस्याविरोधित्वापत्तौ [8]सत्त्वादेरपि संयोगव्याप्यतापत्तेरिति निरस्तम् । [9](ध्वंसादेः स्थूलकाले प्रतियोगिसमानाधिकरणत्वेऽपि एकावच्छेदेनासमानाधिकरणतया प्रसिद्ध्यभावेनाप्यभावाच्च) । [10]साध्यान्योन्याभावस्य विरोधि-

---

1. ख. सत्तादेः संयोगव्याप्यतापत्तिः
2. क. संयोगाभावस्य तथात्वेन
   ग. संयोगाभावस्यापि प्रतियोग्यनधिकरणकर्तृत्वादिनिष्ठत्वेन
3. क. साध्यसामाना-
4. क. तदनधिकरणानधिकरणत्वस्य
5. क. करणपदप्रक्षेपे तस्यावश्यकत्वात् संयोगाभावस्य संयोगानधिकरणानधिकरणत्वं
6. ख. 'नाव्याप्त्यतिव्याप्ती' नास्ति
7. क. 'अपि' नास्ति ।
8. ख. ग. सत्तादेः संयोगव्याप्यत्वापत्तिरिति
9. ख. ग. 'ध्वंसादे ............ प्यभावाच्च' इति ग्रन्थस्त्रुटित
10. ग. साध्यान्योन्याभावस्याविरोधि-

## तर्कचूडामणिः

त्वेऽपि तद्विरोधित्वस्य [1]साधनसामानाधिकरण्यावच्छिन्नत्वाभावात् । न हि ह्रदादिनिष्ठवह्न्यन्योन्याभावस्य धूमसामानाधिकरण्यावच्छिन्नत्वमिति चेत् —

अत्र ब्रूमः । यद्यपि [2]सहानवस्थितत्वस्य तदनधिकरणाधिकरणत्वरूपत्वे प्रतियोग्यसमानाधिकरणपदं व्यर्थमेव[3] । तथापि प्रकृते तदधिकरणानधिकरणत्वमेव विवक्षितम् । एवं च [4]सत्त्वादेः संयोगव्याप्यतापत्तिः । जातौ व्यक्तेः [5]कालिकव्याप्त्यापत्तिश्च । व्यक्तिध्वंसस्य [6]व्यक्त्यधिकरणस्थूलकालाधिकरणत्वेन [7]व्यक्तेस्तादृशविरोध्यप्रतियोगित्वात् [8]ध्वंसादेः स्थूलकाले प्रतियोगिसमानाधिकरणत्वेऽपि एकावच्छेदेन समानाधिकरणतया प्रसिद्ध्यभावेनातिव्याप्त्यभावाच्च ।

यदि च सर्वस्य कालवृत्तितया विरोधित्वस्याप्रसिद्ध्या नातिव्याप्तिः, तदा नित्ययोरपि [9]कालिकी व्याप्तिर्न स्यात् । अतस्तद्वारणाय एकावच्छेदेनेति । संयोगात्यन्ताभावस्यैकदेशावच्छेदेन [10]प्रतियोग्यधिकरणाधिकरणत्वाभावात्[11] । एवमपि द्रव्यत्वव्याप्तावव्याप्तिः तद्वारणाय [12]प्रतियोग्यसमानाधिकरणत्वविशेषणम् । तदर्थश्च प्रतियोग्यनधिकरणाधिकरणत्वमेव, न तु तदधिकरणानधिकरणत्वम् ।

---

1. ख. साधनासमाना-
2. क. सहानवस्थितत्व
3. क. एतदनन्तरम् 'एकावच्छेदेनेति न तथा' इत्यधिकपाठः ।
4. क. सत्तायाः ग. सत्त्वादेः
5. क. कालिकव्याप्त्यनापत्तिश्च
6. ग. यक्त्यधिकरणस्थूलकालाधिकरणतया प्रतियोग्यधिकरणानधिकरणत्वाभावात् व्यक्तेः
7. क. वह्निव्यक्तेः
8. क. 'ध्वंसादेः स्थूलकाले-...... तिव्याप्त्यभावाच्च' इति ग्रन्थस्त्रुटितः ।
9. ख. कालिकव्याप्ति
10. ख, प्रतियोग्यधिकरणत्वाभावात्
    ग. प्रतियोग्यनधिकरणानधिकरणत्वाभावात्
11. ग. एतदनन्तरम् 'ध्वंसादेः स्थूलकाले प्रतियोगिसमानाधिकरणत्वेऽपि एकावच्छेदेन समानाधिकरणतया प्रसिद्ध्यभावेनातिव्याप्त्यभावाच्च' इत्यधिकपाठः ।
12. ख. ग. प्रतियोग्यसमानाधिकरणपदम्

## तर्कचूडामणिः

सत्तायाः [1]संयोगव्याप्यतापत्तेः, नित्ययोः [2]कलिकव्याप्त्यनापत्तेश्च । न चैवं संयोगाभावस्य [3]तादृशतया द्रव्य(त्व)स्य संयोगाव्याप्यत्वापत्तिः इति वाच्यम् । [4]कर्मादावेव तदभावस्य तदनधिकरणाधिकरणतया तादृशाधिकरणत्वस्य साधन-सामानाधिकरण्यावच्छिन्नत्वाभावात् तदवच्छिन्नत्वस्य वक्ष्यमाणत्वात् । न च [5]विरोधिन एव तद्विशिष्टत्वं विवक्ष्यतामिति वाच्यम् । [6]वृक्षाद्यंशेऽपि संयोगा-भावस्योक्तविरोधित्वाश्रयतया तस्य [7]द्रव्यत्वसामानाधिकरण्याविशिष्टत्वादिति ।

वस्तुतस्तु अत्यन्ताभावपदं न विरोधिपरम् । [8]किंतु अभावमात्रपरम् । एवं च तादृशान्योन्याभावप्रतियोगिसाध्यसमानाधिकरणतया धूमादेस्तद्व्याप्यत्वं न स्यादिति प्रतियोग्यसमानाधिकरणपदम् । न च [9](प्रतियोगिविरहरूपत्वम्) [प्रतियोगित्वमभावविरहरूपम्], तथा चान्योन्याभावोऽपि स्वविरहात्मकप्रतियोगि-तावच्छेदकसमानाधिकरण एवेति वाच्यम् । स्वरूपसम्बन्ध[10]विशेषस्यैव प्रतियोगि-त्वस्यात्र विवक्षितत्वात् । [11]न चैवमप्यभावप्रतियोगिकाभावेन पूर्वोक्तघटात्यन्ताभाव-साध्यक[12]हेतावतिव्याप्तिरिति वाच्यम् । [13]भावाभावसाधारण[14]धर्मत्वस्यैवात्र विवक्षितत्वात् । न चायं [15]घटः तन्तुपटाविति प्रतीतिविशेष्यत्वात्[16] इत्यत्राति-

---

1. ख. संयोगव्याप्त्यापत्तेः
2. क. कालिकाव्याप्त्यनापत्तेश्च
3. क. तादृशस्य संयोगव्याप्यतापत्ति-रिति
4. ख. कर्मादावेतदभावस्य
5. क. विरोधित्वमेव ग. विरोधित्व एव
6. ग. वह्न्याद्यंशेऽपि
7. ख. द्रव्यत्वासामानाधिकरण्य-विशिष्ट-
8. क 'किं तु' नास्ति
9. ख. प्रतियोगित्वं तथा च
   ग. प्रतियोगित्वं स्वविरहरूपत्वम्
10. क. विशेषस्य प्रतियोगित्वस्यैवात्र
11. क. न चैवमभाव-
    ग. न चैवं स्वाभावप्रतियोगित्वा-भावाभावेन
12. ख. हेतावव्याप्तिः
13. ख. भावाभावसाधारणत्वादिति वाच्यम्
14. ख. 'धर्मत्वस्यैवात्र .......... पटरूपप्रतियोगिसमानाधिकरण' नास्ति ग. धर्मस्यैवात्र
15. ग. पटः
16. ग. प्रमाविशेष्यत्वात्

## प्रकाशः

एतेन संसर्गाभाववद्घटितमत्यन्ताभावत्वम्। संसर्गाभावत्वं च प्रतियोग्यारोपजन्यज्ञानविषयाभावत्वम्। जन्यत्वं च नियमघटितमित्यात्माश्रय इति निरस्तम्।

---

## तर्कचूडामणिः

अव्याप्तिः, पटान्योन्याभावपटत्वात्यन्ताभावयोरभेदेन तन्तुनिष्ठपटत्वात्यन्ताभावस्य पटरूपप्रतियोगिसमानाधिकरणत्वादिति वाच्यम्। तद्भेदस्याग्रे व्यवस्थापयिष्यमाणत्वात्।

नन्वत्यन्ताभावपदेन[1] धर्ममात्रविवक्षायां 'अयं पटवान् [2]तन्तुविशेषत्वात्' इत्यत्राव्याप्ति। [3]पटस्य तन्तुसमानाधिकरणपटत्वादिप्रतियोगिकत्वादिति वाच्यम्। अप्रतियोगीत्यत्र प्रतियोगिपदस्य विरोधिपरत्वात्। पटस्य च पटत्वादिनिरूपकत्वेऽपि तद्विरोधित्वाभावात्। [4]अन्यथा विरोधिपरत्वपक्षेऽपि पटत्वादेः स्वात्यन्ताभावविरोधित्वेन उक्तदोषतादवस्थ्यात्। न च [5]विरोधिपदं प्रकृतसाध्यविरोधिपरम्। [6]केवलान्वयिनि, गगनादौ तस्य [7]प्रसिद्धिरिति वाच्यम्। प्रतियोग्यनधिकरणाधि[8]करणत्वरूपस्य प्रतियोग्यसमानाधिकरणत्वस्य गगनादावभावात्। तस्मादत्यन्ताभावपदं भावाभावसाधारणधर्मपरम्। [9]उत्तरत्र प्रतियोगिपदस्य विरोधि[10]परत्वसूचनाय धर्मपदस्थाने अत्यन्ताभावपदं प्रयुक्तमिति [11]सारम्। एवं च (व्यक्तिरपि) [व्यक्तेरपि] जातिसमानाधिकरणप्रलयकालत्वप्रतियोगितया जातौ

---

1. क. पदस्य
2. क. तन्तुविशेषवत्त्वात्
3. ख. घटस्य
4. क. 'अन्यथा' नास्ति
5. ख. 'विरोधिपदं प्रकृतसाध्य' नास्ति
6. ख. ग. केवलान्वयिन्यपि
7. ख. ग. प्रसिद्धेरिति
8. क. करणरूपत्वस्य
   ग. करणत्वरूपप्रति
9. ख. ग. उत्तरप्रति-
10. ख. परतया सूचनाय
    ग. परतासूचनाय
11. ग. तु तत्त्वम्

## प्रकाशः

अत एव जातौ व्यक्तेः कालिकी व्याप्तिः स्यात् । प्रलये तद्ध्वंससत्त्वेन तदत्यन्ताभावाभावात् । नित्यत्वेन तदापि तदभ्युपगमे नित्ययोरपि कालिकी व्याप्तिर्न स्यात् । प्रलये [1]तदत्यन्ताभावस्य सत्त्वेन परस्परसमानाधिकरणात्यन्ताभावप्रतियोगित्वादित्यपि[2] दूषणं परास्तं [3]वेदितव्यम् । कालिकव्याप्तौ ध्वंसस्यापि विरोधित्वेनातिप्रसक्त्यभावेन तदत्यन्ताभावसत्त्वासत्त्वयोरविचार्यत्वात्[4] ।

वस्तुतस्तु प्रतियोगि[5]समवायिदेश एव तयोर्विरोधात् प्रलयकाले व्यक्तिध्वंससत्त्वेऽपि तदत्यन्ताभावसत्त्वमप्रत्यूहम् । अन्यथा तस्य नित्यत्वभङ्गापत्तेः । न च एवं नित्ययोरपि कालिकव्याप्तिर्न स्यादित्युक्तमिति वाच्यम् । तदा तदत्यन्ताभाव-

---

## तर्कचूडामणिः

[6]न व्यक्तिव्याप्तिप्रसङ्ग इति ध्येयम् । अत एवात्यन्ताभावपदं संसर्गाभावपरमिति जयदेवमतं [7]परास्तम् । उक्तेनैवोपपत्तेरिति ।

संसर्गाभावत्वमिति । [8]अनाद्यन्तसंसर्गाभावत्वमित्यर्थः । ननु [9]सामान्यस्य ध्वंसानङ्गीकारेण प्रलयकालीनध्वंसप्रतियोगित्वावच्छेदकं तत्तद्घटत्वं [10]न घटत्वम् । तथा [11]चानवच्छेदकघटत्वावच्छिन्नघटसामानाधिकरण्यं घटत्वजाते[12]रित्यतिव्याप्तिरेवेत्यस्वरसादाह — [13]वस्तुतस्त्विति । तदत्यन्ताभावेति । तस्य च पूर्वोक्तं प्रतियोग्यसामानाधिकरण्यमस्तीति भावः । तस्य नित्यात्यन्ताभावस्य ।

---

1. ख. तदत्यन्ताभावस्यापि
2. क. 'अपि' नास्ति ।
3. क. 'वेदितव्यम्' नास्ति ।
4. ख. योस्तदानीमविचारणीयत्वात्
5. क. समवायदेश
6. ख. 'न' नास्ति
7. म. अपास्तम्
8. ख. ग. अनाद्यनन्त-
9. क. ग. सामान्यध्वंसा
10. क. 'न घटत्वं' नास्ति ।
11. क. चानवच्छेदकावच्छिन्न-
12. क रित्यस्वरसादाह
13. ग. वस्तुत इति ।

## प्रकाशः

सत्त्वेऽपि तस्य प्रतियोगिसमानाधिकरणत्वात्, कालिकव्याप्तौ [1]तस्याविरोधित्वाच्च। अत्यन्ताभावपदेन विरोधित्वस्योक्तत्वात्। न च व्यक्तिध्वंसस्यापि प्रतियोगि-[2]समवायिदेशवृत्तित्वेन प्रतियोगिसमानाधिकरणत्वादुक्तातिप्रसङ्गः तदवस्थ एवेति वाच्यम्। ग्राह्यसम्बन्धेनासामानाधिकरण्यस्योक्तत्वात्। अस्ति च तद्ध्वंसे तथा, प्रतियोग्यसमानकालत्वात् समानकालत्वस्य च ग्राह्यत्वात्। तस्माद्दैशिकव्याप्तौ प्रतियोग्यसमानदेशत्वम्, कालिकव्याप्तौ प्रतियोग्यसमानकालत्वं प्रतियोग्यसमानाधिकरणत्वं पर्यवस्यतीति नोक्तदोषः।

ननु धूमवति महानसादौ समवायसम्बन्धावच्छिन्नवह्न्यभावमादायाव्याप्तिरिति चेत्—न। ग्राह्यसामानाधिकरण्यप्रविष्टसाध्यसम्बन्धावच्छिन्नाभावस्य विवक्षितत्वात्।

---

## तर्कचूडामणिः

ननु नित्ययोर्विरोध्यप्रतियोगित्वेऽपि अत्यन्ताभावप्रतियोगित्वमेवेत्यत आह—**अत्यन्तेति**। ध्वंसमादाय [3]यदुक्तं समाधानं तत्र शङ्कते—**न चेति**। तथा च ग्राह्यसम्बन्धेनासामानाधिकरण्यमित्यर्थः। **प्रतियोग्यसमानदेशत्वमिति**। [4]प्रतियोग्यनधिकरणदेशवृत्तित्वमित्यर्थः। प्रतियोग्यसमानकालत्वं प्रतियोग्यनधिकरणकालवृत्तित्वमित्यर्थः। ग्राह्यसामानाधिकरण्यप्रविष्टाधिकरणत्वेन देशकालयोरनुगम इति भावः।

**नन्विति**। अत्र [5]समवायसम्बन्धो न प्रतियोगितावच्छेदकः। तथा सति वह्नित्वस्यानवच्छेदकतया अव्याप्त्यनवकाशात्। किं तु अधिकरणे प्रतियोगिन

---

1. ख. तस्य विरोधित्वाभावाच्च
2. क. समानदेश-
3. क. 'यद्' नास्ति
4. क. प्रतियोग्यनधिकरणत्वमित्यर्थः प्रतियोग्यनधिकरणतया ग्राह्यसामानाधिकरण्यप्रविष्टाधिकरणत्वेन
5. क. समवायिसम्बन्धः

## प्रकाशः

भवति च धूमवह्न्योरेकाधि[1]करणे संयोगस्य ग्राह्यतया संयोगावच्छिन्नाभावस्तथा, न तु समवायावच्छिन्नाभावोऽपि। तदभावस्य वह्निसमानाधिकरणत्वेन [2]प्रतियोगीत्यादिपदेनापि [3]तन्निराकरणसम्भवाच्च।

---

## तर्कचूडामणिः

[4]आरोपसम्बन्धः। तद्भेदेनाप्यभावभेदस्य केवलान्वयिनि वक्ष्यमाणत्वादिति भावः। ग्राह्येति। ग्राह्यं यत्सामानाधिकरण्यं तत्र प्रविष्टो यः सम्बन्धः [5]तदवच्छिन्नः तदारोपपूर्वकप्रतीतिविषय इति यावत्। तदभावस्येत्यर्थः। द्रव्यत्वेन प्रमेयत्वानुमाने द्रव्यत्वसमवायस्यापि ग्राह्यसामानाधिकरण्यप्रविष्टतया तदवच्छिन्नप्रमेयत्वाभावं प्रति प्रमेयत्वस्य प्रतियोगितया द्रव्यत्वस्य [6]तदव्याप्यतापत्तिरित्यत उक्तम्—साध्यसम्बन्धेति। तथा च [7]तत्र प्रमेयत्वस्वरूपसम्बन्धस्यैव ग्राह्यतया तत्सम्बन्धेन तत्र न तदभाव इत्यर्थः।

प्रतियोगीति। प्रतियोग्यसमानाधिकरणपदेनेत्यर्थः। एकावच्छेदेन [8]सहावस्थिततया तस्य विरोधित्वाभावाच्चेत्यपि [9]द्रष्टव्यम्। ननु समवायावच्छिन्नवह्न्यभावोऽपि प्रतियोग्यसमानाधिकरण एव। न हि प्रतियोगिसामानाधिकरण्याभावमात्रं तत्। तथा सति प्रतियोगितदभावयोः काले सामानाधिकरण्येन [10]तदभावाप्रसिद्धेः। न च कालभिन्नाधिकरणे प्रतियोगिसामानाधिकरण्याभावस्तदिति [11]वाच्यम्। [12]कालिकव्याप्यव्याप्यतापत्तेः। तत्र कालभिन्नप्रतियोग्यनधिकरणकालाप्रसिद्धेः।

---

1. ख. करणसंयोगस्य
2. ग. प्रतियोगित्वादिपदेनापि
3. ख. तन्निवारण-
4. क. आरोप्यसम्बन्धः
5. ख. 'तदवच्छिन्नः' नास्ति
6. ख. प्रमेयत्वव्याप्यत्वापत्तिः
7. क. यत्र
8. क सहावस्थितया
   घ. सहानवस्थितया
9. ग. बोध्यम्
10. ग. तदभावप्रसिद्धेः
11. ग. 'तदिति वाच्यम् ........ तदभावः' नास्ति
12. ख. कालिकव्याप्यव्याप्यापत्तेः

## प्रकाशः

[1]न च यत्सम्बन्धावच्छिन्नप्रतियोगिकोऽभावस्तस्य तत्सम्बन्धेन तदसामानाधिकरण्यं अवश्यं वाच्यम् । अन्यथा प्रतियोगितदभावयोः काले सामानाधिकरण्यमादायासम्भवः स्यादिति वाच्यम् । [2]ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धेन तदसामानाधिकरण्यस्य विवक्षितत्वात् । धूमवह्निव्याप्तौ [3]संयोगस्य तत्प्रविष्टतया तेनैव सम्बन्धेन प्रतियोग्यधिकरणे तदभावस्य वह्निसमानाधिकरणत्वात् । न हि वह्निर्महानसादौ संयोगेन नास्तीति ।

## तर्कचूडामणिः

किंतु [4]ग्राह्यसामानाधिकरण्यप्रविष्टसम्बन्धेन [5]प्रतियोग्यधिकरणवृत्तित्वं तत्समानाधिकरणत्वम्, तदभावः तदसामानाधिकरण्यम् । तथा च नाप्रसिद्धिः । कालस्य जगदाधारताप्रयोजकसम्बन्धेन [6]प्रतियोग्यधिकरणतया ग्राह्यसंयोगादिसम्बन्धेन तदधिकरणत्वाभावात् । एवं च समवायावच्छिन्नवह्न्यभावस्य ग्राह्यसंयोगसम्बन्धेन [7]वह्न्यसमानाधिकरणतया प्रतियोग्यसमानाधिकरणत्वमेवेत्याशङ्क्य निराकरोति— **न चेति** । एवमपि ग्राह्यसम्बन्धेन यत् [8]प्रतियोग्यधिकरणं तद्वृत्तित्वमेवास्तु । [9]तावताप्यप्रसिद्धिवारणात् । न तु तेन सम्बन्धेन, संयोगाभावस्यापि तदसमानाधिकरणतया द्रव्यत्वस्य [10]संयोगाव्याप्यत्वापत्तेः । एवं च समवायावच्छिन्नाभावोऽपि ग्राह्यसम्बन्धेन प्रतियोग्यधिकरणे महानसादौ [11]वर्तत इति नाव्याप्तिरित्यभिप्रेत्याह—**धूमेति** । **तेनैवेति** । संयोगसम्बन्धेन यत् वह्न्यधिकरणं [12]तद्वृत्तित्वात् । तदेवाह—**न हीति** ।

1. ख न च ग्राह्यसामानाधिकरण्यमवश्यं वाच्यम्
2. ख. 'ग्राह्य.......विवक्षितत्वात्' इति ग्रन्थस्त्रुटितः
3. ख. संयोगस्यैव
4. ख. 'ग्राह्य' नास्ति
5. क. प्रतियोग्यनधिकरण-
6. ग. प्रतियोगितदभावाधिकरणतया
7. ग. वह्निसमाना-
8. क. प्रतियोग्यनधिकरणम्
9. ख. तावता परप्रसिद्धिनिवारणात्
10. क संयोगव्याप्यतापत्तेः
11. क. वर्तत एवेत्यभिप्रेत्याह
12. क. तद्वृत्तित्वादित्यर्थः ।

## प्रकाशः

नन्वयं घटधूमरूपद्वयवान् वह्निमत्त्वादित्यत्रातिव्याप्तिः। द्वित्वस्य व्यासज्यवृत्तित्वेन वह्निसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वादिति चेत् — न। घटाभावधूमाभावयोर्वह्निसमानाधिकरणतया तादृशाभावप्रतियोगितात्वेनानुगतप्रतियोगितया सह द्वित्वस्यानतिरिक्तवृत्तित्वात् अवच्छेदकपदस्य प्रकृतेऽनतिरिक्तवृत्ति-

---

## तर्कचूडामणिः

यद्यपि यत्सम्बन्धावच्छिन्नाभावो हेतुसमानानाधि[1]करणस्तत्सम्बन्धेन यत् प्रतियोग्यधिकरणं न भवति तद्वृत्तित्वविवक्षायामुक्ताभावोऽपि प्रतियोग्यसमानाधिकरण एव, तथापि [2]तन्नात्र विवक्षितमिति ध्येयम्। नन्वयोगोलके [3]तदुभयाभावसत्त्वात् द्वित्वं तदवच्छेदकमेवेत्यत आह—द्वित्वस्येति। तदङ्गीकारे अपसिद्धान्तादिति भावः। अन्यावच्छिन्नाभावे कथमन्यस्यावच्छेदकत्वमित्यत्राह[4]—अवच्छेदकेति।

नन्वेवं वह्नित्वमपि धूमसमानाधिकरणात्यन्ताभाव[5]प्रतियोगितात्वेनानुगतीकृततत्तत्प्रतियोगितावच्छेदकं स्यात्। तस्यापि धूमसमानाधिकरणात्यन्ताभावप्रतियोगितात्वेनानु[6]गतीकृततत्तत्प्रतियोगिताश्रयाभिमात्रवृत्तित्वात्। न चैकाधिकरण्यावच्छिन्नहेतुसमानाधिकरणात्यन्ताभावप्रतियोगिमात्रवृत्तित्वं विवक्षितम्। वह्नित्वं तु न तथा, हेतुसमानाधि[7]करणयावत्स्वाश्रयाभावानामैकाधिकरण्यावच्छिन्नत्वाभावादिति वाच्यम्।

---

1. क. करणसम्बन्धेन यत् प्रतियोग्यनधिकरणं
2. क तत्र
3. ख 'तद्' नास्ति
4. ख. त्वं, तत्राह
5. ख. ग. 'प्रतियोगितात्वेनानुगतीकृततत्त' नास्ति।
6. क. गतप्रतियोगिताश्रय-
7. ख. करणस्वाश्रया-

## प्रकाशः

त्वार्थकत्वात् । एकसत्त्वे द्वित्वावच्छिन्नप्रतियोगिकाभावानभ्युपगमेऽपि धूमघटोभयाभाववति द्वित्वावच्छिन्नतदुभयाभावाभ्युपगमाच्च तस्य सामान्याभावतुल्ययोगक्षेमत्वात् ।

---

## तर्कचूडामणिः

द्रव्यत्वस्य संयोग[1]व्याप्यत्वापत्तेः । संयोगत्वस्यापि [2]द्रव्यत्वसमानाधिकरणैकाधिकरण्यावच्छिन्न[3]यावत्संयोगाभावप्रतियोगितानतिरिक्तवृत्तितया [4]तदवच्छेदकत्वात् । न चैकावच्छेदकावच्छिन्नत्वं विशेषणम्, [5]यावत्संयोगविशेषाभावस्य नैकावच्छेदेन हेतुसामानाधिकरण्यमिति वाच्यम् । ऐकाधिकरण्यावच्छिन्नत्ववैयर्थ्यापत्तेः । न च प्रतियोग्यसमानाधिकरणपदेन तद्वारणं सम्भवति । तत्तत्संयोगाभावानां [6]तत्तदनधिकरणघटाद्यधिकरणत्व त् [7]द्रव्यत्वसामानाधिकरण्यावच्छिन्नत्वाच्च । किं चायं घटपटवृत्तिद्वित्वात्यन्ताभाववान् [8]द्रव्यत्वादित्यत्रातिव्याप्तिः । तत्र साध्याभावरूपद्वित्वस्यैकाधिकरण्यावच्छिन्नत्वाभावेन [9]एकावच्छेदकावच्छिन्नत्वाभावेन तादृशाभावप्रतियोगितानवच्छेदकद्वित्वात्यन्ताभावत्वावच्छिन्नत्वात् तत्साध्यस्य । न चाभावाभावोऽन्य एवेति वाच्यम् । अपसिद्धान्तात् मानाभावाच्च । अन्यत्वेऽपि तस्य प्रतियोगिसमानदेशत्वनियमेन द्वित्ववदेव तस्यापि व्यासज्यवृत्तित्वाच्चेत्यरुचेराह — एकेति । ननु तत्रापि प्रत्येकप्रतियोगिकाभा द्वयादेव तद्व्यवहारोपपत्तौ अतिरिक्ताभावे मानाभाव एवेत्यत आह — तस्येति । अवच्छेदकभेदेन तद्भेद इति भावः ।

---

1. ख. व्याप्यतापत्तेः
2. ख. सामानाधिकरण्यैका-
3. क. यत्संयोगा-
4. क. एतदव-
5. क. यावत्संयोगाभावाद्यनेकावच्छेदेन हेतुसमानाधिकरणा इति
6. ग. तत्तदधिकरण-
7. ख. तुरीयत्वा-
8. क द्वित्वात्यन्ताभावात्
9. ख. 'एकावच्छेदकावच्छिन्नत्वाभावेन' नास्ति ।

## प्रकाशः

ननु वह्निमानयं वह्न्याकाशरूपद्वित्वाश्रयवानेतत्त्वादित्यत्र तथाऽयतिव्याप्तिः, वह्नेर्हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगित्वेन तद्द्वित्वस्य हेतुत्वसमानाधिकरणाभाव-प्रतियोगितातिरिक्तवृत्तितया तदनवच्छेदकत्वात्। वह्निसत्त्वे तद्द्वित्वावच्छिन्नाभावा-सम्भवाच्चेति चेत्—न। द्वित्वस्य तथात्वेऽपि हेतौ तदवच्छिन्नसामानाधिकरण्या-भावादेवातिव्याप्त्यसम्भवात्। न हि तद्द्वित्वावच्छिन्नं वह्निमात्रम्, किं त्वाकाशमपि, द्वित्वस्योभयत्र पर्याप्तेः।

ननु तथापि [1]यत्र निर्घटवह्निमन्तं पर्वतं पक्षीकृत्य अयं वह्निघटरूपद्वयवान् एतद्धूमवत्त्वादिति साधयति तत्रातिव्याप्तिरिति चेत्—न। तत्रापि [2]द्वित्वावच्छिन्न-घटसामानाधिकरण्याभावादेवातिव्याप्त्यसम्भवात्। अन्यथा तस्य सद्धेतुत्वादेव।

---

## तर्कचूडामणिः

**नन्विति।** अत्र हेतोर्नियमेन वह्निसमानाधिकरणतया द्वित्वस्य तदन-वच्छेदकत्वादिति भावः। तद्द्वित्वस्य विशेषाभावप्रतियोगितावच्छेदकत्वं नेत्याह— **वह्नेरिति।** नापि सामान्याभावप्रतियोगितावच्छेदकत्वमित्याह— **वह्नीति।** **तथात्वेऽपि।** अनवच्छेदकत्वेऽपीत्यर्थः। **द्वित्वस्येति।** वह्नित्वादेश्च प्रत्येकपर्यव-सिततया तदवच्छिन्नत्वं प्रत्येकवह्नेरस्तीति भावः।

**तथापीति।** आकाशस्य निरधिकरणत्वेन तत्सामानाधिकरण्याभावेऽपी-त्यर्थः। [3]**तत्रातिव्याप्तिरिति।** तद्धूमव्यक्ते[4]स्तद्घटव्यक्त्यधिकरणवृत्तित्वसम्भवेन

---

1. क. 'यत्र' नास्ति।
2. ख. तद्द्वित्वावच्छिन्न-
3. क. तत्रातिव्याप्तेरिति।
4. ख, तद्घटाधिकरण-

## प्रकाशः

नन्वेवमपि यत्र सैव [1]धूमवह्निव्यक्तिः तद्घटाधिकरणं नीयते तत्र तत्तद्-द्वित्वावच्छिन्नसामानाधिकरण्यस्यापि सत्त्वादुक्तदोषस्तदवस्थ एवेति चेत् — न। स्वाधिकरणत्वावच्छेदेन तदवच्छिन्नसामानाधिकरण्यस्य विवक्षितत्वात्। प्रकृते निर्घटेऽपि पर्वते तद्धूमसत्त्वेनातथात्वात्। न चैतावतैव व्यभिचारिव्यवच्छेदे किं पूर्वप्रतीकेनेति वाच्यम्। यत्किंचिद्वह्न्यधिकरणत्वावच्छेदेन धूमसामानाधिकरण्य-सत्त्वेन व्यभिचारिसाधारण्यात्।

---

## तर्कचूडामणिः

[2]द्वित्वावच्छिन्नसामानाधिकरण्यवत्त्वादित्याशयः। तमजानानो दूषयति—तत्रेति। आशयमुद्घाटयति—नन्विति। घटस्यैव [3]तद्धूमाधिकरणानयने [4]सद्धेतुत्वमेवे-त्यभिप्रेत्याह—व्यक्तिरिति। [5]स्वाधिकरणत्वेति। हेत्वधिकरणत्वावच्छेदेनेत्यर्थः। पूर्वप्रतीकेनेति। [6]अव्यभिचारांशेनेत्यर्थः।

नन्वेवं साधनतावच्छेदकावच्छिन्नाधिकरणत्वावच्छेदेन तदवच्छिन्नसामा-नाधिकरण्यं विवक्ष्यतां लाघवात्, तावतैव [7]व्यभिचारनिरासात्। अस्य सामान्य-लक्षणतया साधनतावच्छेदकावच्छिन्नत्वविवक्षाया[8] आवश्यकत्वाच्च। किं च

---

1. क धूमव्यक्तिस्तद्घटाधिकरणं नीयते तदा द्वित्व-
2. क. द्वित्वावच्छिन्नसामानाधिकरण्या- दित्याशयमजानानो
   ख द्वित्वासामानाधिकरण्यसत्त्वा- दित्याशयस्तमजानानो
3. ग समवायिकारणानयने
4. ख. तद्धेतुत्वमित्यभिप्रेत्याह सैव व्यक्तिरिति
5. क. स्वाधिकरणत्वेनेति
6. क. अव्यभिचारांशेत्यर्थः
7. क. व्यभिचारिनिरासात्
8. क. विवक्षया

## प्रकाशः

यदि चैकसत्त्वेऽपि[1] द्वयमिह नास्तीति प्रतीत्या द्वित्वावच्छिन्नाभावः स्वीक्रियत एव, प्रतियोगितावच्छेदकावच्छिन्नस्याभाव[2]विरोधित्वादिति मतम्; तदा सर्वं समञ्जसमेवेति संक्षेपः।

---

## तर्कचूडामणिः

[3]स्वाधिकरणत्वावच्छेदेन तत्सामानाधिकरण्य[4]विवक्षायामपि वह्निघटरूपद्वयवान् धूमवत्त्वादित्यत्रातिव्याप्तिः। तत्र वह्नेर्हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितया तद्द्वित्वस्यानवच्छेदकत्वात् [5]यत्किंचिद्धूमसमानाधिकरणत्वावच्छेदेन साध्यसामानाधिकरण्यस्यापि सत्त्वादित्यरुचेराह — **यदि चेति**। [6]अत्र प्रतियोगिमति कथं तदभावः इत्यत आह — **प्रतियोगिनेति**। [7]**तदा सर्वमिति**। [8]उक्तस्थलेऽपि द्वित्वस्यावच्छेदकत्वमिति[9] भावः।

नन्वेवमप्युक्तस्थलेऽतिव्याप्तिरेव, एकसत्त्वे द्वित्वावच्छिन्नाभावाङ्गीकारेऽपि तस्य वह्निरूपप्रतियोगिसमानाधिकरणतया तदसामानाधिकरण्याभावात् उक्तविरोधित्वाभावाच्च। किं च [10]नीलधूमस्यापि वह्निव्याप्यतापत्तिः, तस्यापि तादृशवह्निसमानाधिकरणत्वात्। न च तस्यापि व्याप्यत्वमेव, अन्यथा [11]विशेषणानामव्याप्तत्वे व्याप्ते-

---

1. क. 'अपि' नास्ति
2. क. विरोधित्वमिति
3. क. साधकरण-
4. ख. 'विवक्षायामपि ...... साध्य-सामानाधिकरण्य-' नास्ति।
5. क- नु किंचिद्धूम-
6. ख. 'अत्र' नास्ति
7. ख. 'तदा' नास्ति
8. ख. 'उक्तस्थलेऽपि .......... नन्वेवमपि' इति ग्रन्थभागस्त्रुटितः।
9. ग. कत्वादिति
10. ख. नीलधूमस्यापि व्याप्यतापत्तिः
11. क. विशेषणानामव्याप्तेर्निराश्रय-
ख. विशेषणाव्याप्तत्वे व्याप्तिनिराश्रय

## तर्कचूडामणिः

निराश्रयत्वापत्तिरिति वाच्यम् । नीलधूमत्वावच्छिन्नव्याप्तेरेव [1]तत्रापादनात् । न च तादृशसामानाधिकरण्यावच्छेदकावच्छिन्नत्वं यस्य तस्य [2]तदवच्छिन्नव्याप्तिरित्येव विवक्षितम्; नीलधूमत्वं तु न तथा, न्यूनदेशवृत्तित्वादिति वाच्यम् । [3]धूमत्वस्यापि वह्निसमानाधिकरणालोकवृत्तित्वेनानवच्छेदकत्वप्रसङ्गात् । प्रतियोग्यसमानाधिकरण-पदेनैव अन्योन्याभावादिनिबन्धनातिप्रसङ्गनिरासे अत्यन्तपदवैयर्थ्यं चेत्यत आह— **संक्षेप इति ।** अयमाशयः—न तावदुक्तातिव्याप्ति । प्रतियोग्यसमानाधिकरणपदेन प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यस्य [4]विवक्षितत्वेन तादृशप्रतियोग्य-समानाधिकरणत्वविरोधित्वयोरुक्ताभावेऽपि [5]सत्त्वेन द्रित्वस्य तादृशाभावप्रतियोगि-तावच्छेदकत्वात् । नापि नील[6]धूमत्वावच्छिन्नव्याप्त्यापत्तिः, आपादकाभावात् । [7]यस्य तादृशाभावप्रतियोगितानवच्छेदकावच्छिन्न[8]यत्सामानाधिकरण्यं तस्य तेन [9]सह व्याप्तिरित्येव तल्लक्षणार्थत्वात् ।

[10]न चेतल्लक्षणे यदवच्छिन्न[11]समानाधिकरणेत्यादिना अवच्छेदकपदोपादानात् नीलधूमत्वावच्छिन्नव्याप्त्यापादनमिति वाच्यम् । तावतापि तदवच्छिन्नस्य तदवच्छिन्नेन सह [12]व्याप्तिरेका सिध्यति, न तु व्याप्तेरपि तदवच्छिन्नत्वम्, बीजा-भावात् । नाप्यत्यन्तपदवैयर्थ्यम्, । [13]विरोधित्वलाभायैव तदुपादानात् ।

---

1. ख. तथाधानात् । न च तादृश-दण्डसमाना-
   क. तत्रापादनाच्च तादृश-
2. ख. तदवच्छिन्नव्याप्तिरित्येव
3. क. धूमस्यापि
4. क. विवक्षितत्वात्
5. ख सम्भवेन
6. क. धूमत्वावच्छिन्ना व्याप्तिः
   ग. धूमवत्त्वावच्छिन्नव्याप्त्यापत्तिः
7. ख. तादृशस्य for यस्य
8. ग. 'यत्सामाना ......... नील-धूमत्वावच्छिन्न-' नास्ति ।
9. क. इह
10. क. न चैतल्लक्षणं
11. ख. सामानाधिकरण्येत्यादिना
12. क. व्याप्तेरेका
13. क. विरोधित्वपरत्वलाभायैव

## प्रकाशः

ननु व्याप्तेर्यत्तद्भ्यामननुगतत्वेन तद्विषयकपरामर्शस्यापि तथात्वात् अनुगतानुमितिं प्रति कथं हेतुता। तथा च कथं नानुमितित्वमाकस्मिकम्। पक्षतादेरपि यत्तद्घटितत्वेनाननुगतत्वादिति चेत् — [1]अत्र केचित् — व्याप्तेरननुगतत्वेऽपि तज्ज्ञानानां व्याप्तिपदवाच्यतावच्छेदकावगाहिज्ञानत्वेन [2]हेतुत्वान्नोक्तदोष इत्याहुः।

अन्येतु — सम्बन्धज्ञानत्वेन [3]तज्ज्ञानानां हेतुत्वम्। न चैवमतिप्रसङ्गः, परामर्शरूपविशेषसामग्रीविलम्बेनानुमित्यनुत्पत्तेरित्याहुः।

---

## तर्कचूडामणिः

किं च यथाश्रुतेऽपि न तद्वैयर्थ्यम्, आद्यप्रतियोगिपदस्य [4]विरहपरतया अन्योन्याभावस्यापि स्वविरहरूपप्रतियोगितावच्छेदक[5]समानाधिकरणतया तमादायासम्भववारणायात्यन्तपदोपादानात्।

किं च [6]यत्तद्भ्यामननुगतमेवेदं लक्षणम्। तथा च धूमवह्न्योः व्याप्तिः प्रतियोग्यसमानाधिकरणपदं विनैव [7]निर्वाच्या। तत्र तस्य वैयर्थ्यात्। तथा चान्योन्याभावमादायासम्भव इति तद्वारणाय [8]अत्यन्तपदोपादानमिति संक्षेपः।

नन्वनुगतपक्षताया हेतुत्वसम्भवात् नानुमितित्वमाकस्मिकम्, तत्राह — पक्षतेति। [9]व्याप्तीति। [10]तादृशवाच्यतावच्छेदकधूमवह्निव्याप्त्याद्यवच्छेदकधीत्वेन च तदनुगम इति भावः। ननु सम्बन्धज्ञानत्वेन हेतुत्वं तदा[11]कल्प्येत यद्यनुमिता-

---

1. क. 'न' for 'अत्र केचित्'
2. ख. हेतुत्वमिति नोक्त-
3. क. 'तद्' नास्ति।
4. क. विरहरूपतया
5. ग. कालसमानाधि-
6. क. यत्तद्भ्यामनुगमेनैवेदं
7. क. वाच्यं तस्य तत्र
8. ख. अत्यन्तपदमुपात्तमिति।
9. क. व्याप्तेति
10. क. तादृशवाच्यतावच्छेदकं धूमवह्निव्याप्त्याद्यवच्छेदकत्वेन
11. क. कल्प्यते

## प्रकाशः

वस्तुतस्तु तत्तद्व्याप्तिज्ञानानां तत्तदनुमितिविशेष एव जनकत्वम् । न चैवमनुमितित्वमाकस्मिकम् । तद्धि कारणाप्रयोज्यत्वम् अप्रामाणिकत्वम् वा । [1]नाद्यः, इष्टापत्तेः । नित्यवृत्तिमनस्त्वादीनामिव [2]तत्त्वाविरोधात् । न च कार्यमात्रवृत्तिजातेः कारणप्रयोज्यत्वनियमः । अप्रयोजकत्वात् । द्वितीये त्वसिद्धिः, [3]अनुगतमतेरेव प्रमाणत्वसम्भवात् । तस्माद्यथा प्रत्यक्षत्वस्य [4]नित्यवृत्तित्वेन कार्यतानवच्छेदकत्वेऽपि अनुगतमतेः प्रत्यक्षत्वं जातिः एवमत्रापीति ।



## तर्कचूडामणिः

वनुगतकारणनियमः स्यात् स एवासिद्ध इत्याह— [5]वस्तुतस्त्विति । नन्वनुगतजातेरनुगतकारणप्रयोज्यत्वनियमेन कथमिष्टापत्तिरित्याशङ्क्य किं जातिमात्रे नियमः उत [6]तद्विशेष इति विकल्प्य आद्य आह —**नित्येति**। अन्त्य [7]आह — **न चेति**। **असिद्धिरिति**। बाध इति भावः ।

ननु [8]तर्के बाधस्याप्यनुकूलत्वमेव, अन्यथा वह्न्यभावे धूमो न स्यादित्यपि न स्यात् । तथा चानुगतकारणाभावे प्रमाणिकत्वं [9]न स्यादित्यत्र बाधो न दोष इति शङ्कामुपसंहारव्याजेन [10]परिहरति —**तस्मादिति**। तथा च [11]प्रमाणवत्त्वेवानुगतजातिनियामकानुगतहेतुरिति भावः ।



1. ख. आद्ये इष्टापत्तिः
2. ख. तथात्वाविरोधात्
3. क. अननुगत-
4. क. नित्यवृत्तितया कार्यतानवच्छेदकव्यक्तिवृत्तित्वेऽपि
5. ख. ग. वस्तुत इति
6. क तद्विशेषे वेति विकल्पे
7. क. ग. 'आह' नास्ति
8. क. उक्ते ग. तर्के तद्बाधस्यापि
9. कः न स्यात्तत्र
10. ख. ग निरस्यति
11. क. प्रमाणसत्त्वैवानुगतप्रयोज्यमास्थेयम् ( मध्ये ग्रन्थपातः ) ख. प्रामाण्यसत्त्वैवानुगतजातिनियामिका नान्यानुगतहेतुरिति ।

## अथ सामान्याभावप्रकरणम्

नन्वेवं सामान्यं यदि न विशेषाभावप्रतियोगितावच्छेदकम्, तदा तत् अभावप्रतियोगितावच्छेदकमेव नेत्यायातम्। विशेषाभावकूटातिरिक्तस्य सामान्याभावस्याभावात्।

---

### तर्कचूडामणिः

ननु घटत्वादेरनुगतहेतुप्रयोज्यत्वे कार्यमात्रवृत्तिधर्मत्वमेव प्रयोजकम्, अन्यथा द्रव्यत्वादेरपि तत्त्वप्रसङ्गात्। तथा चानुमितित्वस्यापि तथात्वेनानुगतहेतुप्रयोज्यत्वमास्थेयम्। अन्यथा प्रामाण्यस्यापि [1]गुणप्रयोज्यत्वं न स्यादिति चेत्—न; बाधकाभावे सत्येव तादृशधर्मस्य कार्यतावच्छेदकत्वम्। अन्यथा नीलघटत्वस्यापि तत्त्वापत्तेः। प्रकृते चानुमितित्वावच्छिन्नकार्यताप्रतियोगिक[2]कारणताश्रयासम्भव एव बाधक इति भावः।

सामान्याभावनिरूपणस्य [3]प्रयोजनमाह—**नन्वित्यादिना**। **विशेषाभावेति**। [4]विशेषाभावे चातिप्रसक्तं सामान्यं नावच्छेदकमिति भावः। यद्यपि [5]हेतुसामानाधिकरण्यावच्छिन्नाभावप्रतियोगितात्वेनानुगतीकृत[6] प्रतियोगितानतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षायां सामान्याभावानङ्गीकारेऽप्यतिव्याप्तिनिरासः [7]सुकर एवेति तद्व्यवस्थापनवैयर्थ्यम्। तथाप्युक्तन्यायेन [8]तन्मतमयुक्तमिति भावः[9]। वस्तुतोऽत्यन्ता-

---

1. क. गुणप्रयोजकत्वम्
2. क. कारणतासम्भवः
3. क. प्रयोजकत्वमाह।
4. ख. विशेषाभावातिप्रसक्तसामान्यतावच्छेदक-
5. क. हेतुसमानाधिकरणैकाधिकरण्यावच्छिन्न-
6. क. प्रतियोगितानतिरिक्तवृत्तिविवक्षायां
7. ख. संकर
8. ख. तन्मतं युक्तमिति
9. क. एतदनन्तरं 'तदङ्गीकारे तु मणेरेषा योजना' इत्याधिकपाठः

सामान्यावच्छिन्नप्रतियोगिताकाभावः पृथगेव। अन्यथा सकल-प्रसिद्धरूपाभावे प्रसिद्धरूपवदन्यत्वे चावगते वायौ रूपं न वा, वायू रूपवान्न वेति संशयो न स्यात्; विशेषाभावकूटस्य निश्चितत्वात्।

## प्रकाशः

एवं च वह्निसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्न-समानाधिकरणत्वात् वह्नेर्धूमव्याप्यतापत्तिरित्यत आह — सामान्येति। तथा च [1]वह्निसमानाधिकरणायोगोलकीयसामान्याभावप्रतियोगितावच्छेदकत्वात् धूमत्वस्य नोक्तदोष इत्यर्थः। अन्यथेति। [2]विशेषाभावकूटस्यैव सामान्याभावरूपत्वे [3]रूप-विशेषाभावकूटस्य वायौ निश्चितत्वेन संशयविषयत्वायोगात् वायौ रूपं न वेति [4]संशयो न स्यात्।

## तर्कचूडामणिः

भावपदस्य विरोधिपरत्वे [5]धर्मपरत्वे वा तादृशायोगोलकत्वप्रतियोगितावच्छेदक-त्वाद्धूमत्वस्य[6] नाव्याप्तिशङ्केति न [7]तन्निरासाय तद्व्यवस्थापनम्, किं तु शङ्कान्तर-निरासाय। [8]तथाहि — ननु [9]विशेषाभावस्यैव सामान्याभावरूपतया तत्सत्त्वे तत्प्रतीतिः स्यादेव। विषयसत्तायाः स्वगोचरप्रमाविनाभूतत्वात्। तथा च [10]वह्निर्नास्तीत्यप्रतीतेरिति कथमुक्तम्, तत्राह — सामान्येति। तथा च

1. क. वह्निसामानाधिकरण्यायो-
2. क. विशेषाभावस्य सामान्या-
3. क. रूपविशेषाभावस्य
4. ख. संदेहो न स्यादित्यर्थः
5. क. 'धर्मपरत्वे वा' नास्ति
6. क. धूमवत्त्वस्य
7. ख. तन्निरासात्
8. क. 'तथा हि' नास्ति।
9. क. विशेषणाभावस्यैव
   ख. विशेष्याभावस्यैव
10. क. वह्निनस्त्यित्रेति कथ-

## प्रकाशः

केचित्तु वायौ रूपं न वेति संशयो रूपत्वावच्छिन्नप्रतियोगिकत्वेनाभावमवगाहते रूपविशेषाभावसमूहश्च न तथेति तादृशसंशयानुपपत्त्या अतिरिक्त एव रूपसामान्याभाव[1]स्तद्विषयाऽभ्युपेय इत्यर्थ इत्याहुः। तन्न। 'विशेषाभावकूटस्य निश्चितत्वात्' इत्यग्रेतनग्रन्थस्य प्रकृतासंगतत्वापत्तेः। तत्र तदनिश्चयेऽपि

---

## तर्कचूडामणिः

[2]संशयानुपपत्त्या अतिरिक्ताभावसिद्धौ धूमवति तदभावादेव [3]तदप्रत्यय इति भावः।

संशयानुपपत्त्या सामान्यात्यन्ताभावसिद्धौ तत एव [4]सामान्यान्योन्याभावोऽपि सेत्स्यतीति अभिप्रेत्य उक्तलक्षणोपयोगितादृशात्यन्ताभावं साधयति—**विशेषेति**। [5]वाचस्पतिमतमाह—**केचिदिति**। [6]**न तथेति**। न [7]रूपत्वावच्छिन्नप्रतियोगिक इत्यर्थः। [8]तत्रोपाध्यायोक्तदोषमाह—**तन्नेति**। ननु विशेषाभावकूटस्य उक्तसंशयविषयत्वशङ्कानिराकरणार्थं तद्ग्रन्थोऽस्तु, तत्राह—**तत्रेति**। [9]वायावित्यर्थः। ननु क्लृप्तविशेषाभावसमूहे रूपत्वावच्छिन्नप्रतियोगिकत्वकल्पनस्यातिरिक्तसामान्याभावकल्पनातो लघुत्वेन [10]विशेषाभावस्यैव तदवच्छिन्नप्रतियोगिकत्वमस्तु इत्याशङ्कमानो गङ्गेशो 'विशेषाभावकूटस्य निश्चितत्वात्' इत्यनेन [11]युक्त्यन्तरमुक्तवान्,

---

1. क. तद्विशेषोऽभ्युपेय इत्याहुः
2. ख. संशयानुपपत्तौ
3. क. तदप्रत्ययादित्यर्थः
   ख. तत्प्रत्यय इति भावः
4. ख. सामान्यावच्छिन्नान्योन्या-
5. ख. वाचस्पतिमिश्रमतमाह
6. ख. ग. 'न तथेति' नास्ति
7. क. स्वरूप-
8. ख. तत उपा-
9. क. वाधादित्यर्थः
10. ख. विशेषाभावस्यैव
11. क. युक्त्यन्तरमुक्तवतो न

## प्रकाशः

तस्य रूपत्वावच्छिन्नप्रतियोगिकत्व[1]विरहादेव तादृशसंशयविषयत्वशङ्कानवकाशात् [2]तस्य रूपत्वावच्छिन्नप्रतियोगिकत्वेनाभावानवगाहनाच्च ।

अन्यथा वायौ न रूपमिति निश्चयस्यैव रूपत्वावच्छिन्नप्रतियोगिकाभावे प्रमाणत्वसम्भवे [3]संशयोपदर्शनस्यानर्हत्वात् ।

नन्वेतावन्त्येव रूपाणीति बुद्धौ सत्यामसत्यां वा संशयाभाव आपाद्यते आद्ये इष्टापत्तिः । द्वितीये तु अतिरिक्तसम्भावनया तदादाय संशयोपपत्तिरिति चेत् — न । अतिरिक्तसम्भावनाविरहदशायामपि रूपविशेषाभावकूटे वायौ निश्चिते तत्र रूपं न वेति संशयस्यानुभवसिद्धत्वात् ।

---

## तर्कचूडामणिः

अतो न विरोध इत्यरुचेराह— [4]तस्येति । रूपं नेति ज्ञाने [5]रूपत्वगतान्यूनानतिरिक्तवृत्तित्वरूपावच्छेदकत्वभानाभावादिति भावः । [6]संशयेति । [7]निश्चयस्य सामान्याभावे साक्षात् प्रमाणत्वसम्भवे अनुपपत्तिरूपमानान्तरोत्थापकसंशयोपन्यासस्यायुक्तत्वादित्यर्थः । अतिरिक्तेति । न चातिरिक्तरूपस्यासत्त्वेन कथमुक्तसंशयस्य [8]तदभावविषयकत्वमिति वाच्यम् । [9]रूपत्वेन संदिग्धवस्त्वन्तराभाव[10]विषयत्वस्य विवक्षितत्वात् ।

---

1. क. विरहादेतादृश-
2. ख. तादृशसंशयस्य
3. ख. संशयोपदर्शनानर्हत्वात्
4. क. तादृशेति ।
5. क. रूपगता-
6. ग. 'संशयेति .......... अतिरिक्तेति' नास्ति
7. क. निश्चयसामान्याभावे
8. क. ग. तदभावविषयत्व-
9. क. रूपसत्त्वेन
10. क. विषयसत्त्वस्य

## प्रकाशः

अथ निश्चितेऽपि विशेषाभावकूटे रूपाभाववत्त्वेनानिश्चितेन रूपेण [1]संशयोऽस्तु इति चेत्—न। रूपाभाववत्त्वं हि रूपत्वोपहितप्रतियोगिकाभाववत्त्वं वा रूपत्वावच्छिन्नप्रतियोगिकाभाववत्त्वं वा। आद्यं तु निश्चितमेव। विशेषाभावप्रतियोगिसमूहे रूपत्वस्य [2]निश्चयात्। द्वितीयं तु स्यादपि यदि रूपत्वमभावप्रतियोगितावच्छेदकं [3]भवेत्। [नच तत्] तद्धि न विशेषाभावप्रतियोगितावच्छेदकम्, अतिप्रसक्तत्वात्। तद्रूपत्वस्यैव तथात्वाच्च। न सामान्याभावप्रतियोगितावच्छेदकम्, तस्य त्वया अनभ्युपगमात्। अभ्युपगमे वा पर्यवसितं विवादेन।

यत्तु—यदि यावद्विशेषाभावा एव सामान्याभाव[4]प्रतीतिविषयाः, तदा समुदिते घटद्वये रूपमिह नास्तीति [5]प्रतीत्यापत्तिः। [6]यावद्रूपविशेषाभावस्य तत्रापि सत्त्वात्। तद्घटद्वयवृत्तिरूपविशेषयोरपि तत्रैव घटद्वये स्वस्वानधिकरणघटव्यक्त्यवच्छेदेनाभावसत्त्वादिति मतम्।

---

## तर्कचूडामणिः

ननु विशेषाभावप्रतियोगितावच्छेदकमपि सामान्यमेव, लाघवादित्यत आह— न च तदिति। [7]तर्हि कस्य तदभावावच्छेदकत्वं, तत्राह— तदिति। उपाध्यायमतमाह — यत्त्विति। द्वित्वाश्रयेऽपि रूपद्वयसत्त्वे कथं यावद्विशेषाभावः, तत्राह —तद्घटेति।

---

1. ख. संशयविषयोऽस्तु
2. ख निश्चितत्वात्
3. ख. 'भवेत्......... न सामान्याभावप्रतियोगितावच्छेदकम्' इति भागस्त्रुटितः।
4. ख. व्यवहारप्रतीतिविषयाः
5. क. प्रतीत्यापत्तेः
6. ख. यावद्रूपविशेषाभावसमूहस्य
7. ग. तर्हि कस्य तत्राव-

## प्रकाशः

तत्र। यत्राधिकरणे यदवच्छेदेन विशेषाभावकूटो वर्तते तत्र तदवच्छेदेन सामान्याभावप्रतीतिं जनयति न त्वन्यत्रापि। घटद्वये च प्रत्येकं यावद्विशेषाभावाभावे समुदितेऽपि तथात्वमेव। प्रत्येकाभयातिरिक्तस्य समुदायस्यानभ्युपगमात्। अभ्युपगमे वा तत्र रूपसामान्याभावप्रतीतेरिष्टत्वादिति[1]।

न च यथा द्वित्वसमानाधिकरणाः यावद्विशेषाभावाः इति प्रतीतिः तथा द्वित्वसमानाधिकरणं[2] रूपं नास्तीत्यपि प्रतीतिः स्यादिति वाच्यम्।

---

## तर्कचूडामणिः

तत्र जयदेवोक्तं दोषमाह—तत्रेति। संयोगवति यावत्तदभावसत्त्वेन सामान्याभावप्रतीतिं वारयति—[3]यदवच्छेदेनेति। तत्रेति। [4]अतिरिक्तसमुदाय इत्यर्थः। नन्वतिरिक्तसामान्याभावानङ्गीकारमते [5]विशेषाभावसामानाधिकरण्यस्यैव सामान्याभावसामानाधिकरण्यप्रतीतिविषयतया [6]द्वित्वसमानाधिकरणतदभावप्रतीतिः स्यादित्याशङ्क्य निराकरोति—न चेति।

ननु यत् यत्समानाधिकरणसामान्याभावप्रतियोगि तत् तदसामानाधिकरण्यप्रतीतिविषय एव। यथा [7]वायुत्वसमानाधिकरणसामान्याभावप्रतियोगि रूपं तादृशप्रतीतिविषयः। तथा च व्यापकाभावे [8]रूपे द्वित्वसमानाधिकरणसामान्याभाव[9]प्रतियोगित्वमपि नेत्यतिरिक्ताभावसिद्धिस्तत्राह—अन्यथेति। उक्तनियमाङ्गीकार इत्यर्थः।

---

1. ख. 'इति' नास्ति
2. क. करणत्वं
3. ख. एकावच्छिन्नेनेति
   ग. एकावच्छेदेनेति
4. क अतिरिक्तसमवायः
5. ख. विशेषाभावस्यासामानाधिकरण्यस्यैव
6. ख. द्वित्वसामानाधिकरण्य-
7. क. वायुत्वसमानाधिकरणाभाव-
   ख. वायुत्वसमानाधिकरणतदभाव-
8. ख. द्विरूपे
9. क. प्रतियोगित्वमित्यति-

## प्रकाशः

तत्र हि द्वित्वे रूपसामान्याभावसामानाधिकरण्यधीविषयत्वमापाद्यते, रूपे द्वित्वसामानाधिकरण्याभावधीविषयत्वं वा । नाद्यः, इष्टापत्तेः । विशेषाभावकूटस्यैव[1] सामान्याभावरूपत्वात् । नान्त्य, बाधात् । अन्यथा अतिरिक्तसामान्याभावपक्षेऽपि वायुघटवृत्तिद्वित्वसमानाधिकरणो रूपसामान्याभाव इति प्रतीतिवत् तद्द्वित्व-समानाधिकरणं रूपं नास्तीत्यपि[2] प्रतीतिः स्यात् ।

यत्तु प्रत्येतव्यशरीरस्य यावद्विशेषाभावस्य नानाधिकरणेऽपि सत्त्वे तत्प्रतीति-निवारणमशक्यमिति । तन्न । प्रत्येतव्यस्य यावद्रूपविशेषाभावस्य प्रत्येकघटावृत्तित्वेन

---

## तर्कचूडामणिः

प्रतीतिः स्यादिति । तथा च नियम एवासिद्ध[3]इति भावः । ननु द्वित्वावच्छेदेन विशेषाभावसत्त्वेऽपि ऐकाधिकरण्याभावान्न सामान्याभावप्रत्यय इत्युक्तम् । तत्र किम् ऐकाधिकरण्यमपि सामान्याभावशरीरम्, किं वा यस्य विशेषाभाव[4]कूटस्य ऐकाधिकरण्यं तस्यैव [5]सामान्याभावतया प्रत्यय इति प्रतीति-नियामकं वा । नाद्यः, भावाभावात्मक[6]सामान्याभावस्य [7]भावाभावोभयात्मक-त्वापत्तेः । [8]ऐकाधिकरण्यांशस्य भावत्वनियमात् । तथा चाधिकरणविशिष्ट-[9]घटाभावाभावस्य घटानात्मकतेव तस्य रूपानात्मकता स्यात् । किं च कालाकाश-रूपाधिकरणद्वयावच्छेदेन रूपसामान्याभावप्रत्ययो न स्यात् ।' [10]तद्द्वित्वावच्छेदेन

---

1. ख. 'एव' नास्ति
2. क. 'अपि' नास्ति
3. क. इत्यर्थः
4. ख. ग. समूहस्य
5. क. सामान्याभाव इति प्रत्ययान्नि-यामकं वा
6. ग. सामान्याभावाभावस्य
7. ख. ग. भावाभावोभयाकारत्वापत्तेः
8. ख. ग. ऐकाधिकरण्यांशाभावस्याभावत्व -
9. क. 'घटाभावाभावस्य' नास्ति
   ग. ......... घटानात्मकतावत्
10. क. 'तद्' नास्ति

## प्रकाशः

नानाधिकरणवृत्तित्वाभावात् प्रत्येतव्यैकदेशो हि नानाधिकरणवृत्तिः न तु प्रत्येतव्योऽपि ।

---

## तर्कचूडामणिः

प्रत्येतव्यशरीरस्य [1]ऐकाधिकरण्यस्याभावात् । न द्वितीय इत्याह—यत्रेति । प्रत्येतव्यस्य [2]कदाचित्प्रतीतिनियमेन प्रतीति[3]नियामकत्वकल्पनानुपपत्तेरित्यर्थः ।

विशेषाभावसंमूहस्य नानाधिकरणेऽपि सत्त्वमङ्गीकृत्य ऐकाधिकरण्याभावाद-प्रत्यय इत्युक्तम् । तदेव [4]तु नास्ति, प्रत्येकावृत्ते[5]रुभयत्रावृत्तित्वादिति सार्व-भौमोक्तदोषमुपाध्यायमते प्रसारयति—[6]तन्नेति ।

ननु समूहस्य [7]समूहिव्यतिरेकेणाभावेन विशेषाभावसमूहस्य विशेषाभावात्म-कतया प्रत्येकाधिकरणेऽपि तत्प्रतीत्यापत्तिः । तत्र प्रत्येतव्यशरीरसत्त्वात् । [8]किं च विशेषाभावसमूहस्य प्रत्येकावृत्तित्वेऽपि द्वित्वावच्छिन्नवृत्तित्वमस्त्येव । प्रत्येका-वृत्तेरुभावृत्तित्वनियमे [9]प्रत्येकगृहाविद्यमानसकलपाकसामग्री [10]गृहद्वये विद्यत इति [11]सर्वलोकानुभवो न स्यात् । [12]न स्याच्च द्वित्वाश्रये [13]यावद्विशेषाभावप्रतीतिः । अपि च यदवच्छेदेन यत्र यदस्ति तत्र तत्प्रतीतिरित्येव सर्वत्र प्रतीतिनियामकम्,

---

1. क. ऐकाधिकरण्याभावात्
2. ग. कादाचित्कप्रतीति-
3. ख. नियमकल्पनादनुपपत्तेः
   ग. नियामककल्पनानुपपत्तेः
4. क. 'तु' नास्ति
5. ख. उभयवृत्तित्वात् ग. उभयावृत्तेः
6. ख. तेनेति ग. किंचेति
7. क. समूह
8. ख. तत्र कश्चिद्विशेषाभाव
9. क. प्रहाविद्यमान-
10. क. प्रहद्वये
11. ग. सार्वलौकिकानुभवः
12. ग. 'न' नास्ति
13. ख. यावत्तद्रूपविशेषाभाव इति प्रतीतिः
    ग. यावद्रूपविशेषाभाव इति प्रतीतिः

## तर्कचूडामणिः

न चैकाधिकरण्यमपि; गौरवात्. गृहद्वये सकलपाकसामग्री [1]इत्यनुभवाभावप्रसङ्गाच्च। तथा च द्वित्वावच्छेदेन यावद्विशेषाभावसत्त्वे सामान्याभावप्रतीतिः [2]स्यादेवेत्युपाध्यायमतं युक्तमेवेति चेत् —

अत्र ब्रूमः। [3]विशेषाभावानामेव सामान्याभावप्रतीतिविषयत्वम्। न चातिप्रसङ्गः। एकाधिकरणवृत्तित्वरूपसमूहस्य प्रतीति[4]नियामकत्वाङ्गीकारात्। न च गौरवम्। [5]अतिरिक्तसामान्याभावकल्पनातोऽस्यैव[6] लघुत्वात्। अत एव वृक्षाणामेव [7]वनत्वेऽतिप्रसङ्गवारणाय वृक्षाणामैकाधिकरण्यं वनत्वप्रतीतिनियामकमास्थीयते। अन्यथा तत्रापि वनस्य पदार्थान्तरत्वापत्तेः। किं च प्रतियोग्यसमानाधिकरणविशेषाभावानां [8]सामान्याभावत्वमस्तु। [9]तादृशविशेषाभावस्यैव त्वयापि [10]सामान्याभावव्याप्यत्वाङ्गीकारात्। अन्यथा संयोगवत्यपि वृक्षे तत्सामान्याभावापत्ते।

ननु विशेषाभावे तद्विशेषस्यैव प्रतियोगितया [11]पटद्वयवृत्तिविशेषाभावोऽपि प्रतियोग्यसमानाधिकरण एव, [12]तत्तद्विशेषत्वस्यैव प्रतियोगितावच्छेदकतया तदवच्छिन्नसामानाधिकरण्यं चेति चेत् --- न। यद्धर्मावच्छिन्नप्रतियोगिनिरूप्यत्वमभावस्य तद्धर्मावच्छिन्नासामानाधिकरण्यस्य विवक्षितत्वात्। स च धर्मः प्रतियोगितावच्छेदको वा [13]तदनवच्छेदको वेत्यन्यदेतत्। घटद्वयवृत्ति[14]रूपद्वयाभावस्य तादृशरूपत्वावच्छिन्नसामानाधिकरण्यमेवेति नोक्तदोषः।

---

1. ख. इत्यनुभवप्रसङ्गाच्च
2. क स्यादित्युपाध्यायमतमयुक्त-
3. क. विशेषाभावानामेव
4. क. नियमाङ्गीकारात्
5. क. 'अतिरिक्त' नास्ति
6. क 'एव' नास्ति।
7. क. वनत्वेऽप्यतिप्रसङ्गनिराकरणाय
8. ग. 'सामान्याभावत्वमस्तु....... त्वयापि' इति ग्रन्थस्त्रुटितः।
9. ख. तस्य मयापि
10. ख फलद्वय-
12. क. तत्तद्विशेषस्यैव
13. ख. तदवच्छेदको
14. ख. रूपत्वाभावस्य च

## प्रकाशः

यत्तु यावद्विशेषाभाव[1]समूहस्यैव सामान्याभावप्रतीतिविषयत्वे इह रूपाभाव इत्येकत्वोल्लेखिनी प्रतीतिर्न स्यादिति । तदपि न । एवं ह्याद्यक्षणे घटे [2]रूपाभावप्रतीतिर्न स्यात् । न हि तत्र सामान्याभावस्तद्विषय, कस्यचित् प्रागभावेन कस्यचिदत्यन्ताभावेन तावत्प्रतियोगिकैकाभावासम्भवात् । अन्यथा [3]तस्याः भ्रान्तत्वप्रसङ्गः ।

[4]न चैवं तवाद्यक्षणे घटे रूपाभावप्रतीत्यनन्तरं रूपसामान्याभावसंशयापत्तिरिति वाच्यम् । प्रतियोगिवत् तत्प्रागभावस्यापि सामान्यात्यन्ताभावविरोधित्वेन तत्र तन्निश्चयस्यैव तत्प्रतिबन्धकत्वात् । तस्माद्यथाकारमेव ग्राह्यम् ।

---

## तर्कचूडामणिः

उपाध्यायोक्तममाध्यन्तरमाह — [5]यत्त्विति । समूहपदार्थो विशेषाभाव एव वा तदन्यो वा । [6]अन्त्येऽपि भावरूपत्वे [7]रूपप्रतियोगिकाभावस्वरूपत्वविरोधः । [8]अभावरूपत्वे फलतो न [9]विशेषः । आद्य आह—**रूपाभाव इति**। [10]**एवं हीति** । तथा च समुदाय[11]पक्षेऽप्येकत्वप्रत्ययो [12]वनमितिवदिति भावः । तर्हि सामान्याभावे किं मानम् अत आह—**तस्मादिति** । [13]**तथात्रापीति** । संशयस्थलेऽपीत्यर्थः ।

---

1. ख. समूहस्य सामान्या-
2. ख. रूपाभाव इति प्रतीतिः
3. क. तस्याभावान्तरत्वप्रसङ्गः
4. ख. 'न चैवं ......... तत्प्रतिबन्धकत्वात्' नास्ति
5. ग 'यत्त्विति ......... एवं हीति' इति ग्रन्थस्त्रुटितः
6. ख. अन्योऽपि
7. क. रूपप्रतियोगिकाभावत्वस्य-
8. ख. अभावरूपत्वेऽपि
9. ख. विवादः
10. ख. 'एवं हीति' नास्ति ।
11. क. पक्षे एकत्व-
12. क. वनमिति च तदिति
13. क. तत्रापीति ।

## प्रकाशः

न च [1]तत्रापि रूपत्वोपहितयावदभावत्वे[2]नानिश्चितविशेषाभावानामेव संशयविषयत्वमस्तु इति वाच्यम्। वायौ रूपं न वेति संशये यावत्त्वस्य कोटित्वेनानुल्लेखात्, रूपप्रतियोगिकाभावत्वेनैव तस्य तत्कोटित्वानुभवाच्च।

तस्माद्रूपप्रतियोगिकाभाव एव संशयकोटिः विशेषाभावाश्च निश्चिता एवेति [3][तथात्रापि] संशयः सामान्याभावमवलम्बते[4]।

यत्तु प्रतीतिभेद एव सामान्याभावे मानम्। इह रूपं नास्तीति रूपत्वावच्छिन्नाभावोऽवगम्यते, नीलरूपं नास्तीत्यादिना विशेषाभाव इति। तत्तुच्छम्। यावद्विशेषाभावानामेव तद्विषयत्वात्। यथा घटोऽस्तीति सामान्यतः प्रतीतेः घटविशेषा एव विषयाः इति।

---

## तर्कचूडामणिः

नन्वभावांशे रूपत्वावच्छिन्न[5]प्रतियोगिकत्वस्य कोटित्वनिरासेन अनन्यगत्या यावत्त्वस्यैव कोटित्वं तत्राह — रूपेति। नन्वेवं विशेषाभावोऽपि तादृशतया संशयकोटिः स्यात् तत्राह — विशेषाभाव इति। [6]सकर्तृकत्वानुमानानन्तरमेकत्वं मानान्तरगम्यमिति मते दृष्टान्तमाह — यथा वेति। सर्वस्येति। समवायस्थलेऽपि [7]तत्तत्स्वरूपाणां सर्वेषामपि सम्बन्धत्वं कल्प्यमिति गौरवमिति

---

1. क. 'तत्रापि' नास्ति
2. क. अनिश्चितेन
3. 'तत्रापि' इति अस्माभिः संयोजितम्।
4. ख. आलम्बते
5. क, प्रतियोगित्वनिरासेन
6. क. कर्त्रनुमाना-
7. क. तत्तद्रूपाणां

## प्रकाशः

यदपि चोक्तं रूपाभावप्रतीतौ बहूनां विषयत्वे कारणत्वे वा गौरवमित्येकस्यैव सामान्याभावस्य विषयत्वं [1]कारणत्वं वा लाघवात्. यथा क्षितिसकर्तृकत्वानुमानमेकमेवेश्वरम्[2], यथा वा सम्बन्धानुमानमेकमेव[3] समवायं विषयीकरोतीति।

तदपि न। दृष्टान्ते हि सर्वस्यैव कल्प्यत्वेन लाघवादेक एव [4]कल्प्यत इत्युचितम्। अत्र तु यावद्विशेषाभावानां क्लृप्तत्वात् [5]तत्प्रतीतेस्तद्विषयत्वेनैवोपपत्तौ अक्लृप्तसामान्याभावकल्पनायामेव गौरवम्। अन्यथा उक्तयुक्त्या घटोऽस्तीति प्रतीत्या बहुघटवत्यपि गेहे [6]एक एव घटो विषयीक्रियेत। न चेष्टापत्तिः,

## तर्कचूडामणिः

भावः। तद्विषयत्वेनेत्युपलक्षणम्, तज्जन्यत्वेनेत्यपि बोध्यम्। ननु तत्र विनिगमकाभावेन [7]प्रतीतेः सर्वविषयत्वेऽपि [8]प्रकृते सामान्याभावस्यैकत्वेन लघुत्वात् तस्यैव विषयत्वं न विशेषाभावानामित्यरुचेराह — **किं चेति**। नन्वेवमतिरिक्तसामान्याभाववत् प्रत्येकरूपातिरिक्तरूपान्तरमपि स्यात्। [9]प्रत्येकरूपाणां व्यतिरेकस्य निश्चितत्वेन संशयविषयत्वायोगात् इत्यत आह — **दिगिति**। यत्र यदवच्छिन्न[10]यव्यतिरेकनिश्चयः तत्र तदवच्छिन्नतत्संशय एव न भवति, न त्ववच्छेदकान्तरावच्छिन्न[11]तत्संशयस्याप्यभावः। तथा च प्रत्येकरूपाणां तत्तद्रूपत्वेन

1. क. 'कारणत्वं वा' नास्ति
2. क. एकमीश्वरं
3. क 'एव' नास्ति।
4. क. कल्पयितुमुचितः
5. ख. 'तत' नास्ति
6. क. एकघटो
7. क. प्रतीतः
8. क. प्रकृतसामान्या-
9. ख. प्रत्येकं रूपाणां व्यतिरेकनिश्चये रूपत्वेन रूपेण प्रत्येकरूपाणां संशय-
10. ख यदतिरेक-
11. क 'तत्' नास्ति

## प्रकाशः

विनिगमकाभावात् । किं चैवं [1]यावद्विशेषाभावः प्रतीतिपथं नावतरेदेव, सर्वत्र तत्सहचरितसामान्याभावस्यैव विषयत्वसम्भवादिति दिक् ।

---

## तर्कचूडामणिः

रूपेण व्यतिरेकनिश्चयेऽपि रूपत्वेन रूपेण [2]प्रत्येकरूपाणामेव संशयविषयत्वम् । न हि तत्तद्रूपाभावत्वेन निश्चितानां विशेषाभावानां रूपाभावत्वेन संशयविषयत्वं सम्भवतीत्युक्तम् ।

अत्र केचित्—वायौ तत्तद्रूपव्यतिरेकनिश्चयानन्तरं रूपमस्ति न वेति संशयवत् तत्तत्प्रागभावव्यतिरेकनिश्चयानन्तरं वायौ रूपं भविष्यति न वेति संशयस्यानुभवसिद्धतया रूपसामान्यप्रागभावोऽपि स्यात् । [3]विशेषप्रागभावव्यतिरेकस्यानिश्चितत्वेन तेषां संशयविषयत्वायोगात् । यदि च बाधितानामेव रूपप्रागभावानां यावत्त्वेन [4]संशयविषयत्वं तदा तत्तद्रूपात्यन्ताभावानामपि यावत्त्वेन संशयकोटित्वमस्तु । यदि च तत्र [5]यावत्त्वानुल्लेखान्न तथा, तदा अत्रापि तुल्यमिति ।

अत्र ब्रूमः । प्रागभावात्यन्ताभावः प्रतियोग्यत्यन्ताभावात्मक एव नाभावान्तरम्, अभावमात्रप्रतियोगिकाभावानङ्गीकारात् । तथा च रूपसामान्याभावनिश्चयस्यैव रूपप्रागभावसंशयविरोधितया तत्तत्प्रागभावस्य व्यतिरेकनिश्चयेऽपि [6]तत्संशये न विरोधः । तादृशव्यतिरेकनिश्चयस्य तत्तत्प्रागभावत्वावच्छिन्न[7]संशय

---

1. क. 'यावत्' नास्ति
2. ख: प्रत्येकानामेव
3. क. विशेषण-
4. ख. ग संशयकोटित्वं
5. क. यावत्त्वानुसारात्
6. ख. तत्तत्संशये
7. क. संशयप्रतिबन्धकत्वात्
   ख. संशये च प्रति-

## तर्कचूडामणिः

एव प्रतिबन्धकत्वात् । न च [1]तत्तत्प्रागभावातिरिक्तप्रागभावाभावे कथमुक्तव्यवस्थेति वाच्यम् । [2]अतिरिक्तप्रागभावाभावेऽपि [3]तत्तद्रूपप्रागभावानुगतरूपप्रागभावत्वस्यानुगतमतिसिद्धत्वेन व्यवस्थासम्भवात् ।

किं च अतिरिक्तसामान्य[4]प्रागभावाङ्गीकारे तस्य प्रतियोगिजनकतानियमेन रूपसामान्यमपि स्यात् । न च [5]विशेषरूपाणामेव तज्जन्यत्वमिति वाच्यम् । प्रागभावभेदेन तत्तद्रूपभेदापत्तेः । प्राथमिकरूपेणैव [6]तन्नाशापत्तौ रूपान्तरानुत्पत्तिप्रसङ्गाच्च । [7]विशेषप्रागभाववत् [8]प्रतियोगिना समानकालीनत्वानुपपत्तेश्च । तत्तत्प्रागभावनाशेऽपि [9]सामान्यप्रागभावानाशे सामान्यप्रागभावमादायोत्पन्नस्य [10]पुनरुत्पत्त्यापत्तेश्च । न च चरमरूपमेव तत्प्रतियोगि, [11]अतो न दोष इति वाच्यम् । तथा सति रूपत्वस्य प्रतियोगितानवच्छेदकत्वापत्तौ तस्य सामान्याभावत्वानुपपत्तेः । प्रतियोगिभेदेन ध्वंसभेदे प्रागभावद्वयनाशात्मकचरमरूपस्यापि भेदापत्तेरित्यलं प्रसक्तानुप्रसक्त्या ।

जयदेवमतमाह—अन्ये त्विति । तत्कालेति । प्रागभावध्वंसयोः [12]पूर्वोत्तरकालीनघटत्वमवच्छेदकम् । अत्यन्ताभावान्योन्याभावयोश्च प्रतियोगिसंसर्गतादात्म्ये

---

1. ख. तत्तत्प्रागभावाभावे
2. ख. अतिरिक्तप्रागभावेऽपि तावद्रूप-
3. ग. तावद्रूप-
4. ग. प्रागभावानङ्गीकारे
5. क. विशेषाणामेव
   ख. रूपविशेषाणामेव
6. क. तन्नाशोपपत्तौ
7. ग. विशेषाभाववत्
8. ग. प्रतियोगिसमानकालिकत्वा
   ख. प्रतियोग्यसमानकालत्वा-
9. ख. ग. 'सामान्यप्रागभावानाशे' नास्ति
10. क. पुनरुत्पत्तिप्रसङ्गश्च ।
11. क इति न
12. ग. पूर्वकालीन

## प्रकाशः

अन्ये तु — प्रतियोगिभेदेनाभावभेदाभ्युपगमे घटप्रतियोगिकानां चतुर्णामप्यभेदः स्यादिति तत्कालतत्संसर्गतादात्म्यावच्छेदकभेदेन तत्र भेदः [1]सर्वसंमत इति [2]सामान्यस्यावच्छेदकस्य सत्त्वे तदवच्छिन्नाभाव आवश्यकः। बाधकाभावे ससम्बन्धिकपदार्थस्यैव सम्बन्धितावच्छेदकभेदेन[3] भेदकल्पनात् इत्याहुः।

---

## तर्कचूडामणिः

अवच्छेदके इति भावः। नन्वेवं प्रागभावादेरपि सामान्याभावत्वापत्तिः अवच्छेदकभेदादिति, तत्राह—बाधकेति। उत्पन्नस्य पुनरुत्पत्त्यादिकं तत्र बाधकमिति भावः। न च जयदेवेन केवलान्वयिप्रकरणे आरोप्यसम्बन्धभेदेन अभावभेदस्वीकारात् [4]अवच्छेदकभेदस्य कथं तद्भेदप्रयोजकत्व[5]मभिहितमिति वाच्यम्। उभयोरपि प्रयोजकत्वे विरोधाभावात्। न चारोप्यसम्बन्धभेद[6] एव लाघवात् प्रयोजकोऽस्तु इति वाच्यम्। [7]प्रागभावादावपि प्रतियोगिसंसर्गस्यैवारोप्यतया [8]तस्यात्यन्ताभावात् भेदानुपपत्तेरिति भावः।

अत्रेदं चिन्त्यम् —न हि [9]प्रागभावादौ पूर्वोत्तरकालीनघटत्वादेरवच्छेदकत्वम्, तदज्ञानेऽपि घटत्वेन घटज्ञानात् घटो भविष्यतीति प्रत्यक्षोत्पत्तेः। उत्तरकालीनत्वस्य वर्तमानप्रागभावप्रतियोगित्वरूपतया [10]प्रागभावज्ञाने प्रागभाव-

---

1. क. 'सर्व' नास्ति
2. क. सामान्यावच्छेदकस्य
3. क. भेदेनैव
4. क. अवच्छेदकस्य
5. ग. मभिमत-
6. क. 'भेद' नास्ति
7. म. लाघवादपि
8. ख. तस्यात्यन्ताभावभेदा
9. क. प्रागभाव उत्तर-
   ख. प्रागभावादुत्तर-
10. ख. 'प्रागभावज्ञाने' नास्ति।

## तर्कचूडामणिः

ज्ञानस्य [1]हेतुतया आत्माश्रयापत्तेश्च। एवं प्रध्वंसेऽप्युक्तधर्मो नावच्छेदकः। तथा अन्योन्याभावादावपि, घटत्वेन [2]घटज्ञानानन्तरमेव तत्प्रतीतेः।

तस्मात् प्रागभावप्रध्वंसयोस्तद्घटत्वम् [3]अत्यन्ताभावान्योन्याभावयोश्च घटत्वमिति न तेषामवच्छेदकभेदात् भेदः। किं तु [4]या ह्यभावप्रतीतिः चतुष्टयाभावेनोपपादयितुं न शक्यते तत्रातिरिक्ताभावसिद्धिः। तथा च घटो भविष्यतीत्यादिप्रतीतीनामभाव[5]चतुष्टयाभावे दुरुपपादतया [6]तेषां भेदसिद्धिः। अत एव ग्रन्थकृतापि [7]संशयानुपपत्तिरेव सामान्याभावे प्रमाणतयोक्तेति।

केचित्तु — एकाधिकरणवृत्तियावदभावानां सामान्याभावरूपत्वे घटवति [8]घटसामान्याभावाभावप्रत्ययो न स्यात्, [9]यत्किंचित्प्रतियोगिकाभावस्य विरोधितया घटवति घटान्तराभावसत्त्वेन घटाभावाभावप्रत्ययायोगात्। [10]न च भावप्रतियोगिकाभावे प्रतियोगिसत्त्वमात्रं विरोधि, अभावप्रतियोगिकाभावे यावत्तत्सत्त्वं विरोधीति वाच्यम्। लाघवेनानुगतस्यैव [11]नियामकस्य कल्पनात्। किं च सकलविशेषप्रतियोगिकानां सर्वविशेषाभावानां सामान्याभावरूपत्वे तदभावप्रत्ययः सकलघटवत्येव[12] स्यात् न त्वेक[13]घटवतीत्यापद्येत। अतिरिक्तसामान्याभावे घटवति तत्सत्त्वाभावात् [14]घटसामान्याभावाभावो न विरुद्ध इत्याहुः।

---

1. क. हेतुत्वे
2. क. घटज्ञानान्तरमेव
3. ख. अन्योन्यात्यन्ताभावयोश्च
   ग. अन्योन्याभावयोश्च
4. क. ग्राह्याभाव-
5. क. चतुष्टयाभावेनोपपादतया
6. ख. न तेषां
7. क. संशयानुपपत्तेरेव
8. क घटसामान्याभावप्रत्ययो
9. ख. ग. यत्किंचित्प्रतियोगिन एवाभाव-
10. क. न चाभाव-
11. क. नियामकत्वस्य
12. क. पटवत्येव
13. क. पटवति
14. क. ख. घटसामान्याभावो

## तर्कचूडामणिः

अत्र ब्रूमः। विशेषाभावानामेव सामान्याभावत्वमिति मते सामान्याभावत्वं [1]घटत्ववन्न प्रत्येकाभावपर्यवसितम्, किं तु वनत्वादिवत् तावदभावपर्याप्तम्। अन्यथा घटवत्यपि तदभावप्रत्ययापत्तेरेव [2]दोषत्वे उक्तकुसृष्टिवैयर्थ्यात्। तथा च घटवति किंचिद्विशेषाभाव[3]रूपप्रतियोगिसत्त्वेऽपि सामान्याभावरूपप्रतियोगितावच्छेदकावच्छिन्नस्याभावात् तदभावप्रत्ययो न विरुद्धः। इयानेव विशेषः, अतिरिक्ताभाववादिमते घटवति [4]प्रतियोग्येव नास्तीति तदभावप्रत्ययः। मतान्तरे तु प्रतियोगितावच्छेदकावच्छिन्नस्य [5]सत्त्वमभावविरोधि, न तु प्रतियोगिमात्रम्। गौरवं च प्रामाणिकम्, तथोपपादितमेव। अन्यथा एकवृक्षसत्त्वे[6] वनाभावप्रत्ययो न स्यात्। यदपि किं चेत्यादि, [7]तदपि तुच्छम्। एकस्य सामान्याभावस्य [8]अनेकघटप्रतियोगिकाभावत्ववत् एकैकस्यापि घटस्य सामान्याभावात्मकानेकविशेषाभावाभावत्वाविरोधादिति।

वयं तु ब्रूमः। अभावगोचरलौकिकप्रत्यक्षे प्रतियोगिज्ञानं [9]कारणमित्यविवादम्। तत्र चातिप्रसङ्गवारणाय [10]सप्रकारकत्वेन हेतुत्वस्यावश्यवाच्यत्वे तत्रापि द्रव्यत्वेन घटज्ञानात् घटो नास्तीति [11]प्रतीत्यापत्त्या प्रतियोगितावच्छेदकवैशिष्ट्यज्ञानत्वेन हेतुत्वं वाच्यम्। तथा च तन्मते रूपं नास्तीति ज्ञानं न स्यात्। तादृशज्ञान[12]विषयीभूताभावप्रतियोगितावच्छेदकत्वेनाभिमत[13]तत्तद्रूपत्वादेरनवगमात्।

---

1. क. घटत्वं न तु प्रत्ये-
2. क. शेषत्वे
3. क. 'रूप' नास्ति।
4. ग. तत्प्रतियोग्येव
5. क. असत्त्वम्
6. क. सत्त्वेनाभाव-
7. ख. ग. तत्तुच्छम्
8. क. अनेकप्रतियोगिकाभावस्यापि घटस्य
9. क. न कारण-
10. क. सप्रकारत्वे वाच्ये
11. ख. प्रतीत्या
12. क. विशेषणीभूता-
13. क. तद्रूपत्वेनानुगमात्

## तर्कचूडामणिः

न च प्रागभावध्वंस[1]प्रत्यक्षयोर्व्यभिचारात् प्रतियोगितावच्छेदकवैशिष्ट्यज्ञानं [2]हेतुरेव नेति वाच्यम् । [3]तावताप्यनाद्यनन्ताभावप्रत्यक्षत्वावच्छेदेन तस्य हेतुत्वे बाधकाभावात् ।

न चाद्यक्षणे घटे रूपाभाव इत्यत्र न रूपसामान्याभावस्य तद्विषयत्वं [4]वाच्यम् । रूपवति तदभावाभावात् । तथा च यावद्रूपाभावस्यैव तद्विषयतया तत्प्रतियोगितावच्छेदक[5]तत्तद्रूपत्ववैशिष्ट्यानवगमात् व्यभिचार इति वाच्यम् । [6]तत्रापि रूपप्रागभावस्यैव विषयत्वात् । [7]न च तदवच्छेदेन रूपोत्पत्त्यापत्तिः । एककाले तयोर्विरोधेन प्रागभावस्य स्वाधिकरण एव प्रतियोगिजनकत्वात् ।

न चैवमाद्यक्षणावच्छिन्ने रूपं भविष्यतीति बुद्ध्यापत्तिः । [8]तत्र हि वर्तमानप्रागभावप्रतियोगिरूपाधिकरणत्वं विषयः । तस्य च [9]तत्र बाधिततया तत्सत्त्वयाभावोपपत्ते । अत [10]एवाद्यक्षणावच्छिन्नरूपप्रागभाववति सर्वेषां प्रतीतिः । तथा चात्यन्ताभावस्य [11]तत्राविषयतया न व्यभिचारः ।

नन्वेवमप्यन्धकारप्रत्ययो न स्यात्, तस्य प्रौढप्रकाशकयावत्तेजोविरह-समुदायस्य प्रागभावात्यन्ताभावाद्यात्मकस्य तत्तत्प्रतियोगितावच्छेदकवैशिष्ट्याज्ञाने दुरवगमत्वादिति चेत् — न । अभावत्वप्रकारकतत्प्रत्यक्ष एव तस्य हेतुतया [12]तमस्त्वेन तज्ज्ञानस्य तदजन्यत्वेऽपि व्यभिचाराभावात् ।

---

1. ख प्रत्यक्षयोरव्यभि-
2. क. हेतुरिति ख. हेतुरेवेति
3. क. तावताप्यनाद्यन्ता-
4. ख. साध्यम्
5. ख. तत्तद्वैशिष्ट्यान
6. क. 'तत्रापि' नास्ति
7. क. 'न च .........जनकत्वात्'
8. क. तत्राभिवर्तमान-
9. क. यत्र
10. क. एवाद्ये.........प्रागभाव इति
11. ख. तत्र विषयतया
12. क. तमस्त्वे तज्ज्ञानस्य

## तर्कचूडामणिः

न चालोकाभावत्वमेव तमस्त्वमिति [1]अभावत्वप्रकारकमेव तदिति वाच्यम्। आलोकाभावत्वानङ्गीकारवादिनोऽपि तमस्त्वप्रत्ययेन आलोकासहकृतचक्षुर्ग्राह्यत्वादेरन्यस्यैव तमस्त्वरूपत्वात् । अन्यथा तम इत्यत्र प्रतियोगिनोऽप्यनुल्लेखेन प्रतियोगिज्ञानस्याप्यभावप्रत्यक्षहेतुत्वं न स्यात् ।

किं चात्यन्ताभावादिसमुदायो नान्धकारः, येन तत्रोक्तप्रतियोगिज्ञानस्य व्यभिचारः स्यात् । [2]किं तु तादृशालोकासहकृतप्रौढप्रकाशकतेजोध्वंसः[3] । अत एव तेजोन्तरसमवधाने [4]नान्धकारप्रत्ययः । न च यत्र कदाचिदपि नालोकोत्पत्तिः, किं तु तदत्यन्ताभाव एव तत्र ध्वंसाभावेन तमःप्रत्ययो न स्यादिति वाच्यम् । अनादौ संसारे कदाचिदपि तत्रालोकसम्बन्धो नेत्यत्र प्रमाणाभावात् ।

तस्मादनाद्यन्ताभावप्रत्यक्षमात्रे प्रतियोगितावच्छेदकवैशिष्ट्यज्ञानं हेतुरिति युक्तम् । अत एवोक्तं मणिकृता — 'प्रतियोगितावच्छेदकवैशिष्ट्यज्ञानस्याभावधीहेतुत्वात्[5]' इति ।

इति सामान्याभावप्रकरणम्



1. क अभावप्रकारक
2. ख. किंच क. तादृशालोकसहकृत-
3. ख तमोध्वंसः
4. ख. चान्धकार-
5. क. हेतुत्वावच्छिन्नत्वात्

## अथ विशेषव्याप्तिप्रकरणम्

**यद्वा प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यम् ।**

---

### प्रकाशः

सामान्यव्याप्तिमुक्त्वा विशेषव्याप्तिमाह — **यद्वेति** । [1]एवं लाघवमिति हृदयम् । ननु पृथिवीत्वादौ गन्धादिव्यक्तिव्याप्यत्वं न स्यात् , सर्वस्यैव गन्धादेः

---

### तर्कचूडामणिः

ननु सामान्यव्याप्तिज्ञानं सामान्याभावज्ञानाधीनं तदभावे व्यभिचारिण्यपि [2]तज्ज्ञानापत्तेः । सामान्याभावज्ञानं च मणिकृन्मते संशयानुपपत्तिरूपव्यतिरेक्यनुमानाधीनमिति अनवस्थानात् सामान्यव्याप्तिनिर्वचनमेव न सम्भवतीत्याशङ्कां[3] निराकरोति—**सामान्येति** । अत्यन्ताभावपदस्य विरोधिपरतया सामान्याभावानवगमेऽपि धूमत्वस्य [4]वह्निसमानाधिकरणायोगोलकत्वरूपविरोधिप्रतियोगितावच्छेदकतया व्यभिचारिण्यतिव्याप्त्यनवकाशादिति भावः । यद्वा [5]यद्वेत्यनेन सामान्यव्याप्तेरेव लक्षणान्तरमुच्यत इति भ्रान्तिं वारयति—**सामान्येति** । **लाघवमिति** । यद्यप्यत्रापि [6]वक्ष्यमाणविधया प्रतियोगितानवच्छेदकत्वस्य विवक्षिततया न लाघवम् । तथापि पूर्वलक्षणे [7]यदवच्छिन्नेन यदवच्छिन्नस्य सामानाधिकरण्यमिति विवक्षितम् । इह च यस्य येन सामानाधिकरण्यमिति लाघवमिति भावः ।

---

1. क. 'एवं लाघवमिति हृदयम्' नास्ति
2. ख. तज्ज्ञानापत्तिः
3. ख इत्याशङ्क्य
4. ख वह्निसामान्याधिकरण-
5. क. यद्वेत्यभिधानेन
6. ख. वक्ष्यमाणविरोधितया
7. क. यदवच्छिन्ने यदवच्छिन्न-सामाना-

## प्रकाशः

पृथिवीत्वादिसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् । न च [1]गन्धवत्त्वाद्युपाधेरेव तत्र साध्यत्वं न तु गन्धादिव्यक्तेरिति वाच्यम् । गन्धाननुमानापत्तौ अनुभवविरोधात् । व्यक्तिसाध्यकानुमानोच्छेदप्रसङ्गाच्च इति चेत् —

अत्र ब्रूमः । तादृशात्यन्ताभावप्रतियोगितावच्छेदकं यन्न भवति तदवच्छिन्नेन सामानाधिकरण्यमित्यर्थः । न चैवं पूर्वलक्षणाभेदः, [2]तत्र हि तदवच्छिन्नेन केनापि सामानाधिकरण्यं हेतुतावच्छेदकावच्छिन्नस्य सर्वस्यैव व्याप्तिरित्यर्थः । अत्र तु समानाधिकरणयोरेव व्याप्तिरिति महान् भेदः । तथा चायोगोलकीयो [3]वह्निरत्र

## तर्कचूडामणिः

उपाध्यायसमाधिं जयदेवोक्तेन दूषयति—न चेत्यादिना । न त्विति । न चैवं [4]द्रव्यत्वस्यापि संयोगित्वरूपोपाधिव्याप्यत्वस्यैव सम्भवेन प्रतियोग्यसमानाधिकरणपदवैयर्थ्यमिति वाच्यम् । [5]संयोगवत् संयोगित्वस्याप्यव्याप्यवृत्तितया तदुपादानस्यावश्यकत्वात् । ननु गन्धवत्त्वरूपसाध्यघटकतया [6]गन्धभानसम्भवान्नानुभवविरोध इत्यरुचेराह—व्यक्तीति । तत्तद्वह्निनेत्यग्रिमग्रन्थविरोधश्चेति बोध्यम् । तादृगिति । तथा च [7]तत्तद्गन्धवत्त्वस्य तादृशाभावप्रतियोगितावच्छेदकत्वेऽपि [8]गन्धवत्त्वस्यातथात्वान्नोक्तदोष इति भावः । [9]महानिति । न केवलं लक्षणभेदः, किं तु लक्ष्यभेदोऽपीति महानित्युक्तम् । अत एवात्र मतान्तरत्वोक्तिः ।

1. क. गन्धत्वाद्यु-
2. ख. तत्र यदवच्छिन्नेन
3. ख. वह्निरत्र मते न व्यापक इत्यपि बोद्धव्यम्
4. क. अद्रव्यत्वस्यापि
5. क. संयोगिवत्
6. क. गन्धाभान-
7. क. तत्तद्गन्धत्वस्य
8. क. ग. गन्धत्वस्य
9. ख. 'महानिति ...... .. अत एवात्र' इति ग्रन्थस्त्रुटितः

यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा,

## प्रकाशः

न व्यापकं इति ध्येयम् । [1]अन्यथा धूमत्ववह्नित्वपुरस्कारेण एतद्व्याप्त्यनभिधानेऽनुमित्यनुपयोगापत्तिः । तदिदं वक्ष्यति 'एवं तद्वह्नितद्धूमयोरेव व्याप्तिः स्यात् न तु धूमत्ववह्नित्वावच्छेदेन, न च तदनुमानोपयोगि' इति । व्यभिचारज्ञानप्रतिबन्धकत्वानापत्तेश्च ।

अत्यन्ताभावगर्भलक्षणे प्रतियोगिवैयधिकरण्यप्रवेशात् गौरवमित्यत आह—यदिति । यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यदवच्छिन्नं न भवति तदवच्छिन्नेन येन यस्य सामानाधिकरण्यं तयोर्व्याप्तिरित्यर्थः । न चैवं साध्यसामानाधिकरण्यमित्येवास्तु, किं पूर्वप्रतीकेनेति वाच्यम् । गन्धादिव्यभिचारिणि द्रव्यत्वेऽतिव्याति[2]वारणार्थत्वात् ।

## तर्कचूडामणिः

लक्षणभेदमात्रे च मदभेदानुपयोगात् । अत एव च सामान्यव्याप्तिमुक्त्वा इत्युक्तम् । अन्यथा तल्लक्षणमुक्त्वा इति ब्रूयात् । गौरवमिति । [3]यद्यप्यन्योन्याभावगर्भव्याप्तावपवच्छेदकद्वयप्रवेशात् गौरवं तुल्यम्, तथापि तत्र तत्प्रवेशो नावश्यक इति वक्ष्यते ।

ननु तत्तद्गन्धव्यक्तेः पृथिवीत्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकतया पृथिवीत्वस्य [4]गन्धव्याप्यत्वं न स्यादित्यत आह—यदिति । इदमपि

1. ख. 'अन्यथा ......... प्रतिबन्धकत्वानापत्तेश्च' इति ग्रन्थस्त्रुटितः ।
2. क वारणात
3. क यद्यप्यन्योन्याभावव्याप्यतावच्छेदक-
4. ग. गन्धव्यापकत्वं

स्वसमानाधिकरणान्योन्याभावाप्रतियोगियद्धत्कत्वं वा। अन्यवृत्ति-वह्नितद्वतोरन्यवृत्तिधूमवन्निष्ठात्यन्ताभावान्योन्याभावप्रतियोगित्वात् व्यधि-करणवह्निधूमयोर्न व्याप्तिः, किं तु तत्तद्धूमस्य समानाधिकरणतत्तद्वह्निना।

---

## प्रकाशः

स्वेति। [1]स्वसमानाधिकरणान्योन्याभावाप्रतियोगि यद्धर्मावच्छिन्नं तत्कत्वं स्वस्य तद्धर्मावच्छिन्नव्याप्यत्वमित्यर्थः। नन्वेवं पर्वतीयवह्निग्रहं विना पर्वतीयधूम-व्याप्यग्रहे कथं [2]तस्मादनुमितिरिति चेत्—न। सामान्यलक्षणया प्रत्यासत्त्या वह्निनिरूपितधूमनिष्ठव्याप्तित्वेन तद्व्याप्तेरपि ग्रहात्। सम्बन्धिद्वयस्य प्रत्यक्षत्वे

---

## तर्कचूडामणिः

विशेषव्याप्तिलक्षणम्। अन्यथा वक्ष्यमाणलक्षणाभेदापत्तेरित्याह—**तदवच्छिन्नेन येन यस्य सामानाधिकरण्यमिति।** **एवम्** उक्तलक्षणद्वये विशेषव्याप्तेरेव लक्ष्यत्व इत्यर्थः। स्वसमानाधिकरणवह्नेर्धूमव्याप्तेरिष्टत्वादिति भावः।

ननु [3]तत्तद्वह्निमत उक्ताभावप्रतियोगित्वात् धूमादिव्याप्तावव्याप्तिरित्यत आह—**स्वेति।** तथा च तत्तद्वह्नित्वावच्छिन्नवह्निमतस्तादृशाभावप्रतियोगित्वेऽपि वह्नित्वावच्छिन्नवह्निमतस्तदप्रतियोगित्वान्न दोष इति भावः। **स्वस्येति।** हेतुतावच्छे-दकावच्छिन्नस्य साध्यतावच्छेदकावच्छिन्न[4]व्याप्यत्वमित्यर्थः। तथा च सामान्य-व्याप्तिरुक्ता भवतीति बोध्यम्। विशेषव्याप्तिद्वये दोषं शङ्कते—**नन्विति।**

---

1. क, स्वसमानाधिकरणान्योन्याभाव-प्रतियोगितावच्छेदकं यद्धर्मा-वच्छिन्नतत्कत्वम् स्वस्य
 ख. स्वसमानाधिकरणान्योन्या-भावाप्रतियोगियद्धर्मावच्छिन्न-व्याप्यत्वमित्यर्थः।
2. ख. तस्मादेकस्मादनु-
3. क. तत्तद्वह्नितदुक्ताभाव-
4. क. व्याप्तत्वमित्यर्थः

न चैवं धूममात्रे न व्याप्तिरिति वाच्यम् । सर्वधूमव्यक्तेस्तथात्वेन धूममात्रस्य व्याप्यत्वात् । धूमसम्बन्धिवह्निस्तद्व्याप्य एव । युगपदु-

## प्रकाशः

सम्बन्धस्यापि प्रत्यक्षत्वात् वह्नित्वधूमत्वादिना[1] सकलवह्न्याद्युपस्थितौ सर्वासां व्याप्तीनां ग्रह इत्यप्याहुः ।

**धूममात्रस्येति** । अत एव वह्निनिरूपितधूम[2]व्याप्तित्वेनानुगतव्याप्त्यादिना अनतिरिक्ततया धूमत्वस्य [3]व्याप्यतावच्छेदकत्वमिति भावः । नन्वत्यन्ताभावगर्भ-लक्षणे इदं संयोगि सत्त्वादित्यत्रातिव्याप्तिरित्यत्राह — **कर्मणीति** । नन्वेवमधि-

## तर्कचूडामणिः

**एवं** — समानाधिकरणयोरेव व्याप्तिस्वीकारे । सम्बन्धप्रत्यक्षे सम्बन्धिग्रहस्य हेतुत्वादिति भावः । सामान्यलक्षणामेवाह — **वह्निनिरूपितेति** । तथा च [4]सम्बन्धविषयलौकिकप्रत्यक्ष एव तस्य हेतुत्वं न तु प्रत्यक्षमात्रे, घटपटसंयोगग्रहानन्तरं [5]संयोगत्वप्रत्यासत्त्या [6]अगृहीतसम्बन्धिकसंयोगान्तरस्यापि ग्रहादिति भावः । मतान्तरमाह — **सम्बन्धिद्वयस्येति** । अत्रेदमस्वरसबीजम् — यद्युक्तव्याप्तित्वं न प्रत्यासत्तिः तदा वह्नित्वादिप्रत्यासत्त्या सकलवह्न्याद्युपस्थितावपि [7]न पर्वतीयवह्नि-व्याप्तिग्रहः सम्भवति, तद्व्याप्तेरप्रत्यासन्नत्वात् । यदि च तद्व्याप्तित्वमपि प्रत्यासत्तिः, [8]तदा त्वदुक्तप्रत्यासत्तिवैयर्थ्यम् । सम्बन्धिग्रहं विनापि सम्बन्धग्रहस्योपपादि-

1. क. धूमवत्त्वादिना
2. ख. व्याप्तित्वेनानुगतव्याप्तित्वेनानु-गतव्याप्त्यन्यूनानतिरिक्तवृत्तितया
3. क. स्वव्याप्यता-
4. क. सम्बन्धि-
5. ख. संयोगप्रत्यासत्त्या
6. क. 'अगृहीत .......... तद-वह्नित्वादि' इति ग्रन्थस्त्रुटितः
7. ग. 'न पर्वतीय........अप्रत्या-सन्नत्वात्' नास्ति ।
8. क. 'तदा त्वदुक्तप्रत्यासत्ति' नास्ति ।

तत्तन्निष्ठयोश्च व्याप्तेरेव । कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरणः ।

यद्वा प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वमत्यन्ताभावविशेषणम् । कर्मणि च संयोगाभावस्य प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्न[1]

---

### प्रकाशः

करणभेदेनाभावभेदाभावात् य एव संयोगाभावः कर्मणि प्रतियोग्यसमानाधिकरणः स एव द्रव्यत्वसमानाधिकरण इति द्रव्यत्वेऽपि संयोगव्याप्तिर्न स्यादिति चेत्——न । प्रतियोग्यसामानाधिकरण्यरूपविशेषणवैशिष्ट्यावच्छेदेन यत्समानाधिकरणत्वरूपविशेषणवैशिष्ट्यस्यात्यन्ताभावे विवक्षितत्वात् ।

नन्वेकस्यैव प्रतियोगिसामानाधिकरण्यं तद्वैयधिकरण्यं च विरुद्धमित्यवच्छेदकभेदेन तद्ग्राह्यम् । तथा चावश्यकत्वात् तद्धर्ममेव लक्षणमस्तु, किं तज्ज्ञानाधीनज्ञानेन प्रतियोग्यसमानाधिकरणत्वरूपविशेषणेनेत्याशयवानाह——यद्वेति ।

[1]अत्रापि साधनसामानाधिकरण्यावच्छेदेन प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं

---

### तर्कचूडामणिः

त्वादिति । अत एवेति । धूममात्रस्य व्याप्यत्वादेवेत्यर्थः । न प्रतियोगीति । संयोगाभावनिष्ठप्रतियोग्यसामानाधिकरण्यस्य [2]द्रव्यत्वसत्त्वसामानाधिकरण्यानवच्छिन्नत्वावच्छिन्नत्वाभ्यां नाव्याप्त्यतिव्याप्ती इति भावः ।

---

1. क या for अत्रापि                ग. द्रव्यत्वसामानाधिकरण्याभावात्

2. ख. द्रव्यत्वसामाना                नातिव्याप्तिरिति

त्वम् । न चान्योन्याभावस्याव्याप्यवृत्तित्वम् । अभेदस्याबाधितप्रत्यभिज्ञानात् ।

---

## प्रकाशः

विवक्षणीयम् । तेन [1]नोक्ताव्याप्तिस्तदवस्थैति बोध्यम । अन्योन्याभावोऽप्यव्याप्यवृत्तिरित्यभिमानेन [2]प्रसञ्जितामव्याप्तिमुद्धरति — न चेति । अभेदस्येति ।

नन्वु प्रत्यभिज्ञानबलेन वृक्षत्वेनाभेदेऽपि संयोगवत्त्वेन वृक्षे तद्भेदोऽस्तु । 'मूले वृक्षः कपिसंयोगवान्नाग्रे' इत्यबाधितप्रतीतेः संयोगतदभावयोरिवावच्छेदकभेदेना-

---

## तर्कचूडामणिः

नन्वधिकरणभेदेनाभावभेदाभावात् द्रव्यत्वेऽपि संयोगव्याप्यता न स्यादित्यत आह—अत्रापीति । ननु प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वज्ञानस्य प्रतियोगिवैयधिकरण्यज्ञानाधीनतया तद्धर्ममेव लक्षणमस्तु किमनेन । न च प्रतियोगिवैयधिकरण्यं न ज्ञातमुपयोगि ; किं तु वस्तुसत्प्रतियोगिवैयधिकरण्यस्य यत् अवच्छेदकं तदवच्छिन्नत्वमत्यन्ताभावे ज्ञायमानतयोपयोगीति वाच्यम् । एवं हि गुणादावपि द्रव्यत्वं संयोगाभावश्च प्रतियोगिसमानाधिकरणे इति भ्राम्यतो द्रव्यत्वेन संयोगानुमानं न स्यात् । स्वरूपसत्प्रतियोगिवैयधिकरण्यावच्छेदकगुणत्वाद्यवच्छिन्नत्वस्य साधनसामानाधिकरण्यवैशिष्ट्यावच्छेदेन [3]अग्रहात् । न चेष्टापत्तिः, अनुभवविरोधादिति चेत् —

---

1. क. नोक्तातिव्याप्तिस्तदवस्थैवेति
2. ख. प्रसञ्जिताव्याप्ति-
3. क. ग. ग्रहात्

## प्रकाशः

विरोधाच्च। किं च संयोगाभावेन संयोगवदन्योन्याभावान्यथासिद्धौ घटान्योन्याभावोऽपि न सिध्येत्। घटत्वात्यन्ताभावेनैव [1]तत्प्रतीतेरन्यथासिद्धेरिति चेत्—

अत्राहुः। [2]घटत्वत्वज्ञानं विना घटत्वात्यन्ताभावज्ञानं न [3]सम्भवति। तच्च [4]घटान्यावृत्तित्वगर्भम्। घटान्यत्वं च घटत्वात्यन्ताभाववत्त्वमेवेत्यात्माश्रयात् [5]अस्त्यतिरिक्ता घटान्योन्याभावः, इह तु घटादिसंयोगत्वस्यावच्छेदकस्य [6]भानध्रौव्ये तत एवास्य तद्बुद्ध्यन्यथासिद्धा न तद्वत्ति [7]तद्वदन्योन्याभावः स्वीकरणीय इति।

---

## तर्कचूडामणिः

अत्र ब्रूमः। प्रतियोगिवैयधिकरण्यमित्यत्र [8]विशब्देन नञः समानार्थो विवक्षितः। तथा च प्रतियोग्यनधिकरणत्वमेव प्रतियोगिवैयधिकरण्यं पर्यवस्यति। तदवच्छेदकं गुणत्वादि तदवच्छिन्नत्वं संयोगाभावस्य। तथा च नोक्तदोष इति। अत्र वृक्षाभेदप्रत्यभिज्ञा विवक्षितेति मत्वा देशयति—नन्विति। ननु संयोगसद्वदन्योन्याभावयोरेकत्र विरोधात् [9]प्रतीतेरपि भ्रमत्वम् अत आह—संयोगेति। जयदेवमतमाह — अत्राहुरिति। वस्तुतस्संयोगात्यन्ताभाव एवोक्तप्रतीतिविषयः। तत्र प्रतिवादमुद्धरति—घटत्वेति। ननु धर्मान्तरकल्पने गौरवात् [10]घटत्वत्वमपि घट एवेत्यत आह — तत्रेति। घटत्वे घटत्वत्वमिति प्रत्ययादिति भावः। अत्यन्ताभाववत्त्वमिति। अन्योन्याभावानभ्युपगमादिति भावः।

---

1. क. तत्प्रतीत्यन्यथासिद्धिरिति
2. क. घटत्वज्ञानं
3. क. सम्भवतीति
4. ख. अन्यावृत्तित्व-
5. क. अस्त्यतिरिक्तघटा-
6. ख. भासनध्रौव्येण तत एवावश्यकात् तद्बु-
7. ख. तद्वदन्याभावः स्वीक्रियत इति
8. क. विशब्दोनञ्समानार्थो
   ख. विशब्दो न सामान्यार्थो
9. क. प्रतीतेरविभ्रमत्वं
10. ख. घटत्वेऽपि घट

व्याप्यव्यापकभावाज्ञानेऽपि वस्तुमतस्तथात्वेनाज्ञायमानस्य सम्बन्धत्वेनैव भानस्य षष्ठ्यर्थत्वम्। न चैवमननुगमो दोषाय। कस्य का व्याप्तिरित्यननुगतस्यैव लक्ष्यत्वात्। अथ धूमवति वह्निहृदौ न स्तः, धूमवान्

### प्रकाशः

वस्तुतो मूले संयोगावच्छिन्नात् वृक्षात् शाखायां संयोगाभावावच्छिन्नो वृक्षो [1]न भिन्न इति अभेदप्रतीतिसत्त्वे तद्भेदप्रतीतिर्विरोधान्न भवितुमर्हतीति अनन्यगत्या तस्याः भिन्नविषयत्वं कल्प्यते। तदुक्तम्—'अभेदस्याबाधितप्रत्यभिज्ञानात्' इति।

### तर्कचूडामणिः

नन्वेवं संयोगवदन्योन्याभावो गुणादावपि न स्यात्, तत्रापि तत्प्रतीतेरत्यन्ताभावेनान्यथासिद्धे। [2]किं च संयोगी नेति तद्भेदावगाहिज्ञानस्य बलवद्बाधकं विना अत्यन्ताभावविषयकत्वमयुक्तम्। न चात्रोक्तप्रत्यभिज्ञा बाधिका। भिन्न[3]विषयत्वात्। नापि प्रतियोगितावच्छेदकसामानाधिकरण्यविरोधो बाधकः। एकावच्छेदेनैव तयोर्विरोधात्। न चैव [4]घटेऽप्यवच्छेदकभेदेन तद्भेदः स्यादिति वाच्यम्। उक्तस्थल इव तत्र तद्भेदज्ञानाभावात्। अन्यथा [5]तत्रापि संयोगतदत्यन्ताभावयोरिव घटतदभावयोरप्यैकाधिकरण्यं स्यादित्यरुचेराह—वस्तुत इति। तस्या इति। भेदप्रतीतेरित्यर्थः। [6]अभेदे भासमाने भेदबुद्धेः तद्धर्माभावविषयकत्वादिति भावः।

1. ख. अभिन्नः
2. क. ग. 'किं च संयोगी नेति' नास्ति।
3. ख. विषयकत्वात्
4. क. घटे व्यवच्छेदक-
5. क. तथापि
6. क. अभेदभासमाने

## तर्कचूडामणिः

नन्वभेदज्ञानपूर्वकमेव[1] भेदज्ञानमित्यत्र नियामकाभावेन यत्र प्रथममेव भेदज्ञानं तत्र विरोधाभावेन [2]भेदविषयकत्वमेव । [3]न चाभेदज्ञानपूर्वकस्थले तज्ज्ञानस्य संयोगात्यन्ताभावविषयत्वश्रौव्येनान्यत्रापि तथेति वाच्यम् । [4]यत्र भेदज्ञानानन्तरमभेदज्ञानं तत्र तज्जातीयविषयत्वस्य क्लृप्ततया अन्यत्राप्यभेदज्ञानस्य तज्जातीयविषयकत्वस्यैव युक्तत्वात् । अत एव भेदज्ञानस्याभेदज्ञानविरोधितया [5]एकाराभेदज्ञानस्य जात्यभेदविषयकत्वमिति सिद्धान्त इति चेत् —

अत्र ब्रूमः । अस्ति ह्यग्रावच्छिन्नवृक्षस्य संयोगवद्भेदज्ञानवत् तदभेदज्ञानमिति सकलसिद्धम् । तथा चैकत्र तयोर्विरोधेनान्यतरज्ञानस्यावश्यं विषयभेदो वाच्यः । तत्रान्योन्याभावप्रतियोगितावच्छेदकयोरन्यत्र विरोधित्वेन क्लृप्ततया भेदप्रतीतिरेव भिन्नविषयेति [7]कल्प्यते न त्वभेदप्रतीतिः । तत्र क्लृप्तविरोधाभावात् ।

नन्वन्योन्याभावतत्प्रतियोगितावच्छेदकात्यन्ताभावयोः समनियतत्वस्यान्यत्र क्लृप्ततया वृक्षेऽपि संयोगाभाववति तद्भेद आवश्यक इति अभेदप्रतीतिरेव भिन्नविषयास्त्विति चेत् — न । अनुकूलतर्काभावेन तादृशव्याप्तेरसिद्धेः । अन्यथा तदभाववति तज्ज्ञानमप्रमेत्यत्र दृष्टत्वेन संयोगज्ञानस्याप्रमात्वापत्तिः । यदि च तत्र प्रतियोगिव्यधिकरणेत्यत्यन्ताभावविशेषणं तदा तुल्यम् । न च प्रतियोगितावच्छेदकमात्रस्य तद्विरोधित्व[8]नियमोऽपि नेति वाच्यम् । तदविरोधित्वे तदत्यन्ताभाववत्त्वानुपपत्तेः । न च संयोगस्य तद्वदन्योन्याभावात्यन्ताभावरूपत्वे अन्योन्याभावस्यापि तद्विरहरूपत्वमेव, तथा [9]चाविरोध एव, संयोगस्य स्वात्यन्ताभावसामानाधि-

---

1. क. पूर्वमेव
2. ख. भेदविषयत्व-
3. क. न वाभेद
4. क. यत्राज्ञानानन्तरं
5. ख. अकाराभेद-
6. क. त्वप्रा-
7. क कल्पनेन्यत्व-
8. ख. नियमोऽप्यप्रयोजक इति
9. क. च विरोधः

## प्रकाशः

[1]सम्बन्धत्वेनेति । [2]संयोगत्वादिनेत्यर्थः । एवं च यथा [3]नाननुगमः तथोक्तं प्राक् । यद्वा [4]सम्बन्धत्वं न व्याप्तिघटितमिति मनेनेदं बोध्यम् । एवम्— [5]स्वपदयत्पदादिना लक्षणकरणे । अथेति । [6]न चात्यन्ताभावगर्भे लक्षणे प्रतियोग्यसमानाधिकरणपदेनैव अभिमतसिद्धिरिति वाच्यम् । तस्य प्रतियोगिता-

## तर्कचूडामणिः

करण्यस्य सकलसिद्धत्वादिति वाच्यम् । अन्योन्याभावस्य प्रतियोगितावच्छेदकात्यन्ताभावत्वस्य निरसिष्यमाणत्वात् ।

[7]न च संयोगस्य स्वात्यन्ताभावसामानाधिकरण्यवत् स्वविरोधिसामानाधिकरण्यमपि न विरुद्धमिति वाच्यम् । गुणत्वादिनापि तस्य सामानाधिकरण्यप्रसङ्गात् । अन्योन्याभावस्य [8]स्वाभावाविरोधित्वे हेत्वनुपन्यासाच्चेत्यलं पल्लवितेन ।

ननु सम्बन्धत्वस्यापि जनकत्वघटितत्वादात्माश्रय [9]इत्यत आह—संयोगत्वादिनेति । तथोक्तमिति । सम्बन्धज्ञानत्वेन हेतुत्वमित्यर्थः । ननु समवायत्वस्य सम्बन्धघटितत्वात् दोषतादवस्थ्यमित्यत आह— [10]यद्वेति । अत्रोपाध्यायाः साध्यवत् यस्येत्यत्र व्याप्यव्यापकभावस्य [11]षष्ठ्यर्थत्वशङ्कैव नास्ति, हेतुसाध्यवतोरेव

1. क. सम्बन्धित्वेनेति
2. क. संयोगादिनेत्यर्थः
3. क. नानुगमः
4. क. सम्बन्धित्वम्
5. क. स्वरूपयत्प-
6. क. 'न च' नास्ति
7. ख. 'न च संयोगस्य स्वात्यन्ताभावसामानाधिकरण्यवत्' नास्ति ।
8. ख. स्वाभावविरोधित्वे
9. क. इत्याह
10. क. यच्चेति
11. क. 'षष्ठ्यर्थत्वशङ्कैव ... ... व्याप्यव्यापकभावस्य' इति ग्रन्थस्त्रुटितः ।

वह्निमद्भूमौ न भवतीति प्रतीतेः व्याप्यवृत्तिप्रतियोगिकौ वह्निवह्नि-मतोरत्यन्तान्योन्याभावौ धूमवति विद्येते इति कथमेते लक्षणे इति चेत्— न तादृशाभावानभ्युपगमात् ।

---

## प्रकाशः

वच्छेदकावच्छिन्नासामानाधिकरण्यपरत्वात् तस्य च तत्रापि सत्त्वादिति भावः । तादृशेति । प्रतियोगिनि वह्नौ सति तदभावासम्भवादिति भावः ।

न च प्रतियोगितावच्छेदकभेदेनाभावभेदव्यवस्थापनात् द्वित्वावच्छिन्न-प्रतियोगिकाभाव आवश्यक इति वाच्यम् । [1]तावता हि तदुभयाभाववति द्वित्वावच्छिन्नाभावः सिध्यतु न त्वेकसत्त्वे । [2]न च प्रतियोगितावच्छेदकावच्छिन्न-[3]स्वाभावविरोधित्वात् [4]एकसत्त्वेऽपि तदुभयाभावो न विरुद्ध इति वाच्यम् । [5]लाघवात् प्रतियोगित्वेनैव [6]विरोधित्वात्, प्रतीतेरपराभाव[7]विषयत्वेनैवोपपत्तेः । 'सविशेषणे हि' इति न्यायात् स्वर्गी ध्वस्त इतिवत् ।

---

## तर्कचूडामणिः

तत्र सम्बन्धप्रतीतेः । तथा च सम्बन्धत्वेन भातस्य व्याप्यव्यापकभावस्य षष्ठ्यर्थ-त्वमिति मूलग्रन्थोऽसंगत एवेत्याहुः । तस्येति । तथा च [यथा च] प्रतियोग्य-समानाधिकरणपदं प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यपरं तथा व्याप्ति-लक्षणे प्रपञ्चितम् ।

जयदेवमतावष्टम्भेन शङ्कते—न चेति । ननु तर्हि तत्प्रतीतिर्न स्यात् । न च तदुभयसाहित्याभावस्तद्विषय इति वाच्यम् । द्रव्यत्वगुणत्वे न स्त इत्यत्र

---

1. ख. तावतापि
2. क. 'न च' नास्ति
3. क. अवच्छिन्नाभावस्य
4. ख. एकसत्त्वे द्वयाभावो
5. क. 'लाघवात्' नास्ति
6. ख. विरोधात्
7. क. विषयत्वेनोपपत्तेः

## प्रकाशः

केचित्तु व्यासज्यवृत्तेरपि प्रतियोगितावच्छेदकत्वं स्वीक्रियत एव । प्रतियोगिता[1]परं न व्यासज्यवृत्तिरित्याहुः ।

---

## तर्कचूडामणिः

[2]तत्साहित्याप्रतीतेः । [3]न चैकत्रापरसाहित्याभावो विषयः, [4]तस्य प्रतियोगितयानुल्लेखादित्यत आह—प्रतीतेरिति । सविशेषणे हीति । यद्यपि घटपटौ नेत्यत्र [5]विशेषणविशेष्यभावाभावात् न्यायानुपपत्तिः ; तथापि तत्रान्यतर[6]बाधेऽन्यतरविषयकत्वात् इहापि तद्विषयत्वमिति भावः ।

ननु प्रतियोगितावच्छेदकावच्छिन्नसत्त्वमभावविरोधीति प्रागेवोक्तमित्यस्वरसात् जयदेवमतमाह केचिदिति । नन्वेकसत्त्वेऽपि द्वित्वावच्छिन्नाभावस्वीकारे 'तदनभ्युपगमात्' इति ग्रन्थः कथमित्यत आह—प्रतियोगिनेति । द्वित्वावच्छिन्नप्रतियोगिकाभावनिषेधपरो नायं ग्रन्थः । किं तु तादृशाभावप्रतियोगिता न व्यासज्यवृत्तिरित्येवंपरः[7] । प्रतियोगिसमानाधिकरणत्वाच्च नाव्याप्तिरिति भावः । न च तदव्यासज्यवृत्तित्वे मानाभावः, प्रत्युत प्रतियोगितायाः [8]अवच्छेदकत्ववत् व्यासज्यवृत्तित्वमेव स्यादिति वाच्यम् । तथा सति अयमेको द्वित्वावच्छिन्नप्रतियोगीत्यनुभवाभावप्रसङ्गात् । व्यासज्यवृत्तिधर्मस्य [9]एकाश्रयमात्राग्राह्यत्वात् ।

---

1. क. कथं
2. क. तत्साहित्याप्रसिद्धेः
3. क. न चैकत्रापरः
4. क. तत्र प्रतियोगितानु-
5. ख. विशेषणविशेष्यभावात्
6. ख. बोधे
7. क. इत्येवंपरम्
8. ख. ग अवच्छेदकवत्
9. ग. एकाश्रयमात्रत्वात्

**अभ्युपगमे वा तत्र तदुभयं प्रतियोगि, न वह्निवह्निमन्तौ ।**

**अथ वा अनौपाधिकत्वं व्याप्तिः । तच्च यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत् तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तेन समं सामानाधिकरण्यम् ।**

---

## प्रकाशः

तादृशाभावप्रतियोगितावच्छेदकं यन्न भवति तदवच्छिन्नेन सामानाधिकरण्यमित्यर्थेऽव्याप्तिशङ्का तादृशाभावाभ्युपगमपक्षेऽपि नेति प्रौढिवादेनाह — **अभ्युपगमे वेति**[1] । यावत्साधनाव्यापकाव्याप्य[2]साध्यसामानाधिकरण्यं पर्यवसितमनौपाधिकत्व-

---

## तर्कचूडामणिः

न चैकघटसत्त्वे तदभावाभावप्रत्ययवत् एकसत्त्वे द्वित्वावच्छिन्नाभावाभावप्रत्ययापत्तिः, [3]प्रतियोगिताश्रयस्याभावाभावरूपत्वादिति वाच्यम् । प्रतियोगितावच्छेदकावच्छिन्नस्यैव[4] तद्विरहरूपताभ्युपगमात् । तस्यैव तद्विरोधित्वादिति भावः । [5]प्रतियोग्यसामानाधिकरण्यस्य तदवच्छिन्नासामानाधिकरण्यरूपतया अव्याप्तितादवस्थ्यमेवेत्यस्वरसो बोध्यः ।

ननु तदुभयस्य प्रतियोगित्वे वह्न्यादेरपि प्रतियोगितया न [6]वह्निवह्निमन्ताविति ग्रन्थासगतिः । तत्राह—**तादृशेति** । तथा च [7]द्वित्वमवच्छेदकं न वह्नित्वं वह्निमत्त्वं वेति मूलग्रन्थार्थ इति भावः । **प्रौढिवादेनेत्य**भिमानमात्रम् । [8]वस्तुतः पूर्वापरि-

---

1. क. चेति
2. क. 'साध्य' नास्ति
3. क. प्रतियोगिताश्रयत्वस्य
4. क. स्यैतद्विरह-
5. ख अत्र धूमे वह्निव्याप्तिरपि न स्यात्, तादृशाभावप्रतियोगिवह्निसमानाधिकरणत्वात्. तादृशाभावस्य प्रतियोगितावच्छेदकावच्छिन्नत्वाच्चेत्यस्वरसो बोध्यः ।
6. ख. वह्निवह्निमन्तावपीति
7. क. द्वित्वावच्छेदकेन वह्नित्वम्
8. क. वस्तुतापूर्वापरि-

न ह्येवं सोपाधिः, तत्र साधनसमानाधिकरणात्यन्ताभावप्रतियोगिन आर्द्रेन्धनवत्त्वादेरुपाधेर्योऽत्यन्ताभावस्तेन समं साध्यस्य धूमादेः सामानाधिकरण्याभावात्, उपाधेः साध्यव्यापकत्वात् ।

---

## प्रकाशः

माह — तत्रेति । स्वं—साधनम् । व्यभिचारिण्यतिव्याप्तिवारणाय यावदिति । अवच्छेदकावच्छिन्नेति सम्पातायातम् ।

---

## तर्कचूडामणिः

तोषेणैवेत्यवधेयम् । ननु यावत्स्वसमानाधिकरणेति [1]लक्षणस्य उपाध्यभावरूपत्वाभावे कथमनौपाधिकत्वरूपत्वम् । [2]अतादृशस्याप्यनौपाधिकत्वरूपत्वे अत्यन्ताभावादिगर्भलक्षणस्यापि तत्त्वापत्तिः, तत्राह — यावदिति । साध्यव्यापकत्वरूप[3]विशेषणविरहघटिततया तत्त्वमिति भावः । स्वशब्दस्य [4]साध्यपरत्वे व्यभिचारिसाधारण्यमित्यत आह — साधनमिति ।

यावदिति प्रतियोगिविशेषणम् । प्रथमात्यन्ताभावविशेषणत्वे तद्दोषतादवस्थ्यमिति ध्येयम् । इदमपि तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसामान्याभावविवक्षायां बोध्यम् । सम्पातेति । नन्वेवं वह्नेरपि धूमसमानाधिकरणात्यन्ताभावप्रतियोगितया तत्प्रतियोगिकात्यन्ताभावसामानाधिकरण्यस्य च [5]वह्न्यभावेन धूमे वह्निव्याप्तिर्न स्यादिति चेत् — समानाधिकरणयोरेव व्याप्तेरत्र [6]लक्ष्यतया समानाधिकरणवह्नौ [7]तद्धूमाव्यापकवह्न्यन्तरप्रतियोगिकात्यन्ताभावसामानाधिकरण्यस्यैव

---

1. क. लक्षणस्योपाध्यभावरूपत्वाभावरूपत्वाभावे
2. ख. तादृश-
3. क. विशेषणरूपघटिततया
4. ख. व्याप्यपरत्वे
5. क. वह्न्यभावेन
6. क. लक्षणतया
7. क. तद्धूमाव्याप्यक-
   ग. तद्धूमव्यापक-

एतदेव यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वं गीयते ।

---

## प्रकाशः

एतदेवेति । स्वं साधनं व्यभिचारि [1]येषां ते स्वव्यभिचारिणः स्वाव्यापका इति यावत्, तद्व्यभिचारि तदव्याप्यं यत् साध्यं तत्सामानाधिकरण्यमित्यर्थः । ध्वंसो विनाशी [2]जन्यत्वादित्यत्र विनाशसामग्र्यादिकं विनाशित्वप्रकारकप्रमाविशेष्यत्वादिकं च साध्यव्यापकं [3]साधनाव्यापकमस्तीति न तत्रातिप्रसङ्गः ।

---

## तर्कचूडामणिः

सत्त्वात् । एवं च धूमसमानाधिवह्निरत्रापि मते व्याप्य एव । न चायोगोलकीयवह्नेः साध्यासमानाधिकरणत्वादेवातिव्याप्तिनिरासे विशेषणान्तरवैयर्थ्यमिति वाच्यम् । गन्धसमानाधिकरणद्रव्यत्वहेतावतिव्याप्तिवारकत्वात् ।

न चावच्छेदकपदानुपादाने धूमवत्त्वस्यापि वह्निव्यापकतत्तदार्द्रेन्धनात्यन्ताभाव[4]समानाधिकरणतया वह्नेर्धूमवत्त्वव्याप्यत्वप्रसङ्गेन हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यत् तदवच्छिन्नप्रतियोगिकात्यन्ताभावसामानाधिकरण्यस्य साध्ये विवक्षणीयतया [5]अवच्छेदकपदस्यावश्यकत्वमिति वाच्यम् ।

धूमस्य वह्निव्यापकतत्तदार्द्रेन्धनप्रतियोगिकात्यन्ताभाव[6]समानाधिकरणत्वेऽपि वह्न्यव्यापकधूमवत्त्वप्रमाविशेष्यत्वात्यन्ताभावसामानाधिकरण्याभावादेव यावत्त्वगर्भलक्षणाभावसिद्धौ अवच्छेदकपदवैयर्थ्यस्य वज्रलेपायितत्वादिति ।

---

1. क. येभ्यस्ते
2. ख. जन्यत्वादित्यादौ
3. क. 'साधनाव्यापकं' नास्ति ।
4. क. सामानाधिकरण्यं तथा
5. ग. अत्र ग्रन्थपातः
6. क. सामानाधिकरणत्वेनापि

यद्वा यावद्यत्समानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावासामानाधिकरण्यं यस्य तस्य तदेवानौपाधिकत्वम् । सोपाधौ तु साध्यवन्निष्ठात्यन्ताभावाप्रतियोगिन उपाधेर्योऽत्यन्ताभावस्तेन समं हेतोः सामानाधिकरण्यम् । उपाधेः साधनाव्यापकत्वात् ।

---

## प्रकाशः

यावत्साध्यव्यापक[1]व्याप्यत्वपर्यवसितमनौपाधिकत्वमाह — यावदिति । [2]अत्र यत्पदं साध्यपरम् । सोपाधावतिव्याप्तिवारणाय यावदिति अत्यन्ताभावाप्रतियोगिविशेषणम् । तदपि व्यतिरेकिधर्मपरम् । तेन तादृश[3]प्रमेयत्वाद्यभावाप्रसिद्ध्या न कोऽपि दोषः । न चैवं केवलान्वयिसाध्यके हेतौ साध्यव्यापकस्य व्यतिरेकिणो धर्मस्याप्रसिद्धिरिति वाच्यम् । आकाशात्यन्ताभावस्य तादृशस्य तत्रापि सत्त्वात् । नन्वेवं तत्र तत्प्रतियोगिकात्यन्ताभाव आकाशादिरेव स्यात् । तदसामानाधिकरण्यं च [4]तदधिकरणानधिकरणत्वमेव वाच्यम् । तथा च पुनरप्रसिद्धिः । [5]आकाशाद्यधिकरणाप्रसिद्धेः । न च [6]तदनधिकरणाधिकरणत्वमेव तदर्थः । वह्नेरपि धूमव्यापकार्द्रेन्धनात्यन्ताभावानधिकरणमहानसाद्यधिकरणत्वेन सोपाधिसाधारण्यापत्तेरिति चेत् —न ।

---

## तर्कचूडामणिः

स्वस्य [7]व्यभिचारीति षष्ठ्यर्थाङ्गीकारे [8]हेतव्याप्यत्वमर्थः स्यात् । तथा च [9]वह्नेर्धूमाव्याप्यस्वसामग्रीव्यापकतया धूमस्य [10]तव्याप्यत्वं न स्यादित्यत आह —

---

1. ख. व्याप्यत्वं
2. क. 'अत्र' नास्ति ।
3. ख. प्रमेयत्वाद्यत्यन्ताभाव·
4. ख. तदधिकरणत्वम्
5. क ख आकाशाद्यधिकरणाप्रतीतेः
6. क तदधिकरणानधिकरणत्वम्. ख. तदनधिकरणाधिकरणाधिकरणत्वम् .
7. क. व्यभिचारेति
8. ग. हेतुव्याप्यत्वम्
9. क. वह्नेर्धूमव्याप्य-
10. क. तव्द्यापित्वं

## प्रकाशः

तादृशात्यन्ताभावे असामानाधिकरण्यं सामानाधिकरण्याभावो यस्येत्यर्थात् । तदेवेत्यस्य तादृशात्यन्ताभावनिष्ठसामानाधिकरण्याभावकत्वमेवानौपाधिकत्वमित्यर्थो बोद्धव्यः । तेनात्यन्ताभावनिष्ठसामानाधिकरण्याभावस्य हेतुनिष्ठानौपाधिकत्वरूपत्वं विरुद्धमिति दूषणमलग्नकं बोध्यम् ।

यत्तु तदधिकरणानधिकरणत्वमेव विवक्षितम् । तदर्थश्च [1]तदनधिकरणता व्यापिका यदधिकरणतायाः तत्त्वम् । वह्न्यधिकरणतायाश्च आर्द्रेन्धनात्यन्ताभावानधिकरणता न व्यापिका अयोगोलके व्यभिचारादिति ।

तन्न । अपदार्थत्वात् । विवक्षायास्तु यावत्साध्यव्यापकाधिकरणता व्यापिका यदधिकरणतायाः इत्येव विवक्ष्यतां लाघवात् । किं तदत्यन्ताभावादिगर्भत्वेन, गौरवात् । अपदार्थव्याख्यानस्योभयत्रापि तुल्यत्वात् ।

वस्तुतस्तु तत्प्रतियोगिकात्यन्ताभावासामानाधिकरण्यमित्यत्र नञ्व्यत्यासेन स्वसमानाधिकरणात्यन्ताभावाप्रतियोगियावत्साध्यव्यापकत्वमित्यर्थो विवक्षितः । तेन नाप्रसिद्धिः । न च सोपाधिसाधारण्यम्, नापि व्यतिरेकिधर्मत्वविवक्षागौरवमिति ।

---

## तर्कचूडामणिः

स्वमिति । ननु [2]जन्यत्वाव्यापकभावत्वाद्युपाध्यव्याप्यतया [3]विनाशित्वस्य, जन्यत्वे [4]तव्द्याप्यता स्यात्, तत्राह[5]—ध्वंस इति । यावत्त्वस्य प्रथमाभावविशेषणत्वे व्यभिचारिसाधारण्यम्, अत आह—अत्यन्तेति । [6]व्यतिरेकीति । अत्यन्ताभावप्रतियोगीत्यर्थः । अप्रसिद्ध्या यो दोषः स नेत्यर्थः ।

---

1. ख. तदनधिकरणव्यापिका
2. ख. जन्यत्वव्यापक-
3. ख. ह्यविनाशित्वस्य
4. क तद्व्यापिता
5. क. 'आह' नास्ति ।
6. क. 'व्यतिरेकीति । अत्यन्ताभावप्रतियोगीत्यर्थः' नास्ति ।

## प्रकाशः

अन्ये तु यावदिति चरमात्यन्ताभावविशेषणम् । तथा च साध्य[1]व्यापकप्रतियोगिका यावन्तोऽभावाः तदसामानाधिकरण्यमित्यर्थः [2]विवक्षितः ।

नन्वेवं साध्यव्यापकोपस्थापकपदस्यासर्वपरतायां किंचित्परत्वे नानाविशेषणावच्छिन्नैकप्रतियोगिकयावदत्यन्ताभावासामानाधिकरण्यवतः सोपाधेरपि संग्रहप्रसङ्गः। यथा यावन्ति पाकसम्पादकानि तावन्ति ते जातानीत्यत्र पाकपदस्य यत्किंचित्पाकपरत्वम्। [3]अन्यथा वायावसम्भवात् । [4]यथा च यावद्घटोपलम्भकसत्त्वे घटाभावोपलब्धिरित्यत्र घटपदस्य यत्किंचिद्घटपरत्वं, तथैव व्युत्पत्तेः, अन्यथा असम्भवादिति चेत् —

## तर्कचूडामणिः

**उपाध्याय**समाधिमाह — ता**दृशेति** । तदीयमेव मतान्तरं जयदेवोक्तेन दूषयति — **यत्त्वित्यादिना** । सोपाधिसाधारण्यं निराकरोति — [5]**तदर्थश्चेति** । किमयं शक्यो लक्ष्यो वा । आद्ये — **अपदार्थत्वादिति** । द्वितीये — [6]**विवक्षाया इति** । वक्ष्यमाणगौरवं पूर्वापरितोषबीजं हृदि निधाय **जयदेवमतमाह** — **वस्तुत इति** । **नञ्व्यत्यासेनेति** । सामानाधिकरण्यान्वितस्य नञः प्रतियोगिपदेनान्वय इति भावः । भावप्रत्ययव्यत्यासोऽपि द्रष्टव्यः । **नाप्रसिद्धिरिति** । केवलान्वयिन्यपि साध्यव्यापकेषु [7]तादृशाभावाप्रतियोगित्वसत्त्वादिति भावः ।

**वाचस्पतिमिश्रमतमाह**—**अन्ये त्विति** । व्यापकविशेषणत्वे [8]व्यतिरेकित्वविवक्षागौरवादिति भावः । **तत्रोपाध्यायोक्तदोषं शङ्कते**—**नन्विति** । अवच्छेदक-

1. ख. व्यापकप्रतियोगिनो यावन्तोऽत्यन्ताभावाः
2. ख. 'विवक्षितः' नास्ति ।
3. ख. अन्यथासम्भवात्
4. क. 'यथा च यावत्' नास्ति ः
5. ख. तदर्थनिश्चयेति
6. ग. विवक्षायामिति
7. ग. तादृशाभावप्रतियोगिसत्त्वात्
8. ख. व्यतिरेकत्व

## प्रकाशः

न। तत्र तथैव तात्पर्येण एकमात्रपाकाद्युपस्थितेः। अत्र तु साध्य[1]व्यापकत्वाद्याश्रयप्रतियोगिकयावदभावस्य विवक्षितत्वात्। अन्यथा प्रतिबन्धकाभावकूटस्य कारणत्व[2]मित्यादौ का गतिः? तत्रापि [3]यावत्प्रतिबन्धकाभावस्यैव कूटपदार्थत्वात् त्वदुक्तरीत्या एकप्रतिबन्धकप्रतियोगिक[4]यावदभावस्य हेतुत्वेनान्यतमप्रतिबन्धकसत्त्वेऽपि कार्यापत्तेः।

उत्तरग्रन्थस्तु साध्यव्यापकत्वगर्भलक्षण इत्येवंपरतया नेयः। अत एव साध्यव्यापकत्व इति बहुषु [5]स्थलेषु संगच्छते पाठ इत्याहुः।

---

## तर्कचूडामणिः

भेदादभावभेद इत्यभिप्रेत्याह—नानाविशेषणेति। ननु यावदिति पदस्य विशेष्यतावच्छेदकानवच्छिन्नसाकल्य[6]वाचकतया साध्यव्यापक[7]प्रतियोगिका जगति यावन्तोऽभावास्तावतां लाभ इति वाच्यम्। साध्यव्यापकपदस्यैव किंचित्परत्वे तत्प्रतियोगिकाभाव एव [8]यावत्त्वाप्राप्तौ व्यापकान्तरप्रतियोगिकाभावस्यालाभात्। तत्र दृष्टान्तमाह—यथेति। तत्र जयदेवोक्तपरिहारमाह—न तत्रेपि। यावन्ति ते पाकसम्पादकानीत्यादौ पाकपदस्य किंचित्त्वविशिष्टपाकपरत्वम्। इह तु व्यापकपदस्य किंचित्त्वयावत्त्वौदासीन्येन व्यापकमात्रपरत्वमिति विशेषः। तथा च यत्र प्रतियोगिवाचकपदस्य किंचित्त्वपरत्वं नास्ति तत्रानुयोगिनि यावत्त्वविशेषणेनैव तत्प्रतियोगिनि यावत्त्वलाभ इति व्युत्पत्तिबलादत्र [9]यावदभावलाभ इति भावः। ईदृशव्युत्पत्त्यभावे बाधकमाह—अन्यथेति।

---

1. ख. व्यापकत्वाश्रयप्रतियोगित्वं यावति तावदत्यन्ताभावे तात्पर्यमिति तदुपस्थितिः। अन्यथा
2. क. इत्यत्र
3. क. यावत्त्वस्यैव कूटपदार्थत्वे त्वदुक्त-
4. ख. यावदत्यन्ताभावस्य
5. ख. ग्रन्थेषु पाठः संगच्छते
6. क. साधकतया
7. क. 'प्रतियोगिकाः ............ व्यापकान्तर' नास्ति।
8. ग. यावत्प्राप्तौ
9. ख. अत्र ग्रन्थपातः।

यद्वा यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः। तथा हि धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदकम्। धूममात्रस्य वह्निसम्बन्धित्वात्। वह्नेस्तु धूमसम्बन्धे न वह्नित्वमवच्छेदकम्, संयोगादौ तथात्वादर्शनात्। किं तु वह्नावार्द्रेन्धनप्रभववह्नित्वं धूमसम्बन्धितावच्छेदकं तादृशं च व्याप्यमेव।

---

## प्रकाशः

यत्सम्बन्धितेति। यत्साध्यसम्बन्धितावच्छेदकरूपवत्त्वं [1]यस्य साधनस्य तस्य तत्साध्यसम्बन्धिता तत्साध्यव्याप्तिरित्यर्थः। धूमसम्बन्धिता वह्नेरपीत्यत उक्तम् अवच्छेदकरूपवत्त्वमिति। सम्बन्धिता च सामानाधिकरण्यम्। तेन घटकारणतालक्षणतत्सम्बन्धितावच्छेदकदण्डत्वावच्छिन्ने दण्डे घटव्याप्यत्वं नापद्यत इति ध्येयम्।

नन्ववच्छेदकत्वं [2]नावच्छिन्नप्रत्ययजनकत्वम्। जनकत्वस्य नियमगर्भतया अन्योन्याश्रयात्। [3]नाप्यन्यूनानतिरिक्तदेशवृत्तित्वम्, धूमत्वस्यापि वह्निसामानाधिकरण्यन्यूनदेशवृत्तित्वात्, आलोकादौ वह्निसमानाधिकरणे अवृत्तेः। [4]नापि तदनतिरिक्तदेशवृत्तित्वम्। [5]इदं ससुखम् आत्मत्वात् इत्यत्र व्यभिचारिणि गतत्वात्।

---

## तर्कचूडामणिः

नन्वनौपाधिकत्वे च व्याप्तिलक्षणे यावदिति पदं साध्यव्यापके विशेषणं दत्तमेवेति उपाधिग्रन्थस्थवाक्यविरोध इत्युपाध्यायैर्दूषितम्। तत्र जयदेवपरिहारमाह—उत्तरेति। यच्छब्दार्थसाध्यस्यैव व्याप्तिः स्यात् तत्राह—साध्यसम्बन्धितेति। तथा च साध्यपरतत्पदमेव तत्सम्बन्धितामपि लक्षयतीति भावः। तत्र हेतुमाह—आलोकादाविति। उपाध्यायमतं दूषयति—नापि तदनतिरिक्तेति।

---

1. क. यत्साधनस्य तस्यैव सा तत्सम्बन्धिता तद्व्याप्तिः
2. क. न त्ववच्छिन्नति-
3. क. नाप्यनतिरिक्तवृत्तित्वम्
4. ख. नाप्यनतिरिक्तवृत्तित्वम्
5. ख. अयं सुखी आत्मत्वादित्यत्राप्यतिव्याप्तेः। आत्मत्वस्य

## प्रकाशः

आत्मत्वस्य सुखसमानाधिकरणत्वेन, आत्मत्वत्वस्य सुखसामानाधिकरण्यानतिरिक्त-देशवृत्तित्वात् । न च साध्याभावसमानाधिकरणावृत्तित्वं तत् आत्मत्वं [आत्मत्वत्वं] त्वीश्वरात्मनि सुखाभावसमानाधि[1]करणवृत्त्येवेति वाच्यम् । केवलान्वयिन्यभावात् ।

नापि साध्यसामानाधिकरण्या[2]भावाधिकरणावृत्तित्वम् । आत्मत्वं [आत्म-त्वत्वं] तु ईश्वरात्मवृत्तित्वावच्छेदेन सुखसामानाधिकरण्याभावाधि[3]करणवृत्त्येवेति वाच्यम् । एवं हि अयम् एतत्कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्तिः स्यात् । एतद्वृक्षत्वस्यापि मूलावच्छेदेन एतत्कपिसंयोगसामानाधिकरण्याभावाधिकरणत्वात् । एतद्वृक्षत्वे तत्संयोगसामानाधिकरण्यसत्त्वात् कथं तदभाव इति यदि, तदा [4]आत्म-त्वेऽपि तुल्यम् । [5]अवच्छेदकभेदेन विरुद्धयोरप्येकत्र वृत्तिर्न विरुद्धेत्यपि तुल्यमिति चेत्—

---

## तर्कचूडामणिः

[6]जयदेवमतं दूषयति—**नापीति** । ननु साध्यानधिकरणतावच्छेदका-वच्छिन्नाधिकरणावृत्तित्वे सति साध्याधिकरणवृत्तित्वमेवावच्छेदकत्वमस्तु । आत्मत्वं तु सुखानधिकरणतावच्छेदकपरमेश्वरत्वावच्छिन्नाधिकरणवृत्ति । वृक्षत्वं तु न संयोगा-नधिकरणतावच्छेदकावच्छिन्नवृत्ति, गुणादौ वृक्षत्वाभावादिति चेत्—न । केवलान्व-यिनः [नि] [अ] प्रसिद्धेः । **अधिकरणैकदेशेति** । अधिकरणैकदेशवृत्तित्वानवच्छेदेने-

---

1. क करणमेवेति.
2. क. अभावानधिकरणवृत्तित्वम्
3. क. करणमेवेति
4. ख. एतदात्मत्वेऽपि
5. ख· अवच्छेदभेदेन
6. क. 'जयदेवमत'......... केव-लान्वयिनः प्रसिद्धेः' इति नास्ति ।

## प्रकाशः

अत्र ब्रूमः। अधिकरणैकदेशानवच्छेदेन साध्यसामानाधिकरण्याभाववान् यः तदवृत्तित्वमेव[1] विवक्षितम्। एतद्लक्षत्वे चाधिकरणैकदेशमूलाद्यवच्छेदेनैव साध्यसामानाधिकरण्याभाववत्त्वमिति विशिष्टव्यतिरेकस्य तत्रापि सत्त्वात् नाव्याप्तिः। आत्मत्वे [2]तु ईश्वररूपाधिकरणवृत्तित्वावच्छेदेनैव साध्यसामानाधिकरण्याभाववत्त्वं

---

## तर्कचूडामणिः

त्यर्थः। हेतुगतसा[3]ध्यसामानाधिकरण्याभावासमानदेशस्य तदेकदेशस्यानवच्छेदकत्वादिति ध्येयम्। मूलाद्यवच्छेदेनेति। मूलादिवृत्तित्वावच्छेदेनेत्यर्थः। विशिष्टेति। अधिकरणैकदे[4]शानवच्छिन्नसाध्यसामानाधिकरण्याभाववद्वृत्तित्वं विशिष्टम्। तत्र विशेषणाभावेन विशिष्टाभावसत्त्वादित्यर्थः।

अत्रेदं चिन्त्यम्। आत्मत्वस्यापि सुखासामानाधिकरण्यमधिकरणैकदेशवृत्तित्वावच्छिन्नमपि भवत्येव। सुखादेरव्याप्यवृत्तितया [5]जीवात्मन्यपि [6]तस्य सुखसामानाधिकरण्याभावाधिकरणतया [7]तत्र तदेकदेशवृत्तित्वस्यैवावच्छेदकत्वात्। न चाधिकरणैकदेशानवच्छिन्न[8]पदेनाधिकरणवृत्तित्वावच्छिन्नत्व [वृत्तित्वानवच्छिन्नत्व] मेव विवक्षितम्। आत्मत्वे तु अधिकरणवृत्तित्वावच्छेदेन सुखासामानाधिकरण्यमेतद्लक्षत्वे च तदेकदेशवृत्तित्वेनैवेति वाच्यम्। केवलान्वयिन्यप्रसिद्धेः। तत्र साध्यसामानाधिकरण्या-

---

1. क. 'एव' नास्ति
2. ख. 'तु' नास्ति
3. क. साध्यसाध्यसामानाधिकरण्याभावसमान-
4. क. देशावच्छिन्न-
5. ग. आत्मन्यपि
6. ख. 'तस्य' नास्ति
7. ख. न तत्र
8. ख. इत्यनेन

## तर्कचूडामणिः

भावस्य [1]गगनादिनिष्ठस्याधिकरणवृत्तित्वानवच्छिन्नत्वात् । किं च पृथिवीत्वे गन्धव्याप्यत्वं न स्यात् । पृथिवीत्वस्य [2]प्रथमक्षणे गन्धसामानाधिकरण्याभावाधिकरणत्वात् । न हि [3]क्षणस्याप्यधिकरणैकदेशत्वम्, येनैतद्वृक्षत्व इव पृथिवीत्वे विशिष्टाभावः स्यात् । मूलादिवदधिकरणावयवत्वाभावेन तदेकदेशत्वासिद्धेः । न च [4]क्षणानवच्छिन्नत्वमपि विशेषणमत्राभिमतमिति वाच्यम् । जलतद्गतरूपयोः कालिकव्याप्त्यापत्तेः तत्र [5]क्षणावच्छेदेनैव जलस्य [6]रूपसमानाधिकरणत्वात् ।

न च कालिकव्याप्तिरत्र [7]न लक्ष्येति वाच्यम् । स्वयं लक्षणकरणासामर्थ्येन लक्ष्यसंकोचस्यायुक्तत्वात् ।

अत्र ब्रूमः । अधिकरणैकदेशानवच्छिन्नत्वमधिकरणैकदेशमात्रावच्छिन्नत्वाभावः । तन्मात्रावच्छिन्नत्वं तु अधिकरणवृत्तित्वानवच्छिन्नत्वे सति तदेकदेशवृत्तित्वानव-[त्वाव] च्छिन्नत्वम् । एतद्वृक्षत्वे च संयोगासामानाधिकरण्यम् अधिकरणवृत्तित्वानवच्छिन्नं तदेकदेश[8]वृत्तित्वावच्छिन्नं चेति अधिकरणैकदेशमात्रावच्छिन्नत्वाभावरूपविशेषणाभावात् तदवच्छिन्न[9]साध्यसामानाधिकरण्याभाववद्वृत्तित्वाभावरूपविशिष्टाभावसत्त्वान्नाव्याप्तिः । [10]आत्मत्वे च सुखासामानाधिकरण्यम् ईश्वररूपाधिकरणवृत्तित्वानवच्छिन्नं जीवात्मनि तदेकदेशवृत्तित्वावच्छिन्नं चेति नाधिकरणैकदेशमात्रावच्छिन्नत्वम् । अतस्तदभावरूपविशेषणसत्त्वात् न विशिष्टाभाव इति नातिव्याप्तिः ।

---

1. ख. गगनादिनिष्ठस्यानधिकरण-
2. क. प्रथमलक्षणे
3. क. लक्षणस्य
4. क. क्षणावच्छिन्न
5. ख. लक्षणा-
6. ख. रूपासमाना-
7. ख. 'न' नास्ति
8. क वृत्तित्वानवच्छिन्नं
9. क. 'साध्य' नास्ति ।
10. ख. 'आत्मत्वे च ............ नातिव्याप्तिः' नास्ति ।

## तर्कचूडामणिः

अत एव सत्तादेरपि न संयोगव्याप्यतापत्तिः । केवलान्वयिन्यपि अधिकरणैकदे[1]शमात्रानवच्छिन्नसाध्यासामानाधिकरण्यं गगनादौ [2]प्रसिद्धम् ।

यदपि किं चेत्यादि तदपि न । आद्यक्षणस्यापि अधिकरणैकदे[3]शत्वात् । न ह्यधिकरणावयव एव तदेकदेशः, किं तु अधिकरणतावच्छेदकभिन्नत्वे सति अधिकरणविशेषणत्वम् । तच्चाद्यक्षणस्यापीति न काचिदनुपपत्तिः ।

वयं तु ब्रूमः । ग्राह्यसामानाधिकरण्यविरोधिसाध्यसामानाधिकरण्याभाववद्वृत्तित्वमवच्छेदकत्वम् । एतद्वृक्षत्वस्याग्रावच्छेदेन संयोगासामानाधिकरण्यं न संयोगसामानाधिकरण्यविरोधि । तत्रैव तस्य हेतोः संयोगसमानाधिकरणत्वात् । एवम् आद्यक्षणावच्छेदेनापि [4]गन्धासामानाधिकरण्यं [5]न विरोधीति नाव्याप्तिः । [6]आत्मत्वस्य ईश्वरवृत्तित्वावच्छेदेन सुखासामानाधिकरण्यं तत्सामानाधिकरण्यविरोध्येव । तत्र तज्ज्ञाने जाते तयोरीश्वरात्मनि सामानाधिकरण्याग्रहात् । [7]कालिकव्याप्तौ कालसम्बन्धस्यैव ग्राह्यतया तत्कालहेतोः साध्यसामानाधिकरण्याभावस्य ग्राह्यसामानाधिकरण्यविरोधित्वान्न जलतद्रूपयोः कालिकव्याप्त्यापत्तिः । केवलान्वयिन्यपि गगनादौ तत् प्रसिद्धमेवेति ध्येयम् ।

यद्वा यदाश्रयाधिकरणता[8]समानाधिकरणात्यन्ताभावप्रतियोगिनि [नी]साध्याधिकरणता न भवति तत् अवच्छेदकम् । सुखाधिकरणता चात्मत्वाधिकरणता-

---

1. ग देशानवच्छिन्न-
2. क. प्रसिद्धे
3. ख- देशवृत्तित्वात्
4. ख गन्धसामाना-
5. ख. न ग्राह्यसामानाधिकरण्यविरोधि
6. ख. दुरात्मत्वस्य
7. ख. 'कालिकव्याप्तौ ........... जलतद्रूपयोः' नास्ति ।
8. ख. सामाना-

## प्रकाशः

न तु तदेकदेशावच्छेदेनेति न तत्रातिव्याप्तिः । केवलान्वयिनि [1]तादृशसामानाधिकरण्याभाववत्त्वं गगनादौ प्रसिद्धमित्यवधेयम् ।

नन्वयमभिधेयवान् प्रमेयत्वादित्यादिव्याप्तावव्याप्तिः । प्रमेयत्वस्य [2]तादृशस्य तादृशसामानाधिकरण्यवति गगनादौ वृत्तेः । [3]न च तत्र व्याप्तिरेव नेति

---

## तर्कचूडामणिः

[4]समानाधिकरणात्यन्ताभावप्रतियोगिन्येवेति नातिव्याप्तिः । संयोगाधिकरणतायाश्च वृक्षत्वाधिकरणता[5]समानाधिकरणात्यन्ताभावप्रति [वाप्रति] योगित्वाच्च नाव्याप्तिः । संयोगवत्तदधिकरणताया अपि अव्याप्यवृत्तित्वे प्रतियोगिवैयधिकरण्यमपि देयमिति ।

[6]अधिकरणवृत्तित्वावच्छेदेनैवेति । [7]अधिकरणवृत्तित्वावच्छेदेनापीत्यर्थः । अत्र वृत्तिमत्त्वे सतीति विशेषणान्न गगनादेरवच्छेदकत्वापत्तिः । तस्यावच्छेदकत्वेऽपि [8]तदवच्छिन्नसाध्यसम्बन्धिताया अभावाच्च नातिप्रसङ्गः ।

नन्विति । ननु तादृशसामानाधिकरण्याभाववद्वृत्तिमद् [9]वृत्तित्वं विवक्षितम्, अतो न प्रमेयत्वस्यानवच्छेदकत्वम् । [10]न चैवं वह्न्यसामानाधिकरण्यवद्वृत्तिमदवृत्ति-

---

1. क. 'तादृश' नास्ति
2. ख. 'तादृशस्य' नास्ति
3. क. न तु
4. ख समानाधिकरणतात्यन्ता-
5. ख. समानाधिकरणतात्यन्ताभाव
6. क. 'अधिकरणवृत्तित्वावच्छेदेनैवेति' नास्ति
7. ख. अधिकरणावच्छेदेनापि
8. क. तत्तदवच्छिन्न-
9. क. वृत्तिमति वृत्तित्वम्
10. ख. 'न चैवं' नास्ति

## प्रकाशः

वाच्यम् । तत्रानुमानप्रवृत्तेर्निष्कलङ्कत्वेन प्रमेयत्वावच्छेदेनैव गृह्यमाणाया: वृत्तिमति प्रमेये अभिधेयत्वव्याप्ते[1]रवश्यवाच्यत्वादिति चेत् —

न । वृत्तिमत्प्रमेयत्वमादायैव तत्रोक्तलक्षणसत्त्वात् वृत्तिमत्त्वभागस्य व्यभिचारावारकत्वात् प्रमेयत्वमात्रेणैव तत्र व्याप्तिनिरूपणम् । न च प्रमेयत्वमात्रमतिप्रसक्तत्वान्न तन्निरूपकमिति वाच्यम् । व्यर्थविशेषणरहितत्वे सति व्यभिचारिव्यावृत्तत्वमेव हि धर्मस्य व्याप्तिनिरूपकत्वे तन्त्रम्, न त्वनतिप्रसक्तत्वमपि गौरवात् ।

---

## तर्कचूडामणिः

गगनत्वादेरवच्छेदकत्वापत्तिरिति वाच्यम् । तस्यावच्छेदकत्वेऽपि [2]तदवच्छिन्नसामानाधिकरण्याभावादेव नातिप्रसङ्गादिति चेत् — न । केवलान्वयिनि तादृशसामानाधिकरण्याभाववतो वृत्तिमतोऽप्रसिद्धेः ।

नन्वेवं वृत्तिमत्प्रमेयत्वस्यापि हेतुतावच्छेदकत्वापत्तिः, [3]सम्बन्धितावच्छेदकस्यैव हेतुतावच्छेदकत्वादित्यत आह — **वृत्तिमत्त्वेति** । यद्धर्मपुरस्कारेण व्याप्तिग्रहः तस्यैव हेतुतावच्छेदकत्वम् । प्रकृते च [4]प्रमेयत्वमात्रस्यैव व्यभिचारज्ञान[5]विरहादिसामग्रीसत्त्वेन व्याप्तिनिरूपकत्वमिति तदेवावच्छेदकमिति भावः । **नचेति** । अन्यथा धूमेऽपि प्रमेयत्वावच्छेदेन वह्निव्याप्तिग्रहः स्यादिति भावः । नीलधूमत्वनिरासाय **व्यर्थविशेषणेति** । धूमादिव्याप्तौ प्रमेयत्वं न व्यभिचारिव्यावृत्तम् । [6]प्रकृते च प्रमेयत्वं तद्व्यावृत्तमेव, आकाशस्य व्यभिचारित्वाभावादिति भावः ।

---

1. क अवश्यं
2. क 'तदवच्छिन्न ............ प्रमेयत्वस्यापि नास्ति ।
3. ख. व्याप्यतावच्छेदकस्यैव
4. ख. प्रमेयत्वस्यैव
5. क. विरहादिति सामग्री-
6. क. प्रकृते प्रमेयं

## प्रकाशः

न चात्र [1]वृत्तिमत्प्रमेयत्वस्य तथात्वे तदवच्छिन्नस्यैव [2]व्याप्यत्वं स्यात् न तु गगनादेरिति वाच्यम् । इष्टापत्तेः ।

एतेन नीलधूमत्वस्यापि तथात्वात् (तेनापि रूपेण) [तत्तद्रूपेण] तत्र व्याप्तिग्रहापत्तौ नीलधूमस्यापि [3]तल्लिङ्गत्वेनोपन्यासे नीलत्वस्य वैयर्थ्यं न स्यादिति निरस्तम् । तद्रूपपुरस्कारेणापि[4] धूमे [5]निरुक्तव्याप्तिमत्त्वे गौरवात् तेन रूपेण तद्ग्रहापत्त्यभावात् । तथाभूतधर्मान्तराघटितशरीरत्वे सतीत्यपि विशेषण[6]मत्रेत्यन्याहुः ।

---

## तर्कचूडामणिः

तथात्वात् —[7]अवच्छेदकत्वात् । तत्तद्रूपेणेति । तथा च व्यर्थविशेषणत्वराहित्यभावेन तेन रूपेण तत्र [8]व्याप्त्यग्रहे नीलधूमत्वं न हेतुतावच्छेदकमिति भावः । उपाध्यायमतमाह — तथाभूतेति । व्याप्यतावच्छेदकहेतुतावच्छेदकयोरभेदेऽपि नीलधूमत्वस्य न हेतुतावच्छेदकत्वम् । [9]अनतिरिक्तवृत्तिधूमत्वघटितत्वेन व्याप्यतावच्छेदकत्वस्यैवासिद्धेरिति भावः ।

अत्रेदमस्वरसबीजम् — एवं हि वृत्तिमत्प्रमेयत्वमपि नावच्छेदकं स्यात् । तथाभूतवृत्तिमत्त्वघटितत्वात् । न च तथाभूतधर्माविशेष्यकत्वं विवक्षितम्, वृत्तिमत्त्वं

---

1. ख. वृत्तिमत्प्रमेयत्वस्यैव
2. क. व्याप्यं
3. ख. 'तत्' नास्ति
4. क. 'अपि' नास्ति
5. ख. 'निरुक्त' नास्ति
6. ख. अत्रेत्याहुः
7. क. 'अवच्छेदकत्वात्' नास्ति ।
8. ख. ग. व्याप्तिग्रहे
9. ख. अनतिरिक्तधूमवृत्तिकधूमत्व-

## प्रकाशः

यत्तु यदाश्रयसमानाधिकरणात्यन्ताभावप्रतियोगिना साध्यसम्बन्धिता न-भवति तत् अवच्छेदकम् । ईश्वरात्मन्यात्मत्वसमानाधिकरणात्यन्ताभावप्रतियोगि-न्येव [1]सुखसम्बन्धितेति नातिप्रसङ्ग इति । तत्तुच्छम् । अत्र हि सम्बन्धिता-सामान्यं विवक्षितं सामानाधिकरण्यं वा । नाद्य, दण्डत्वे घटव्याप्यतापत्तेः । नान्त्यः, धूमेऽपि वह्निव्याप्यतानापत्तेः । वह्निसामानाधिकरण्यस्य धूमत्वाश्रयसमानाधि-करणात्यन्ताभावप्रतियोगित्वात् । न हि धूमत्वाश्रयाधिकरणे महानसादौ वह्नि-सामानाधिकरण्यम्, किं तु धूम एवेति ।

---

## तर्कचूडामणिः

तु विशेषणमेवेति वाच्यम् । [2]धूमत्वे सति नीलत्वादित्यादौ धूमत्वविशिष्ट-नीलत्वस्य वैयर्थ्यं न स्यादिति । दण्डत्वे इति । [3]घटकारणतासम्बन्धस्य दण्डत्व-समानाधिकरणात्यन्ताभावाप्रतियोगित्वादिति भावः ।

साध्यासहवृत्तित्वं तदधिकरणानधिकरणत्वं । [4]तच्चेति । आकाशस्य निरधिकरणत्वादिति भावः । तन्मात्रवृत्तित्वं हि [5]तदनधिकरणाधिकरणेतरा-वृत्तित्वे सति तदनधिकरणाधिकरणवृत्तित्वं वा, तदधिकरणाधिकरणावृत्तित्वे सति तदनधिकरणवृत्तित्वं वा । आद्ये प्रमेयत्वस्यापि साध्यासहवृत्त्याकाशानधि[6]करण-

---

1. क. तत्सम्बन्धितेति
2. ग. धूमप्रमेयत्वादित्यादौ वैयर्थ्यं न स्यात्
   ग. वृत्तिमत्प्रमेयवत्त्वादित्यादौ वैयर्थ्यं
3. क. करणता-
4. ख. न चेति
5. ग. तदनधिकरणेतरा-
6. ग. करणवृत्त्यभावाद्यधिकरण-

## प्रकाशः

यदपि [1]साध्यासहवृत्त्यसहवृत्तित्वं तत्त्वम् । आत्मत्वं तु साध्यासहवृत्तीश्वरत्वसहवृत्तीति नोक्तदोष इति । तदपि न । केवलान्वयिनि यद्यपि साध्यासहवृत्तिराकाशादिः प्रसिद्ध एव । [2]तथाप्यग्निमतदसहवृत्तित्वं तदधिकरणानधिकरणत्वम् । तच्चाप्रसिद्धमेव । न चाग्निमासहवृत्तिपदस्य तदनधिकरणाधिकरणकत्वमर्थः । धूमासहवृत्त्ययोगोलकत्वाद्यनधिकरणमहानसाद्यधिकरणकवृत्तितया वह्नित्वस्य वह्नावपि धूमव्याप्यतापत्तेः ।

न च तदनधिकरणाधिकरणकमात्रवृत्तित्वं तत्, वह्नित्वं च [3]धूमासहवृत्त्ययोगोलकत्वाद्यधिकरणाधिकरणेऽपि वह्नौ वर्तत इति वाच्यम् । मात्रपदव्यवच्छेद्यस्य [4]तदनधिकरणाधिकरणत्वस्य केवलान्वयिन्यप्रसिद्धेः । तत्राकाशादेरेव साध्यासहवृत्तित्वात् ।

यन्मते एतद्व्याप्तिज्ञानमनुमितिजनकं तन्मते [5]व्यभिचारज्ञाने सत्यप्येतज्ज्ञानस्य निष्प्रत्यूहत्वात् कथं नानुमितिः । ग्राह्याभावज्ञानस्यैव विरोधित्वादिति चिन्त्यम् ।

---

## तर्कचूडामणिः

भूतलाद्यधिकरणघटादिभिन्नकालादिवृत्तित्वेन[6] केवलान्वयिन्यव्याप्तिरित्यभिप्रेत्य अन्त्ये आह—(अत्र चेति) [ मात्रपदेति ] एतज्ज्ञानस्यानुमितिहेतुत्वमित्युपाध्यायानां मतम् । तत्र जयदेवोक्तदोषमाह — यन्मत इति ।

---

1. ख. साध्यसहवृत्त्य-
2. ख. तथापि तदसह-
3. क. धूमासहवृत्त्ययोगोलकत्वाधिकरणेऽपि
4. ख. तदधिकरणत्वस्य
5. क. व्यभिचारि-
6. क. वृत्तित्वेनैव

अथ वा यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं तत्तस्य व्याप्यम् । वह्निसामानाधिकरण्यं हि धूमे धूमत्वेनावच्छिद्यते, सोपाधौ तूपाधिना ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते
तत्त्वचिन्तामणौ अनुमानखण्डे विशेषव्याप्तिप्रकरणम्



---

### प्रकाशः

अन्ये तु---अवच्छेदकत्वं स्वरूपसम्बन्धविशेषः । संयोगादिष्वपि शाखादौ स एवावच्छेदकत्वम् । संयोगस्य [1]वृक्षे समवायः सम्बन्धः, [2]अवच्छेदके विशेषणताविशेष इति गुणकिरणावल्यामभिधानात् । एतद्व्याप्तिग्राहकं चान्वयव्यतिरेकाभ्यामव्यभिचरित[3]साध्यसमानाधिकरण्यज्ञानम् । तेन व्यभिचारज्ञाने सति तज्ज्ञानाभावेन ग्राहकाभावात् [4]नैतद्व्याप्तिग्रह इत्याहुः ।

---

### तर्कचूडामणिः

जयदेवमतमाह — अन्ये त्विति । संयोगादिष्विति । अवच्छेद्येष्विति शेषः । शाखादाविति । [5]अवच्छेदके इति शेषः । स एव— स्वरूपसम्बन्धविशेष एवेत्यर्थः । अवच्छेदकत्वं स्वरूपसम्बन्धविशेष इत्यत्र संमतिमाह — संयोगस्येति । अवच्छेदक इति । शाखादावित्यर्थः । अत्रेदमस्वरसबीजम् —स्वरूपसम्बन्धविशेषज्ञानस्य तज्ज्ञानत्वेन हेतुत्वे प्रमेयत्वादिना तज्ज्ञानेऽपि अनुमित्यापत्तिः । अव्यभिचारज्ञान[6]जन्यतज्ज्ञानत्वेन हेतुत्वे अव्यभिचारज्ञानमेव तद्धेतुरस्तु लाघवादिति ।

ननु पूर्वलक्षणेऽपि[7] सम्बन्धिताशब्दस्य सामानाधिकरण्यपरत्वेनोक्ततया पौनरुक्त्यमित्यत आह — सम्बन्धितेति । सामानाधिकरण्यमित्यर्थः । उपहितेति ।

---

1. क वृक्षसमवायः
2. क. अवच्छेदकत्वं विशेषणता
3. क. 'साध्य' नास्ति
4. क. न तद्व्याप्तिग्राहकमित्याहुः
5. क. अवच्छेद इति
6. क. जन्यमेव तद्धेतुरस्तु
7. क. ग. 'अपि' नास्ति

## प्रकाशः

अथवेति । सम्बन्धिता व्याप्तिरिति पूर्वलक्षणार्थः । [1]तदवच्छेदकरूपवत्त्वं व्याप्तिरित्येतल्लक्षणार्थं इति न पौनरुक्त्यमिति ध्येयम् । अवच्छेदकत्वं च पूर्वोक्तमेव ग्राह्यम् । न चात्र मते धूमत्वस्यैव व्याप्तित्वपर्यवसाने कथं धूमत्वं तदवच्छेदकम्, अभेदादिति वाच्यम् । उपहितानुपहितभेदेन तयोरुपपत्तेः । उपाधिनेति । जनकत्वादिसम्बन्धेन आर्द्रेन्धनादेर्वह्न्यादौ धूमादिसामानाधिकरण्यावच्छेदकत्वादित्यर्थः । यद्यप्यार्द्रेन्धनप्रभव[2]वह्नित्वविशिष्टं तथा; तथापि विशिष्टस्यावच्छेदकत्वे[3] विशेषणस्यापि तत्त्वमिति भावः ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे विशेषव्याप्तिप्रकरणम्



## तर्कचूडामणिः

धूमत्वस्यैव धूमत्वेनावच्छेदकता [4]तादृशसाध्याभाववदवृत्तित्वेन [5]व्याप्तितेत्यर्थः । न चार्द्रेन्धनादेर्वह्न्याद्यवृत्तित्वेन कथं तद्गतसाध्यसम्बन्धितावच्छेदकत्वमित्यत आह —[6]जनकत्वादीति । यद्यपीति । न [7]ह्यार्द्रेन्धनवत्त्वमात्रं तथा, तस्य [8]धूमासम्बन्धिवनादावतिप्रसक्तेरिति भावः ।

इति श्रीधर्मराजाध्वरिविरचिते
तर्कचूडामणौ अनुमानखण्डे विशेषव्याप्तिप्रकरणम्



1. क. 'तद्' नास्ति
2. क. वह्नित्वं विशिष्टं
3. क. त्वेऽपि
4. ग. तादृशसाध्याभावसामानाधिकरण्याभाववव्यभिचारवृत्तित्वेन
5. ख. अव्याप्तिर्नेत्यर्थः
6. ख. ग. जनकत्वादिनेति
7. क. ह्यार्द्रेन्धनत्वमात्रं
8. ख. धूमसम्बन्धि-

## अथ अत एव चतुष्टयप्रकरणम्

**अत एव साधनतावच्छेदकभिन्नेन येन साधनताभिमते साध्यसम्बन्धोऽवच्छिद्यते स एव तत्र साधने विशेषणमुपाधिरिति वदन्ति ।**

---

### प्रकाशः

अत्रैवोपष्टम्भकत्वेन [1]प्राभाकरमतमाह — **अत एवेति ।** उपष्टम्भकान्तरमाह — **अत एवेति ।** [2]तत्र — उपाधौ आर्द्रेन्धनादौ इदं लक्षणं [3]ध्रुवमित्यर्थः ।

---

### तर्कचूडामणिः

नन्ववच्छेदकगर्भोपाधिलक्षणस्य नैयायिकैरनभिधानात् वदन्तीति मूलग्रन्थानुपपत्तिरित्यत आह — **अत्रैवेति** । उपाधेः साध्यसम्बन्धितावच्छेदकत्व इत्यर्थः । **उपष्टम्भकत्वेन**—उपोद्बलकत्वेन । उपाधेः साध्यसम्बन्धितावच्छेदकत्वमतः—शब्दार्थः । उपाधेः साध्यसम्बन्धि[4]तानवच्छेदकत्वे तद्गर्भमुपाधिलक्षणं परोक्तं न [5]संगच्छेतेत्यर्थः । अत्र साधनतावच्छेदकभिन्नत्वे सति साध्यसम्बन्धितावच्छेदकत्वमुपाधेर्लक्षणं द्रष्टव्यम् । [6]आर्द्रेन्धनवत्त्वादेरवच्छेदकत्व एव प्राभाकरसंमतेरुक्ततया तदुपाधित्वप्रतिपादकन्यायसंमते [7]भिन्नविषयतया उपष्टम्भकान्तरोक्त्यनुपपत्तिः, अत आह—**उपष्टम्भकेति** । अवच्छेदकत्वप्रतिपादनपरपूर्वग्रन्थेन [8]अर्थादुपाधित्वस्याप्युक्ततया अस्ति समानविषयत्वमित्यर्थः । यद्वा आर्द्रेन्धनवत्त्वादेरवच्छेदकत्वे प्राभाकरसंमतिमुक्त्वा न्यायसंमतिमाह—**उपष्टम्भकान्तरेति** । आर्द्रेन्धनवत्त्वादेरुपाधित्वादे-

---

1. ख. प्रभाकर-
2. क. अत्र
3. क. धूमवदित्यर्थः
4. ख. क. तावच्छेदकत्वं
5. क- ग. संगच्छत इत्यर्थः
6. ख. आर्द्रेन्धनत्वादेः
7. ख. भिन्नविषयताव-
8. क. 'अर्थात् ……… युक्तमित्यर्थः । ननु' इति ग्रन्थस्त्रुटितः

अत एव च तत्र साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वं लक्षणं ध्रुवम् । व्यभिचारिणि साधने एकत्र साध्यतदभावयोर्विरोधेनावच्छेदकभेदं विना तदुभयसम्बन्धाभावादवश्यं साध्यसम्बन्धितावच्छेदकमस्ति । तदेव च साधनावच्छिन्नसाध्यव्यापकं साधनाव्यापकं तत्रोपाधिः ।

---

## प्रकाशः

अन्यथा तस्यानुपाधित्वे तत्संग्राहकमिदमुपाधिलक्षणमतिव्यापकं स्यादिति भावः । ननु भवेदप्येवं यदि तत्रावच्छेदकमावश्यकं स्यादित्यत आह—**व्यभिचारिणीति** ।

---

## तर्कचूडामणिः

वेत्यतःशब्दार्थः । [1]धूमवति (ध्रुवमिति ?) युक्तमित्यर्थः । ननु तस्यानुपाधित्वे लक्षणस्य को दोष इत्यत आह—**अन्यथेति** । तस्यैव विवरणं **तस्येति** ।

ननु व्यभिचारिणि [2]साध्यसम्बन्धितावच्छेदकत्वे तस्योपाधित्वं स्यात्, अवच्छेदकगर्भप्रभाकरलक्षणं च स्यात् । तदेव त्वसिद्धं, मानाभावादिति शङ्कते—**नन्विति** ।

[3]अतश्शब्दस्याव्यहितोक्तोपाधिलक्षणपरामर्शित्वं वारयति—**विरोधेति** । यद्यपि वह्न्यादिहेतौ यत्र साध्यसम्बन्धस्तत्र [4]न साध्याभावसम्बन्ध इत्येकत्र तदुभयसम्बन्धाभावात् न विरोध[5]प्रसक्तिः । तथापि प्रमेयत्वाद्येकव्यक्तिके तत्प्रसक्तिरस्तीति भावः । ननु सोपाधिकोऽयं व्यभिचारित्वात् इत्याद्युपाध्यनुमानं

---

1. क. धूमत्वमिति । युक्तमित्यर्थः ।
2. क. साध्यसम्बन्धेनावच्छेदकस्यावच्छेदकत्वे
3. ख. ग. अतश्शब्दस्य व्यव-
4. क. 'न' नास्ति
5. क. प्रवृत्तिः

अत एव व्यभिचारे चावश्यमुपाधिरिति संगच्छते। अन्यथा व्यभिचारादेव तत्रागमकत्वेन व्यभिचारेण न तदनुमानम्। अप्रयोजकत्वात्।

---

### प्रकाशः

अत एवेति। विरोधभञ्जनाय साध्यसम्बन्धितावच्छेदकस्यावश्यकत्वादेवेत्यर्थः। अन्यथेति। व्यभिचारोपपादकत्वेनोपाध्यकल्पने अनुमान[1]दूषकत्वेनैव तत्कल्पने [2]स्फुटव्यभिचारेण तदनुमानं न शक्येत। अप्रयोजकत्वात्। तथा चोपपादकं विना उपाध्यानुपपत्ति[3]रूपतर्कसाचिव्यात् व्यभिचारेण तदनुमानमित्यर्थः।

---

### तर्कडामणिः

प्रकृतानुमानस्यागमकत्वार्थमेव, न तु उक्तविरोधभञ्जनार्थमित्यत आह—अन्यथेति। तद्व्याचष्टे—व्यभिचारेति। [4]हेतोः साध्यागमकतायाः व्यभिचारेणापि सम्भवेनागमकत्वानुपपत्तिर्नोपाध्यनुमानेऽनुकूलतर्क इत्यर्थः। ननु विनिगमकाभावादुपाधेरप्यगमकता[5]प्रयोजकत्वमस्त्वित्यत आह—स्फुटेति। व्यभिचारस्योपाधिलिङ्गत्वेन प्रागेव निश्चितत्वादित्यर्थः। अप्रयोजकत्वात्—[6]त्वन्मते अप्रयोजकत्वप्रसङ्गादित्यर्थः। त्वन्मते वा कथं प्रयोजकतेत्यत आह—तथा चेति।

अतःशब्देन व्यभिचारस्य [7]उपाधिव्याप्यत्वं परामृश्यत इति भ्रान्तिं वारयति—यत एवेति। यद्यप्युपाधेः साध्यसम्बन्धितावच्छेदकत्वेऽप्युपाधौ तदवच्छेदक[8]मनावश्यकम्। वह्निसम्बन्धितावच्छेदकेऽपि धूमत्वे तदवच्छेद-

---

1. क. भेषकत्वेन
2. क. स्फुटव्यक्तिव्यभिचारेण
3. क. रूपतत्साचिव्यात्
4. ख. अनुमानस्य
5. ख. प्रयोजकत्वं सिध्येदत आह
6. ख. तन्मते
7. ख. उपाधित्वं
   ग. उपाधिव्याप्यत्वपरामर्शः
8. ख. कत्वमावश्यकम्

अत एव च तस्य साध्यसम्बन्धितावच्छेदकरूपलक्षणा व्याप्तिः साधनताभिमते चकास्तीति स्फटिके जपाकुसुमवदुपाधिरसावुच्यते। लक्षणं तु साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाव्यापकत्वम्।

---

## प्रकाशः

अत एवेति। यत एव साध्यसम्बन्धितावच्छेदकत्व[1]मुपाधेः अत एव [2]एतद्रूपलक्षणा व्याप्तिरुपाधिनिष्ठेति शेषः। साधनाभिमते चकास्तीत्युपाधिरसावुच्यत [3]इति। एतच्चानन्तरोक्तलक्षणानुसारेण द्रष्टव्यम्। नन्वेवं हेतौ स्ववृत्तिव्याप्त्यासञ्जकत्वमुपाधित्वमिति पर्यवसितम्। तथा च विषमव्याप्तस्यार्द्रेन्धनादेरुपाधित्वं न स्यात्। न चेष्टापत्तिः, [4]दूषणक्षमत्वेन शास्त्रेषु तस्यापि उपाधित्वव्यवहारात् इत्यत आह—लक्षणमिति। लक्षणं—शास्त्रे उपाधिव्यवहारनिमित्तम्। तथा च शास्त्रपरिभाषिततन्निमित्तवशात् विषमव्याप्तोऽप्युपाधिव्यवहारविषय इत्यर्थः।

---

## तर्कचूडामणिः

कान्तराभावात्। तथापि साधनतावच्छेदकस्य साध्यव्यभिचारितया [5]तदव्याप्यत्वेऽपि [6]उपाधेस्तदव्यभिचारितया तदवच्छेदकरूपा व्याप्तिरस्तीति भावः। ननु साधनत्वाभिमते व्याप्तिभानमात्रेण निषिद्धत्वादेः कथमुपाधित्वम्, स्वगतधर्मासञ्जकत्वाभावादित्यत आह—उपाधिनिष्ठेति। ननु सामानाधिकरण्यरूपाया व्याप्तेः कथमवच्छेदक[7]रूपत्वमित्यत आह—एतच्चेति। दूषणेति। [8]व्यभिचाराद्युन्नायकत्वेनेत्यर्थः। ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वोपाधावव्याप्तिवारणाय साध्यसाधनसम्बन्धेति। ननु जपाकुसुमादावव्याप्तिरित्यत आह—शास्त्र इति।

---

1. क. उपाधिः अत एतद्रूप
2. ख. तद्रूप-
3. क. इत्यर्थः
4. क. दूषकत्वेन शास्त्रे
5. ग. तदव्यापकेऽपि
6. ख. उभयोस्तव्यभिचारितया
7. क. रूपमित्यत आह
8. क. व्यभिचाराद्युन्नीयकत्वेन

विषमव्याप्तस्तु नोपाधिपदवाच्यः, प्रवृत्तिनिमित्ताभावात् । दूषकता च तस्य व्यभिचारोन्नायकतया । न च व्यभिचारोन्नायकत्वमेवोपाधित्वम् । अप्रयोजकसाध्यव्यापकव्यभिचारिणोऽप्युपाधित्वापत्तेरिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते
तत्त्वचिन्तामणौ अनुमानखण्डे व्याप्तिवादः समाप्तः ।



---

## प्रकाशः

[1] जपाकुसुमादिसाधारणस्ववृत्तिधर्मोपसंक्रामकत्वरूपप्रवृत्तिनिमित्तयोगात् परं विषमव्याप्तो नोपाधिपदशक्य इत्याह—[2]विषमव्याप्तश्चेति । प्रवृत्तीति । उक्तप्रवृत्ति--निमित्तेत्यर्थः । नन्वेवं तेनैव रूपेण दूषकतापि स्यादिति विषमव्याप्तो न दूषणं स्यादित्यत आह — दूषकता चेति । एतच्च [3]विषमव्याप्तसाधारणमेवेति भावः । नन्वेवं व्यभिचारोन्नायकत्वमेवोपाधिलक्षणमस्तु, किं लक्षणान्तरेणेत्यत आह — न चेति ।

---

## तर्कचूडामणिः

ननु साध्यव्यापकत्वादौ सति कथं प्रवृत्तिनिमित्ताभाव इत्यत आह—उक्तेति । स्वगत[4]धर्मासञ्जकत्वेत्यर्थः । [5]नन्वप्रयोजकत्वादेरेव लिङ्गत्वम्, न

---

1. क. जपाकुसुमसाधारण-
2. क. विषमव्याप्तिश्चेति
3. क. विषमव्याप्ति-
4. क. धर्मसाञ्जकत्वे
5. क. नन्वप्रयोजकादेः

## प्रकाशः

अप्रयोजकेति । [1]अप्रयोजकत्वसाध्यव्यापकव्यभिचारित्वयोरित्यर्थः । न चेष्टापत्तिः, [2]तयोः शास्त्रेऽप्युपाधित्वव्यवहाराभावादिति भावः ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे व्याप्तिवादः



## तर्कचूडामणिः

तु [3]अप्रयोजकादेः, अत आह—अप्रयोजकत्वेति । शास्त्रेऽपीति । अपिशब्दाल्लोकेऽपीत्यर्थः ।

[4] इति श्रीमद्धर्मराजविरचिते मणिप्रकाशव्याख्याने
तर्कचूडामणावनुमानखण्डे व्याप्तिवादः समाप्तः ।

——: o :——

1. क. अप्रयोजकसाध्य-
2. ख. 'तयोः' नास्ति
3. ख. अप्रयोजकत्वादेः
4. ख. ग. इदं colophon नास्ति ।

## अथ व्याप्तिग्रहोपायप्रकरणम्

सेयं व्याप्तिर्न भूयोदर्शनगम्या । दर्शनानां प्रत्येकमहेतुत्वात् आशुविनाशिनां क्रमिकाणां मेलकाभावात् । न च तावद्दर्शनजन्यसंस्कार इन्द्रियसहकृता व्याप्तिधीहेतवः, प्रत्यभिज्ञायामिन्द्रियस्य तथात्वकल्पनादिति वाच्यम् । समानविषये स्मरणे प्रत्यभिज्ञाने च संस्कारो हेतुः, अतः कथं संस्कारेण व्याप्तिज्ञानं जन्येत । अन्यथा अतिप्रसङ्गः ।

---

### प्रकाशः

नन्वस्तु निरुक्ता व्याप्तिः, तथापि तज्ज्ञानासम्भवान्नानुमानं प्रमाणमित्यभिप्रेत्य मीमांसकमुखेन चार्वाको भूयोदर्शनस्य व्याप्तिग्राहकतामपाकरोति — सेयमिति । सकृद्दर्शनगम्यत्वं च सुखनिरस्यमेवेति भावः । अन्यथेति । व्याप्तिज्ञानवत् व्याप्त्यभावज्ञानस्यापि तेन जननापत्तेः । तत्संस्काराविषयत्वस्य तुल्यत्वादित्यर्थः ।

---

### तर्कचूडामणिः

[1]ननु भूयोदर्शनस्य व्याप्तिग्राहकतानिराकरणवादी न मीमांसकः, सकृद्दर्शनस्यापि [2]ग्राहकतायाः स्वयमेव निराकरणात्, [3]अनुमानाप्रामाण्योपसंहाराच्च । नापि चार्वाकः, [4]सकृद्दर्शनगम्यताया उपपादनात् । तेन व्याप्तिस्वरूपानङ्गीकारेण सेयमिति निर्देशानुपपत्तेश्चेत्यत आह — अस्त्विति । भूयोदर्शनहेतुतानिरासस्य प्राथमिकत्वे हेतुमाह —सकृद्दर्शनेति ।

---

1. क. नन्वत्र पूर्ववादी
2. क. ग्राहकतया
3. क. अनुमानाप्रमाणप्रामाण्योप-संहाराच्च
   ग. अनुमानप्रामाण्योप-
4. ख. सकृद्दर्शनतायाः
   ग. सकृद्दर्शनजन्यतायाः

किं च सम्बन्धभूयोदर्शनं भूयस्सु स्थानेषु दर्शनम् भूयसां वा दर्शनं भूयांसि वा दर्शनानि न तथा। एकत्र रूपरसयोर्द्रव्यत्वघटत्वयोश्च व्याप्तिग्रहात्। एकत्रैव धारावाहिके तद्धीप्रसङ्गात्, भूयस्त्वस्य त्रिचतुरादित्वेन अननुगमाच्च। अपि च पार्थिवत्वलौहलेख्यत्वादौ शतशो दर्शनेऽपि व्याप्त्यग्रहात्।

---

## प्रकाशः

ननु [1]व्यभिचाराभावविशेषितः सहचार एव व्याप्तिः। तथा च प्रत्यभिज्ञायामिव [2]विशेष्यांशे समानविषयत्वमस्त्येवेति विकल्प्य दूषणान्तरमाह — **किं चेति**। आद्ये दोषमाह—**एकत्रेति**। द्वितीये त्वाह—**द्रव्यत्वेति**। यद्यपि प्रथमदूषणेनैव [3]द्वितीयं दूषितं भवति, तथाप्येकत्रापि घटे [4]पिठरपाकेन रूपरसबाहुल्यसम्भवात् दूषणान्तरमुक्तम्। तृतीये त्वाह — **एकत्रैवेति**। ननु भूयस्त्वं बहुत्वम्। तच्चानुगतमस्त्येवेत्यत आह—**अपि चेति**।

---

## तर्कचूडामणिः

**प्रत्यभिज्ञायामिवेति**। यद्यपि प्रत्यभिज्ञायां संस्कारस्य [5]विशेषणीभूततत्तांशेऽपि समानविषयत्वम्, तथापीदन्तांशे न समानविषयतेति दृष्टान्तः। अत्रैवं सति [6]व्यभिचारज्ञानमपि स्यात्। तस्यापि साध्यतदभावसामानाधिकरण्यावगाहनेन[7] एकांशे समानविषयत्वादिति दूषणे सत्येव दूषणान्तरमाहेत्याह —**दूषणान्तरमिति**। **बहुत्वमिति**। यद्यपि बहुत्वमपि त्रिचतुरादिरूपतयाननुगतमेव, तथापि द्वित्वाधिकसंख्याकत्वं बहुत्वमनुगतमेवेति भावः।

---

1. ख. अव्यभिचारविशेषितः
2. क. विशेष्ये
3. ख. द्वितीयकल्पे दूषणाभिधानं सम्भवति
4. ख. 'पिठरपाकेन' नास्ति
5. ख. सर्वांशे न समानविषयकत्वम्, किं तु तत्ताद्यंशे; तथाप्येकांशे समानविषयतया दृष्टान्तः।
6. ख. व्यभिचारविषयज्ञानमपि
7. ख ण्यावगाहिनः

तर्कसहकृतं तथेति चेत् — तर्हि सहचारदर्शनव्याभिचारादर्शनसहकृतः स एव व्याप्तिग्राहकोऽस्तु, आवश्यकत्वात् किं भूयोदर्शनेन । न च तेन विना तर्क एव नावतरति । प्रथमदर्शने व्युत्पन्नस्य तर्कसम्भवात् । न चैवमेवास्तु । तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थानात् ।

## प्रकाशः

[1]तर्कसहकृतमिति । भूयोदर्शनमिति शेषः । तथेति । व्याप्तिग्राहकमित्यर्थः । ननु भूयोदर्शनं न साक्षाद्व्याप्तिग्राहकम्, किं तु [2]तर्कोत्थापनद्वारा [3]व्याप्तिप्रयोजकमित्यत आह — न चेति । व्युत्पन्नस्येति । तर्कमूल[4]भूतव्याप्तिज्ञानवत इत्यर्थः । न चैवमेवेति । सहचारदर्शनादिसहकृतस्तर्क एव

## तर्कचूडामणिः

[5]तर्कसहकृतप्रत्यक्षस्य व्यभिचारशङ्कानिवर्तकत्वे [6]भूयोदर्शने किमायातम्, अत आह —भूयोदर्शनमिति । व्यभिचारशङ्कानिवर्तकत्वं [7]तदाशब्दार्थ इति केनचिदुक्तम्, तत् [8]अप्रस्तुताभिधानावहमित्याशयेन व्याचष्टे — व्याप्तीति । [9]भूयोदर्शनस्य तर्कोपयोगित्वेऽपि [10]व्याप्तिग्रहाहेतुत्वात् शङ्कानुपपत्तिरित्यत आह-- नन्विति । तर्कमूलव्याप्तिज्ञानाभावे व्युत्पन्नस्यापि प्रथमदर्शनान्न[11] तदवतार इत्यत आह—तर्केति । सहचारेति । तावताप्यनुमान[12]प्रामाण्यसम्भवादिति भावः । तर्कस्य [13]व्याप्तिमूलकत्वे दोषमाह—अन्यथेति ।

1. क. तत्सहकृतमिति
2. ख. तर्कोत्पादन-
3. ख: व्याप्तिग्राहक-
4. ख. 'भूत' नास्ति
5. क तर्कासहकृत-
6. ख ग. प्रयोगदर्शने
7. ख. तथा च शब्दार्थः
8. ख. घटप्रस्तुताभि-
9. ग. प्रयोगदर्शनस्य
10. ख. व्याप्तिग्रहानुपयोगात्
11. ग. 'न' नास्ति
12. ख. प्रामाण्यासम्भवात्
13. क. वाक्यमूलकत्वे

जातमात्रस्य प्रवृत्तिनिवृत्तिहेत्वनुमितिजनकव्याप्तिज्ञानं तर्कं विनैव-अतो नानवस्थेति चेत्; तर्हि व्यभिचारात् सोऽपि न व्याप्तिग्रहे हेतुः। न चैतद्बुद्धाववान्तरजातिरस्ति। सामान्यप्रत्यासत्त्या सर्वोपसंहारादविनाभावग्रहः सामान्यरूपता च न सकृद्दर्शनगम्येति भूयोदर्शनापेक्षेति चेत्—न। सामान्यस्य हि प्रत्यासत्तित्वं लाघवात् न तु सामान्यतया ज्ञातस्य। तदनभ्युपगमाच्च।

---

## प्रकाशः

व्याप्तिग्राहकोऽस्तु इत्यर्थः। व्याप्तिग्रहेति। अन्यथा प्रशिथिलमूलत्वेन तस्या व्याप्तिग्राहकत्वाभावात्। तथा च [1]तर्कमूलव्याप्तिरपि तर्कान्तरेण ग्राह्येत्यनवस्थेति भावः।

शङ्कते—जातमात्रस्येति। अतो नानवस्थेति। [2]तद्वदेवान्यत्रापि क्वचित्तन्मूलभूतव्याप्तिज्ञाने [3]तर्कान्तरानपेक्षणादिति भावः। केचित्तु क्वचि, देवानुमानेऽनवस्थापरिहार इत्याहुः। शङ्कते—सामान्येति। ततः किमित्यत

---

## तर्कचूडामणिः

[4]एकग्रन्थ्यशङ्कां परिहरति—शङ्कत इति। ननु तथापि धूमाद्यनुमाने कथमनवस्थापरिहार इत्याशङ्क्य वाचस्पतिमिश्रोक्तं परिहारमाह—तद्वदेवेति। ननु जीवनाद्यनुपपत्त्या जातमात्रस्थले जन्मान्तरानुभूतस्मरणकल्पनेऽपि न सर्वत्र तत्कल्पनं मानाभावादित्यरुचेराह—केचिदिति। तावतापि पूर्वपक्षिणः सर्वानुमानाप्रामाण्यसिद्धे[5]रिति भावः। सामान्यत्वेनेति। तस्यानेकव्यक्तिवृत्तित्व-

---

1. क. तन्मूल-
2. क, 'तद्वदेव' नास्ति।
3. ख. तर्कानपेक्षणात्
   क. तद्वत्तर्कान्त-
4. ग. एकग्रन्थशङ्कां
5. क. ग. अप्रामाण्यासिद्धेः

न च काकतालीयत्वादिशङ्काव्युदासार्थं द्वितीयादिदर्शनापेक्षेति वाच्यम् । द्वितीयादिदर्शनेऽपि शङ्कातादवस्थ्यात् । न त्वनौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुः । तद्देशकालतत्रावस्थितघटादीनामुपाधित्वशङ्कानिरासः कस्यचित् साधनव्यापकत्वज्ञानेन कस्यचित् साध्याव्यापकत्वज्ञानेन स्यात्, तच्च भूयोदर्शनं विना नावतरतीति चेत् — न । अयोग्योपाधिशङ्कायाः तर्कस्यानुमानाधीनज्ञानत्वेनानवस्थापत्तेः ।

---

## प्रकाशः

आह — सामान्यरूपता चेति । [1]सामान्यत्वेन ज्ञानं सामान्यव्यक्तिभानं विना न सम्भवतीति [2]तावव्यक्तिभानार्थं भूयोदर्शनापेक्षेति भावः ; न तु सामान्यतयेति [3]विशिष्टनिषेधात् ज्ञातस्य प्रत्यासत्तित्वमनुमतम् । अन्यथा तत्प्रकारकज्ञानानुपपत्तिः, [4]पूर्वाज्ञातस्याप्रकारत्वादिति भावः । इदं चाभ्युपेत्योक्तम्, वस्तुतस्तु मया सामान्यप्रत्यासत्तिर्नाभ्युपेयत एवेत्याह — तदनभ्युपगमाच्चेति ।

---

## तर्कचूडामणिः

[5]घटितत्वाद्दिति भावः । **अनुमतमिति** । अन्यथा न तु ज्ञानस्येति ब्रूयादिति भावः । **अन्यथेति** । अज्ञातस्य प्रत्यासत्तित्व इत्यर्थः । यद्यपि तस्य [6]प्रकारार्थत्वमेव तज्ज्ञानस्य [7]विशेषणज्ञानत्वेनापेक्षा, न तु सामान्यस्य प्रत्यासत्तितायां तदपेक्षा, मानाभावात् । तथापि तज्ज्ञानस्यावश्यकतया [8]ज्ञानस्य प्रत्यासत्तित्वमुक्तम्, न तु [9]ज्ञानत्वेन तथात्वमिति ध्येयम् । ननु तदनभ्युपगमे पूर्ववाक्यविरोधः । तत्र सामान्यप्रत्यासत्तित्वस्योक्तत्वात् । तथा च समुच्चयार्थकचकारानुपपत्तिः,

---

1. ख. तेषु च सामान्यत्वेन
2. क तर्कभानार्थं
3. ख. विशेषनिषेधात्
4. क. पूर्वाज्ञानस्य
5. ख. घटकत्वात्
6. ग. प्रकरणार्थत्वम्
7. ख. विशेषज्ञानत्वेन
8. ग. ज्ञातस्य
9. ग. ज्ञातत्वेन

अथ साध्यसाधनसहचरितधर्मान्तराणाम् उपाधित्वसंशये न व्याप्तिग्रहः। अतस्तेषामनुपाधित्वज्ञानं भूयोदर्शनाधीनसाध्यव्यापकत्वज्ञाने सतीत्येतदर्थं भूयोदर्शनापेक्षा। अत एव यावता दर्शनेन तन्निश्चयः तावत् भूयोदर्शनं हेतुरिति न वारसङ्ख्यानियमो न वाननुगमः। यद्यपि चान्यस्य साध्यव्यापकत्वसाधनव्यापकत्वसंशयो नान्यव्याप्तिग्रहप्रतिबन्धकः, तथापि तदाहितव्यभिचारसंशयः प्रतिबन्धक इति तद्विधूननमावश्यकमिति चेत्--न।

---

### प्रकाशः

अयोग्येति। तथा चानौपाधिकत्वज्ञानं न व्याप्तिधीहेतुरिति भावः मतान्तरं [1]शङ्कते—अथेति। पूर्वमनौपाधिकत्वज्ञान[2]कारणत्वमपुरस्कृत्य शङ्कितम्। अधुना साध्यादिसहचरित[3]धर्मान्तराणामुपाधित्व[4]संशयात् व्यभिचारसंशयद्वारा व्याप्तिधीप्रतिबन्धकत्वमिति तन्निरासस्य प्रयोजकत्वं पुरस्कृत्य [5]शङ्कत इति न पौनरुक्त्यमिति ध्येयम्।

---

### तर्कचूडामणिः

तत्राह—इदं चेति। नैयायिकेन तदभ्युपगमादाह—मयेति। ननु तर्हि अनौपाधिकत्वज्ञानस्यापि व्याप्तिग्राहकता न स्यादित्यत आह—तथाचेति। पौनरुक्त्यपरिहाराय मतान्तरं शङ्कत इत्युक्तम्। तदेव दर्शयति—पूर्वमिति। ननु योग्योपाधिशङ्कानिवर्तकत्वेन भूयोदर्शनमपेक्षितमेवेत्यत आह—तथाचेति। तच्छब्दस्य पूर्ववाक्योक्तव्यभिचारसंशयतदनुच्छेदान्यतरपरत्वे [6]नान्वय इत्यत आह--

---

1. क. आशङ्कते
2. ख. कारणत्वं पुरस्कृत्य
3. ख. धर्माणामुपाधि-
4. ख. संशयस्य
5. ख. शङ्कितमतो न
6. ग. नान्वयमाह

अयोग्योपाधिसंशयाधीनव्यभिचारसंशयस्य तथाप्यनुच्छेदात् । स च न भूयोदर्शनान्नाप्यनुमानादित्युक्तम् । अपि च भूयोदर्शनाहित-संस्कारो न बहिरिन्द्रियसहकारी, तद्व्यापारं विनापि च सहचारादिज्ञानवतो व्याप्तिग्रहात् । नापि मनसः, इन्द्रियादिवत् भूयोदर्शनजन्यसंस्कारस्य

---

प्रकाशः

**अयोग्येति** । तथा च तत्संशयस्याप्रतिबन्धकत्वमेव[1]वाच्यम् । अतः किं तदुच्छेदार्थं भूयोदर्शनेनेति भावः । **स चेति** । अयोग्योपाधिसंशयाधीन-व्यभिचारसंशयोच्छेद इत्यर्थः । **उक्तमिति** । [2]उक्तमिवेति भावः । ननु यत्रा-योग्योपाधिशङ्का न जाता तत्रैव भूयोदर्शनापेक्षा स्यादित्यत आह — **अपि चेति** । संस्कारजन्यत्वे [3]स्मृतित्वापत्तिरित्याशङ्क्याह —

---

तर्कचूडामणिः

**अयोग्येति** । नन्वनुमानादे[4]स्तदुच्छेदकत्वं नैवाशङ्कितम्, नापि तिरस्कृतम् । तथा च [5]उक्तमित्यनुपपन्नमत आह—**उक्तमिवेति** । 'अयोग्योपाधि[6]ज्ञानस्यानुमानाधी-नत्वेनानवस्थानात्' इत्यनेनेदमप्यर्थान्निराकृतमित्यर्थः । **ननु यत्रेति** । यद्यपि उपाधिसंशयमात्रस्यैव [7]प्रतिबन्धकत्वम् इत्युक्ततया योग्योपाधिशङ्कानिवर्तकत्वेनापि तदपेक्षा न सम्भवति, तथापि अन्वयव्यतिरेकाभ्यां योग्योपाधिज्ञानस्य प्रतिबन्ध-कत्वम्, तन्निवर्तकतया भूयोदर्शनापेक्षेति हृदयम् । **संस्कारेति** । यद्यपि तत्त्वेन संस्कारजन्यत्वस्यैव स्मृतित्वप्रयोजकत्वम्, तथापि प्रकृतेऽपि तत्त्वेनैव जनकत्वम्,

---

1. क. एवेति
2. क. उक्तमेवेति
3. क- त्विष्टापत्तिः
4. ख. तदवच्छेदकत्वम्
5. क. उक्तमित्यनुपपत्तिः
6. ग. ज्ञानस्यानुमानोपात्तत्वे
7. क. न प्रति-

तज्जन्यस्मरणस्य वा प्रमाणान्तरत्वापत्तेः । तस्मात् परिशेषात् सकृद्दर्शनगम्या सा । तथा हि—उपाध्यभावो व्याप्तिः । अभावश्च केवलाधिकरणं

## प्रकाशः

स्मरणस्य चेति [वेति] । प्रमाणान्तरत्वापत्तेरिति । यत् असाधारणं [1]सहकार्यासाद्य मनो बहिर्गोचरप्रमां जनयति तस्यैव प्रमाणान्तरत्वनियमादिति भावः । सकृद्दर्शनगम्यत्वमुपपादयति — तथाहीति । आधाराधेयभावानुपपत्तेराह—तत्कालेति । [2]तन्मते कालस्य [3]बहिरिन्द्रियवेद्यतया न चाक्षुषत्वादिविरोध

## तर्कचूडामणिः

प्रकारान्तरासम्भवादिति भावः । ननु मनस्सहकारित्वेन [4]प्रमाणान्तरत्वापादने पूर्वानुभवस्यापि तत्त्वापत्तिः, [5]स्वप्रत्यक्षसुखादेरपि तत्त्वापत्तिः, शरीरप्राणसंयोगादेरपि तत्त्वापत्तिश्चेत्यत आह—[6]यद्यिति । [7]ननु निर्व्यापारत्वादेव नानयोः प्रमाणान्तरत्वमत आह—तस्यैवेति । सव्यापारत्वप्रवेशे गौरवादिति भावः । एवं भूयोदर्शनस्य व्याप्तिग्रहहेतुत्वं, तत्प्रयोजकत्वं वा । द्वितीयेऽपि तद्ग्राहकतर्कोत्पादकतया महाव्याप्तिग्राहकसामान्यप्रत्यासत्तिस्वरूपोपयोगितया काकतालीयताशङ्कानिवर्तकतया अनौपाधिकत्वज्ञानोत्पादकतया उपाधिज्ञानाधीनव्यभिचारज्ञाननिवर्तकतया वा न सम्भवतीत्युपपाद्य सकृद्दर्शनस्यापि ग्राहकतां निराकर्तुं तदनुवदतीत्याह—सकृदिति ।

1. ख. कारणान्तरमासाद्य
2. क. 'तन्मते' नास्ति
3. ख. षडिन्द्रिय-
4. क. 'प्रमाणान्तरत्वापादने ...... नानयो' नास्ति
ग. प्रमाणान्तरापादने
5. ग. स्वप्रत्यक्षहेतुसुखादेः
6. ख. यदीति
7. ग. यद्यपि

तत्कालसम्बन्धो वा स्वप्रकाशरूपं तज्ज्ञानं वा। तच्च प्रथमदर्शनेनाव-गतमेव चक्षुरादिना। न चाधिकस्तद्भावोऽस्ति। न च प्रतियोगिज्ञान-मधिकरणादिज्ञानजनकम्, येनोपाधिज्ञानं विना तन्न स्यात्। एवमुपाध्य-भावे ज्ञाते किंचिन्न ज्ञातुमवशिष्यते। उपाध्यभावव्यवहारस्तु तद्विय-मपेक्षते, दीर्घत्वादिव्यवहार इवावधिज्ञानम्। न चैवं रासभसम्बन्ध-तुल्यवह्निधूमसम्बन्धज्ञानादेवानुमितिः स्यादिति वाच्यम्। उपाधिस्मरणे

---

## प्रकाशः

इति ध्येयम्। स्वप्रकाशरूपमित्यनेन चाक्षुषत्वमुपपादितम्। चक्षुर्जन्यज्ञानविषय-स्यैव [1]चाक्षुषत्वादिति भावः। स्वमते दृष्टान्तमाह—[2]दीर्घत्वेति। उपाधिस्मरणे

---

## तर्कचूडामणिः

नन्वेवं कालस्याचाक्षुषतया तत्सम्बन्धस्यापि तथात्वं न स्यात्। न चोपनीतस्य तस्य भानम्। उपनयस्य त्वयानङ्गीकारात् अत आह—[3]तन्मत इति। [4]स्वप्रकाशतामात्रेण न चाक्षुषत्वम्, चक्षुर्जन्यज्ञानजनकसंनिकर्षाश्रयत्वस्यैव तत्त्वादत आह—चक्षुरिति। अन्यथा चक्षुषोऽपि तादृशसंनिकर्षाश्रयतया चाक्षुष-त्वापत्तिरिति भावः। न्यायमते दीर्घत्वज्ञानमेवावधिज्ञानमपेक्षते, न तु तद्व्यवहारः। व्यवहारे व्यवहर्तव्यज्ञानातिरिक्तज्ञानापेक्षायास्तन्मतेऽनङ्गीकारात्, अत आह—स्वमत इति।

---

1. क. तस्य चाक्षुष-
2. क. दीर्घस्येति
3. ग. स्वमत इति
4. ख. स्वप्रकाशकता-

सति उपाधितद्व्याप्येतरसकलतदुपलम्भकसमवधाने चोपाध्यनुपलम्भसहितस्य केवलाधिकरणज्ञानस्यानुमितिहेतुत्वात् तद्व्यवहारहेतुत्वाच्च।

नन्वेवं प्रथमदर्शनेन व्याप्तिनिश्चयात् विशेषदर्शने सति रासभादिसंशयवत् तत्संशयो न स्यादिति चेत्—व्याप्तिज्ञानानन्तरं किं विद्यमान

## प्रकाशः

सतीति। यादृशी सामग्री परमते [1]उपाध्यभावग्राहिका तादृश्येव तद्धेतोरिति न्यायेनानुमितिहेतुरित्यर्थः।

## तर्कचूडामणिः

[2]ननु उपाध्यनुपलम्भादीनां बहूनां कारणत्वे गौरवम्। उपाध्युपलम्भस्यानुमित्यप्रतिबन्धकत्वेन तदनुपलम्भस्य तद्धेतुत्वानुपपत्तिः। उपाध्यनुभवस्थलीयानौपाधिकत्वज्ञाने स्मरणघटितसामग्र्यसिद्धिः। उपाध्युपलम्भप्रागभावस्य प्रतियोग्यादिभिन्नस्यासमवधानेऽनुमित्युपपत्तिश्चेत्यत आह—यादृशीति।

विरोध्यविषयकमपि ज्ञानं परमते प्रतिबन्धकमेव। अत एव व्यभिचारज्ञानाभावोऽप्यनुमितिहेतुरिति तेन वक्ष्यते। अतो न द्वितीयदोष इति बोध्यम्।

ननु [3]विद्यमानत्वाविद्यमानत्वप्रकारक उपाधिसंशयो ग्रन्थेऽभिहितः। स न संभवति। तदभावरूप[4]व्याप्त्यवगमस्य तत्सत्त्वसंशयविरोधित्वात्। अन्यथा घटाभावनिश्चयेऽपि किं विद्यमान एव घटो मयानवगतः, उताविद्यमान इति संशयापत्तिरित्यत आह—तदधिकरणेति। ननु ज्ञानप्रामाण्यसंशयस्य प्रामाण्यघटकप्रकारतद-

1. क. उपाधावभाव-
2. ख. ननु उपाध्यनुपलम्भादिसहितस्य व्याप्तिज्ञानस्यानुमितिहेतुत्वं न सम्भवतीत्यव्याप्तिः। ज्ञानमात्रस्यैव हेतुत्वसम्भवे बहूनां कारणत्वे गौरवात्। किं चोपाध्युपलम्भस्य अनुमितिविषयाभावानवगाहितया तदप्रतिबन्धकत्वेन उपलम्भस्य तद्धेतुत्वमनुपपन्नमित्यत आह—यादृशीति।
3. ख. विद्यमानत्वप्रकारक-
4. क. व्याप्यावगमस्य

एवोपाधिर्मयोपाधित्वेन न ज्ञात इति शङ्कया गृहीतव्याप्तावपि संशयः। अतस्तत्र भूयोदर्शनेनोपाधिनिरासद्वारा व्याप्त्यभावशङ्कापनीयते।

यद्वा ज्ञानप्रामाण्यसंशयाद्व्याप्तिसंशयः यथा घटज्ञानसामग्र्यां सत्यां घटज्ञाने सति तत्प्रामाण्यसंशयाद्धितस्तत्संशयः न त्वग्रिमसंशयानुरोधेन तत्र घटज्ञानमेव न वृत्तमिति कल्प्यते, तथेहाप्युपाध्यभावस्य व्याप्तित्वात् तस्य च केवलाधिकरणरूपस्य प्रथमदर्शनेऽपि निश्चितत्वात् व्याप्तिग्राहकान्तरस्याभावाच्च परिशेषेण सकृद्दर्शनस्य व्याप्तिग्राहकत्वात्तन्निश्चये प्रामाण्य-

---

## प्रकाशः

व्याप्तीति । अधिकरणज्ञानस्य [तदधिकरणज्ञानस्य] वस्तुत उपाध्यभावगोचरस्यापि तत्त्वाप्रकारकतया नोपाध्यभावत्वप्रकारकसंशयनिवर्तकत्वम् । समानप्रकारकनिश्चयस्यैव संशयविरोधित्वात्[1] । तथा च भूयोदर्शनादिना तादृशनिर्णयानन्तरं तच्छङ्कापनीयत इत्यर्थः ।

[2]अभ्युपेत्य तत्प्रकारकनिश्चयानन्तरमपि तत्प्रकारकसंशयमुपपादयति —यद्वेति । स्वतःप्रामाण्यवादिनापि अनुभूयमानस्य प्रामाण्यसंशयस्य कथंचिदुपपाद-

---

## तर्कचूडामणिः

भावकोटिकसंशयहेतुत्वं नान्यप्रकारकसंशयहेतुत्वम् । घटज्ञानप्रामाण्यसंशयानन्तरं घटे द्रव्यत्वसंशयादर्शनात् । एवं च सकृद्दर्शनजनितव्याप्तिज्ञानस्य धूमत्वादिप्रकारकत्वेऽपि उपाध्यभावप्रकारकत्वाभावेन तत्प्रामाण्यसंशयादपि धूमत्वप्रकारक एव संशयः स्यात् नोपाध्यभावत्वप्रकारकः । किं च तत्प्रकारकनिश्चयभावादेव तत्संशयोपपत्तौ किं प्रामाण्यसंशयेनेत्यत आह—अभ्युपेत्येति । परमते प्रामाण्य-

---

1. ख. एतदनन्तरम् 'इति' इत्यधिकपाठः
2. क. 'अभ्युपेत्य' नास्ति

संशयादेव तत्संशयः । न चैवं रासभेऽपि प्रथमं व्याप्तिपरिच्छेदः स्यादिति वाच्यम् । तत्र व्याप्तेरभावात् प्रत्यक्षे विषयस्य हेतुत्वात्, क्वचिदसंसर्गाग्रहात् तथा व्यवहारो दोषमाहात्म्यात् । न चात्रापि तथा, आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इत्यभ्युपगमात् ।

केचित्तु साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्, साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्कत्वं वा व्याप्तिः । तदुभयमपि

## प्रकाशः

नीयत्वादिति भावः । प्रत्यक्ष इति । तन्मतेऽलौकिकप्रत्यक्षाभावेन प्रत्यक्षमात्र एव तथात्वमिति भावः । यद्यप्यसत्यर्थे परस्य [1]ज्ञानमात्रमसम्भवि, तथाप्यत्र प्रत्यक्षस्य पराभिप्रेतत्वात् तदेव खण्डितमिति ध्येयम् । स्वैकदेशिमतं दूषयितुमुपन्यस्यति—केचित्त्विति । [2]प्रथमत इति । [3]क्वचिद्वह्निं विनापि धूमः स्यादिति

## तर्कचूडामणिः

संशय [4]एवासम्भवीत्यत आह—स्वत इति । कथंचिदिति । [5]अविद्यमानासंसर्गाग्रहादिविषयतयेत्यर्थः । यद्यपीति । तथा च विषयाभावान्न व्याप्तिज्ञानमित्येव वक्तव्यमिति भावः । परस्येति । अख्यातिवादिन इत्यर्थः ।

ननु केचिदित्यत्रोक्तं मतं न नैयायिकस्य, सकृद्दर्शनगम्यतायास्तेनानङ्गीकारात् । नापि मीमांसकस्य, स्वमतनिराकरणायोगादित्यत आह—स्वेति । [6]अवच्छेदकत्व-

1. क. ज्ञानमात्रं सम्भवि
2. क. प्रथममिति
3. क. 'क्वचित्' नास्ति
4. क. एव सम्भवति
5. ख. ग. विद्यमानसंसर्गाग्रहादि-
6. ख. अनवच्छेदकत्व-

योग्यं प्रत्यक्षेण वह्निधूमसम्बन्धानुभवेन प्रथममवगतमेव। महानसे योऽत्यन्ताभावोऽन्योन्याभावो वावगतः तस्य प्रतियोगी न वह्निर्न वा वह्निमानित्यनुभवात्। रासभे तथावगमेऽपि अग्रे स बाध्यत इति।

तन्न। एवं हि तद्वह्नितद्धूमयोरेव व्याप्तिः स्यात् न तु धूमत्व-वह्नित्वावच्छेदेन। न च तदनुमानोपयोगि, वह्नित्वं वह्निमत्त्वं वा न प्रतियोगितावच्छेदकमिति प्रथमतो ज्ञातुमशक्यमेवेति।

मैवम्। प्रकृतसाध्यव्यापकसाधनाव्यापको वा साधनत्वाभिमतेन समं प्रकृतसाध्यसम्बन्धितावच्छेदकं विशेषणं वा उपाधिः। उभयथापि तदभावो न व्याप्तिः। सिद्ध्यसिद्धिभ्यां तन्निषेधानुपपत्तेः। किं तु

## प्रकाशः

शङ्कायां वह्नित्वादावच्छेदकत्वसंशयस्यैव[1] प्रतिबन्धकत्वादिति भावः। नैयायिक-मुखेन मीमांसकमास्कन्दति---मैवमिति।

## तर्कचूडामणिः

संशयस्येति। [2]यद्यपि प्रतियोगितानवच्छेदकत्वावगाहिव्याप्तिज्ञाने तदवच्छेदकत्व-संशयस्य ग्राह्यसंशयत्वेन न प्रतिबन्धकत्वम्। [3]तथापि आस्तीर्णस्य ? तस्यापि प्रति-बन्धकत्वमस्त्येव। उक्तसंशयस्यापि [4]क्वचिद्वह्निं विनापि स्यादिति [5]संशयाहितत्वात्। यद्वा विशेषदर्शनाभावे ग्राह्यसंशयमात्रप्रतिबन्धकत्वमिति मतेनेदम्। अशक्यत्वे

1. क. 'एव' नास्ति
2. क. अत्र ग्रन्थपातः। "यद्यपि प्रतियोगितानवच्छेदकावगाहिव्याप्ति-ज्ञानेन तदवच्छेदकत्वसंशयस्य ग्राह्यसंशयमात्रप्रतिबन्धकत्वमिति मतेनेदमशक्यत्वे हेतुमाह" इति पाठो दृश्यते।
3. ग. 'तथापि .........अस्त्येव' नास्ति।
4. ग. क्वचिद्वह्नित्वेनापि
5. ग. संशयाहतत्वात्

यावत्त्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वम् । तस्य च प्रथमं ज्ञातुमशक्यत्वात् । किं च न वस्तुगत्या व्याप्तेर्ज्ञानं हेतुः, किं तु व्याप्तित्वेन, तच्चोपाध्यभावत्वम् । न चोपाधेरज्ञाने तदभावत्वेन ज्ञानं सम्भवति । विशेषणज्ञानसाध्यत्वाद्विशिष्टज्ञानस्य । न च नियमतः प्रथममुपाधिधीरस्ति । यच्चोक्तं प्रतियोगिज्ञानं व्यवहारहेतुर्नाभावज्ञाने इति । अस्तु तावदेवम् । तथापि तदभावो मा व्यवहारि । उपाध्यभावज्ञानाधीनानुमितिः स्यादेवोपाधिज्ञानं विनापि । न चैवम् ।

---

## प्रकाशः

किं त्विति । यावत्त्वादेः प्रथमदर्शनेन ग्रहीतुमशक्यत्वादित्यर्थः । व्याप्तेर्ज्ञानं हेतुरिति । अनुमिताविति शेषः । विशेषणेति । [1]यद्यपि विशेषणज्ञानजन्यत्वं विशिष्टज्ञाने परो न मन्यते, तथापि विशेषणतावच्छेदकप्रकारकज्ञानं विना [2]विशिष्टवैशिष्ट्यज्ञानं न स्यादिति भावः । ननु उपाधिस्मरणे सतीत्यादिना तद्धेतोरेवेति न्यायेन उपाध्यभावप्रकारकज्ञानसामग्र्येव हेतुरित्युक्तम् । तथा च

---

## तर्कचूडामणिः

हेतुमाह—यावत्त्वादेरिति । व्याप्तिज्ञानमात्रस्य स्वानुव्यवसायादिहेतुत्वेन निषेधानुपपत्तिरित्यत आह—अनुमिताविति । [3]तथापीति । यद्यपि विशेष्ये विशेषणमिति [4]न्यायाङ्गीकारे इदमप्यसंगतम् । तथापि तदनङ्गीकारेणेदम् । नन्विति । यद्यप्युपाध्यभावत्वप्रकारकत्वस्य लघुत्वात्तदवच्छिन्नस्यैव हेतुत्वम्, न तु [5]तत्सामग्रीत्वावच्छिन्नस्य, गौरवादित्यपरितोषासामञ्जस्यम् । तदप्यापाततः । वस्तुतस्तु अनौपाधिकत्वं [6]न व्याप्तिः, तज्ज्ञानस्यानुमित्यहेतुत्वात् । किं तु साधनसमानाधि-

---

1. क. यद्यपि न
2. क. विशिष्टज्ञानं
3. ख 'तथापीति' नास्ति
4. क. न्यायाङ्गीकारेणेदम् ।
5. ख. ग. 'तत्' नास्ति
6. क. तव्याप्तिः

वस्तुतस्तु विशेषादर्शने सहचारादिसाधारणधर्मदर्शनात् व्यभिचार-संशयात् प्रथमदर्शनेन न व्याप्तिनिश्चयः ।

अथ व्यभिचारसंशयो नाव्यभिचारनिश्चयप्रतिबन्धकः ग्राह्य-संशयस्य निश्चयाप्रतिबन्धकत्वात् । अन्यथा संशयोत्तरं क्वापि निश्चयो न

---

## प्रकाशः

कथमुपाध्यभाव[1]ज्ञानाधीनानुमितिः स्यादित्यापादनं स्यादित्यपरितोषादाह --- वस्तु-तस्त्विति । [2]सहचारादीत्यादिपदेन व्यतिरेकित्वादिपरिग्रहः ।

आशयमविद्वान् शङ्कते—[3]अथेति । व्यभिचारसंशय इत्यव्यभिचार-घटितव्याप्तिपक्षे, अनौपाधिक[4]त्वरूपव्याप्तिपक्षे तदभावसंशयो द्रष्टव्यः ।

---

## तर्कचूडामणिः

करणान्योन्याभावप्रतियोगितानवच्छेदकतत्सामानाधिकरण्यम् । तज्ज्ञानस्यैव तद्धेतु-त्वेन वक्ष्यमाणत्वात् । तादृशव्याप्तेश्च न सकृद्दर्शनगम्यत्वमित्येव वस्तुत इति ग्रन्थतात्पर्यं बोध्यम् । अत एव व्यभिचारसंशये सति व्याप्त्यग्रहं ग्रन्थकार एवोपपादयति । अनौपाधिकत्वस्य च व्याप्तित्वे [5]तत्प्रतिबन्धकत्वोक्त्ययोगात्, तस्य ग्राह्याभावानवगाहित्वादिति ।

व्यतिरेकित्वेति । [6]तदत्यन्ताभावप्रतियोगित्वं साध्यनिष्ठं तदपि संशायक-मेव । [7]साध्यस्य व्यतिरेकित्वज्ञाने सति हेतौ तदभावसामानाधिकरण्यसंशयाभावा-

---

1. क. ज्ञानादनुमितिः
2. क. सहचारिपदेन
3. क. तथेति
4. क. त्वादिव्याप्ति-
5. ख. तत्प्रतिबन्धकोक्ति-
6. ग. तादृशात्यन्ताभाव-
7. ख. साध्यव्यतिरेकित्व-
   ग. साध्यस्याव्यतिरेकित्व-

स्यादिति चेत्—न व्यभिचारसंशयः प्रतिबन्धक इति ब्रूमः। किं तु विशेषादर्शने सति सहचारादिसाधारणधर्मदर्शनात् संशयः स्यात् न तु संशयसामग्रीतो निश्चयः। किं च यद्वीसामग्री यत्र प्रतिबन्धिका विशेषा-

---

प्रकाशः

आशयमुद्घाटयति—नेति। किं चेति। यद्यपि तादृशग्राह्यसंशयस्य तन्निर्णयप्रतिबन्धकत्वे योग्यतासंशयस्यापि शाब्दज्ञानकारणत्वं न स्यात्, तस्यापि ग्राह्यसंशयपर्यवसन्नत्वात् [1]विशेषदर्शनासहितत्वाच्च। तथापि व्यभिचारादिसंशये सति न व्याप्तिनिश्चय इति सर्वसिद्धमिति अनन्यगत्या विशिष्यापि तस्य प्रतिबन्धकत्वं कल्पनीयमेव। अत एवानुपदमेव सिद्धान्ते ज्ञानं निश्चयः शङ्का चेत्यनेन

---

तर्कचूडामणिः

दिति भावः। सहचारनिश्चयाधिकरणातिरिक्तवृत्तित्व[2]ज्ञानं हेतुविषयमादिपदग्राह्यम्। हेतौ तन्मात्रवृत्तित्वनिश्चये तच्छङ्कानुदयात्।

प्रतिबन्धकत्वस्य प्रागनभिधानाच्छङ्कानुपपत्तिः, तत्राह—**आशयमिति**। अनौपाधिकत्वं न व्याप्तिः, किं तु अव्यभिचार एवेति ग्रन्थकृदभिप्रायं प्रागुक्तमजानान[3] आह—**व्यभिचारेति**।

**पर्यवसन्नत्वादिति**। एतच्च वाक्यार्थघटितयोग्यतापक्षे संसर्ग [4]एव योग्यतेति मते तत्संशयस्य ग्राह्यसंशयत्वमेवेत्यवधेयम्। ननु [5]न संशयमात्रस्य प्रतिबन्ध-

---

1. ख. विशेषदर्शनसहितत्वाच्च
2. क. ज्ञानं विषयमादि-
   ख. ज्ञानहेतुविषयादितिपद-
3. क. अजानतः
4. ख. 'एव' नास्ति
5. ख- 'न' नास्ति

त—24

**दर्शने तत्र तद्धीरपीति व्यभिचारसंशयोऽपि प्रतिबन्धकः। एवं भूयोदर्शनमपि संशायकम् तर्कस्त्वनवस्थाग्रस्त एवेति कथं व्याप्तिग्रहः।**

---

## प्रकाशः

व्यभिचारसंशयस्य प्रतिबन्धकत्व[1]माविष्करिष्यतीति भावः। एवं न भूयोदर्शनं न [2]वा तर्को व्याप्तिग्राहक इति [3]व्याप्तिग्राहकाभावान्नानुमानं प्रमाणमित्यभिप्रायेणाह—**एवमिति।**

**अत्रोच्यत** [4]**इति।** सहचारज्ञानत्वेन हेतुत्वं न तु [5]भूयोदर्शनत्वेन न वा सकृद्दर्शनत्वेन। तच्च तदुभयसाधारणम्। यदैव व्यभिचारज्ञानविरहसाहित्यं यस्य तदैव तेन व्याप्तिर्गृह्यत इत्यर्थः।

---

## तर्कचूडामणिः

कत्वम्, किं तु विशेषदर्शन[6]विरहसहकृतस्यैव। तथा चोक्तस्थलेऽपि विशेषणाभावाद्विशिष्टाभावः स्यादित्यत आह—**विशेषेति।** न हि योग्यतासंशये सति विशेषदर्शनं विना न शब्द [शाब्द] ज्ञानमिति भावः। विशिष्यापीति। व्याप्तिप्रत्यक्षत्वावच्छिन्ने व्यभिचारज्ञानत्वावच्छिन्नस्य प्रतिबन्धकत्वमिति भावः। नन्वनुमानाप्रामाण्यं प्रतिज्ञाय व्याप्तिग्रहाभावोपसंहरणमनुपपन्नमित्याशङ्क्य तात्पर्यमाह—**एवमिति। न प्रमाणमिति।** न प्रमाजनकमित्यर्थः।

---

1. क॰ 'आविष्करिष्यति' नास्ति।
2. क. 'वा तर्को' नास्ति।
3. ख. व्याप्तेर्ज्ञानाभावात्
4. क. 'इति' नास्ति
5. क. भूयोदर्शनेन
6. ख. 'विरह' नास्ति
   ग. 'विरहसहकृत' नास्ति।

अत्रोच्यते। व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकम्। ज्ञानं निश्चयः शङ्का च। सा च क्वचिदुपाधिसन्देहात् क्वचित् विशेषादर्शनसहितसाधारणधर्मदर्शनात्। तद्विरहश्च क्वचित् विपक्षबाधकतर्कात् क्वचित् स्वतस्सिद्ध एव।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
व्याप्तिग्रहोपायप्रकरणम्



## प्रकाशः

ननु सहचारदर्शनस्य हेतुत्वे मानाभावः। न च विशेषणज्ञानत्वेन हेतुत्वम्। सहचारविशेष्यकव्याप्तिग्रहे व्यभिचारात्। सहचारज्ञानत्वेन तद्धेतुत्वस्य [1]तथाप्यनुपपादनाच्च। किं चैवं व्याप्तिघटकपदार्थान्तरस्यापि विशेषणत्वेन तज्ज्ञानमपि कारणत्वेनोच्यते। [2]यदि चेयं व्याप्तिप्रत्यक्षे विशेषसामग्री निरुक्तेति तन्नोक्तम्। तदा सहचारज्ञानेऽपि तुल्यम्। तस्मात् व्यभिचाज्ञानादिप्रतिबन्धकाभावे सति व्यातीन्द्रियसंनिकर्षादेव व्याप्तिनिश्चयो न तु तदपेक्षेति चेत्—

## तर्कचूडामणिः

ननु व्यभिचारज्ञानविरहसाहित्यस्य सहचारज्ञाननिष्ठकारणतावच्छेदकत्वे [3]व्यभिचारज्ञानविरहस्याहेतुत्वापत्तिः। न च प्रयोजकतया तदुपादानम्, [4]सत्यपि तस्मिन् विशेषणज्ञानविरहे कार्यानुदयादित्यत आह—सहचारेति। साहित्योक्तेः प्रयोजनमाह—यद्वेति। ननु सहचारज्ञानस्य हेतुत्वमित्येव प्रतिपाद्यम्, न तु

1. क. तथाप्यनुपादानाच्च
2. क. यदि चैवं
3. ख. व्यभिचारज्ञान विरहहेतुत्वापत्तिः
ग. व्यभिचारज्ञानस्याहेतुत्वापत्तिः
4. क. असत्यपि

## प्रकाशः

[1]अत्राहुः—अगृहीतसहचारस्य सर्वथा व्याप्त्यग्रहात् स्वतन्त्रान्वयव्यतिरेकाभ्यां तस्य हेतुत्वम् । अत एव सहचारभ्रमेण विरुद्धेऽपि[2] व्याप्तिभ्रम इति । [3]न [ननु] तथापि तस्य न तत्त्वेन [हेतुत्वम्] सहचारविशेषणकव्याप्तिग्रहे विशेषणज्ञानत्वेनैव हेतुत्वात् । अव्यभिचारविशेषणके च तद्ग्रह एवान्यथासिद्धत्वादिति चेत्—न । अव्यभिचारांश एव तद्धेतुत्वाभ्युपगमात् सहचारांशग्रहस्यान्यथासिद्धेः व्यभिचारज्ञानविरहस्यापि तत्रैव हेतुत्वाच्च विशिष्टग्रहस्य सामग्रीतो निश्चय इति ।

वस्तुतस्तु व्यतिरेक[4]सहचारज्ञानस्यान्वयव्याप्तिग्राहकत्वमित्यग्रे स्फुटम् । तस्य न विशेषणज्ञानत्वेन हेतुत्वम् । व्यतिरेकसहचारस्यान्वयव्याप्तौ विशेषणत्वाभावात् । नापि सहचारज्ञानत्वेन, अतिप्रसङ्गात् । किं तु व्यभिचारज्ञानविरोधिसहचारज्ञान-

---

## तर्कचूडामणिः

तत्त्वेनापि, मानाभावादित्यत आह—किं चेति । एवमिति । व्याप्तिघटकपदार्थान्तरज्ञानं हेतुतया नोक्तमित्यर्थः ।

जयदेवमतमाह —अत्रेति । [5]नन्वन्वयव्यतिरेकासिद्धौ यत्रापि तदनन्तरं व्याप्तिग्रहः तत्रापि [6]तस्य विशेषणज्ञानत्वेनैव हेतुत्वं न सहचारज्ञानत्वेन, नापि तद्भ्रमात् तद्भ्रमः । [7]किं तु सहचारभ्रम एव तद्भ्रमः । न चासहचारज्ञानस्य प्रतिबन्धकतया सहचारज्ञानस्य कारणतेति वाच्यम् । ग्राह्याभावावगाहिज्ञानस्य स्वत एव प्रतिबन्धकतया जनकज्ञानविघटकत्वाकल्पनादित्यरुचेराह — वस्तुत इति ।

---

1. क. अत्र ब्रूमः
2. ख. 'अपि' नास्ति
3. ख. 'न तथापि....... सामग्रीतो निश्चय इति' इति भागस्त्रुटितः
4. क. सहचारस्य
5. क. 'ननु' नास्ति
6. ख. 'तस्य' नास्ति
7. क. 'किं तु सहचारभ्रम एव तद्भ्रमः' नास्ति

## प्रकाशः

त्वेन । तच्चान्वयव्यतिरेकसहचार[1]ज्ञानसाधारणम् । यद्यपि सहचारज्ञानस्य न व्यभिचारज्ञानविरोधित्वम् । महानसादौ वह्नेर्धूमसहचारग्रहेऽप्ययोगोलके [2]व्यभिचारग्रहात् । तथापि सहचारग्रह[3]विषयीभूताधिकरणे व्यभिचारज्ञानविरोधित्वमस्त्येव । न हि [4]यत्रैवाधिकरणे साध्यसाधनयोस्तदभावयोर्वा सहचारो गृह्यते तत्रैव व्यभिचारज्ञानं संभवति । अन्वयसहचारग्रहे साध्यात्यन्ताभावस्य व्यतिरेकसहचारग्रहे साधनस्य तत्राग्रहात् साधने साध्यात्यन्ताभावसामानाधिकरण्यग्रहस्य व्यभिचारग्रहत्वादिति ।

---

## तर्कचूडामणिः

अतिप्रसङ्गादिति । अन्यसहचारज्ञानादन्यव्याप्तिग्रहापत्तेरित्यर्थः । व्यभिचारेति । अत्र हेतौ साध्यव्यभिचारः साध्ये च हेतुव्यभिचार इत्युभयमपि विवक्षितम् । तेनायोगोलकादौ वह्निधूमाभावसहचारज्ञानमपि व्यभिचारज्ञानमेवेति तद्विरोधित्वाभावान्नातिप्रसङ्गः । उक्तसहचारज्ञाने सत्यपि अधिकरणान्तरे व्यभिचारज्ञाने सति [5]न व्याप्तिग्रह इति तदभावो हेतुः ।

साधन इत्युपलक्षणम् । साध्येऽपि तथाभूताभावसामानाधिकरण्यं [6]व्यभिचारत्वेनात्र बोध्यम् । ननु प्रतिबन्धकीभूतं [7]व्यभिचारज्ञानं न साध्यनिष्ठहेतुसमानाधिकरणात्यन्ताभावप्रतियोगित्वविषयम् । [8]अन्वयिसाधारण्येऽपि हेत्वाभासाधिक्यापत्तेः । नापि साध्याभाववद्गामित्वविषयम्, केवलान्वयिन्यप्रसिद्धेः ।

---

1. क. 'ज्ञान' नास्ति
2. क. व्यभिचारात्
3. क. विषयान्तर्भूताधिकरणे
4. क. यत्र वा
5. क अव्याप्ति- ख. व्याप्ति
6. ख. व्यभिचारज्ञानत्वेनात्र ग. व्यभिचारित्वेनात्र
7. क. अव्यभिचार-
8. ख. अन्वयासाधा-

## प्रकाशः

व्यभिचारज्ञानं च यादृशं केवलान्वयिसाधारणं प्रतिबन्धकत्वेन हेत्वाभासग्रन्थे निर्वक्तव्यं तद्विरहोऽत्र हेतुत्वेन बोद्धव्यः । उपलक्षणं [1]चैतत् अव्याप्यत्वादिज्ञानविरहासहकृतेत्यपि बोद्धव्यम् ।

न चैतदपि विशेषादर्शने सति साधारणधर्मदर्शनतया संशायकमेव स्यात् । [2]तत्तु न निश्चायकमिति वाच्यम् । कोटयस्मृतौ तत्स्मृतौ वा [3]तस्य [4]तर्कसहकारेण व्याप्तिनिश्चायकत्वात् ।

ननु व्यभिचारज्ञानविरहसहकृतसहचारज्ञानं तद्धेतोरिति न्यायेनानुमितावेव हेतुरस्तु, न तु व्याप्तिज्ञान इति चेत् — न । व्यभिचारज्ञानस्य ग्राह्याभावानवगाहि-

---

## तर्कचूडामणिः

अत आह—**व्यभिचारेति** । साध्यनिष्ठहेतुसमानाधिकरणात्यन्ताभावप्रतियोगित्वधीविरोधित्वेन सकलज्ञानानां प्रतिबन्धकत्वमित्यादि तत्र वक्ष्यते । तदभावो व्याप्तिग्रहे हेतुरिति भावः । **अव्याप्यत्वेति** । प्रत्येकाभावातिरिक्तविशिष्टाभावाङ्गीकारेण [5]प्रत्येकाभावाविषयकविशिष्टाभावविषयकज्ञानस्यापि ग्राह्याभावावगाहितया प्रतिबन्धकत्वेन तदभावस्यापि हेतुत्वमावश्यकमिति भावः ।

**कोटीति** । कोटयस्मृतौ निरुक्तसहचारज्ञानस्य स्वत एव तन्निश्चायकत्वात् स्मृतौ तर्कसहकारेण तन्निश्चायकत्वादित्यर्थः । [6]**सहचारदर्शन [ज्ञान] मिति** ।

---

1. क. स्वैतत् अव्याप्यत्वादिज्ञानविरहसह-
2. ख. न तु निश्चायकम्
3. ख. 'तस्य' नास्ति ।
4. क. तत्सहचारेण
5. ख. प्रत्येकाभावविषयक-
6. क 'सहचार ......... इत्यर्थः' नास्ति

## प्रकाशः

त्वेनानुमितौ प्रतिबन्धकत्वाभावेन तदभावस्याहेतुत्वात् । तस्मादनुमितिजनकीभूतमव्यभिचारज्ञानं विघटयत एव तस्यानुमितिप्रतिबन्धकत्वं न तु साक्षात् ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
व्याप्तिग्रहोपायप्रकरणम्



## तर्कचूडामणिः

[1]स्वव्यभिचारज्ञानविरोधिसहचारज्ञानमित्यर्थः । नन्वेवं व्यभिचारस्य हेत्वाभासत्वं न स्यात् अनुमितिप्रतिबन्धकज्ञानविषयस्यैव तत्त्वादिति शङ्कामुपसंहारव्याजेन निरस्यति – तस्मादिति ।

इति श्रीधर्मराजाध्वरिविरचिते तर्कचूडामणौ
व्याप्तिग्रहोपायप्रकरणम्



1. ख. सव्यभिचारस्य

## अथ तर्कप्रकरणम्

तर्कस्य व्याप्तिग्रहमूलकत्वेनानवस्थेति चेत्—न। यावदाशङ्कं तर्कानुसरणात् यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः। तथा हि—धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यात् नोत्पन्नः स्यात् इत्यत्र किं धूमोऽवह्नेरेव भविष्यति?

---

### प्रकाशः

[1]यादृशतर्कमूलव्याप्तौ व्याघातेन शङ्कैव[2] नावतरति तादृशं वह्निधूमयोः कार्यकारणभावग्राहकं [3]तर्कमुदाहरति—धूमो यदीति। घटादौ व्यभिचारवारणाय सत्यन्तम्। वह्निसमवहितसामग्रीजन्ये तद्वारणाय विशेष्यम्। [4]धूमस्य वह्न्यसम-

---

### तर्कचूडामणिः

वह्निधूमयोर्व्याप्तिग्रहे कार्यकारणभावाख्य एव तर्कः शङ्कापनायकः। धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादिति [5]तर्कावतारे संशयाभावात्। यद्यपि व्यधिकरणकारणेनापि कार्यजननात् कार्यमात्रे नायं तर्कः, तथापि धूमादौ व्यधिकरण[6]वह्निजन्यत्वनियमात् उक्ततर्कावतारः। तत्र च तर्के इष्टापादनशङ्कायां तज्जन्यताग्राहकस्तर्क उद्भावनीयः। तत्र [7]अप्रयोजकत्वशङ्का व्याघातेन नावतरतीति [8]प्रदर्शयितुं तादृशतर्कमाहेत्याह—यादृशेति। ननु जन्यश्चायं धूमः अतो वह्न्यसमवहिताजन्यत्वे सति वह्न्यजन्यो न भवतीति विपर्ययपर्यवसानमुभयथा सम्भवति, वह्न्यजन्यत्वरूपविशेष्याभावात् वह्न्यसमवहिताजन्यत्वरूपविशेषणाभावाद्वा। तथा च

---

1. क. यादृशतन्मूल-
2. ख. 'एव' नास्ति
3. क. तदुदाहरति
4. क. धूमे
5. ख. तर्कात्
6. ख, वह्न्यजन्यत्व
7. ख. च तर्के अप्रयो-
8. ख. प्रदर्श्य

क्वचिद्दहनं विनापि भविष्यति? अहेतुक एव वोत्पत्स्यते? इति शङ्का स्यात्। यदि हि गृहीतान्वयव्यतिरेकं हेतुं विनापि कार्योत्पत्तिं शङ्केत, तदा स्वयमेव धूमार्थं वह्नेः, तृप्त्यर्थं भोजनस्य, परप्रतिपत्त्यर्थं शब्दस्य

## प्रकाशः

वहिताजन्यत्वनिश्चयदशायामेव [1]तर्कोऽयमभिमतः । तेन सत्यन्तविशेषणस्यैव व्यतिरेकमादाय नास्य विपर्यये पर्यवसानम् । एवं च वह्न्यसमवहिताजन्य इति [2]पक्षविशेषणमप्यत्राभिमतम् । तथा [3]चाह्नेरेव भविष्यति क्वचिद्वह्निं विनापि भविष्यतीति शङ्काद्वयमापाद्यापादकव्याप्तिग्रहापरिपन्थिभूतमपि पक्षविशेषणग्रहपरिपन्थित्वादाशङ्क्य परिहृतमिति ध्येयम् । अप्रयोजकत्वं शङ्कते— अहेतुक एवेति । तदुपादान-

## तर्कचूडामणिः

[4]तत्पर्यवसानस्य विशेषणाभावमादायापि पर्यवसाने उक्ततर्केण धूमे [5]वह्निजन्यता न सिध्येदित्यत आह—धूमस्येति । जन्यत्वनिश्चयदशायामित्यपि बोध्यम् । पक्षविशेषणस्य प्रयोजनान्तरमाह — तथा चेति । यद्यपि सर्वानुमानेऽप्यप्रयोजकत्वशङ्का स्यादिति वदन्तं चार्वाकं प्रति [6]स्वक्रियाव्याघातो दीयते न तु स्वीयव्याप्तिग्रहप्रतिबन्धकाप्रयोजकत्वशङ्कापनायकतया, स्वयं काष्ठसरणादिनापि शङ्कानवश्यम्भावेन तर्कानुसरणानावश्यकत्वात् । तथापि 'सर्वत्र [7]शङ्कया भाव्यं नियामकमपश्यताम्' इति न्यायेन स्वार्थानुमानेऽपि सर्वत्र शङ्का भवत्येव । तन्निवृत्तिश्च व्याघातादेवेति स्वीयव्याप्तिग्रह[8]प्रतिबन्धकशङ्कापनायकतया व्याघातः स्वार्थानुमानोपयोगितयैव ग्रन्थ-

1. क. तर्कोऽयमित्यभि-
2. क. पक्षता-
3. ख. च वह्नेः
4. ख. तात्पर्यावसानस्य
5. ख. वह्न्यजन्यता सिध्येत्
6. क. स्वक्रिया किं व्याघ्यातो दीयते ननु स्वीय-
   ख. स्वक्रियाव्याघातो यदि तेन तु स्वयं
7. क. शङ्कयाभाव-
8. क. 'प्रतिबन्धक' नास्ति

चोपादानं नियमतः कथं कुर्यात् ? तेन विनापि तत्सम्भवात् । तस्मात्तदुपादानमेव तादृशशङ्काप्रतिबन्धकम् ।

---

## प्रकाशः

मिति । तदुपादानहेतुभूतधूमवह्न्यादिकार्यकारणभावज्ञानमेवेत्यर्थः । शङ्काया विरोधिनिश्चयप्रतिबध्यत्वादिति ध्येयम् ।

ननु वह्निधूमादिकार्यकारणभावः प्रथमं यदि गृहीतस्तदा किमनेन तर्केण ? एतत्कर्तव्यस्य कार्यकारणभावग्रहस्य प्रागेव जातत्वात् । यदि [1]तर्कात्पूर्वमगृहीतः तदा प्रतिबन्धकाभावेनोक्तशङ्काकवलितस्तर्क एव न [2]ज्ञानमुत्पादयेदिति चेत्—

---

## तर्कचूडामणिः

कृतोक्त इति तदभिप्रायमारोप्य व्याचष्टे—तदुपादानेति । [3]यथाश्रुते बाधमाह—शङ्काया इति । प्रतिबन्धकेति । [4]अप्रयोजकत्वशङ्कानिवर्तकाभावेत्यर्थः । शङ्केति । अहेतुकत्वशङ्केत्यर्थः ।

उपाध्यायसमाधिं दर्शयति—अत्रेति । ननु नियमतो वह्न्यसमवहितानुपादानस्यापि [5]न शङ्काप्रतिबन्धकत्वम् । [6]तस्या विरोधिनिश्चयनिवर्त्यत्वात् इत्यत आह — धूमार्थमिति । हेतुभूतमिति । तदजन्यत्वज्ञानाभावे तदनुपादानानुपपत्तेरिति भावः । ननु जन्यत्वेन [7]ज्ञाते धूमे वह्न्यसमवहिताजन्यत्वज्ञानं वह्निजन्यत्वज्ञानाभावे न स्यादित्यत आह—कार्येति । ग्राहकसामग्रीभेदादिति भावः ।

---

1. ख. तर्कात्पूर्वं स न गृहीतः
2. ख. ज्ञानमुपपादयेत्
3. क. ग. 'यथाश्रुते बाधमाह— शङ्काया इति' नास्ति
4. क. अप्रयोजकशङ्का ख. अप्रयोजकत्वशङ्कानिवर्तकेनेत्यर्थः
5. क. 'न' नास्ति
6. ख. तस्यापि विरोधि-
7. क. ख. ज्ञाने

## प्रकाशः

अत्र केचित् । धूमार्थं वह्नेरुपादानं कथं कुर्यात् इत्यत्र [1]धूमार्थं वह्न्यसमवहितानुपादनं [2]नियमतः कुर्यात्कथमित्येव विवक्षितम् । तथा च तदुपादानमेवेत्यत्रापि वह्न्यसमवहितानुपादानमेव वह्न्युपादानत्वेन विवक्षितम् । धूमार्थं नियमतस्तदनुपादानहेतुभूतं धूमस्य तदजन्यताज्ञानं वह्निधूमयोः कार्यकारणभावाज्ञानेऽपि अन्वय[3]व्यतिरेकदर्शनादिना भवत्येव । तथा च वह्निधूमयोः कार्यकारणभावज्ञानं पूर्वमनुत्पन्नमेवानेन [4]तर्केणोत्पाद्यते । तर्कश्चायं पूर्वोत्पन्नादेव धूमगोचरवह्न्यसमवहिताजन्यत्वज्ञानात् कार्यं सहेतुकमेवेति ज्ञानाच्च उक्तशङ्कात्रयावकाशरहितो भवतीत्याहुः ।

---

## तर्कचूडामणिः

कार्यकारण[5]भावज्ञानाभावेऽपि शङ्कानिवृत्तिमाह—[6]**तर्कश्चेति । शङ्कात्रयेति । कार्यं** [7]सहेतुकमित्यनेनाहेतुकत्वशङ्कानिवृत्तिः, [8]वह्न्यसमवहिताजन्यत्वज्ञानेन शङ्काद्वयनिवृत्तिरिति भावः ।

न चोक्तज्ञानद्वयादेव शङ्कानिवृत्तौ कार्यकारणभावनिश्चयसम्भवेन तर्कवैयर्थ्यमिति वाच्यम् । [9]वह्न्यसमवहिताजन्यत्वनिश्चयेऽपि [10]वह्निसमवहिताजन्यत्वसंशये तद्ग्रहाभावेन तत्संशयनिवृत्त्यर्थं तर्कापेक्षणात् ।

न च सहेतुकत्वेन [11]वह्नीतराजन्यत्वेन च निश्चिते धूमे तादृशसंशय एव न भवतीति वाच्यम् । वह्नीतराजन्यत्वे सति सहेतुकत्वस्य वह्निजन्यत्वव्याप्यत्वेऽपि तत्त्वाज्ञानदशायां [12]संशयसम्भवात् । उक्तनिश्चयद्वयस्य तत्संशयविषयाभावानवगाहितया संशयं प्रत्यप्रतिबन्धकत्वात् ।

---

1. क. धूमार्थं वा
2. क. न नियमतः
3. क. व्यतिरेकादर्शना-
4. क. तर्केणोपपद्यते
5. ख. 'भाव' नास्ति
6. ख. तर्के चेति
7. क. सहेतुभूत-
8. ख. ग. वह्निसम-
9. ग. वह्निसम
10. क. वह्न्यसम-
11. क. 'वह्नीतराजन्यत्वेन' नास्ति
12. क. संशयासम्भवात्

## प्रकाशः

तन्न। वह्न्यसमवहितानुपादानस्य तादृशशङ्काप्रतिबन्धकत्वे मानाभावात्। शङ्काया विरोधिनिश्चय[1]निवर्त्यत्वात्। धूमे वह्न्यसमवहितजन्यत्वज्ञानाभावात् तदनुपादानं स्यात् वह्निजन्यत्वज्ञानाभावाच्च वह्निं विनापि स्यादिति शङ्का स्यात्, को विरोधः।

---

## तर्कचूडामणिः

न च तर्कावतारार्थं तज्ज्ञानस्य [2]प्राथमिकत्वे यद्वह्निसमवहिताजन्यत्वे सति सहेतुकं तद्वह्निजन्यमिति अनुमानादेव वह्निजन्यत्वनिश्चयसम्भवे तर्कवैयर्थ्यमिति वाच्यम्। उपायान्तरस्योपायान्तरादूषकत्वात्।

न च कार्यं सहेतुकमिति व्याप्तिप्रत्यक्षेऽपि शङ्कायां तर्कापेक्षणेऽनवस्थेति वाच्यम्। कोटयस्मरणादिना तद्विलम्बादिति भावः।

**मानाभावादिति**। यद्यपि [3]पूर्ववादिनापि ज्ञानस्यैव प्रतिबन्धकत्वमुक्तम्, तथापि [4]तद्दृढीकरणायेदमुक्तम्। [5]ननु तदनुपादानहेतुभूततदजन्यताज्ञानमेव शङ्काप्रतिबन्धकमुक्तम्[6], इत्यत आह—**धूम इति**। अनुपादानं हि उपादानाभावः। [7]तत्र च तदजन्यत्वज्ञानं न हेतुः, उपादानहेतुभूतजन्यत्वज्ञानाभावादेव तदनुपादानोपपत्तेः। कार्याभावस्य कारणाभावप्रयोज्यत्वादिति भावः।

[8]न चानुपादानानुरोधेन तदजन्यताज्ञानानङ्गीकारेऽपि [9]वह्न्यसमवहित[10]सामग्र्यां न धूमः, तदभावे च धूम इति अन्वयव्यतिरेकदर्शनेन [11]तदजन्यतानिश्चयो

---

1. क. निवर्तकत्वात्
2. ग. प्रासङ्गिकत्वे
3. क. पूर्ववादिनोऽपि
4. क. 'तद्' नास्ति
5. क. 'ननु' नास्ति
6. ख. 'उक्तं' नास्ति
7. ख. तत्र तज्जन्यत्व-
8. क. नन्वनु-
9. ग. वह्निसमवहिताजन्य-
10. ग. वह्निसामग्र्यां
11. ख. तज्जन्यता-

## प्रकाशः

अन्ये तु तदुपादानपदेन तदुपादानप्रयोजकान्वयव्यतिरेकानुविधायित्वज्ञानमेव विवक्षितम् । तदेव शङ्काप्रतिबन्धकम् यदवच्छेदेन [1]यव्यावर्तकधर्मदर्शनं तज्ज्ञानस्यापि तच्छङ्काविरोधित्वात् । अत एव धूमत्वावच्छेदेन व्याप्तिग्रहे [2]धूमत्वदर्शनादेव पर्वतवृत्तिधूमे न व्याप्तिसंशय इति ।

---

## तर्कचूडामणिः

जायत इत्यङ्गीकार्यम् । तथा च वह्निं विनापि स्यादित्याशङ्का न भवत्येवेति वाच्यम् । उक्तान्वयव्यतिरेकज्ञानेऽपि प्रतीतव्यभिचारकपदार्थातिरिक्ता ये [3]वह्न्यसमवहितपदार्थाः [4]तज्जन्यत्वशङ्काया [5]अप्रतिबन्धकत्वात् । न हि [6]वह्न्यसमवहितयावत्पदार्थव्यभिचारित्वं धूमे किंचिज्ज्ञेनावगन्तुं शक्यते । [7]तस्माद्वह्न्यसमवहितसामग्रीजन्यत्वनिश्चयस्यैव [8]तत्समवहितजन्यत्वशङ्काप्रतिबन्धकत्वं वाच्यम् । तन्निश्चयश्च तर्कात्पूर्वं न सम्भवति । तद्वैयर्थ्यापातात् । तथा च सा शङ्का दुर्वारेत्याह—वह्नीति ।

जयदेवसमाधिमाह—**अन्ये त्विति** । ग्राह्याभावानवगाहिनोऽन्वयव्यतिरेकानुविधायित्वज्ञानस्य कथं [9]प्रतिबन्धकत्वमित्यत आह — **यदवच्छेदेनेति** । अप्रयोजकत्वशङ्कां निराकरोति—**अत एवेति** । न चोक्तज्ञानादेव सर्वसंशयनिवृत्तौ तर्कवैयर्थ्यमिति वाच्यम् । तर्कस्यैवान्वयाद्यनुविधायित्वज्ञानत्वेन विवक्षितत्वात् । धूमत्वस्य व्याप्यवच्छेदकत्ववदन्वयाद्यनुविधायित्वस्य न जन्यतायामवच्छे-

---

1. क. व्यापकधर्म-
2. क. धूमदर्शनात्
3. ग. वह्निसम-
4. क तदजन्यत्वशङ्कायाः
5. क. 'अप्रतिबन्धकत्वात्'......जन्यत्वशङ्का-' नास्ति
6. ख. वह्निसम-
7. ख. तस्माद्वह्निसम-
8. ग. तदसमव-
9. ग. अप्रतिबन्धकत्वं

## प्रकाशः

तच्चिन्त्यम् । अन्वयाद्यनुविधायित्वज्ञानस्यान्यथासिद्धव्यभिचारिसाधारणत्वेन शङ्काप्रतिबन्धकत्वाभावात् । नियमादि[1]घटितं तज्ज्ञानं तु कारणत्वग्रहपर्यवसन्नमेवेति पूर्वोक्त[2]दोषानिवृत्तेरिति ।

अत्रोच्यते । न हि सर्वत्रानेनैव तर्केण धूमवह्निकार्यकारणभावग्रहः, कोटिस्मरणादिविरहेण [3]स्वतःसिद्धे शङ्काविरहेऽन्वयादिज्ञानवतस्तद्ग्रहे[4] व्याप्तिग्रहे

## तर्कचूडामणिः

दकत्वम्, अतिप्रसक्तत्वात् । तथा च तन्निश्चयस्य न जन्यतासंशयप्रतिबन्धकत्वमित्याह—**अन्वयेति। पूर्वोक्तेति**। तर्कवैयर्थ्यापत्तिरित्यर्थः ।

जयदेवोक्त[5]समाधयन्तरमाह — **अत्रोच्यत इति** । अत्रैतावानेव हि पूर्वपक्षनिगर्वः—तर्कस्य [6]कार्यकारणभावग्रहाधीनत्वे वैयर्थ्यापत्त्या तदग्रहदशायामेव [7]तदवतारो वाच्यः । स च न सम्भवति, [8]शङ्काकवलितत्वात् । तथा च तन्मूलकार्यकारणभावज्ञानाधीनव्याप्तिग्रहाभावान्नानुमितिरिति तत्र तर्कस्य शङ्काकवलितत्वेऽपि न कार्यकारणभावग्रहानुपपत्तिः [9]न वा एतन्मूलव्याप्तिग्रहानुपपत्तिः । व्यभिचारज्ञानाभावे सति सहचारज्ञानमात्रादेव तदुभयसम्भवात् इत्याह—**न हीति** । [10]तर्हि तर्कस्याप्रयोजकत्वे तदुक्तिवैयर्थ्यम्, अत आह—**स्वत इति** । स्वनिवर्त्यशङ्कावतारे [11]स्वावतारप्रतिबन्धकशङ्काविरहे च सति तर्कस्य [12]प्रयोजकत्वमित्यर्थः ।

1. क. घटितज्ञानं च
2. ख. दोषानुवृत्तेः
3. क. स्वतः सिद्धशङ्का-
4. क. 'तद्ग्रहे' नास्ति
5. क. साध्यान्तर-
6. ग. कार्यकारणभावाधीनत्वेन
7. क. तदभावो
8. क. शङ्काकलितत्वात्
9. क. ख. 'न वा एतन्मूलव्याप्तिग्रहानुपपत्तिः' नास्ति ।
10. ख. न हि तर्कस्य प्रयोजकत्वे
11. क. 'स्वावतार' नास्ति ।
12. क. अप्रयोजक-

शङ्कायां न नियतोपादानं नियतोपादाने च न शङ्का। तदिद-मुक्तम्—'तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवतो'ति। न हि संभवति स्वयं वह्नयादिकं धूमादिकार्यार्थं नियमत उपादत्त तत्कारणं तन्नेत्याशङ्क्यते चेति [तन्नेत्याशङ्कते चेति]।

---

## प्रकाशः

[1]वा बाधकाभावात्, स्वतःसिद्धे शङ्काविरहे तेनापि तर्केण तद्ग्रहे बाधकाभावाच्च। तदिदमुक्तम्—**क्वचित् स्वतः सिद्ध एवेति**। तस्मात्सर्वत्र शङ्का स्यादेव। ततः कुत्रापि न व्याप्तिग्रहः। [2]ततोऽनुमानमप्रमाणमिति यश्चार्वाकादिर्मन्यते, तं प्रत्युच्यते, नायं नियमः साधुः यत् सर्वत्र [3]शङ्केति। तथा सत्येतादृशतर्केऽपि तादृशशङ्कायां [4]भवतो धूमार्थं [5]वह्नेरुपादानं व्याहन्येत। तदिदमाह—**न हि सम्भवतीति। स्वयं वह्नयादिकं धूमादिकार्यार्थं नियमत उपादत्ते तत्कारणं तन्नेत्याशङ्कते चेति**। तथा च शङ्कानवश्यम्भावान्न व्याप्तिग्रहानुपपत्तिर्नवानवस्थेति सिद्धमनुमानमिति सर्वमवदातम्।

---

## तर्कचूडामणिः

स्वतःसिद्धशङ्काविरहदशायामस्य ग्राहकत्वे व्याघातेन शङ्कानिराकरणानु-पपत्तिः। तत्राह—**तस्मादिति**। स्वीयव्याप्तिग्रहप्रतिबन्धकशङ्कानिवर्तकत्वेन [6]न व्याघातोपन्यासः। किं तु चार्वाकं प्रत्येव एतदुक्तमित्यत्र संमतिमाह—**तदिदमिति**।

---

1. क. 'वा' नास्ति
2. क. तेनानुमानं प्रमाणम्
3. क. शङ्केतेति
4. ख. भवतोऽपि
5. ख. वह्न्युपादानं
6. ख. 'न' नास्ति।

एतेन व्याघातो विरोधः, स च सहानवस्थाननियम इति तत्राप्यनवस्थेति निरस्तम्। स्वक्रियाया एव शङ्काप्रतिबन्धकत्वात्।

अत एव—"व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम्।

व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः॥" इति खण्डनकारमतमप्यपास्तम्। न हि व्याघातः शङ्काश्रितः. किं तु स्वक्रियैव शङ्काप्रति-

## प्रकाशः

व्याघातज्ञानं न शङ्काप्रतिबन्धकम्, येन नियमगर्भतयानवस्था स्यात्, किं तु [1]स्वक्रियैवेत्याह—एतेनेति। तत्रापीति। व्याघातज्ञानेऽपीत्यर्थः। स्वक्रियाया इति। अत्र क्रियापदं स्वहेतुभूतनिश्चयोपलक्षणम्। विरोधिनिश्चयस्यैवाशङ्काप्रतिबन्धकत्वादिति ध्येयम्। अत एवेति। व्याघातो यद्यस्ति तदा शङ्कास्त्येव। स्वक्रियाविरोधप्रतियोगिन्यां शङ्कायां जातायामेव स्वक्रियाविरोधात्मनो व्याघातस्यावतारात् [2]निष्प्रतियोगिकस्य विरोधस्यासम्भवात्। न चेदित्यत्र व्याघात इत्यनुषङ्गः। ततः—प्रतिबन्धकत्वाभिमतव्याघातविरहात् तत्र सुतरामेव शङ्का।

## तर्कचूडामणिः

सिद्धमिति। प्रमाणतयेति शेषः। व्याघातस्य प्रतिबन्धकत्वेऽपि नानवस्था। सहानवस्थानियमरूप[3]तज्ज्ञानस्य प्रतिबन्धकत्वात्। तथा च शङ्काया एवानुपपत्तिः। तत्राह—व्याघातज्ञानमिति। मूलेऽपि व्याघातपदं तज्ज्ञानपरमिति भावः। स्वार्थानुमितिहेतुभूतव्याप्तिग्रहविषय एवायं ग्रन्थ इत्युपाध्यायमतानुसारेण व्याचष्टे—स्वहेतुभूतेति।

शङ्कावश्यम्भावे तु हेतुमाह—स्वक्रियेति। ननु स्वक्रियाशङ्कानिरूपितव्याघातस्योभयाश्रितत्वात् न हीति वाक्यानुपपत्तिः, तत्राह—यत्र हीति। ननु

1. क. स्वक्रिययैवेत्याह
2. ख. 'निष्प्रतियोगिकस्य विरोधस्यासम्भवात्' नास्ति।
3. क तज्ज्ञानस्याप्रति-

बन्धिकेति। न वा विशेषदर्शनात् क्वचिच्छङ्कानिवृत्तिरेवं स्यात्। न चैतादृशतर्कावतारो भूयोदर्शनं विनेति भूयोदर्शनादरः। न तु स स्वत एव प्रयोजकः। अत एव न तदाहितसंस्कारो मानान्तरम्। तर्कस्याप्रमात्वात्।

---

## प्रकाशः

तथा च व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः? व्याघातस्थलेऽपि शङ्कावश्यंभावात् तन्निवर्तनार्थमपि पुनः [1]तर्कान्तरानुसरणेऽनवस्थापत्तिरिति खण्डनकारोक्तमत एवापास्तमित्यर्थः। न हीति। यत्र हि व्याघातः शङ्काया [2]उत्तरावधिर्भवतीत्युच्यते न हि तत्र व्याघातः उत्पन्नशङ्काश्रित एवेति, किं तु स्वक्रियैव स्वव्याघाताश्रयतार्हशङ्काप्रतिबन्धिकेत्यर्थः। [3]न वेति। यदि हि विपरीतनिश्चयजनितविरुद्धस्वक्रियास्थलेऽपि शङ्कोत्पद्यत एव किं तु स्वक्रियाव्याघातः परं [4]तदाश्रयो भवति [5]तदा विपरीतनिश्चयात् क्वचिदपि [6]शङ्कानिवृत्तिर्न भवेत्।

---

## तर्कचूडामणिः

स्वक्रियायाः [7]शङ्काप्रतिबन्धकत्वे शङ्कामात्रविलयापत्तिः, व्याघातावधिराशङ्केति सिद्धान्तविरोधश्चेत्याशयेन पृच्छति—किं त्विति। न हि शङ्कात्वं स्वक्रियाप्रतिबध्यतावच्छेदकं येनोक्तदोषः स्यात्। किं तु स्वव्याघाताश्रयतार्हशङ्कात्वमेव। तावतैव [8]व्याघातोपयोगोऽपीति भावः। स्वक्रियास्थलेऽपि शङ्कोदये विशेषदर्शनस्य शङ्कानिवर्तकत्वं न स्यादित्यापादानं व्यधिकरणमित्यत आह—यदि हीति। स्वक्रियाव्याघाते सति कथं शङ्केति शङ्कते—किं त्विति।

---

1. क. तर्कानुसरणे
2. क. व्याघातावधिः
3. ख. न चेति
4. ख. तदाश्रयकोऽवतरति
5. ख. तथापि सति विपरीत-
6. ख. विपरीतशङ्का-
7. क. 'शङ्काप्रतिबन्धकत्वे' नास्ति।
8. ग. व्याघातोऽपीति

## प्रकाशः

न हि यस्मिन्निश्चये सत्यपि या शङ्कोत्पद्यते सा ततो [1]निवर्तत इति भावः। [2]भूयोदर्शनं विनेति प्रायोवादः, व्युत्पन्नस्य प्रथमदर्शन [3]एव तर्कावतारात्। स इति। भूयोदर्शनरूपोऽर्थ इत्यर्थः। तर्कस्याप्रमात्वात् इत्यापाततः। वस्तुतस्तु तर्कस्य प्रमात्वेऽपि निर्व्यापारतयैव संस्कारस्य न प्रमाणत्वमिति द्रष्टव्यम्।

---

## तर्कचूडामणिः

व्याघातस्य शङ्कोत्तरकालीनतया [4]न पूर्वकालीनशङ्काप्रतिबन्धकत्वम्। किं तु शङ्कासत्त्वे तदवतारमात्रमित्यर्थः। विपरीतनिश्चयस्य [5]तन्निवर्तकस्य सत्त्वे कथं [6]तदनिवृत्तिरित्याशङ्क्य [7]त्वन्मते तन्न स्यात् इत्याह—[8]न हीति। व्युत्पन्नस्येति। अत एव ग्रन्थकृतापि पूर्वं तथोक्तमिति भावः। भूयोदर्शनशब्दस्य नपुंसकलिङ्गतया तद्विशेषणीभूततच्छब्दस्यापि तल्लिङ्गता स्यात्, तत्राह—भूयोदर्शनेति। विपर्ययपर्यवसानांशे प्रमात्वादाह—आपातत इति। तर्हि कथं प्रमाणान्तरत्वनिरासः, तत्राह—वस्तुत इति। व्यापारवत एव करणत्वव्यवस्थापनादिति भावः।

ननु [9]संस्कारव्यापारकभूयोदर्शनस्य प्रमाणान्तरता स्यादिति चेत्—न। भूयोदर्शनस्य[10]तर्कजनकत्वे संस्कारस्याव्यापारत्वात्। यद्धि यज्जनयित्वैव यज्जनयति स एव तत्र व्यापारः। न हि भूयोदर्शनं संस्कारं जनयित्वैव तर्कं जनयति। तमजनयित्वापि अव्यवहितोत्तरक्षणे तेन तर्कजननात्। वस्तुतस्तु सकृद्दर्शनेऽपि[11] व्युत्पन्नस्य तर्कावतारेण भूयोदर्शनस्य न हेतुत्वं कुतः करणत्वमिति बोध्यम्।

---

1. क. निवर्तनीयेति
2. क. 'भूयोदर्शनं' नास्ति।
3. ख. अपि
4. क. 'न पूर्वकालीन' नास्ति
5. ग. 'तन्निवर्तकस्य' नास्ति
6. क. 'तद्' नास्ति
7. ग. त्वन्मते न स्यात्
8. क. 'न हीति.........तत्राह' इति ग्रन्थस्त्रुटितः।
9. क. संस्कारव्यापक-
10. क. तर्कजातत्वे
11. क. 'अपि' नास्ति।

तच्च प्रत्यक्षव्याप्तिज्ञाने [व्याप्तिप्रत्यक्षे] हेतुः। तदभावेऽपि शब्दानुमानाभ्यां तद्ग्रहात्।

---

## प्रकाशः

तच्चेति। व्यभिचार[1]ज्ञानविरहसहकृतसहचारदर्शनमित्यर्थः। व्याप्तिप्रत्यक्ष इति। व्याप्तिप्रत्यक्षविशेष इत्यर्थः। यद्यपि [2]बाधाभावतया व्यभिचारज्ञानविरहस्य साध्यप्रसिद्धितया पदार्थोपस्थितितया च सहचारज्ञानस्य शाब्दानुमित्योरपि हेतुत्वमस्ति। तथापि बाधसंशयस्य [3]तदुभयत्रादोषतया व्यभिचारनिश्चय[4]विरहमात्रहेतुत्वेन सहचारदर्शनस्य [5]तत्त्वेनाजनकतया चैतदुक्तमिति ध्येयम्।

---

## तर्कचूडामणिः

तच्छब्दस्य प्रकृतभूयोदर्शनपरत्वं निराकारोति—व्यभिचारेति। ननु न व्याप्तिप्रत्यक्षमात्रे तस्य हेतुत्वम्, प्रमेयत्वप्रकारक[6]तत्प्रत्यक्षे व्यभिचारात्। नापि [7]व्याप्तित्वप्रकारकप्रत्यक्षे, तत्प्रकारकज्ञानस्यानुमित्यनङ्गत्वात्। अनुमित्यङ्गव्याप्तिग्रहजनकस्यैवात्र विचार्यत्वादित्यत आह—व्याप्तीति। व्यभिचारज्ञानविरोधिप्रकारकव्याप्तिप्रत्यक्ष इत्यर्थः। साध्यप्रसिद्धितयेति। विशेषणज्ञानत्वेनेत्यर्थः। अनुमितेः पक्षविशेष्यकतया साध्यविशेषणत्वात्। पदार्थेति। पदविशेषजन्योपस्थितितयेत्यर्थः। तदुभयत्रेति। योग्यतासंशयस्य [8]शाब्दज्ञाने साध्यसंशयस्य चानुमितावनुगुणत्वादिति भावः। तत्त्वेनेति। सहचारज्ञानत्वेनेत्यर्थः। प्रत्यक्षव्याप्ति[9]ग्रहे तत्त्वेनैव तद्धेतुत्वमुक्तमिति भावः।

---

1. क. 'ज्ञान' नास्ति।
2. क. बाधानवतारतया व्यभिचारज्ञानविरहसहकृतस्य
3. क. तदुभयत्रापि दोषतया
4. क. 'विरह' नास्ति
5. क. तत्त्वेन जनकतया
6. ख. 'तत्' नास्ति
7. ख. व्याप्यत्व-
8. क. 'शाब्दज्ञाने साध्यसंशयस्य' नास्ति।
9. क. ग्रहहेतुत्वेनैव तद्धेतुत्वम्

ननु सहचारदर्शनव्यभिचारादर्शनवत् व्यभिचारशङ्काविरहानुकूल-तर्कयोर्ज्ञानं व्यभिचारिसाधारणमिति न ततोऽपि व्याप्तिनिश्चय इति चेत्— न । स्वरूपसतोरेव तयोर्व्याप्तिग्राहकत्वात् । सत्तर्कात् व्याप्तिप्रमा तदाभासात् तदप्रमा विशेषदर्शनसत्यत्वासत्यत्वाभ्यां पुरुषज्ञानमिव ।

अपरे तु यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तरापेक्षा, यत्र तु व्याप्तिस्मरणं हेतुस्तत्र न तर्कान्तरापेक्षेति नानवस्था । अस्ति च जातमात्राणामिष्टानिष्टसाधनतानुमितिहेतुव्याप्तिस्मरणम्, तदानीं व्याप्त्यनुभावकाभावात् । तन्मूलानुभवमूला चाग्रेऽपि व्याप्तिस्मरणपरम्परेति ।

---

## प्रकाशः

[1]भ्रान्तश्चोदयति — नन्विति । अपरे त्विति । अत्रेदमनभिमतिबीजम् । एवं स्तन्यपानस्थलेऽनवस्थोद्धारेऽपि वह्निधूमयोर्व्याप्तौ ग्राह्यायामुक्तशङ्कावतारे उक्तप्रकारस्यैवानुसरणे [2]अस्याप्रयोकत्वमिति । यत्त्विति । अनादिसिद्धत्वेन ज्ञानान्निःशङ्कमवगम्यमानः कार्यकारणविरोधादिः केषांचित्तर्काणां मूलम् । अतो न तर्का-

---

## तर्कचूडामणिः

[3]व्यभिचारविरहज्ञानस्य व्याप्तिग्राहकत्वानभिधानाच्छङ्कानुपपत्तिस्तत्राह— भ्रान्त इति । [4]उक्तप्रकारस्येति । [5]तर्काद्यवतारस्येत्यर्थः । ननु व्यभिचारसंशयेन कार्यकारणभावस्य विरोधानवगतौ कुतस्तन्मूलतर्कावतारः । न चानादिसिद्धकार्यकारणभावस्थले उक्तशङ्कैव नेति वाच्यम् । स्वरूपतोऽनादिसिद्धत्वस्य तदप्रतिबन्धकत्वात् । तत्राह—अनादीति । ननु कार्यकारणभावनिश्चयेऽनादिसिद्धत्व-

---

1. ख. भ्रान्तो देशयति
2. ख. अस्याप्रयोजकत्वादिति
3. क ख. व्यभिचारज्ञानस्य
4. ख. उक्तप्रकारकस्येति
5. ग. तर्काद्यनवतारस्येत्यर्थः ।

यत्तु अनादिसिद्धकार्यकारणभावविरोधादिमूलाः केचित्तर्का इति। तत्र प्रमाणानुयोगेऽनुमान एव पर्यवसानात्। न च व्याप्तिग्रहान्यथानुपपत्त्यैव तर्कस्यानादिसिद्धव्याप्तिकत्वज्ञानमिति वाच्यम्। अनुपपत्तेरप्यनुमानत्वात्।

अन्ये तु विपक्षबाधकतर्कादनौपाधिकत्वग्रह इति तदधीनो व्याप्तिग्रह इति। तदपि न। तर्कस्याप्रमाणत्वात्। व्यभिचारादिशङ्कानिरासद्वारा प्रत्यक्षादिसहकारी स इति चेत्—न। अनवस्थाभयेन तर्कं विना व्याघातात्। यत्र शङ्कानिरहस्तत्र व्याप्तिग्रहे तर्कस्य व्यभिचारात्।

## प्रकाशः

नवस्थेति भावः। [1]तत्रेति। तत्र—मूलभूतस्य कार्यकारणविरोधादे[2]रनादिसिद्धत्वे। प्रमाणानुयोगेऽनुमान एव पर्यवसानात्—तथा च तत्रापि [3]तर्कान्तरापेक्षायामनवस्थेति भावः।

## तर्कचूडामणिः

ज्ञानस्यैव मानत्वेनोक्ततया तत्रेति ग्रन्थानुपपत्तिः, तत्राह—तत्रेति। तच्छब्दस्यानादिसिद्धत्वमेवार्थ इति भावः।

नन्वत्र ग्रन्थे अनौपाधिकत्वग्रहरूप[4]व्यापाराभिधानेन तर्कस्य किं प्रमाणत्वमभिमतम्, किं वा प्रतिबन्धक[5]निवर्तकानौपाधिकत्वज्ञानजनकतया व्याप्तिप्रत्यक्षसह-

1. क. 'तत्रेति' नास्ति
2. क. अनादित्वे
3. क. तर्कापेक्षायाम्
4. ख. व्यापारानभिधानेन
5. क. 'निवर्तक' नास्ति

यत्तु योग्यानामुपाधीनां योग्यानुपलब्ध्या अभावग्रहः। अयोग्यानां तु साध्याव्यापकत्वसाधनव्यापकत्वसाधनादभावग्रह इत्यानौपाधिकत्वं मनसा सुग्रहमिति। तत्तुच्छम्। अनुमानेन तत्साधनेऽनवस्थानात् प्रमाणान्तरस्याभावात्।

---

## प्रकाशः

[1]अनुपपत्तेरपीति। तथा च पुनरनवस्थेति भावः। व्यभिचारादिति। वैजात्यकल्पने [2]मानाभावादिति भावः। अनौपाधिकत्वं सुग्रहमिति। तथा च तज्ज्ञानमेव व्याप्तिधीहेतुरस्त्विति भावः। तत्साधन इति। साध्याव्यापकत्व-[3]साधनव्यापकत्वसाधन इत्यर्थः।

व्याप्तिग्रहे परम्परयापि न तर्कस्य प्रयोजकत्वमिति ये वदन्ति तेषामनुमानमात्रोच्छेद इत्याह—ये चेति। ननु व्यापकव्यतिरेकेणापि व्याप्यव्यतिरेकसाधनमनुमानमेव, तत्रापि च पक्षेतरत्वसम्भवात् व्यतिरेकसाधने मूलानुमानादेव साध्य-

---

## तर्कचूडामणिः

कारित्वमभिमतमिति विकल्प्य आद्यं निरस्य द्वितीयनिरासे हेतुतयोक्तं व्यभिचारादिति। तन्न सम्भवति। तृणारणिमणि[4]न्यायेनाव्यभिचारसम्भवात्। तत्राह—वैजात्येति। नन्वनौपाधिकत्वस्य सुग्रहत्वोक्त्या अनौपाधिकत्वमेव व्याप्तिरित्याभाति। तदसंगतम्, उपाधेर्हेत्वाभासत्वापातादित्यत आह—तथा चेति।

---

1. क अनुपपत्तेरिति
2. ख. मानाभाव इति
3. क. 'साधनव्यापक' नास्ति
4. ख. न्यायेन व्यभिचार-

ये चानुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहं वदन्ति, तेषां पक्षेतरत्वस्य साध्यव्यापकत्वग्रहेऽनुमानमात्रमुच्छिद्येत। अनुमात्रोच्छेदकत्वादेव पक्षेतरो नोपाधिरिति चेत्—भ्रान्तोऽसि। न हि वयमुपाधित्वेन तस्य दोषत्वमाचक्ष्महे। साध्यव्यापकत्वेन तद्व्यतिरेकात् पक्षे साध्यव्यावर्तकतया व्यापकव्यतिरेके व्याप्यव्यतिरेकस्य वज्रलेपत्वाच्च। अपि च कत्वह्निसंयोगः शक्त्यतिरिक्तातीन्द्रियधर्मसमवायी जनकत्वादित्यत्राप्रयोजकत्वान्न साधकम्। तत्र व्याप्तस्य पक्षधर्मत्वे किमप्रयोजकं नाम।

---

## प्रकाशः

सिद्धिः स्यात्। किं चानुमान[1]मात्रोच्छेदलक्षणप्रतिकूलतर्कादेव न तस्य साध्यव्यापकत्वग्रह इति नोक्तदोष इत्यत आह—अपि चेति। [2]शक्त्यतिरिक्तेति साध्यं परमतेन द्रष्टव्यम्। क्षित्यादौ द्विकर्तृकत्वानुमानमस्मन्मतेनाप्रयोजकं बोद्धव्यम्।

---

## तर्कचूडामणिः

ननु मणिकृन्मतेऽप्यनुकूलतर्कस्य व्याप्तिग्राहकतया तन्मतनिराकरणानुपपत्तिरित्यत आह—व्याप्तिग्रह इति। स्वमते परम्परया तदुपयोगोऽस्तीति भावः। ननु तथापि [3]न तन्मूलानुमानेन साध्यसिद्धिः, तत्रापि [4]पक्षेतरत्वसम्भवात्। तथा च संदेह एवेत्यरुचेराह—किं चेति। प्रतिकूलेति। तथाप्यनु-

---

1. ख. मात्रोच्छेदकत्वलक्षण-
2. क. शक्त्येति साध्यं
3. क. न मूलानुमानेन साध्यसिद्धेः
4. क. पक्षेतरत्वासम्भवात्

तस्माद्विपक्षबाधकतर्काभावान्न तत्र व्याप्तिग्रह इत्यप्रयोजकत्वमिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे तर्कप्रकरणम्



## प्रकाशः

तस्मादिति । व्यभिचारेण तर्कस्य [1]व्याप्तिग्रहहेतुत्वं निषिद्धम् । न तु व्यभिचारसंशयनिरासद्वारा प्रयोजकत्वमपि निषिद्धमिति भावः ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे तर्कप्रकरणम्

—:o:—

## तर्कचूडामणिः

कूलतर्कस्य नापेक्षेति भावः । तर्काभावान्न व्याप्तिग्रह इत्यसंगतमेव, स्वमतेऽपि तर्कस्याहेतुत्वात्, तत्राह—व्यभिचारेणेति ।

इति श्रीमद्धर्मराजाध्वरिविरचिते तर्कचूडामणौ
अनुमानखण्डे तर्कप्रकरणम् ।



1. ख. व्याप्तिग्रहे

## अथ व्याप्त्यनुगमप्रकरणम्

उक्तव्याप्तिप्रकारेष्वन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुर्लाघवात् । अतो नाननुगमः ।

---

### प्रकाशः

उक्तव्याप्तिप्रकारेष्विति । अत्यन्ताभावगर्भव्याप्तावत्यन्ताभावे [1]प्रतियोग्यसमानाधिकरणत्वप्रवेशादन्योन्याभाव[2]गर्भव्याप्त्यपेक्षया गौरवमिति भावः ।

अत्र वदन्ति । न व्याप्तिरनुमितिहेतुः, किं तु तज्ज्ञानम् । तथा च यज्ज्ञानस्य तद्धेतुत्वे यदवच्छेदकं लघु भवति सैव व्याप्तिरुपादेया । तादृशी च गुरुशरीरापि अत्यन्ताभावगर्भैव सा । न हि तत्र प्रतियोग्यसमानाधिकरणत्वभागस्याप्यत्यन्ताभावविशेषणस्य ज्ञानमनुमित्युपयोगीति तस्योपादानम् । किं तु स्वरूपकथनमात्रार्थम् ।

---

### तर्कचूडामणिः

उपाध्यायोक्तदूषणमाह — अत्रेति । न व्याप्तिरिति । येनात्यन्ताभावगर्भव्याप्तेर्गुरुशरीरतया हेतुत्वं न स्यादिति भावः[3] । विनिगमकाभावेन प्रतियोग्यसामानाधिकरण्यांशज्ञानमपि हेतुरेवेत्यत आह — तत्र तस्येति । संयोगेति । घटवति यथा न तदत्यन्ताभावः तथा संयोगवति न तदत्यन्ताभाव इति भ्रमवत इत्यर्थः । तत्र हेतुसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्य संयोगादौ सुग्रहत्वादिति भावः । ननु तर्हि [4]तदव्याप्यवृत्तित्वज्ञानवतो द्रव्यत्वादिना संयोगाद्यननुमानापत्तिः, अत आह — एवं चेति । तद्धेतुतेति । अनुमितिहेतुतेत्यर्थः।

---

1. क. प्रतियोगिव्यधिकरणत्व-
2. क. 'गर्भ' नास्ति
3. ख. एतदनन्तरं 'तदवच्छेदकं हेतुतावच्छेदकमित्यर्थः' इत्यधिकम् ।
4. ख, संयोगस्याव्याप्यवृत्तित्व-

## प्रकाशः

तत्र तस्य ज्ञानं विनापि स्वसमानाधिकरणसकलात्यन्ताभावाप्रतियोगि[1]वह्निसमानाधिकरणधूमवानयमिति ज्ञाने सति वह्न्यनुमितौ विलम्बाभावात्, संयोगात्यन्ताभावोऽपि न प्रतियोगिसमानाधिकरण इति ज्ञानवतो द्रव्यत्वेन [2]संयोगानुमानाच्च। एवं च साधनसमानाधिकरणो योऽत्यन्ताभावः प्रतियोगिसमानाधिकरणत्वेन न ज्ञायते तदप्रतियोगित्वेन ज्ञायमानं यत् साध्यं साधननिष्ठतत्सामानाधिकरण्यज्ञानत्वमेव [3]व्याप्तिज्ञानस्यानुमितिहेतुतावच्छेदकं वाच्यम्। तच्चान्योन्याभावगर्भव्याप्तिज्ञानस्य तद्धेतुतावच्छेदकं यत् तदपेक्षया लघुशरीरमेव भवति। तस्यापि तद्धेतुतावच्छेदकं नोक्तस्वरूपतज्ज्ञानत्वमेव। तथा च सति संयोगवदन्योन्याभावोऽप्यव्याप्यवृत्तिरिति ज्ञानवता द्रव्यत्वेन [4]संयोगाननुमानापातात्। किं तु [5]तत्रापि साधनसमानाधिकरणो योऽन्योन्याभावः प्रतियोगितावच्छेदकसमानाधिकरणत्वेन न ज्ञायते तत्प्रतियोगितानवच्छेदकत्वेन ज्ञायमानं यत् साध्यं साधननिष्ठतत्सामानाधिकरण्यज्ञानत्वमेव तदवच्छेदकं वाच्यम्। इदं च तदपेक्षया गुरुशरीरमेव, स्थानद्वयेऽवच्छेदक[6]पदस्याधिकस्य प्रवेशादिति।

---

## तर्कचूडामणिः

तथा च सतीति। संयोगस्य द्रव्यत्वसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वज्ञानेन तदनवच्छेदकत्वज्ञानाभावादिति भावः। [7]स्थानद्वय इति। यद्यप्यत्यन्ताभावगर्भव्याप्तावपि प्रतियोगितानवच्छेद[8]कावच्छिन्नसामानाधिकरण्यं वाच्यम्। अन्यथा धूमेऽपि वह्निव्याप्यतानापत्तेः। तथाप्यवच्छेदकद्वयानुपादानेन लाघवं बोध्यम्।

---

1. क. 'वह्नि' नास्ति
2. क. संयोग्यनुमानाच्च
3. ख. तद्व्याप्ति-
4. क. संयोगाद्यननु-
5. क, 'तत्रापि' नास्ति
6. ख. पदार्थस्य
7. ख. स्थलद्वय इति
8. क. ख. कानवच्छिन्न

## तर्कचूडामणिः

अत्र प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानत्वं स्वरूपसद्विशेषणम् इत्ययुक्तमेव । तथा हि —द्रव्यत्वादावत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्य-[1]ज्ञानाभावादनुमित्यभावापत्तौ तद्वारणायात्यन्ताभावज्ञाने [2]प्रतियोग्यसामानाधिकरण्य-विषयकत्वमवच्छेदकं कल्पयितुमुचितम् । न तु [3]तत्समानाधिकरणत्वेनाज्ञायमानत्वस्य स्वरूपसतो विशेषणत्वम् । [4]प्रतियोग्यसामानाधिकरण्यविषयकत्वरूपभावापेक्षया [5]तत्समानाधिकरणत्वेनाज्ञायमानत्वस्याभावरूपतया गुरुत्वात् । न चोभयोरप्य-भावगर्भतया तुल्यतेति वाच्यम् । तथापि ज्ञायमानत्वस्याधिकस्य प्रवेशात् भावा-भावयोर्भावस्य लघुत्वाच्च । अत एव भेदाग्रहाभेदज्ञानयोस्तुल्यपदार्थघटितत्वेऽपि अभेदज्ञानस्यैव हेतुत्वम् । अन्यथा तत्रापीष्टभिन्नत्वेन न ज्ञायते यत्पुरोवर्ति तज्ज्ञान-मेव हेतुः स्यात् । स्याच्च बलवदनिष्टानुबन्धित्वेन न ज्ञायते यदिष्टसाधनं तज्ज्ञानमेव प्रवृत्तिहेतुः न तु तदननुबन्धित्वज्ञानमिति ।

न च प्रतियोग्यसामानाधिकरण्यज्ञानं विनापि धूमादावितरांशज्ञानादनुमिति-दर्शनेन [6]व्यभिचारेण न हेतुत्वमिति वाच्यम् । उक्तरीत्या तस्य व्याप्तिज्ञानविषयता-वच्छेदकत्वे सिद्धे तत्रापि तज्ज्ञानकल्पनात् । अन्यथा केवलान्वयिसाध्यके लिङ्गे अत्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्य[7]ज्ञानादनुमितिदर्शनेन साधन-सामानाधिकरण्यांशज्ञानस्याप्यहेतुत्वापातात् ।

---

1. ख. ज्ञानाभावादिना अनुमित्यापत्तौ
2. ख. प्रतियोग्यसमानाधिकरणत्वं विषयतया अवच्छेदकम्
3. क. 'तत्' नास्ति
4. क. ग. 'प्रति........रूप' नास्ति
5. क, ग अभावस्य गुरुत्वात्
6. ख. 'व्यभिचारेण........अत्य-न्ताभावप्रतियोगि' नास्ति
7. क. 'ज्ञानात्........ण्यांश-' नास्ति

## तर्कचूडामणिः

यदि च निरुक्तसामानाधिकरण्यमात्रज्ञानस्यानुमितिहेतुत्वे धूमेन [1]वह्न्यनुमानं न स्यादिति तद्वारणायात्यन्ताभावज्ञाने साधनसामानाधिकरण्यस्य विषयतावच्छेदकत्वे क्लृप्ते केवलान्वयिन्यपि तत्कल्प्यमिति मतम्, तदा साधनासमानाधिकरणत्वेनाज्ञायमानत्वमत्यन्ताभावे विशेषणमस्तु। तावतापि धूमादिना वह्न्यनुमितिसम्भवात्। [2]किं च साध्यसामानाधिकरण्यज्ञानमेवानुमितिहेतुरस्तु। तत्र चातिप्रसङ्गवारणाय साधनसमानाधिकरणात्यन्ताभाव[3]प्रतियोगित्वेनाज्ञायमानत्वं साध्ये स्वरूपसद्विशेषणमिति बहु व्याकुली स्यात्। तत्र च लाघवानुरोधेन तज्ज्ञानस्य हेतुत्वे प्रतियोग्यसामानाधिकरण्यज्ञानेऽपि[4] तुल्यम्।

नन्वस्त्वत्यन्ताभावगर्भव्याप्तिज्ञानस्य प्रतियोग्यसामानाधिकरण्यविषयकत्वेनाप्यनुमितिजनकत्वम्। तथापि अन्योन्याभावगर्भतज्ज्ञानापेक्षया लाघवमेव, तज्ज्ञानस्यापि प्रतियोगितावच्छेदकासामानाधिकरण्याविषयकत्वेनैव जनकतया [5]अवच्छेदकगर्भत्वेन गुरुत्वात्। अन्यथा संयोगवदन्योन्याभावोऽप्यव्याप्यवृत्तिरिति ज्ञानवतो द्रव्यत्वेन [6]संयोगाननुमानापातादिति चेत्—

न। घटवत्त्वग्रहे तदत्यन्ताभावग्रहस्येव प्रतियोगितावच्छेदकग्रहे तदवच्छिन्नान्योन्याभाव[7]ग्रहासम्भवात्। तयोर्भावाभावरूपत्वात्। न चैकावच्छेदेन तज्ज्ञानस्यैव तदवच्छिन्नान्योन्याभावग्रहविरोधित्वमिति वाच्यम्। ज्ञानयोर्हि विरोधो विषयविरोध-

---

1. क. वह्न्यनुमानापत्त्या अत्यन्ताभाव-
2. क. 'किं च' नास्ति
3. क. प्रतियोगित्वे ज्ञायमानत्वं
4. क. 'अपि' नास्ति
5. ग. अवच्छेदकतया अवच्छेदक-
6. ग. संयोगाननुमानापत्तिः
7. क. ग्रहसम्भवात्

## तर्कचूडामणिः

प्रयुक्तः, [1]न स्वतः। तथा च संयोगतदत्यन्ताभावयोरेकाधिकरणे अविरोधेन [2]तयोरेकत्र ज्ञानसंभवेऽप्यन्योन्याभावतत्प्रतियोगितावच्छेदकयोरेकाधिकरणे विरोधितया तयोरेकत्र ज्ञानं न भवत्येव। अन्यथा घटतदत्यन्ताभावयोरपि एकाधिकरणे न विरोधः, किं तु एकावच्छेदेनेति स्यात् : न च घटतदत्यन्ताभावयोरेकत्राप्रतीतेस्तयोरेकाधिकरणे भवतु विरोधः, इह च संयोगवति तदवच्छिन्नान्योन्याभावोऽवच्छेदकभेदेन प्रतीयत इति वैषम्यमिति वाच्यम्। तस्य संयोगात्यन्ताभावेनान्यथासिद्धेरुक्तत्वात्।

किं चान्योन्याभावस्य प्रतियोगितावच्छेदकसामानाधिकरण्यभ्रमाङ्गीकारे सर्वोऽप्यत्यन्ताभावः [3]प्रतियोगिसमानाधिकरण इति भ्राम्यतस्तदसामानाधिकरण्यघटित-[4]व्याप्तिज्ञानाभावादनुमितिर्न स्यात्। यदि च प्रतियोगितदभावयोरेकत्र विरोधात्तथा भ्रमो न सम्भवतीति मतं तदा प्रकृतेऽपि समानम्।

तस्मादत्यन्ताभावगर्भव्याप्तिज्ञानस्य प्रतियोग्यसामानाधिकरण्यविषयतयापि जनकत्वम्, अन्योन्याभावगर्भ[5]व्याप्तिज्ञानस्य तदविषयतयैव जनकत्वमिति साधूक्तं मणिकृता 'लाघवादन्योन्याभावगर्भव्याप्तिज्ञानमेवानुमितिहेतुरिति' [इति] वयं युक्तमुत्पश्यामः।

उभयत्रापि [6]स्वरूपसदवच्छेदकमङ्गीकृत्य विपरीतगौरवं निराकरोति—अत्रेति। [7]स्वाभावेति। स्वात्यन्ताभावेत्यर्थः। अन्यदेतदिति। न तदप्यत्र निरूपणीयम्,

---

1. ग. 'न स्वतः' नास्ति
2. क. तयोरेकज्ञान-
3. क. प्रतियोगिसामानाधिकरण्यः
4. ग. व्याप्तिज्ञानात्
5. क. ख. तज्ज्ञानस्य
6. ख. ग. स्वरूपसद्विशेषणम्
7. ख. ग. स्वभावेति

## प्रकाशः

अत्रेदं चिन्त्यम् । भवेदेवं विपरीतगौरवम्, यद्यत्यन्ताभावगर्भायां प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानत्वम् अन्योन्याभावगर्भायां प्रतियोगितावच्छेदकसमानाधिकरणत्वेनाज्ञायमानत्वं सरूपसदवच्छेदकं स्यात् । किं तूभयत्र स्वभावसमानाधिकरणत्वेनाज्ञायमानत्वमेव विशेषणमस्तु । स चाभावोऽत्यन्ताभावस्य प्रतियोग्येव अन्योन्याभावस्य प्रतियोगितावच्छेदकमित्यन्यदेतत् ।

---

## तर्कचूडामणिः

केवलान्वयिनि निरूपयिष्यमाणत्वादिति भावः । नन्वेवमप्यन्योन्याभाव[1]गर्भव्याप्तावच्छेदकान्तरप्रवेशस्यावश्यकतया पुनरपि गौरवमित्यत आह — अवच्छेदकत्वं त्विति । अवच्छेदकत्वमपीत्यर्थः । स्वाभावत्वेनेति । अन्योन्याभावात्यन्ताभावत्वेनेत्यर्थः । विवक्षितमिति शेषः । तेन [2]न तृतीयानुपपत्तिः । न त्विति । अवच्छेदकत्वेनैव तन्न विवक्षितमित्यर्थः । तेन तेनेति पाठः प्रामादिकः, एकस्य तच्छब्दस्य व्यर्थत्वात् । अत एव तेन रूपेणेति बहुषु पाठो दृश्यते । तथा च [3]स्वसमानाधिकरणान्योन्याभावात्यन्ताभावभिन्नसाध्यसामानाधिकरण्यमन्योन्याभावगर्भव्याप्तिरित्यर्थः । न चैवं गौरवम्, [4]अत्यन्ताभावाप्रतियोगित्वस्याप्यत्यन्ताभावात्यन्ताभावभिन्नत्वरूपत्वादिति ।

नन्वेवमपि ग्रन्थकृन्मते लाघवं नाभिहितमित्याशङ्क्य विपरीतगौरवं निराकुर्मः, न तु लाघवं साधयाम इत्याशयेनाह — तस्मादिति । नन्वेवमपि विनिगमनाभावे

---

1. ग. गर्भायां व्याप्तौ
2. ख. 'न' नास्ति
3. ग. स्वसमानाधिकरणात्यन्ताभाव-
4. ग. अत्यन्ताभावप्रतियोगित्वस्याप्यत्यन्ताभावभिन्नत्वादिति

## प्रकाशः

[1]अवच्छेदकत्वं तु [2]स्वाभाववत्त्वेन न (तु) तेन रूपेणेति कुतो विपरीतगौरवम् । तस्मादुभयत्रास्मिन् स्वरूपसदवच्छेदके समाने कुतो लाघवादन्योन्याभाव[3]गर्भैव व्याप्तिरनुमितिहेतुरित्यवधार्यते । तथा च विनिगमनाविरह इति दूषणमत्र द्रष्टव्यम् । यद्वा अन्योन्याभावे प्रतियोगिवृत्तित्वेनाज्ञायमानत्वमेव विशेषणमस्तु । तथा च न विपरीतगौरवमिति ।

वयं तु ब्रूमः । विपरीतमेव गौरवम् । किं तु [4]प्रकारान्तरेण । तथा हि— [5]निरुक्ते स्वरूपसदवच्छेदके उभयत्र समानेऽप्यन्योन्याभावगर्भायामवच्छेदकान्तरप्रवेश आवश्यकः । न हि स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्य-सामानाधिकरण्यं [6]व्याप्तिरित्येव विवक्षितम् । तथा सति [7]तत्तद्वह्नेस्तत्तद्धूमसमानाधि-करणान्योन्याभावप्रतियोगितावच्छेदकतया धूमेऽपि वह्निव्याप्यत्वाभावापत्तेः । किं तु तादृशान्योन्याभावप्रतियोगितावच्छेदकतानवच्छेदकं यत्न भवति तदवच्छिन्नसामा-नाधिकरण्यम् । वह्नेश्च तदवच्छेदकत्वेऽपि वह्नित्वेन नावच्छेदकता, किं तु

---

## तर्कचूडामणिः

ग्रन्थकृदभिमतव्याप्तिज्ञानस्य हेतुता न स्यादित्याशङ्क्य इष्टापत्तिरित्याह—तथा चेति । प्रतियोगितावच्छेदक[8]स्यान्योन्याभावात्यन्ताभाववत्त्वं यदि कश्चिन्नाङ्गीकुर्यात् तदा [9]तं प्रति कल्पान्तरमाह—यद्वेति । तथा चेति । प्रतियोगिवृत्तित्वतत्सामानाधिकरण्य-योस्तुल्यशरीरत्वादिति भावः ।

---

1. क. अवच्छेदकं तु
2. ख. न तु तेन तेन रूपेणेति
3. क. गर्भव्याप्तिः
4. ख. प्रकारान्तरेणैव
5. क निरुक्तस्वरूप-
6. क. 'व्याप्तिः' नास्ति
7. क. तद्वह्नेस्तद्धूम-
8. ग. स्यात्यन्ताभावान्योन्याभावत्वम्
9. क. ग. 'तं प्रति' नास्ति ।

## प्रकाशः

तत्तद्वह्नित्वेन । धूमवान् न वह्निमानित्यप्रतीतेः । अत्यन्ताभावगर्भायां तु तादृशात्यन्ताभावप्रतियोगितावच्छेदकं यन्न भवतीत्येव विवक्षितम्, तावतैवोक्तदोषनिरासादिति ।

एवं च [1]यदान्योन्याभावगर्भायां स्वरूपसदवच्छेदकं न प्रवेश्यते [2]तदापि तत्रावच्छेदकान्तरमतिरिक्तं [3]प्रविष्टम् । अत्यन्ताभावगर्भायां तु प्रतियोग्यसामानाधिकरण्यमिति कुतो लाघवादियमेव हेतुरित्यपि[4] चिन्तनीयम् । न चाभावगर्भत्वेन तस्य गुरुत्वमिति वाच्यम् । अवच्छेदकत्वस्याप्यनतिरिक्तवृत्तित्वार्थकत्वेन तुल्यत्वात् ।

अन्येतु — लाघवात् लघूपस्थितिकत्वात् शीघ्रोपस्थितिकत्वादित्यर्थो विवक्षितः । न तु [5]वस्तुलाघवं विवक्षितम् । तथा चात्यन्ताभावापेक्षया अन्यो-

---

## तर्कचूडामणिः

उभयत्रापि स्वरूपसदवच्छेदकमङ्गीकृत्य विपरीतगौरवमाह—**तथा हीति**। ननु पूर्वोक्तयुक्त्या अन्योन्याभावगर्भव्याप्तौ स्वरूपसदवच्छेदकं [6]नावश्यकम्, किं त्वत्यन्ताभावगर्भायामेवेति न विपरीतं गौरवम्, तत्राह—**एवं चेति**। **प्रविष्टमिति**। तदावश्यकताया उक्तत्वादिति भावः। **प्रतियोगीति**। यद्यपि तद्विषयतया न व्याप्तिज्ञानस्य जनकत्वम् । समानाधिकरणत्वेनाज्ञायमानत्वमेव स्वरूपसद्विशेषणमिति स्वयमेवोक्ततया प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानत्वम् इत्येवेहापि वक्तव्यम् । तथाप्यसदुक्तं राद्धान्तमवलम्ब्येदमुक्तम् ।

---

1. ख. यथान्योन्या-
2. ख. तथाप्यत्राव-
3. क. प्रवेष्टव्यम्
4. क. 'अपि' नास्ति ।
5. ख. वस्तुतो लाघवम्
6. क. 'नावश्यकं' नास्ति

## प्रकाशः

न्याभावस्य शीघ्रोपस्थितिकतया [1]तद्गर्भव्याप्तिरपि तथेति सैवानुमितिहेतुर्न चरमोपस्थिता अन्या। न च शीघ्रोपस्थितिकत्वमसिद्धम्। तस्यावश्यकत्वात्। तथाहि [2]धूमवह्निसामानाधिकरण्यग्रहणकाले व्यधिकरणस्य वस्तुनो ग्रहानियमात्

---

## तर्कचूडामणिः

[3]अत्रेदमालोचनीयम् —न तावदन्योन्याभावगर्भव्याप्ताववच्छेदकद्वयप्रवेशात् गौरवम्। यत्समानाधिकरणान्योन्याभाववतायां यन्नावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्येव तदर्थः। एवं चावच्छेदकान्तरप्रवेशोऽनावश्यक एव। धूमसमानाधिकरणान्योन्याभावतया [4]तत्तद्वह्नित्वस्यावच्छेदकत्वेऽपि वह्नित्वस्यानवच्छेदकत्वात्। अन्यथा धूमवान् वह्निमान्नेति प्रतीत्यापत्तेः। न चैवमप्यन्योन्याभावत्वस्य प्रतियोगितावच्छेदकारोपजन्यज्ञानविषयाभावरूपतया [5]अवच्छेदकगर्भत्वम्। अत्यन्ताभावत्वस्य प्रतियोग्यारोपजन्यत्वादिघटिततया [6]नावच्छेदकगर्भत्वमिति विपरीतगौरवमिति वाच्यम्। स्वाभावारोपजन्यत्वस्य विवक्षितत्वात्। [7]अन्योन्याभावत्वात्यन्ताभावत्वयोरखण्डोपाधितया वक्ष्यमाणत्वाच्च। न च मा भूद्विपरीतगौरवम्, लाघवसाम्यं स्यादिति वाच्यम्। एकत्र प्रतियोग्यसामानाधिकरण्यस्य प्रवेशेन साम्याभावात्। [8]न ह्यस्लक्षणे तदवच्छेदकासामानाधिकरण्यप्रवेशः, [9]येन तत्साम्यं स्यात्।

[10]जयदेवोक्तं मण्यभिप्रायं दर्शयति — अन्ये त्विति। न त्विति। येन विपरीतगौरवं स्यादिति भावः।

---

1. ख. तद्गर्भा व्याप्तिरपि तथैवेति
2. क. धूमवह्न्यसमानाधिकरणवस्तुनो ग्रहानियमात्
3. क. यत्रेदम्
4. क. तत्तद्वह्नित्वस्यानवच्छेदकत्वात्
5. ग. अवच्छेदकत्वगर्भ-
6. ख. अनवच्छेदक-
7. ख. न घटात्यन्ताभावान्योन्याभावत्वयोः
8. ख. तस्मिन् लक्षणे
9. क. येनातत्साम्यं
10. ख. जयदेवोक्तमभिप्रायं

### प्रकाशः

तदत्यन्ताभावो नावश्यं गृह्यते। अन्योन्याभावस्तु धूमवह्न्योरप्यन्ततो गृह्यते। तथा च तदप्रतियोगित्वं वह्निमति सुग्रहम्।

न चात्यन्ताभावप्रतियोगिनोऽपि ज्ञानमस्ति, अन्ततो धूमत्वादेरेव ग्रहादिति वाच्यम्। धूमत्वादे[1]र्धूमत्वत्वाद्यवश्याप्रतीत्या प्रतियोगितावच्छेदकावच्छिन्नत्वेनाज्ञानात्।

[2]अत एवाप्रतियोगीत्यत्राप्यन्योन्याभावगर्भतैव। [3]प्रतियोगित्वाभावस्य प्रतियोगित्वत्वनिरूपणाधीननिरूपणतया विलम्बोपस्थितिकत्वात् इत्याहुः।

तदपि चिन्त्यम्। [4]धूमादिरूपादेरधिकरणस्य महानसादेश्चात्यन्ताभावप्रतियोगिनस्तत्रापि ग्रहसम्भवात्। चक्षुरादिना रूपादौ गृह्यमाण एव द्रव्यग्रहात्।

---

### तर्कचूडामणिः

**प्रतियोगितेति**। तज्ज्ञानस्यैवाभावधीहेतुत्वादिति भावः। ननु प्रतियोगित्वात्यन्ताभावोऽपि न [5]गृह्येत, प्रतियोगित्वत्वाज्ञाने तज्ज्ञानासम्भवादित्यत आह— **अत एवेति**। [6]**धूमादिति**। अत्यन्ताभावप्रतियोगिनो धूमादिरूपादेस्तादृशस्य महानसादेश्चेत्यर्थः। [7]महानसेऽपि महानसात्यन्ताभावगर्भसम्भवात्। प्रथमकल्पे असिद्धिमाशङ्क्य निराकरोति — **चक्षुरादिनेति**। महानसादेः स्वनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि प्रमेयत्वाद्यधिकरणे स्वनिष्ठात्यन्ताभावप्रतियोगित्वं न सम्भवतीति शङ्कते — **न चेति**। अभ्युपगमवादेन परिहारान्तरमाह — **अपि चेति**। यद्यपि

---

1. ख. धूमाद्यव-
2. क. तत एव प्रति-
3. ख. 'प्रतियोगित्वाभाव' नास्ति।
4. ख. धूमरूपादेः
5. ख. गृह्यते प्रतियोगित्वज्ञाने
6. क. ग. 'धूमादीति' नास्ति
4. क. ग. 'महानसेऽपि ........ गर्भसम्भवात्' नास्ति

## प्रकाशः

न च [1]प्रमेयत्वादेः केवलान्वयिनो व्याप्तौ प्रमेयत्वादेरेवाधिकरणतया तस्य च स्वस्मिन्नपि वृत्त्या अत्यन्ताभाव[2]प्रतियोगिनः ग्रहापेक्षेति वाच्यम् । [3]केवलान्वयिनि प्रमेयत्वादिघटकपदार्थस्य कस्यचिदत्यन्ताभावप्रतियोगिनः तत्रापि [4]ग्रहात् । अपि चास्तु [5]प्रथमोपस्थितिकत्वम् । तथाप्युभयव्याप्त्युपस्थितिदशायामुक्तलाघवेनात्यन्ताभावगर्भाया हेतुत्वग्रहे प्रथमगृहीतस्यापि त्याज्यत्वात् । प्रथमोपस्थितिलाघवापेक्षया वस्तुलाघवस्य बलवत्त्वात् । अत एव व्याप्यतावच्छेदकप्रकारकज्ञानस्य प्रथमोपस्थितत्वेऽपि उभयोपस्थितिदशायां लाघवेन व्याप्यत्वप्रकारकज्ञानस्यैव हेतुत्वग्रह इत्यग्रे वक्ष्यते । अत एव प्रथमगृहीतापि कार्यान्विते शक्तिरग्रे लाघवानुरोधेन त्यज्यत इति दिक् ।

---

## तर्कचूडामणिः

पूर्वोक्तन्यायेनान्यान्याभावगर्भव्याप्तिज्ञानहेतुत्व एव वस्तुलाघव[6]मित्युपस्थितिलाघवमादरणीयमेव । व्याप्यतावच्छेदकप्रकारक[7]ज्ञानत्वादौ तु नैवम् । तत्र सत्यप्युपस्थितिलाघवे वस्तुलाघवाभावात्, तथाप्यावश्यकवस्तुलाघवमेवोपन्यसनीयम्, किमनेनोपस्थितिलाघवेनेति भावः ।

उपाध्यायाभिमतव्याप्तिज्ञानं दर्शयति—यत्त्विति । यैव व्याप्तिरुदाहरणेनोपदर्श्यते[8] तज्ज्ञानमनुमितिहेतुः, [9]उदाहरणस्यानुमितिहेतुज्ञानविषयव्याप्तिप्रदर्शकत्वादिति भावः । किं त्विति । यद्यप्यत्यन्ताभावादिवाचकपदवदवच्छेदकत्ववाचकपदा-

---

1. क. प्रतियोगित्वादेः केवलान्वयित्वव्याप्तौ
2. क. प्रतियोगिग्रहा-
3. क. केवलान्वयित्वप्रमेयत्वादि-
4. ख. ग्रहणात्
5. ख. प्रथमोपस्थितत्वम्
6. ख. 'इत्युपस्थितिलाघवम्' नास्ति ।
7. ग. ज्ञानादौ
8. ख. उपदश्यते ग. उपादीयते
9. ग. उदाहरणज्ञानस्य

## प्रकाशः

यत्तु वस्तुतो यो धूमवान् सोऽग्निमानित्युदाहरण[1]वाक्यान्नात्यन्ताभावगर्भा न वान्योन्याभावगर्भा व्याप्तिः प्रतीयते। साधनसमानाधिकरणात्यन्ताभावादिप्रत्यय-कप्रदादेस्तत्राभावात्। किं तु साधनस्वरूपावच्छेदकधूमत्वाद्यवच्छिन्नसाध्यसम्ब-न्धिता[2]रूपव्याप्तिर्धूमादौ साधने ततोऽवगम्यत इति सैवानुमितिहेतुरिति। तन्न। [3]निरुक्तावच्छेदकत्वस्याप्युदाहरणादप्रतीतेः।

यदपि यस्य ज्ञानं विरोधि तदभाव[4]गर्भसामानाधिकरण्यं हेतुर्वाच्यः। [5]अत एवोपाधिज्ञानमविरोधीति अनौपाधिकत्वमहेतुः। विरोधि च [6]साधनवति

## तर्कचूडामणिः

भावादिदमयुक्तम्। तथापि यत्र धूमस्तत्राग्निरिति ज्ञाने सति धूमत्वे तदतिरिक्तवृत्तित्व-शङ्कायाः नियमतोऽभावेन तद्विरोध्यर्थप्रकाशस्यावश्यकतया तस्य पदार्थत्वाभावेऽपि संसर्गविधया भानमङ्गीकार्यमिति भावः। **निरुक्तेति**। अधिकरणैकदेशानवच्छेदे-नेत्यादिना निरुक्तेत्यर्थः। न च संसर्गविधया तत्प्रतीतिरस्त्विति वाच्यम्। तद्विध-यापि पदार्थसंसर्ग एव भासितुमर्हति न त्वपदार्थसंसर्गः। न चावच्छेदकत्वं प्रकृत-पदार्थसंसर्गः। तस्य वह्निधूमाद्यवृत्तित्वात्। न च धूमत्वस्यापि प्रकृतपदर्थतया तद्गत-मवच्छेदकत्वं संसर्ग इति वाच्यम्। तस्य धूमपदप्रवृत्तिनिमित्तत्वेऽपि तद्विशेष्यत्वा-भावात्। पदवृत्तिविशेष्यत्वस्यैव पदार्थान्तरसंसर्गप्रतियोगित्वनियमादिति भावः।

जयदेवोक्तमतान्तरमाह—**यदपीति**। **विरोधीति**। व्याप्तिज्ञानविरोधी-त्यर्थः। **सामानाधिकरण्यमिति**। तज्ज्ञानमित्यर्थः। तर्हि ग्रन्थे कथं तन्मात्राभि-

---

1. क उदाहरणे वाक्ये
2. ख. रूपा व्याप्तिः
3. क. निरुक्तावच्छेदकस्यापि
4. ख. गर्भं तस्य सामाना-
5. ख. तत एव
6. ख. 'साधनवति' नास्ति

## प्रकाशः

साध्यवदन्योन्याभाव[1]ग्रहवत् साध्यात्यन्ताभावज्ञानमपि। तथा च तदुभयगर्भैव [2]व्याप्तिर्हेतुः। अन्योन्याभावगर्भैवेत्युपलक्षणम्। अत एवाग्रेऽनौपाधिकत्वमेव त्यत्रच्छिन्नम् अनौपाधिकत्वं तु लक्षणमिति। न चैवमननुगमः। साध्यविरोधि-सामानाधिकरण्यधीविरोधिसामानाधिकरण्यज्ञानत्वेन सर्वव्याप्ति[3]ज्ञानानामनुगमात्। साध्यविरोधित्वं च साध्याधिकरणानधिकरणत्वम् साध्यवदन्योन्याभावात्यन्ता-भावसाधारणमिति।

---

## तर्कचूडामणिः

धानं तत्राह — अन्योन्येति। उपलक्षणमित्युपलक्षणम्। [4]अन्योन्यश्चा-भावश्चेति अन्योन्याभावौ। अन्योन्यशब्देन साध्यसाधनयोरभिधानम्। अभाव-शब्देनात्यन्ताभावान्योन्याभावयोरभिधानम्। [5]तद्गर्भं तन्मात्रगर्भम्, अनौपाधि-कत्वे तु उपाधेरप्यधिकस्य प्रवेशात् [6]न तत्संग्रह इत्याहुः इत्यपि मण्यर्थो बोध्यः। अननुगम इति। [7]अतो नाननुगम इति मूलग्रन्थानुपपत्तिरित्यपि द्रष्टव्यम्। साध्येति। साध्यस्य यद्विरोधि तेन यत् सामानाधिकरण्यं तद्विरोधित्वं तत्प्रति-बन्धकत्वमित्यर्थः। सर्वेति। यद्यप्यत्यन्तान्योन्याभावगर्भव्याप्तिज्ञानस्योभयस्य हेतुतया सर्वशब्दानुपपत्तिः, तथापि सामान्यविशेषव्याप्त्यभिप्रायेणेदम्।

---

1. ख. 'ग्रह' नास्ति
2. क. 'व्याप्तिर्हेतुः अन्योन्याभाव-गर्भैव' नास्ति।
3. क. ज्ञानानुगमात्
4. क. अन्योन्यं च
5. क. तद्गर्भमात्रं
6. ख. ग. न तत्संग्रह इत्यपि
7. क. ख. 'अतो नाननुगम इति' नास्ति

## प्रकाशः

तदपि न । अन्योन्याभावगर्भव्याभिचारज्ञानसत्त्वेऽपि अत्यन्ताभावगर्भ-व्याप्तिज्ञानात् अनुमित्यापत्तेः । कारणतावच्छेदकावच्छिन्नयत्किंचित्सत्त्व एव कार्योत्पत्तेः ग्राह्याभावानवगाहित्वेन तत्र तस्याप्रतिबन्धकत्वात् । न चेष्टापत्तिः, अनुभवविरोधात् । वैपरीत्यस्यापि सम्भवेनात्यन्ताभाव[1]गर्भव्यभिचारज्ञानस्याप्य-प्रतिबन्धकत्वे [2]व्यभिचारस्य हेत्वाभासत्वानुपपत्तेः ।

न च तावव्द्यभिचारज्ञानानां प्रतिबन्धकतया [3]तदभावकूटस्याप्यनुमिति-हेतुत्वमिति वाच्यम् । तथा सति व्याप्तिज्ञानहेतुत्व एव मानाभावात् तत्कूटसह-कृतसहचारदर्शनस्याहेतुत्वापत्तेः ।

---

## तर्कचूडामणिः

ननु विरोधित्वं न [4]तदनधिकरणाधिकरणत्वम्, केवलान्वयिन्यप्रसिद्धेः, संयोगरूपसाध्यानधिकरणकर्माद्यधिकरणसंयोगाभावसामानाधिकरण्यवति द्रव्यत्वे अव्याप्तेश्चेत्यत आह—साध्येति । ननु यद्यपि केवलान्वयिनि साध्याधिकरणा-नधिकरणत्वं गगनादौ प्रसिद्धम् तथापि [5]तत्सामानाधिकरण्यं प्रसिद्ध [ अप्रसिद्ध ] मेवेति चेत् — न । साध्ये साधनसामानाधिकरण्यविरोध्यभावत्वधीविरोधि-सामानाधिकरण्यज्ञानत्वेन सकलव्याप्तिज्ञानानामनुगम इति तात्पर्यात् । विरोधित्वं च ग्रन्थोक्तमन्योन्यात्यन्ताभावसाधारणमेवेति ।

नन्वन्योन्याभावगर्भव्यभिचारज्ञाने [6]सति अत्यन्ताभावगर्भव्यभिचारज्ञानं न भवत्येवेत्यत आह — ग्राह्येति । अत्यन्ताभावप्रतियोगित्वज्ञानमेव [7]तदप्रतियोगि-

---

1. क. गर्भस्याप्यप्रति-
2. क. व्यभिचारज्ञानस्य
3. ख. तदत्यन्ताभावकूटस्याप्यनुमितौ
4. क. तदनधिकरणत्वम्
5. क. ‘तत्’ नास्ति
6. क. ‘सति’ नास्ति
7. क. ‘तद’ नास्ति

## तर्कचूडामणिः

त्धीविरोधीति भावः । वैपरीत्यस्येति । अत्यन्ताभावगर्भव्यभिचारज्ञानेऽप्यन्योन्याभावाभावगर्भव्याप्तिज्ञानादनुमितिसम्भवेनेत्यर्थः । तथा सतीति । [1]यथा चात्र नेष्टापत्तिस्तथोक्तमिति भावः ।

अत्रेदं चिन्त्यम्—भूतले घटवद्भेदनिश्चये सति न घटात्यन्ताभावसंशय-[2]तद्विपर्ययौ । घटात्यन्ताभावनिश्चये सति न[3] घटवद्भेदसंशयतद्विपर्ययाविति सर्वसिद्धम् । तथा च तदत्यन्ताभावतद्वदन्योन्याभावयोः परस्परं परस्परनिश्चयाविषयत्वेऽपि परस्परनिश्चयनिवर्तनीयविपरीतधीविषयत्वं कल्प्यम् । तदत्यन्ताभावतद्वदन्योन्याभावनिश्चयसामग्र्योः समनियतत्वं वा कल्प्यम् । अनन्यगतिकत्वात् । तथा च धूमसमानाधिकरणो [4]वह्निमदन्योन्याभावः इति ज्ञाने सति तत्समानाधिकरणो न वह्न्यत्यन्ताभाव इति ज्ञानं वा तत्समानाधिकरणस्तदत्यन्ताभाव इति ज्ञाने सति तत्समानाधिकरणो वह्निमद्भेद इति ज्ञानं वा न भवति । तज्ज्ञानस्यापि ग्राह्याभावज्ञानतुल्यत्वात् । [5]तद्वदन्योन्याभावज्ञानदशायां सामग्रीबलेन तदत्यन्ताभावस्य ज्ञातत्वाद्वा । न च सामग्र्यसिद्धिः । तद्वदन्योन्याभावधीदशायां वह्नित्वेन वह्निज्ञानस्याधिकरणज्ञानादेश्च सत्त्वात् । एवं वह्न्यत्यन्ताभाव[6]धीदशायां तद्वदन्योन्याभावज्ञानहेतुवह्न्यादिप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानादेः सत्त्वात् । अत एव वृक्षे संयोगवद्भेदप्रत्ययस्य संयोगात्यन्ताभावविषयत्वेनान्यथासिद्धिः प्रागुपपादिता । अन्यथा तत्रापि तद्वदन्योन्याभावग्रहवेलायां तदत्यन्ताभावग्रहसामग्र्यभावेन तद्विषयत्ववर्णनमसंगतं स्यात् ।

---

1. ख. तथा चानिष्टापत्तिः
2. ख. तद्विपरीतविषयत्वं कल्प्यम् । तदत्यन्ताभावनिश्चये
3. क. ख. 'न' नास्ति
4. क. 'वह्नि.........तत्समानाधिकरणो' नास्ति
5. क. तदन्योन्याभाव-
6. क. 'धी' नास्ति

## प्रकाशः

वयं तु पश्यामः । अत्यन्तान्योन्याभावगर्भ[1]व्यभिचारज्ञाने सति नानुमितिरिति सर्वानुभवसिद्धम् । तथा च यज्ज्ञाने सति तदुभयव्यभिचारज्ञानं न सैव (व्याप्तिहेतुः) [व्याप्तिर्हेतुः] । तादृशी चाशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यरूपैव । साध्यवत्त्वग्रहस्य साध्यात्यन्ताभावसाध्यवदन्योन्याभावग्रहविरोधितया सकलसाधनाधिकरणे तदग्रहस्य उभयव्यभिचारग्रहविरोधित्वात् । न च साधनाश्रये महानसादौ सकले प्रत्येकवह्नेराश्रितत्वाभावादिदमयुक्तमिति वाच्यम् । यावत्साधनाश्रयाश्रितं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यस्य विवक्षितत्वात् । न च साधनाश्रये महानसादौ साध्यतावच्छेदकस्य वह्नित्वादेराश्रितत्वाभावात् इदमप्ययुक्तमिति वाच्यम् । स्वाश्रयघटितपरम्परासम्बन्धेन तस्यापि तद्वृत्तित्वात् ।

---

## तर्कचूडामणिः

किं च तद्वदन्योन्याभावग्रहदशायां [2]तदत्यन्ताभावाग्रहेऽपि तद्गर्भाव्यभिचारज्ञानं [3]न भवत्येव । [4]तद्गर्भाव्यभिचारज्ञानं हि साधनवति साध्यवत्त्व[5]विषयम् । तत्र कथं तदन्योन्याभावग्रहः, साध्यरूपप्रतियोगितावच्छेदकग्रहस्य तद्विरोधित्वात् । तदिदं स्वयमेव वक्ष्यति 'साध्यवत्त्वग्रहस्य साध्यात्यन्ताभावतद्वदन्योन्याभावग्रहविरोधितया' इति ।

**तस्यापीति** । परम्परासम्बन्धस्यापीत्यर्थः । स्वाश्रयसम्बन्धस्यैव तत्त्वादिति भावः । अतश्शब्दार्थमाह—**उक्तेति** । सकलव्यभिचारज्ञानविरोधित्वयुक्त्येत्यर्थः । **लाघवेनेति** । [6]अस्यान्ताभावाद्यघटितत्वादिति भावः । नन्वेवमनुभवविरोध इत्यत

---

1. क. व्यभिचारे सति
2. क. तदत्यन्ताभावग्रहे
3. क. 'न' नास्ति
4. क. तद्गर्भव्यभि-
5. क. विषये ग. विषयः
6. अत्यन्ताभावघटित-

## प्रकाशः

इयमेव व्याप्तिरुदाहरणेनोपदर्श्यत इति तस्य व्याप्त्युपदर्शकावयवत्वं सर्वसिद्धमपि संगच्छते । न च वीप्साबलेन ततः सकलधूमाधिकरणे वह्निसम्बन्धप्रतीतावपि वह्नित्वेन तदप्रतीतिः परम्परासम्बन्धाभानादिति वाच्यम् । सकलसाधनाधिकरणे वह्निसम्बन्धे वह्नौ [1]च वह्नित्वसमवाये भासमाने तस्यापि भानादत्यन्तान्योन्याभावगर्भा व्याप्तिरेतल्लक्षणम् । अनौपाधिकत्ववत् । अत एवैतदज्ञानेऽ[2]त्यन्ताभावगर्भव्याप्तेः शब्दादिना प्रतीतावपि नानुमितिः । उक्तयुक्त्या [3]लाघवेन चास्या एव हेतुत्वात् । अत एवान्योन्याभावगर्भव्याप्तिग्रहहेतुतावादिनः शब्दादिना अनौपाधिकत्वरूपव्याप्तिग्रहोऽपि नानुमितिहेतुरिति संक्षेपः ।

---

## तर्कचूडामणिः

आह—अत एवेति । तथा च [4]तत्राननुभव एव स्वीकार्य इति भावः । ननूक्तव्याप्त्यज्ञानेऽपि अन्योन्याभावगर्भव्याप्तिज्ञानादनुमितिरनुभूयते । तदपलापे चोपेक्षणीयता स्यात्, तत्राह संक्षेप इति । तत्रापि साधनाधिकरणे साध्यात्यान्ताभावाद्यप्रतियोगित्वग्रह एव साध्यवत्ताग्रहः । अभावाभाववत्तदभावप्रतियोगित्वाभावस्यापि भावत्वात् । प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषस्य प्रतियोगिनोऽनतिरेकादिति भावः ।

अत्र ब्रूमः । यज्ज्ञानं व्यभिचारज्ञानविरोधि सैव व्याप्तिरुच्येया । न चाशेषसाधनाश्रयाश्रितत्वज्ञानं तद्विरोधि, प्रमेयत्वेन तज्ज्ञानेऽपि व्यभिचारज्ञानदर्शनात् । न च तादृशाश्रयाश्रितत्वप्रकारकं तज्ज्ञानं तथेति नोक्तदोष इति वाच्यम् । तस्य प्रकारत्वानुपपत्तेः । तथा हि—तद्धीः [5]न साध्यांशे प्रकारीभूय भासितुमर्हति, साध्यस्य

---

1. क 'च' नास्ति
2. ख. अत्यन्ताभावादिगर्भाया व्याप्तेः
3. क. लाघवेनास्याः
4. ग. तत्रानुभवविरोध एव
5. ग. 'न' नास्ति

## तर्कचूडामणिः

वह्न्यादेस्तादृशाश्रयाश्रितत्वाभावात् । नापि साध्यतावच्छेदके वह्नित्वादौ । यो यो धूमवानित्याद्युदाहरणेन वह्नित्वे तादृशाश्रयाश्रितत्वस्य प्रकारतया अप्रतीतेः । तथापि संसर्गविधयैव तत्र तद्भानस्वीकाराच्च ।

किं च यत् कृतकं तदनित्यमित्याद्युदाहरणस्य कृतकत्वानित्यत्वमात्रप्रतिपादकस्य साध्यतावच्छेदकानित्य [त्व] [1]त्वाद्यनभिधायकतया तत्र त्वदुक्तव्याप्तिज्ञानाभावादनुमितिर्न स्यात् । तद्वाक्यस्योदाहरणत्वानुपपत्तिश्च । न च तत्रापि लक्षणया अनित्य [त्व] त्वादिना अनित्यत्वादिकं बोध्यते, साध्यतावच्छेदकरूपेण [2]साध्यज्ञानाभावे व्याप्तिज्ञानायोगादिति वाच्यम् । लाघवेन [3]सप्रकारकसाध्यादिज्ञानस्यैव व्याप्तिग्राहकत्वात् । न चातिप्रसङ्गः । यत्प्रकारिका साध्यगोचरानुमितिर्भवति तत्प्रकारकसाध्यप्रसिद्धेरेव तदङ्गत्वात् । अनित्यत्वादौ साध्ये अनुमितिरप्यनित्यत्वादिप्रकारिकैव । अत एवानित्यः शब्द इति प्रतिज्ञावयवोऽपि संगच्छते । इयानेव विशेषो यत् वह्न्याद्यनुमितौ वह्नित्वमपि प्रकार इति [4]तदवच्छिन्नवह्निप्रसिद्धिरङ्गम् । अनित्यत्वाद्यनुमितौ तु साध्यमेव प्रकार इति तदवच्छेदकप्रसिद्धिर्नाङ्गम् ।

अत एव व्यतिरेकिणि अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वप्रसिद्धिमात्रेण [5]व्यतिरेकप्रवृत्तिरिति ग्रन्थकार एव वक्ष्यति । अन्यथा तदवच्छेदकप्रसिद्धेस्तत्राभावेन नानुमानं स्यादिति । न चानित्यत्वाद्यनुमितिस्थले साध्यतावच्छेदकज्ञानमकिंचित्करमेव । साध्यस्यैव तदाश्रयाश्रितत्वेन ज्ञानसम्भवात् । न च क्वचित् साधनाश्रयाश्रित[6]धर्माश्रयत्वज्ञानं क्वचित्तादृशाश्रयाश्रितत्वज्ञानं हेतुरित्यननुगमः । [7]तादृशाश्रयाश्रितत्व-

---

1. ख. त्वाद्यभिधायकतया
2. क. 'साध्य' नास्ति
3. ख. तत्प्रकारक- क प्रकारक-
4. ग. 'तदवच्छिन्न........प्रकार इति' नास्ति ।
5. क. व्यतिरेकि-
6. ग. धर्माश्रयाश्रितत्व
7. क. तादृशाश्रितत्व-

अनौपाधिकत्वं तल्लक्षणम् ।

नन्वेवमुपाधिरसिद्ध्युपजीव्यत्वेन व्यभिचारवद्धेत्वाभासान्तरं स्यात् न तु व्याप्त्यभावत्वेनासिद्धिरिति चेत् ? तज्ज्ञानमुपजीव्यमपि न स्वतो दूषकम् । नान्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्तिज्ञाने प्रतिबन्धकम्, अतिप्रसक्तेः । व्यभिचाराज्ञानस्य तद्धेतुत्वात्तद्बुद्धि- [तद्धी] स्तथा । न चानौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुरित्युक्तम् ।

---

प्रकाशः

[1]लक्षणमिति । ज्ञापकमित्यर्थः । नन्विति । अनौपाधिकत्वस्य व्याप्तित्वानभ्युपगमादिति भावः । हेतुत्वादिति । व्याप्तिज्ञानहेतुत्वादित्यर्थः । तद्धीरिति । व्यभिचारधीरित्यर्थः ।

---

तर्कचूडामणिः

वैशिष्ट्यावगाहित्वेनानुगमात् । तच्च वैशिष्ट्यं वह्न्यादौ परम्परासम्बन्धरूपम्, [2]अनित्यत्वादौ तु साक्षात्सम्बन्धरूपमिति वाच्यम् । एवं हि सकलधूमाश्रयाश्रितत्वनिरूपितपरम्परासम्बन्धवतो वह्न्यधिकरणपाषाणादेरपि धूमव्यापकतापत्तेः ।

न च तादृशाश्रयाश्रितत्वतादृशसाध्यतावच्छेदकवत्त्वान्यतरज्ञानत्वेनैव हेतुत्वमिति नोक्तदोष इति वाच्यम् । अन्योन्याभावादिगर्भव्याप्तिज्ञानानामप्यन्यतमज्ञानत्वेन हेतुत्वसम्भवेनाननुगमशङ्कानवतारप्रसङ्गात् । यदि च गौरवात्तत्र तन्नावच्छेदकम्, तदात्रापि तुल्यमिति संक्षेपः ।

---

1. ख. तल्लक्षणमिति

2. ख. अत्र महान् ग्रन्थपातः ।

तथा च व्यभिचारज्ञानद्वारा स दूषकः । एवं च परमुखनिरीक्षकतया सिद्धसाधनवन्न पृथक् । न चैवमव्यभिचारस्य व्याप्तित्वे व्यभिचारस्तदभावत्वेनासिद्धिः स्यादिति वाच्यम् । साध्याभाववद्वृत्तित्वं हि व्यभिचारः, तदभावश्च नाव्यभिचारः, केवलान्वयिन्यभावात् । किं तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यम् । न चानयोः परस्परविरहत्वमिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे व्याप्त्यनुगमप्रकरणम्



## प्रकाशः

न च साम्यमित्याह—[1]न चानयोरिति । यद्यपि केवलान्वयिसाधारण्यानुरोधेन साध्ये स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमेव व्यभिचारः । तथाप्यस्य विशेषणविरह[2]रूपत्वेऽपि विशिष्टसामानाधिकरण्यविरहरूपत्वमसम्भवीति भावः । [3]एतत्तु सम्प्रदायमते, मणिकारमते चान्योन्याभावगर्भव्यभिचारो बोद्धव्यः ।

इति श्रीरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे व्याप्त्यनुगमप्रकरणम्



## तर्कचूडामणिः

यावत्साध्यव्यापकव्याप्यत्वरूपानौपाधिकत्वस्य निरुक्तसामानाधिकरण्यरूपव्याप्तिनिष्ठत्वाभावेन लक्षणत्वानुपपत्तिः । इतरेषामपि लक्षणत्वेन विशिष्य तदभिधानानुपपत्तिश्चेत्यत आह—ज्ञापकमिति । अनुमापकमित्यर्थः । न तु तद्ग्रहमात्रे कारणम्, तस्य ग्राहकतायाः प्रागेव निरासात्, अग्रिमग्रन्थविरोधाच्चेति द्रष्टव्यम् ।

1. ख. न चेति न चानयोरिति
2. क. रूपत्वमेव, विशिष्ट-
3. क. एवं चेदं सम्प्रदाय-

नन्वनौपाधिकत्वज्ञानस्यानुमित्यहेतुत्वेऽपि[1] तद्विषयस्य व्याप्तितया तदभावस्यासिद्धत्वं स्यादेवेत्यत आह—**अनौपाधिकत्वस्येति**। तज्ज्ञानस्याहेतुत्वे तस्यापि न व्याप्तित्वम्, अनुमितिहेतुधीविषयस्यैव तत्त्वादिति भावः। एतच्चोपाधेर्हेत्वाभासत्वं तद्विशेषरूपत्वं च साम्प्रदायिकसिद्धमभिप्रेत्य शङ्कितमिमि ध्येयम्। अनुमितिप्रतिबन्धकज्ञानविषयत्वाभावादेव नास्य हेत्वाभासत्वम्, क्वान्तर्भावबहिर्भावचिन्तेति राद्धान्ताभिप्रायः।

ननु व्यभिचारज्ञानस्यानुमिति[2]प्रतिबन्धकत्वाय तदज्ञानस्य हेतुत्वमुच्यत इव भाति। तच्चायुक्तम्, प्रागेव दूषितत्वादित्यत आह—**व्याप्तीति**।

केचित्तु नञ्ऽत्यासेनाव्यभिचारज्ञानस्यानुमितिहेतुत्वादिति मण्यर्थमाहुः। तत्पदस्य व्यभिचारज्ञानाभावपरत्वं वारयति—**व्यभिचारेति**। ननु व्यभिचारज्ञानवदुपाधिज्ञानस्यापि व्याप्तिधीप्रतिबन्धकतया तद्विषयस्य दोषत्वं स्यादित्याशङ्क्य निराकरोति—**न च साम्यमिति**। व्यभिचारोपाधिज्ञानयोरिति शेषः। **केवलेति**। तत्र व्यभिचारभ्रमानुरोधेनेत्यर्थः।

इति श्रीधर्मराजाध्वरिविरचिते तर्कचूडामणौ
अनुमानखण्डे व्याप्त्यनुगमप्रकरणम्



1. ग. अनुमितिहेतुत्वेऽपि
2. ग. प्रतिबन्धकतया

## अथ सामान्यलक्षणाप्रकरणम्

व्याप्तिग्रहश्च सामान्यलक्षणाप्रत्यासत्त्या सकलधूमविषयकः। कथमन्यथा पर्वतीयधूमे व्याप्त्यग्रहे तस्मादनुमितिः। सा चेन्द्रियसम्बद्धविशेषणता अतिरिक्तैव वा। तद्विशेष्यकप्रत्यक्षे तदिन्द्रियसंनिकर्षस्य हेतुत्वेनानागतादौ संयोगादेरभावादिति वदन्ति।

---

### प्रकाशः

इन्द्रियेति। संयुक्तसमवायादिना इन्द्रियसम्बन्धे [द्धे] धूमत्वादौ धूमादिव्यक्तीनां [1]विशेषणभावादित्यर्थः। नन्वेवं सामान्यं प्रत्यासत्तिर्न स्यात्, [2]अस्याभावादिग्राहकविशेषणतारूपत्वात्। अत एवालौकिकत्वमप्यस्याः सर्वसिद्धमनुपपन्नं स्यादित्यनुशयेनाह—अतिरिक्तेति। [3]अत एव विशेषणताभिन्नत्वेनोभयमप्यस्या उपपन्नम्। षोढा परिगणनं तु लौकिकाभिप्रायमिति भावः।

---

### तर्कचूडामणिः

[4]नन्विन्द्रियसम्बन्धिनि पुरोवर्तिनि धूमत्वादेर्विशेषणतासद्भावेऽपि असंनिकृष्टधूमादौ न तस्याः प्रत्यासत्तित्वम्, तन्निष्ठत्वाभावादित्यत आह—संयुक्तेति। धूमादीति। जातिव्यक्त्योः परस्परं विशेषणविशेष्यभावाङ्गीकारादिति भावः। ननु विशेषणतारूपत्वेऽपि तस्याः सामान्यघटितत्वमात्रेण सामान्यस्य प्रत्यासत्तित्वव्यपदेश इत्यत आह — अत एवेति। न हि प्रत्यासत्तेः सामान्यघटितत्वमात्रेणालौकिकत्वं [5]तत्प्रत्यक्षस्य, घटत्वे पटत्वाभावप्रत्यक्षस्यापि अलौकिकत्वापत्तेरिति भावः। उभयमिति। अलौकिकत्वं सामान्यप्रत्यासत्तित्वं चेत्यर्थः। ननु संयुक्तविशेषणताया

---

1. क विशेषणाभावात्
2. क. अस्याभावग्राहक-
3. ख. तथा च विशेषणता
4. ग. नन्विन्द्रियसम्बन्धे
5. क. न तत्प्रत्यक्षत्वस्य

## प्रकाशः

फलबलेनेन्द्रिय[1]सम्बद्धमेव सामान्यं प्रत्यासत्तिरिति न निमीलिताक्षस्य तज्जन्या चाक्षुषधीरिति ध्येयम् ।

---

## तर्कचूडामणिः

अभावग्रहस्थले क्लृप्ताया एव प्रत्यासत्तित्वमस्तु, न तु सामान्यस्य तत्त्वं, गौरवात् । न च जातिं प्रति व्यक्तीनां विशेषणतैव नास्ति । सम्बन्धान्तराभाव एव तदभ्युपगमात् । अन्यथा तथैव [तयैव] जातिविशिष्टप्रत्ययोपपत्तौ समवायासिद्धिप्रसङ्गादिति वाच्यम् । [2]रूपरूपिणोः समवाये निरुक्तविशेषणताया अङ्गीकारात् । अन्यथा [3]रूपी घट इतिवत् वायू रूपीति ज्ञानस्य प्रमात्वापत्तेः ।

किं चैवमपि संयुक्तविशेषणसम्बन्धेनैवाभावग्रहस्थले विशेषणतायाः प्रत्यासत्तित्वं न तु विशेषणतात्वेन, गौरवात् । न च परम्परासम्बन्धमादायाति[4]प्रसङ्गः, तावता साक्षात्त्वस्य तद्विशेषणतोऽवगमात् । एवं च संयुक्तसमवेतजातिसमवायोऽप्यतीतादौ प्रत्यासत्तिर्भविष्यतीति किं सामान्यस्य प्रत्यासत्तित्वेनेति चेत् — [5]न । अनागतगोचरप्रत्यक्षोदयार्थं प्रत्यासत्तिरवश्यकल्पनीया । तत्र सामान्यं तन्निरूपितविशेषणता चेत्युभयवादिसिद्धम् । तत्र लाघवात् सामान्यं प्रत्यासत्तिः । तन्निरूपितव्यक्तिनिष्ठविशेषणतानामानन्त्येन गुरुत्वात् । अत एव [6]समवायसिद्धिरपि । यदा लाघवानुरोधेन समवायरूपधर्मिकल्पनापूर्वकं तत्प्रत्यासत्तित्वकल्पनं तदा कैव कथा क्लृप्तस्य [7]सामान्यस्य प्रत्यासत्तित्व इति विभावनीयम् ।

---

1. क. सम्बन्धमेव
2. ग. रूपत्वेऽपि गुणसमवायातिरिक्तविशेषणताया अङ्गीकारात्
3. ग. रूपी घट इति समवायी रूपीति ज्ञानस्य
4. क. प्रसङ्गता साक्षात्त्वस्य
5. ग. अनागत-
6. ग. 'समवाय' नास्ति
7. ग. सामान्यत्वस्य

तदपरे न मन्यन्ते । तथा हि—धूमत्वावच्छिन्ना व्याप्तिः संनिकृष्टधूमविषये धूमत्वेन प्रत्यक्षेण ज्ञायते । ततः स्मृता सा तृतीयलिङ्गपरामर्शे पक्षनिष्ठधूमवृत्तितया ज्ञायते । ततोऽनुमितिः । तदनभ्युपगमेऽपि

---

## प्रकाशः

मीमांसकमतमुत्थापयति—तदपर इति । धूमत्वावच्छिन्नेति । [1]यैव धूमत्वावच्छिन्ना सकलधूमवृत्तिः [2]सैव संनिकृष्टधूमवृत्तिः प्रत्यक्षेण ज्ञायत इत्यर्थः । तत इति । यदवच्छेदेन यद्ग्रहः [3]तद्धर्मवत्त्वज्ञानस्य तदुपनयहेतुत्वादित्यर्थः । तदनभ्युपगम इति । तृतीयलिङ्गपरामर्शानभ्युपगम इत्यर्थः । न चैवं संनिकृष्टे

---

## तर्कचूडामणिः

ननु निमीलितनयनस्यापि स्मृतसामान्यप्रत्यासत्त्या चाक्षुषज्ञानं स्यात् । सामान्यप्रत्यासत्तिसद्भावे तत्संयोगाभावस्याकिंचित्करत्वादित्यत आह—[4]फलबलेनेति । इन्द्रिय[5]सम्बद्धसामान्यस्थल एव तदनुभवबलेनेत्यर्थ । इन्द्रियेति । इन्द्रियनिरूपितविषयविशेष्यकप्रत्यक्षजनकप्रत्यासत्त्याश्रयीभूतमित्यर्थः । अन्यथा ज्ञानप्रत्यासत्त्या सामान्यस्य तत्रापीन्द्रियसम्बद्धतया दोषतादवस्थ्यं स्यादिति । यद्यपि निमीलितनयनस्य सामान्यप्रत्यासत्तिजन्यं [6]ज्ञानं विशेष्यांशे लौकिकं न सम्भवति, तत्र संयोगाद्यभावात् । नाप्यलौकिकम्, [7]वहिरिन्द्रियजन्यप्रत्यक्षस्य क्वचिद्विशेष्यांशे लौकिकत्वनियमात् । तथापीन्द्रियसम्बद्ध[8]सामान्यस्य प्रत्यासत्तित्वे अयमपि नियमः सम्भवतीति भावः ।

---

1. ख. तयैव
2. ख. 'सैव संनिकृष्टधूमवृत्तिः' नास्ति ।
3. ख. तद्धर्मग्रहस्यैव
4. ग. फलवशेनेति ।
5. ग. सम्बन्ध-
6. क. अज्ञानं
7. ग. बहिर्विषयजन्य-
8. क. सामान्यप्रत्या-

संनिकृष्टधूमविषये धूमत्वेन धूमो वह्निव्याप्य इत्यनुभवः, तथैव व्याप्तिस्मरणम्, ततो धूमवानयमिति व्याप्तिस्मृतिप्रकारेण धूमत्वेन पक्षवृत्तिधूमज्ञानादनुमितिः। व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञानानामेकप्रकारकत्वेनानुमितिहेतुत्वात्।

---

## प्रकाशः

धूमत्वेन व्याप्तिग्रहे धूमान्तरे व्यभिचारग्रहेऽपि अनुमित्यापत्तिरिति वाच्यम्। तन्मते व्यभिचार[1]ज्ञानविरहस्याप्यनुमितिहेतुत्वादिति भावः। **व्याप्त्यनुभवेति**। व्यापारवतः करणत्वमित्यभिप्रेत्य करणत्वाभिप्रायेण [2]व्याप्त्यनुभवपदोपादानमिति ध्येयम्। व्याप्तिज्ञानत्वेनानुमितिहेतुत्वात् स्वरूपयोग्यताभिप्रायेण तदुक्तमित्यन्ये। **एकेति**। तस्यावश्यकत्वादिति भावः।

---

## तर्कचूडामणिः

ननु व्याप्तेः सर्वधूमवृत्तित्वेन संनिकृष्टवृत्तित्वमात्राभिधानानुपपत्तिरित्याशङ्क्य उपलक्षणपरतया व्याचष्टे— **यत्रेति**। [3]पर्वतीयधूमवृत्तितया परमते व्याप्तेरनवगमे कथं तत्र स्मृत्यात्मकतदुपनय इत्यत आह—**यदवच्छेदेनेति**। ननु व्याप्तिस्मृत्यनुभवान्यतरमात्रेणानुमित्युत्पत्तौ उभयोपादानवैयर्थ्यं तत्राह — **व्यापारवत इति**। ननु यत्र व्याप्त्यनुभवादेवानुमितिस्तत्र तत्स्मृतेर्द्वारत्वाभावेन [4]तस्य न करणत्वं स्यात् इत्यनुशयादाह—**व्याप्तीति**। ननु विनिगमकाभावेन समानविषयकत्वेनैव [5]हेतुत्वमित्यत आह —**तस्येति**। सत्यपि समानविषयत्वे भिन्नप्रकारकव्याप्तिपक्षधर्मताज्ञानाभ्यामनुमित्यननुभवेन तस्यावश्यकत्वादित्यर्थः। **परेति**। एतच्च गवादिपदाभिप्रायेण व्याख्यातम्। वस्तुतस्तु परमतेऽपि[6] लिङ्गादीनां कार्ये धर्मिणि शक्तिः।

---

1. क. ज्ञानस्यापि
2. क. व्याप्तिपदोपा-
3. क. ग. पर्वतनिष्ठधूम-
4. क तत्र कारणत्वं
   ग. तस्य न तत्कारणत्वम्
5. क. हेतुत्वविषयत्वम्
6. क. 'अपि' नास्ति

गवादिपदेष्वपि शक्त्यनुभवतत्स्मरणवाक्यार्थानुभवानामेकप्रकारकत्वेन हेतुहेतुमद्भाव इत्यपूर्वे वक्ष्यते । तत्र योग्यतादिबलादपूर्वव्यक्तिलाभः, अनुमाने तु पक्षधर्मताबलात् धूमो वह्निव्याप्य इत्यनुभवो न तु सर्वो धूमो वह्निव्याप्य इति येन सर्वभानार्थं तत्स्वीकारः ।

अथ वह्निमानयमित्यनुमितिर्विशेषणज्ञानसाध्या, विशिष्टज्ञानत्वादिति पर्वतीयवह्निभानार्थं तत्कल्पने धूमेऽपि तथा, क्वचित् धूमस्यापि व्यापकत्वादिति चेत् —न । विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यावश्यकत्वेन हेतुत्वात् । तच्च वृत्तमेव । न तु विशेषणज्ञानमपि तथा, गौरवात् । गौरयमिति विशिष्टज्ञाने युगपद्विशेष्ये

---

## प्रकाशः

गवादिपदेष्विति । तथा च तत्रापि शक्तिग्रहे सकलगोव्यक्त्युपस्थित्यर्थं [1]तत्स्वीकार इति भावः । एतदपि परसिद्धान्तमभिप्रेत्य[2] । स्वमते जातावेव शक्तिग्रहादिति ध्येयम् । लाभ इति । अनुभव इत्यर्थः । वह्निमानिति । जन्यपदमुभयत्र देयम् । तेन न व्यभिचारादिकमिति ध्येयम् । धूमस्यापीति ।

---

## तर्कचूडामणिः

तत्र च कार्यत्वप्रत्यासत्त्या सकलकार्योपस्थित्यर्थं तत्स्वीकारः स्यादित्याशङ्कायां तत्रापि समानप्रकारत्वेनैव शक्तिग्रहादेर्हेतुत्वं, न तु समानविषयत्वेन । तथा च तत्रापि कार्यत्वेन रूपेण लौकिककार्ये शक्तिग्रह इति स्वमतेनाप्ययं ग्रन्थ इति ध्येयम् । उभयत्र साध्यहेत्वोरित्यर्थः । व्यभिचारादिकमिति । ईश्वरज्ञाने न व्यभिचारः न वा तदादायार्थान्तरमित्यर्थः । साधकानुमान इति । [3]सिद्धिरूपानुमितावित्यर्थः ।

---

1. क, न तत्स्वीकारः
2. ख. अभ्युपेत्य
3. क. सिद्धि ......... तद्वारणायाह' नास्ति ।

विशेषणे संनिकर्ष एव कारणम्, न तु निर्विकल्पकम्, मानाभावात्। विशिष्टज्ञानत्वमेव मानमिति चेन्न। दृष्टान्ताभावात्। दण्डी पुरुष इत्यत्र विशेषणधीजन्यत्वानुपगमात्। विशिष्टवैशिष्टयज्ञानत्वात्। अपि च प्रमेयत्वेन व्याप्तिं परिच्छिन्दन् सर्वज्ञः स्यात्। तथा च परकीयज्ञान-विषये घटत्वं न वेति संशयो न स्यात्, प्रमेयत्वेन तदन्यतरनिश्चयात्। प्रमेयत्वेन घटं जानात्येव, घटत्वं तस्य न जानातीति चेत्—न। तत् किं घटत्वं न प्रमेयं येन तन्न जानीयात्। सकलघटवृत्तिधर्मस्य प्रमेयत्वेन तद्ज्ञानासम्भवात्।

उच्यते। यदि सामान्यलक्षणा नास्ति, तदा अनुकूलतर्कादिकं विना धूमादौ व्यभिचारसंशयो न स्यात्। प्रसिद्धधूमे वह्निसम्बन्धावगमात्

---

प्रकाशः

[1]तथा च धूमत्वस्यापि प्रत्यासत्तित्वमावश्यकमिति भावः। दृष्टान्तेति। यद्यपि [2]सत्तादिजातिसाधकानुमाने विशेषणज्ञानजन्यत्वमस्ति, तथापि तस्य न तत्त्वेन [3]जनकत्वम्, किं तु विशेषणतावच्छेदकप्रकारकत्वेनेति भावः।

---

तर्कचूडामणिः

उपलक्षणमेतत् तद्गोचरशाब्दज्ञान इत्यपि द्रष्टव्यम्। देशान्तर इति। कालान्तर इत्यपि द्रष्टव्यम्। अत एव तद्वारणायाह—यावत्सत्त्वमिति। अनुमानादेवेति। अयं धूमो धूमपूर्ववृत्तिः इदानींतनधूमत्वादित्यर्थः। जयदेवोक्तपरिहारं निराचष्टे

---

1. ख. 'तथा च' नास्ति
2. क. 'सत्तादि' नास्ति
3. ख. हेतुत्व

## प्रकाशः

**प्रसिद्धधूमे वह्निसम्बन्धावगमादिति ।** न च प्रसिद्धधूमेऽपि देशान्तरे [1]व्यभिचारशङ्का स्यादिति वाच्यम् । प्रसिद्धधूमेऽपि यावत्सत्त्वं देशान्तरेऽपि [2]वह्निसम्बन्धावगमेऽप्यनुकूलतर्कादिविरहे धूमो वह्निव्यभिचारी न वेति [3]संशयस्यानुभवसिद्धत्वादिति भावः ।

अत्रेदं चिन्त्यम् । सामान्यप्रत्यासत्तिस्वीकर्त्राप्यनुमानप्रामाण्यमवश्यं [4]स्वीकर्तव्यम् । एवं चानुमानादेव कालान्तरीयदेशान्तरीयधूमोपस्थितिसम्भवे [5]किमनया प्रत्यासत्त्या । न च [6]तदवतारस्य व्याप्त्यादिस्मृतिविलम्बेन विलम्बितत्वमिति वाच्यम् । तदनवतारदशायामपि व्यभिचारसंशय इत्यत्र मानाभावात् । तथा च सर्वत्र तत्संशयो नास्त्येव । क्वचित् कोटिस्मरणादिविरहस्यापि [7]सम्भवात् । [8]यत्र तत्संशयस्तत्र [9]प्रसिद्धविशेषदर्शनात् अप्रसिद्धज्ञानजनकं किंचित् कल्पनीयम् । [10]तच्च अवश्यकल्पनीयत्वादनुमानमेव कल्प्यते, न तु प्रत्यासत्तिः, अक्लृप्तत्वात् । न च तदकल्पने पक्षवृत्तिलिङ्गे व्याप्त्यग्रहात् परामर्शाभावेनानुमानमपि न स्यादिति वाच्यम् । व्याप्यतावच्छेदकप्रकारकज्ञानस्यैवानुमितिहेतुत्वमिति परसिद्धान्तात् । अत एव तदकल्पने [11]पक्षे साध्यज्ञानाभावेन विशेषणज्ञानाभावान्नानुमितिरिति

---

## तर्कचूडामणिः

**न चेति ।** ननु सर्वत्र तत्संशयानुभवेन सर्वत्र व्याप्त्यादिस्मृतिकल्पनमनुभवबाधितम्, अत आह—**तथा चेति ।**

---

1. क. व्यभिचारः स्यादिति
2. क. 'वह्नि' नास्ति
3. ख. संदेहस्य
4. ख. अङ्गीकार्यम्
5. ख. किं सामान्यलक्षणया प्रत्यासत्त्या
6. क. तत्र व्याप्त्यादि-
7. क. असम्भवात्
8. ख. यत्र च यत्संशयः
9. ख. प्रसिद्धे
10. क. तस्य
11. ख. पक्षीयसाध्य

## प्रकाशः

परास्तम् । विशिष्टवैशिष्ट्यावगाहिज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्यैव हेतुत्वमिति परसिद्धान्तात् ।

नन्वेवमनागतधूमज्ञानार्थं तदनभ्युपगमेऽपि अनागतगोचरप्रत्यासत्त्यर्थं सामान्यप्रत्यासत्तिस्वीकार आवश्यकः । संशयेऽप्यनागत[1]विशेष्यके विशेष्यप्रत्यासत्ति[2]जन्यत्वस्य स्वीकरणीयत्वादिति चेत्—न । संशयस्य मानसत्वेनाप्युपपत्तेः [3]प्रत्यासत्त्यर्थं तदकल्पनात् । अतीन्द्रियविशेष्यकसंशयवत् चक्षुरन्वयाद्यनुविधानस्य सहचारादिसाधारणधर्मदर्शनोपक्षीणत्वात् । अन्यत्र च बाधकाभावेन तस्य चाक्षुषत्वात् । अत एव व्यभिचारशङ्कोपपादकत्वेनैवानुमानमाचार्यचरणैः कुसुमाञ्जलौ—'शङ्का चेदनुमास्त्येव' इत्यनेन [4]प्रसाधितम् ।

---

## तर्कचूडामणिः

आवश्यक इति । अन्यत्र क्लृप्तत्वेनेत्यर्थः । सामान्यस्यापि प्रत्यासत्तित्वमन्यत्र क्लृप्तमेवेति शङ्कां निरस्यति—संशयेऽपीति । प्रत्यक्षमात्रे विशेष्यसंनिकर्षस्य हेतुत्वादिति भावः । मानसत्वेनेति । यद्यपि तस्यापि प्रत्यक्षतया विशेष्यसंनिकर्षजन्यत्वमावश्यकम् । तदनावश्यकत्वे च चाक्षषत्वाङ्गीकारेऽप्यविरोधः । तथापि तज्ज्ञानस्य परमते विशेष्यांशेऽपि स्मृत्यादिरूपत्वं विशेषणांश इव तन्मते अनुभावकाभावात् न्यायमतेऽपि तज्ज्ञानं प्रत्यासत्तिः, न तु सामान्यमिति भावः । प्रत्यासत्त्यर्थमिति । तदर्थमपीत्यर्थः । अतीन्द्रियेति । इदमपि पूर्ववदेव बोध्यम् । तर्हि मानसत्वे चक्षुराद्यन्वयव्यतिरेकविरोधः, तत्राह—चक्षुरिति । नन्वेवं चक्षुरादेः सर्वत्र साधारणधर्मदर्शन एव हेतुत्वं स्यात् इत्यत आह—अन्यत्रेति । इह [5]प्रत्यासत्त्यभाव एव बाधक इति भावः । तस्येति । संशयस्येत्यर्थः ।

---

1. ख. विशेष्यकप्रत्यासत्ति-
2. क. जन्यत्वस्वीकारात्
3. ख. प्रत्यासत्त्यन्तराकल्पनात्
4. ख. प्रतिपादितम्
5. ख प्रत्यासत्तिभावः

## प्रकाशः

अन्ये तु यदि सामान्य[1]लक्षणप्रत्यासत्त्या प्रसिद्धाप्रसिद्धसकलधूमोपस्थितावप्रसिद्धधूमे विशेषादर्शने धूमो वह्निव्यभिचारी न वेत्याकारः संशयः तदा यदिन्धनखण्डप्रभवो धूमोऽप्रसिद्धो वस्तुगत्या नास्त्येव, प्रसिद्धे च तत्प्रभवे वह्निसम्बन्ध एवावगतः तदिन्धनप्रभव[2]धूमगोचर एतदिन्धनप्रभवधूमो वह्निव्यभिचारी न वेति संशयो न स्यात् । प्रसिद्धे तस्य विशेषदर्शनात् , अप्रसिद्धस्यासत्त्वात् तदिन्धनप्रभवे [3]धूमत्वप्रत्यासत्त्याप्यनुपस्थितेः । न चासावसिद्ध एव । अनुकूल[4]तर्कविरहदशायां धूमो वह्निव्यभिचारी न वेति संशयवत्त्स्यापि सर्वानुभवसिद्धत्वात् । अथ [5]कथंचित्तदिन्धनप्रभवधूमत्वं वह्निव्यभिचारिवृत्ति न वेत्यादिसंशयाहितस्तादृशः संशय इति मतम् , तर्हि [6]धूमेऽपि धूमत्वं तथा न वेत्यादिसंशयाहित एव तादृशः संशयोऽस्तु । [7]एतदर्थं किं सामान्यलक्षणप्रत्यासत्त्या ।

---

## तर्कचूडामणिः

अनुमानोपस्थित[8]धर्मविषयत्वेनैव संशयोपपत्तिरित्यत्र उपष्टम्भकमाह—**अत एवेति। शङ्का चेदिति**। यदि हि दृष्टसाहचर्येणापि धूमे व्यभिचारशङ्का तदा तस्याः प्रसिद्धविषयकत्वाभावादप्रसिद्धविषयकत्वं वाच्यम् । अप्रसिद्धधर्मिज्ञानं च न प्रमाणान्तरेणेत्यनुमानप्रामाण्यमायातमेवेति चार्वाकं प्रति **उदयनाचार्यै**रुक्तमित्यर्थः। यदि च सामान्यप्रत्यासत्तिरभ्युपेया, तदा तत एवाप्रसिद्धप्रत्यक्षसम्भवे अनुमानमस्त्येवेति वचनानुपपत्तिरिति भावः। **उपाध्यायो**क्तदोषमाह—**अन्ये त्विति**। तत्र **जयदेवो**क्तमुद्धारं शङ्कते—**अथेति** । दूषयति—**तर्हीति** । तत्रापि **जयदेव**-

---

1. ख. 'लक्षण' नास्ति
2. क. 'धूम' नास्ति
3. ख. धूमत्वरूपसामान्यप्रत्या-
4. ख. तर्कादिविरह
5. ख. कथंचित्तत्रैव तदिन्धन-
6. ख. 'धूमेऽपि' नास्ति
7. ख. तदर्थं
8. क. ख. धर्मि

## प्रकाशः

ननु सामान्यलक्षणं विना यथोक्त[1]संशयस्याप्यनुपपत्तिः । तथा हि व्यभिचारित्वेनोपस्थितासु [2]व्यक्तिषु [3]धूमत्वव्यतिरेकनिश्चयेन धूमत्वे तद्वृत्तित्व-संशयाभावात् वह्निव्यभिचारित्वरूपसामान्य [4]लक्षणप्रत्यासत्त्यैव विशेषदर्शन [5]प्रस्त-व्यक्त्यतिरिक्तव्यक्त्युपस्थितिर्वाच्येति चेत् — न । वह्निव्यभिचारित्वेनोप[6]स्थितेष्व-वश्यं धूमत्वव्यतिरेकनिश्चय इत्यत्र मानाभावात् । सामग्रीभेदात् [7]पूर्ववदनुमाने-नान्यथासिद्धेश्च ।

## तर्कचूडामणिः

समाधिमाह—नन्विति । तत्किं वह्निव्यभिचारित्वेनोपस्थितघटादौ [8]तस्य वृत्तित्व-संशयः, उत विशेषतोऽनवगते पदार्थान्तरे । नाद्य इत्याह—**वह्नीति** । द्वितीये नेष्टसिद्धिरित्याह – **वह्नीति** । प्रथमपक्षमादाय परिहरति—**वह्नीति** । ननूक्तसंशयः इयन्त एव चन्दनखण्डप्रभवधूमा इत्यनिश्चयदशायां [9]तन्निश्चयदशायां वा । नाद्यः, एतच्चन्दनखण्डप्रभवत्वेन संदिग्धघटादिविषयत्वेनैवोक्तसंशयोपपत्तेः । नान्त्यः, तथा सति [10]घटादावुक्तसंशयाभावेन [11]तद्विषयत्वं संशयस्य निश्चितत्वादेव न [12]प्रसिद्ध-विषयकत्वं वाच्यम् ? । तन्न सम्भवति । असतख्यातेरनभ्युपगमादित्याह — **यत्त्विति** । न ह्यस्माकमुक्तसंशयसमर्थनेऽपि तात्पर्यम् । किं तु त्वदुक्तसंशयान्य-न्यथासिद्धिमात्र इति परिहरति—**उक्तेति** ।

1. क. संशयानुपपत्तिः
2. क. घटव्यक्तिषु
3. क. धूमत्वस्य व्यतिरेक-
4. ख. 'लक्षण' नास्ति ।
5. क. प्रस्तव्यतिरिक्त-
6. क स्थितेऽवश्यं
7. ख. 'पूर्ववदनुमानेनान्यथासिद्धेश्च' नास्ति ।
8. ख. तुल्यवृत्तित्वसंशयः  
   म. तस्य वाहत्वसंशयः ।
9. ख. तावन्निश्चय-
10. ख. 'घटादावुक्तसंशयाभावेन' नास्ति ।
11. ग. तद्विषयस्य संशयस्य निश्चित-त्वापत्तेस्तद्वृत्तिसिद्धत्वेन प्रसिद्ध-
12. ख. प्रसिद्धि-

# तर्कचूडामणिः

अत्र ब्रूमः। उक्तसंशयानुरोधादेव सामान्यं प्रत्यासत्तिः। तथा हि धूमो वह्निव्यभिचारी न वेति संशयस्तावत् बहिरिन्द्रियजन्यः, तदन्वयव्यतिरेकानुविधानात्। न चाप्रसिद्धधूमे प्रत्यासत्त्यभावरूपबाधकसत्त्वेन [1]तदनुविधानं साधारणधर्मोपक्षीणमिति वाच्यम्। तत्प्रत्यासत्त्यभावे तदन्यथासिद्धिः, तत्सिद्धौ तस्य बहिरिन्द्रियजन्यत्वाभावेन प्रत्यासत्त्यभावसिद्धिरित्यन्योन्याश्रयात्। पश्यामीत्यनुव्यवसायेन [2]चाक्षुषत्वे सिद्धे तदर्थमेव [3]तस्याः प्रत्यासत्तित्वकल्पनाच्च। अत एव भ्रमस्थलेऽपि रजतत्वविशिष्टप्रत्यक्षानुपपत्तिः उपनयस्य प्रत्यासत्तित्वसाधिकेत्युक्तम्। अन्यथा तत्रापि प्रत्यासत्त्यभावादेव विशिष्टप्रत्यक्षाभावप्रसङ्गात्। [4]अनुव्यवसायसिद्धत्वाच्च। न ह्यनुव्यवसायेऽपि विवादः। तथा सति वह्निज्ञानस्यापि प्रत्यक्षत्वापत्तौ विशेषणसंनिकर्षस्याहेतुत्वप्रसङ्गात्।

ननु चाक्षुषत्वेऽपि ज्ञानमेव प्रत्यासत्तिरस्तु। अनागतज्ञानस्यानुमानेनोपपादितत्वादिति चेत्—न। बहिरिन्द्रियस्योपनीतविशेषणकज्ञानं [5]प्रत्येव योग्यतया धूमो व्यभिचारी न वेत्यप्रसिद्धधूमविशेष्यकसंशयानुपपत्तेः। न च पुरोवर्तिन [6]एव विशेष्यत्वम्, तत्र व्याप्तिनिश्चयेन संशयाभावात्। अन्यथा [7]सिद्धज्ञानार्थमनुमानोपन्यासवैयर्थ्यापातात्। न च तत्राप्यलौकिकप्रत्यासत्तिविषयस्य न बहिरिन्द्रियविशेष्यत्वम्, सुरभि चन्दनमित्यादौ तथा दर्शनादिति वाच्यम्। अनुभवबलेन [8]ज्ञानप्रत्यासत्तिभिन्नप्रत्यासत्तिविषयमात्रस्यैव बहिरिन्द्रियप्रत्यक्षविशेष्यत्वनियमात्।

अत एव योगिनां योगजप्रत्यासत्त्या असंनिकृष्ट[9]विशेष्यकमपि ज्ञानम्। अत एव प्रमेयत्वप्रत्यासत्तिजन्यप्रत्यक्षे परमाणोरपि विशेष्यत्वम्। न चैवमुक्तव्यभि-

---

1. ख. ख तदनुरोधान्न-
2. ख. चाक्षुषत्वसिद्धेः
3. ग. 'तस्याः ......ज्ञानमेव' नास्ति।
4. क. ग. 'अनुव्यवसाय......... प्रसङ्गात्' नास्ति
5. क. प्रत्येकयोग्यतया
6. क. इव
7. क. प्रसिद्धिमनुज्ञानार्थ-
8. क. 'ज्ञान' नास्ति
9. क विशेष्यकं विज्ञानं

कालान्तरीयदेशान्तरीयधूमस्य मानाभावेनाज्ञानात्। सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते।

## प्रकाशः

यत्तु तदिन्धनप्रभव[1]धूमस्याप्रसिद्धस्य विशेष्यस्याभावात्तत्र संशयो [2]न भवत्येव। प्रकृते चाप्रसिद्धस्य धूमस्य सत्त्वात् संशयेन [3]भाव्यमिति। तन्न। उक्तसंशयाहितस्य[4] औचित्यावर्जितस्य संशयस्य प्रसिद्धविषयस्यापि सम्भवात्। प्रामाण्यसंशयाहितविषयसंशयवत्। तस्मादेतच्चिन्त्यमित्याहुः।

## तर्कचूडामणिः

चारसंशयस्यानेकविशेष्यकत्वे [5]समूहालम्बनत्वापत्तिरिति वाच्यम्। [6]गृहीतभेदानेकविशेष्यकज्ञानस्यैव तथात्वात्। प्रकृते चाप्रसिद्धधूमादीनां परस्पर[7]व्यावृत्तवैधर्म्यज्ञानाभावेन भेदज्ञानाभावात्। तस्मादयुक्तमुक्तं 'प्रत्यासत्त्यर्थं तदकल्पना'दिति। युक्तं चोक्तं ग्रन्थकृता 'तदभावे संशयो न स्यात्' इति।

यदपि चोक्तं प्रसिद्ध एव [8]धूमे धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशयाहितो व्यभिचारसंशय इति। तदपि न। [9]धूमे अव्यभिचारनिश्चयस्यैव धूमत्वविशेष्यकतादृशसंशयविरोधित्वात्। अन्यथा अयं घट इति ज्ञानानन्तरं [10]घटत्वमेतद्वृत्ति न वेति संशयः स्यात्। इष्टापत्तावनुभवविरोधात्।

तथा च तत्प्रकारकनिश्चयस्य तद्वैशिष्ट्याभावावगाहिसंशयविरोधित्वं वाच्यम्, अन्यानिरुक्तेः। स च संशयः तज्ज्ञानसमानविषयको वा [11]तदसमानविषयको वा

1. क. प्रभवस्याप्रसिद्धस्य विषयस्य
2. ख. नास्त्येव
3. ख. भवितव्यमिति
4. क. औचित्यवर्जितस्य
5. क. समूहालम्बनवृत्तिरिति
6. क. गृहीताभे:-
7. ख. व्यावृत्ति ग. व्यावृत्तवैयर्थ्य-
8. क. 'धूमे' नास्ति
9. ग. धूमत्वे व्यभिचार-
10. ख. घटत्वं घटवृत्ति
11. क. 'तदसमानविषयको' नास्ति।

## प्रकाशः

वयं तु ब्रूमः। वह्निमानित्यनुमितेर्विशेषणज्ञानजन्यत्वानुमानादेव सामान्यप्रत्यासत्तिसिद्धिः। न च दृष्टान्ताभावः। तथा सति तत एव गौरिति विशिष्टज्ञानेऽपि विशेषणज्ञानजन्यत्वानुमितिविरहे निर्विकल्पकासिद्धि[1]प्रसङ्गात्। यदि साध्यप्रसिद्धिपदार्थोपस्थित्यादेरनुमित्यादौ विशेषणज्ञानत्वेन न हेतुत्वम्, [2]किं तु विशेषणतावच्छेदकप्रकारकज्ञानत्वेन। विशिष्टवैशिष्ट्यज्ञाने सर्वत्र तथैव कल्पनादित्युच्यते। एवं च निर्विकल्पकासिद्धिदोषस्तदवस्थ एव। यदि साध्यप्रसिद्धिपदार्थोपस्थित्योरनुमित्यादौ विशेषणज्ञानत्वेन हेतुत्वात् यद्विशेषयोरिति न्यायेन विशिष्टज्ञानमात्रे विशेषणज्ञानत्वेन हेतुत्वे बाधकाभावादिति तत्सिद्धिरिति मन्यसे; तदा प्रकृतेऽपि तुल्यम्।

---

## तर्कचूडामणिः

अस्तु। यदि चैवं सति ज्ञाने प्रामाण्यसंशयो न स्यात्, तस्यापि पुरोवर्तिनि प्रकाराभाववैशिष्ट्यावगाहित्वात्। [3]तदापि ज्ञानविषयत्वेन [4]विषयाभावावगाहिसंशयातिरिक्तसंशयविरोधित्वमुक्तनिश्चयस्य भवतु, अनन्यगतिकत्वात्। तथा च कथं धूमे वह्निव्याप्तिनिश्चये सति धूमत्वं वह्निव्यभिचारिवृत्ति न वेति संशयः, विरोधिनिश्चयस्य प्रतिबन्धकत्वात्। अन्यथा ज्ञाने प्रामाण्यनिश्चयेऽपि ज्ञानत्वं प्रमाणवृत्ति न वेति [5]संशयादेव ज्ञाने प्रामाण्यसंशयस्य तदाहितस्योपपत्तौ न संशयानुपपत्तेः परतस्त्वसाधकता स्यात्। अत एव वह्नौ वह्नित्वं न वेति संशयो नेत्युक्तम्।

तत एवेति। दृष्टान्ताभावादेवेत्यर्थः। तथा च [6]दण्डी पुरुष इति प्रत्यक्षस्य दृष्टान्ताभावेऽपि सत्ताद्यनुमितेरेव दृष्टान्तत्वं वाच्यमिति भावः। तत्रापि

---

1. ख. पर्यवसानात्
2. ख. 'किं तु.........हेतुत्वात्' नास्ति।
3. क. तथापि
4. क. विषयावगाहि-
5. ख. 'संशयादेव' नास्ति।
6. क. 'दण्डी पुरुष इति' नास्ति

## प्रकाशः

यद्यपि परस्य निर्विकल्पकासिद्धिरिष्टैव[1] । तथापि तत्साधकयुक्ति परोऽप्यङ्गीकारयितव्य इति स्वमतावष्टम्भेन तदुक्तमिति ध्येयम् । न चानुमानादेव [2]विशेषणज्ञानमस्त्विति वाच्यम् । अनवस्थानात् । तस्मात्तत्र [3]फलसामान्यप्रत्यासत्तिर्व्याप्यादिकमपि ग्राहयतीति तत्त्वम् ।

## तर्कचूडामणिः

[4]साध्यवैकल्यं निराकरोति — यदि चेति । प्रकृतेऽपीति । अनुमितावपि तन्न्यायेनैव तस्य [5]हेतुत्वमिति भावः ।

**तथापीति** । तत्साधकयुक्तिश्च प्रागुपपादितेति भावः । **अनवस्थानादिति** । तस्यापि विशेषणज्ञानजन्यत्वनियमादिति भावः । न चैवं लिङ्गपरामर्शहेतुत्वस्यापि स्थापयिष्यमाणतया पक्षवृत्तिलिङ्गे व्याप्तिभानार्थं तत्स्वीकार इति किमिति नोक्तमिति वाच्यम् । तस्य तद्धेतुत्वेऽपि यदवच्छेदेन यद्ग्रहः [6]तद्धर्मग्रहस्य तदुपनयहेतुतया तद्वृत्तितया व्याप्तेरग्रहेऽपि पक्षवृत्तिहेतौ तदुपनयसम्भवात्, [7]तद्धर्मिगतत्वेनोपनये भानस्याप्रयोजकत्वात् । प्रयोजकत्वे वा पक्षवृत्तिर्धूमो वह्निव्याप्यधूमत्वादित्यनुमानेनापि परामर्शः सम्भवतीति भावः ।

अत्र ब्रूमः । नोक्तरीत्या तत्प्रत्यासत्तित्वसिद्धिः । विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वस्य परेणानङ्गीकारात् । [8]अत एव प्रसाध्याङ्गकतया [9]दुर्व्यवस्थाप्यमिति [10]ग्रन्थकृता तदुपेक्षितम् । अस्तु वा कृतकत्वादिवत् प्रसाध्याङ्गकस्याप्युपादानम् ।

1. ख इतीष्टैव
2. क. विशेषणभानम्
3. क. आक्षिप्त-
4. क. साध्यं निराकरोति
5. क. अहेतुत्वमिति ग. हेतुत्वादिति
6. ग. तत्संग्रहस्य
7. ग. तदवच्छिन्नत्वेनोपनये
8. क. यत एव
9. ख. द्रव्यस्थाप्य-
10. क, गूढकृता

## तर्कचूडामणिः

तथाप्यनुमितेः [1]साध्यविशेषणकत्वासिद्धौ कुतस्तत्कल्पना स्यात् । न च परामर्शस्य पक्षविशेष्यकतया अनुमितेरपि तद्विशेष्यकत्वमेवेति वाच्यम् । जन्यजनकज्ञानयोः समानविशेष्यकत्वनियमस्य स्वयमेव दूषितत्वात् । पक्षविशेषणपरामर्शस्थले अनुमितेरपि पक्षविशेषणकत्वनियमाच्च । न च तादृशपरामर्शो न हेतुरिति वाच्यम् । तस्यापि व्याप्तिपक्षधर्मताज्ञानत्वेन हेतुत्वावश्यम्भावात् । अत एव मणिकृता [2]परामर्शग्रन्थे तस्यापि हेतुत्वमुक्तम् । न च पक्षविशेष्यकपरामर्शस्थले अनुमितेः साध्यविशेषणकतया तज्ज्ञानाय तस्य प्रत्यासत्तित्वं स्यादिति वाच्यम् । तत्रापि वह्निरूपविशेषणज्ञानाभावेन साध्यविशेष्यकप्रत्ययस्यैव प्रथमसुत्पादनात् । तदनन्तरं च सिषाधयिषासत्त्वे [3]तद्विशेषणकानुमितेरिष्टत्वात् । अत एव ग्रन्थकृता ज्ञाने [4]प्रामाण्यानुमित्यनन्तरं [5]तद्विशिष्टज्ञानानुमितिरङ्गीकृता । अस्तु वा अनुमितेः पक्षविशेष्यकत्वनियमः । तथाप्यनुमानादिना विशेषणज्ञानमस्तु । न चानवस्था, पर्वतो वह्नित्ववान् धूमादित्यादिना वह्नित्वप्रकारकानुमितेरेवोत्पादात् । वह्नित्वस्य च [6]प्रागवगतत्वात् । परम्परासम्बन्धेन तस्यापि धूमव्यापकत्वात् । संसर्गविधया वह्निगोचरत्वेन विशेषण[7]ज्ञानरूपत्वाच्च ।

न चैवमपि विशिष्टवैशिष्ट्यज्ञानरूपानुमितिर्न स्यादेव, विशेषणतावच्छेदकप्रकारकविशेषणज्ञानाभावादिति वाच्यम् । तावद्विशेषणज्ञानादेव तदुपपत्तौ तस्यापि तद्धेतुत्वे मानाभावात् । अत एव शाब्दज्ञान[8]जनकं तावत्पदार्थस्मरणमिति वक्ष्यते ।

---

1. क, साध्यविशेष्यकत्वासिद्धौ
2. क परामर्शग्रहे
3. क, तद्विशेषक
4. क. प्रामाण्यमित्यनु
5. क. तद्विशिष्टानु-
6. क. प्रागेव गतत्वात्
7. ग. ज्ञानजन्यरूपत्वात्
8. क. जनकतावत्पदार्थ-

## तर्कचूडामणिः

हेतुत्वे वा विशेषणतावच्छेदकप्रकारकत्वेनैव [1]हेतुत्वम्, न तु विशेषणगोचरत्वेनापि, गौरवान्मानाभावाच्च । अत एव दण्डस्मृतिमतो [2]दण्डनिर्विकल्पकात् दण्डी पुरुष इति ज्ञानम् ।

न चोक्तानुमानानवतारेऽपि वह्निमानित्यनुमितिदर्शनात् नैवमिति वाच्यम् । विशेषणज्ञानाभावेन तदर्थं कस्यचित् कल्प्यत्वे अनुमानमेव कल्प्यते, अन्यत्र क्लृप्तत्वात्, न त्वपूर्वा प्रत्यासत्तिः । तदिदं स्वयमेवोक्तम् 'न तु प्रत्यासत्तिरपूर्वा' इति । तस्मान्मण्युक्तरीत्यैव सामान्यप्रत्यासत्तिसिद्धिः । यथा च तत्रोक्तदोषाणां [3]नावकाशः तथा प्रपञ्चितमस्माभिः ।

न च समानप्रकारकनिर्णयस्य संशयविरोधितया [4]तत्तद्धूमत्वेन धूमे व्याप्ति-निश्चयेऽपि धूमत्वेन तत्संशयः स्यादिति वाच्यम् । यदवच्छेदेन [5]यद्धर्मनिश्चयः तत्तज्ज्ञानस्य [6]तद्धर्मिकतत्संशयविरोधितया धूमत्वेनापि [7]धूमे तत्संशयासम्भवात् । अन्यथा इदम्पर्वतत्वेन वह्निनिश्चयेऽपि पर्वतत्वेन तत्प्रसङ्गात् ।

न चैवं धूमत्वेन वह्निमत्त्वनिश्चये धूमवद्विशेषे पर्वते वह्निसंशयो न स्यादिति वाच्यम् । एवमपि सामान्याकारेण निश्चिते [8]विशेषसंसयोपपादनेऽपि विशेषतो निश्चिते सामान्यसंशयानुपपादनात् । तस्मात् प्रसिद्धविषयकत्वमेव संशयस्य वाच्य-मिति तत्प्रत्यासत्तितया सामान्यस्य प्रत्यासत्तित्वसिद्धिरिति ।

---

1. क. हेतुत्वान्न तु
2. क. दण्डविकल्पकात्
   ग. दण्डीति निर्विकल्पकात्
3. क. अनवकाशः
4. क. ख. तत्र धूमत्वेन
5. क. यद्धर्मनिश्चयः यद्धर्मिज्ञानस्य तद्धर्मि-
6. ग. 'तद्धर्मिक' नास्ति
7. क. धूमतत्संशयाभावात्
8. ग. विशेषे
   ख. 'विशेषसंशयोपपादनेऽपि विशेषतो निश्चिते' नास्ति ।

## प्रकाशः

यत्तु धूमत्वावच्छिन्ना व्याप्तिः सकलधूमनिष्ठैव, न तु संनिकृष्टधूममात्रनिष्ठा। तथा च सम्बन्धविशेषरूपायास्तस्याः सम्बन्धिभूतसकलधूमनिरूप्यत्वात् सकलधूमोपस्थितिं विना तज्ज्ञानमशक्यमिति तदर्थं सामान्यप्रत्यासत्तिस्वीकार इति ।

तन्न । सकलसम्बन्ध्युपस्थितिं [1]विना एकत्रापि सम्बन्धिनि अनेकनिष्ठसम्बन्धस्य ज्ञानसम्भवादेकस्मिन्नपि कपाले गृह्यमाणे घटसमवायग्रहात् सकलधूमनिष्ठसामान्य[2]व्याप्तेः स्मृताया एकस्मिन्नपि पक्षधर्मभूते तृतीयलिङ्गपरामर्शादिना ग्रहसम्भवाच्च ।

---

## तर्कचूडामणिः

केचित्तु सामान्यप्रत्यासत्त्यनभ्युपगमे अन्धकारप्रत्ययो न स्यात् । अन्धकारस्य यावत्तेजोविरहरूपतया यावत्तेजोरूपप्रतियोगिज्ञानस्य तेजस्त्वप्रत्यासत्त्यनङ्गीकारे असम्भवादित्याहुः ।

तच्चिन्त्यम् । परमते प्रतियोगितावच्छेदकप्रकारकत्वेन तस्य हेतुतया प्रतियोगिगोचरत्वेनापि हेतुत्वानङ्गीकारात् । न च [3]तदपि प्रसाध्य तत्साधनीयमिति वाच्यम् । एवमपि प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य स्वाभिमतस्वाभावधीहेतोरलाभात् । न ह्यन्धकारप्रतियोगिनां तेजोविशेषाणां तत्त्वेन ज्ञानं तेजस्त्वप्रत्यासत्त्यापि सम्भवति । तस्याः स्वप्रकारकज्ञानमात्र एव हेतुत्वात् । इदं तेजः तेजोऽन्तरपूर्ववर्ति तेजोन्तरपश्चाद्भावि इत्यनुमानादेव सकलतेजस उपस्थितिसम्भवे तदर्थं तत्प्रत्यासत्तित्वकल्पनायोगाच्चेति ।

**यत्त्विति** । [4]तत्तद्धूमत्वावच्छिन्नव्याप्तिज्ञानस्यानुमितिहेतुत्वे पर्वतीयधूमादनुमित्यनापत्तेरिति भावः । युक्त्यन्तरमाह — **सकलधूमेति** । **पुरोवर्तिनीति** ।

---

1. ख, विनापि
2. ख, व्याप्तेरपि
3. क. ख. तदप्रसाध्य
4. क तद्धूम-

## प्रकाशः

ननु बाष्पे धूमभ्रमानन्तरं धूमत्वेन व्याप्तिग्रहे कथं धूमत्वस्य प्रत्यासत्तित्वम्, पुरोवर्तिनि तस्यासत्त्वात्। न च [1]तत्र न तस्य प्रत्यासत्तित्वम्। तथा सत्यन्यत्रा-गृहीतव्याप्तेस्तत्रैव गृहीतव्याप्तेः पवने [2]धूमदर्शनादनुमितिर्न स्यादिति चेत् — न। वैज्ञानिकेन सम्बन्धेन पुरोवर्तिनि तस्य सत्त्वादिति दिक्।

---

## तर्कचूडामणिः

इन्द्रियसम्बन्धस्यैव तस्य प्रत्यासत्तित्वादिति भावः। **वैज्ञानिकेनेति**। तन्निष्ठतया ज्ञायमानत्वेनेत्यर्थः। न च सामान्यं येन सम्बन्धेन पुरोवर्तिवृत्ति तत्सम्बन्धावच्छिन्नज्ञान ततो भवतीत्यङ्गीकार्यम्। अन्यथा परम्परासम्बन्धेन धूमत्वावच्छिन्नमहानसादेरपि वह्निव्याप्यताग्रहप्रसङ्गः। तथा च धूमत्वसमवायावच्छिन्नधूमान्तरज्ञानं न स्यात्। धूमान्तरस्य पुरोवर्तिवृत्तितया [3]ज्ञायमानत्वरूपसम्बन्धानवच्छिन्नत्वादिति वाच्यम्। तावतापि यत्सम्बन्धेन पुरोवर्तिवृत्तितया ज्ञायमानत्वं यस्य सामान्यस्य तस्य तत्सम्बन्धा-वच्छिन्नगोचरज्ञानजनकत्वमित्यभ्युपगमात्। बाष्पेऽपि धूमत्वं समवायेनैव ज्ञायत इति न काचिदनुपपत्तिः।

नन्वेवमपि धूलीपटले धूमभ्रमात् वह्न्यनुमितिर्न स्यात्। धूमत्वसामान्य-प्रत्यासत्त्या सकलधूमविषय[4]व्याप्तिज्ञानेऽपि धूलीपटले तद्व्याप्तेः प्रागनवगमेन तत्र व्याप्तेरुपनीततया भानाभावात्। न च तत्र धूमत्वारोपेण वह्निव्याप्यत्वानुमानमिति वाच्यम्। एवं हि धूलीपटले [5]व्याप्तिभ्रमस्य तन्मात्रविषयकत्वेऽपि धूमान्तरे आनु-

---

1. क. तत्राप्रत्यासत्तित्वम्
2. क. धूमदर्शनेन
3. क. ज्ञायमानरूप-
4. क. व्याप्यज्ञाने
5. ख. व्याप्तिग्रहस्य

यत्तु पाकादौ चिकीर्षा सुखादाविच्छा न स्यात् सिद्धे इच्छाविरहात्, असिद्धस्याज्ञानात् । तस्मात्सुखत्वादिना ज्ञातेषु सर्वेषु सिद्धं विहायासिद्धे इच्छा भवतीत्यभ्युपेयम् [इति] । तन्न । असिद्धस्याज्ञानेऽपि सिद्धगोचर-ज्ञानादेव इच्छाप्रवृत्तिस्वाभाव्यादसिद्धे तयोरुत्पत्तेः । न चातिप्रसङ्गः । समानप्रकारकत्वेन ज्ञानेच्छाकृतीनां कार्यकारणभावात्, न तु समान-विषयकत्वेनापि । क्वचिदप्यकल्पनात् । समानविषयकत्वे सत्यपि

## प्रकाशः

न तु समानविषयकत्वेनापीति । अत्र वदन्ति — इदं रजतमिति ज्ञानस्य [1]इच्छासमानविषयत्वेनापि रजते रजतत्वप्रकारकेच्छाजनकत्वम् , न तु समानप्रकारकत्वमात्रेण ! तथा सति रजत एव तेन सा जननीयेत्यत्र नियामकाभावात्

## तर्कचूडामणिः

मानिकव्याप्ति[2]ज्ञानसम्भवेन धूलीपटले धूमत्वस्य वैज्ञानिकसम्बन्धेन वृत्तिकल्पना-वैयर्थ्यात् । न चोपनीतगोचरयथार्थप्रत्यक्ष एव तद्भानस्य प्रयोजकता । अत एव शुक्त्यादौ रजतत्वाद्यारोप इति वाच्यम् । यत्रालोके धूमत्वारोपाद्वह्न्यनुमितिः तत्र व्याप्तिज्ञानस्य यथार्थतया दोषतादवस्थ्यादिति चेत् —— न । उपनीतप्रत्यक्षे तदुपनय-मात्रस्य लाघवेन प्रयोजकतया दोषाभावात् । एवं च धूलीपटले व्याप्तिग्रहस्य [3]सकलधूमागोचरत्वेऽपि [4]पक्षवृत्तिधूमे तद्भानसम्भवेन धूलीपटलमात्रविषयकव्याप्ति-ज्ञानेऽपि बाधकाभावेन [5]तत्र वैज्ञानिकसम्बन्धेन [6]धूमत्वसत्त्वमकिंचित्करम् । अत एवापरितोषात् केचिदित्युक्तम् ।

1. ख, 'इच्छा' नास्ति
2. क. ज्ञानासम्भवेन
3. क. ग. 'सकल' नास्ति
4. क. विपक्षवृत्ति-
5. ख. ग. 'तत्र' नास्ति ।
6. क. धूमत्वं किंचित्करम्

समानप्रकारकज्ञानाभावेनेच्छाकृत्योरभावात् तस्यावश्यकत्वेन गौरवाच्चेति परसिद्धान्तात्। न च सर्वज्ञत्वे संशयो न स्यादिति दोषः। घटः स इति घटत्वप्रकारकं हि ज्ञानं संशयविरोधि। तच्च न वृत्तम्, स्वसामग्रीविरहात्। अतो घटत्वादिसकलविशेषज्ञानेऽपि स घटो न वेति संशय इति।

इति श्रीगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे सामान्यलक्षणाप्रकरणम्

——: o :——

---

## प्रकाशः

अरजतेऽपि [1]ततः सा स्यात्। ननु स्वप्रकाराधिकरण एव ज्ञानस्येच्छाजनकत्वम्। यतो नियम इति चेत्—न। तथा सति रजतभ्रमस्थले[2] रजतत्वप्रकारकेच्छा न स्यात्, [3]किं तु रजत एव सा स्यात्। न च परस्य तत्रेष्टापत्तिः। शुक्तौ रजतार्थिप्रवृत्त्यनुरोधेन तेनापि तदङ्गीकारात्।

ननु समानविषयत्वेनापि तस्य तत्कारणत्वे परस्य मते तत्र शुक्तौ सा न स्यात्। तन्मते रजतत्वप्रकारकज्ञानस्य शुक्त्यविषयत्वादिति चेत्—तर्हि [4]भ्रमोऽप्य-

---

## तर्कचूडामणिः

उपाध्यायोक्तदोषमाह — अत्रेति। तेन ज्ञानेन सा इच्छा। एवं हीच्छाविषयाधिकरणधर्मप्रकारकत्वे सति इच्छासमानप्रकारकत्वमेव पर्यवसितम्। तथा च तदपेक्षया इच्छाविषयत्वे सति इच्छाप्रकारत्वमेव [5]लघ्विति दोषे सत्येव दोषान्तरमाह—तथा सतीति। तदङ्गीकारात्—व्यधिकरण[6]धर्मप्रकारकेच्छाङ्गीकारा-

---

1. क. ततः साध्येत
2. क. एतदनन्तरं 'रजतत्वप्रकारकज्ञानेच्छोक्तौ' इत्यधिकपाठः।
3. क. 'किं तु रजत एव सा स्यात्' नास्ति।
4. ख. भ्रमोऽन्यथाख्यातिस्वरूप एव
5. ख. अस्त्विति
6. क. 'धर्म' नास्ति

## प्रकाशः

न्यथाख्यातिरेवानन्यगतिकतया तेन स्वीकरणीय इत्यभीष्टमेवास्माकम् । यदि चेदन्त्वेन ज्ञायमानायां शुक्तावुपस्थितरजतभेदाग्रहादेव सा ततो भवतीति न परेणान्यथाख्यातिः स्वीकरणीया, तथापि ज्ञात एव विषये इष्टभेदाग्रहादपि [1]इच्छेति तेनाभ्युपेयम्, अन्यथातिप्रसङ्गात् । तथा च [2]भाविनि सुखादौ ज्ञात एवेच्छा स्यादिति तज्ज्ञानार्थं सामान्यप्रत्यासत्तिस्तेनाकामेनापि स्वीकरणीया ।

वस्तुतस्तु लाघवेनेष्टाभेद[3]ग्रहस्येच्छाजनकत्वमिति अन्यथाख्यातिसाधनावसर एवोक्तप्रायम् । तस्मादन्यत्रापि ज्ञानस्य समानविषयत्वेनैवेच्छाजनकत्वात् अनागतसुखज्ञानार्थमवश्यं [4]सामान्यप्रत्यासत्तिः स्वीकरणीयेति ।

तन्न । अस्तु तावत्समानविषयत्वेन ज्ञानस्येच्छाजनकत्वम् । तथाप्यनागतज्ञानस्याप्यनुमानेनाप्युपपत्तेः तदर्थं सामान्यप्रत्यासत्तेः कल्पयितुमनुचितत्वात् । क्लृप्तेनैवोपपत्तावक्लृप्तकल्पनानवकाशात् । न च लिङ्गादिप्रतिसन्धानं विनापि [5]तद्दर्श-

---

## तर्कचूडामणिः

दित्यर्थः । **इष्टभेदेति** । उपस्थितेष्टभेदेत्यर्थः । **तज्ज्ञानार्थमिति** । अनागतज्ञानार्थमित्यर्थः । अत एव परमते अनागतपाकज्ञानायाप्रसिद्धपाकविषयानुमानादर इति भावः । **उक्तप्रायमिति** । अभेदज्ञानस्य प्रवर्तकत्वस्थापने इच्छाजनकत्वमपि तस्यैवोक्तप्रायमित्यर्थः । **अनुमानेनेति** । इद सुखं सुखपूर्ववर्ति सुखत्वात् इत्यनुमानेनेत्यर्थः । **असिद्धेः** लिङ्गाद्यप्रतिसन्धाने तदिच्छाया असिद्धेरित्यर्थः । अन्यकालोत्पन्ना यानुमितिः तज्जनितो यः संस्कारः तज्जनिता या स्मृतिः तयेत्यर्थः ।

---

1. क. सेति
2. क. भाविसुखादौ ज्ञातैवेच्छा
3. ख. ग्रहस्यैवेच्छा-
4. ख. सामान्यलक्षणप्रत्यासत्तिः कल्पनीयेति ।
5. क. तद्दर्शनादयुक्तम्

## प्रकाशः

नादिदमयुक्तमिति वाच्यम् । सिद्धावसिद्धौ वा अन्यकालोत्पन्नानागतसुखादिगोचरानुमितिजनितसंस्कारजस्मृत्यैवोपपत्तेरिति दिक् ॥

इति श्रीरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे भूयोदर्शनवादः समाप्तः
[ सामान्यलक्षणाप्रकरणं समाप्तम् ]



## तर्कचूडामणिः

ननूक्तानुमानमनागतसुखादिरूपविशेषणज्ञानाभावे न सम्भवतीति तदर्थं सामान्यप्रत्यासत्तिः स्यादित्यत आह—**दिगिति**। तर्हि विशिष्टज्ञानस्य विशेषणज्ञानजन्यत्वमेव तत्र प्रमाणीकरणीयम्, आवश्यकत्वात्, किमनेनायासेनेति भावः ।

इति श्रीधर्मराजविरचिते तर्कचूडामणौ
[अनुमानखण्डे] भूयोदर्शनवादः समाप्तः
[सामान्यलक्षणाप्रकरणं समाप्तम्]



## अथोपाधिप्रकरणम्

उपाधिज्ञानाद्व्यभिचारज्ञाने सति न व्याप्तिनिश्चय इत्युपाधिर्निरूप्यते। तत्रोपाधिः साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकः। अनौपाधिकत्वज्ञानं च न व्याप्तिज्ञाने हेतुः। अतो व्यापकत्वादिज्ञाने नान्योन्याश्रयः। यद्वा व्यापकत्वं तन्निष्ठात्यन्ताभावा-

---

### प्रकाशः

**साध्यत्वाभिमतेति**। साध्यत्वसाधनत्वे व्यापकत्वव्याप्यत्वे। न च सोपाधौ वस्तुतस्तथात्वमिति अभिमतपदम्। ननु व्यापकत्वं व्याप्तिनिरूपकत्वम्। तथा च व्याप्तौ गृहीतायामुपाधिप्रत्ययः तत्प्रत्यये च तदभावरूपानौपाधिकत्वप्रत्ययाधीनो व्याप्तिप्रत्यय इत्यन्योन्याश्रय इत्यत आह—**अनौपाधिकत्वेति**। यद्यपि भिन्नभिन्नव्याप्तिसत्त्वान्नान्योन्याश्रयः, तथाप्यनवस्थायां [1]तात्पर्यमित्याहुः। अभ्यु-

---

### तर्कचूडामणिः

**उपाधिज्ञानादिति** मणेरयमर्थः—उपाधिज्ञानस्य व्यभिचारज्ञानद्वारा अनुमितिप्रतिबन्धकत्वे अनौपाधिक[त्व]ज्ञानस्याव्यभिचारज्ञानद्वारा व्याप्तिधीहेतुत्वमिति प्रतियोगिज्ञानार्थमुपाधिर्निरूप्यत इति। ननु सोपाधावपि सिद्धिकर्मत्वादिरूपसाध्यत्वादेः सत्त्वात् अभिमतपदवैयर्थ्यमित्यत्राह—**साध्यत्वेति**। ननु व्याप्तिज्ञानेऽनौपाधिकत्वज्ञानस्य हेतुत्वेऽपि [2]व्यापकत्वज्ञाने तस्याहेतुतया नात्माश्रयशङ्केत्यत आह—**नन्विति**। **यद्यपीति**। साध्योपाध्योर्व्याप्तिज्ञाने उपाध्यन्तराभावज्ञानं हेतुः। [3]तत्रापि व्यापकत्वघटकव्याप्तिरन्यैवेति भावः। अत्र व्याप्तिज्ञाने अनौपाधि-

---

1. क. तात्पर्यमित्यर्थः
2. ग. व्यापकज्ञाने
3. ग तत्र च व्याप्यत्व-

प्रतियोगित्वम् । तत्प्रतियोगित्वं च अव्यापकत्वम् । प्रतियोगित्वं च तदधिकरणानधिकरणत्वमिति वदन्ति । तन्न । साधनपक्षधर्मावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तेः । न च तयोरनुपाधित्वम् । दूषकताबीजसाम्यात् ।

---

## प्रकाशः

पगमवादेनाह—यद्वेति । न च साधनत्वस्य व्याप्तिघटितत्वे पुनः स एव दोष इति वाच्यम् । विशिष्य तत्तद्रूपेणैव साधनत्वादिनिर्वचनात्, लक्ष्यस्याप्यननुगतत्वेन अननुगमस्यादोषत्वात् । एवं चाभिमतपदं देयमिति ध्येयम् ।

तद्वदिति । प्रतियोग्यसमानाधिकरणत्वमत्यन्ताभावविशेषणम् । [1]तेन संयोगस्य द्रव्यत्वव्यापकत्वं स्यादिति ध्येयम् । ननु प्रतियोगित्वं विरोधित्वम् । तच्च सहानवस्थाननियमः । [2]स च व्याप्तिरिति पुनरप्यन्योन्याश्रय इत्यत आह—प्रतियोगित्वं चेति । प्रकृतव्यापकत्वनिरुक्ताविदं प्रतियोगित्वमभिमतम्, [3]न प्रकृत-

---

## तर्कचूडामणिः

कत्वज्ञानस्याहेतुत्वेऽपि व्याप्तेरितर[4]व्यावृत्तप्रतीतेरनौपाधिकत्वज्ञानाधीनतया अन्योन्याश्रयतादवस्थ्यमिति [5]पूर्वास्वरसं कैश्चिदुक्तं दूषयितुमाह—अभ्युपगमेति । व्याप्तिगतेतरव्यावृत्तेर्धर्मान्तरेणापि सुग्रहत्वेन अनौपाधिकत्व[6]ज्ञानानावश्यकत्वात् तदधीनत्वेन व्याप्तिज्ञानमात्रस्यैवानौपाधिकत्वज्ञानहेतुत्वेनात्माश्रयशङ्कानवकाशादिति भावः । तत्तद्रूपेणेति । वह्नित्वादिरूपेणेत्यर्थः । साधनादिनिर्वचनादिति युक्तः पाठः । लक्ष्यस्यापीति । कस्य का व्याप्तिरितिवत् कुत्र कस्योपाधित्वम् इत्यननुगतस्यैव लक्ष्यत्वा-

---

1. ख. तथा च
2. ख. 'स च व्याप्ति' नास्ति
3. ख ननु लक्षणमिदं
4. ख. व्यावृत्ति-
5. ग. पूर्वास्वरसमिति कैश्चित्
6. ख. ज्ञानस्यावश्यकत्वात्

मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वस्य, प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च शास्त्रे प्रयोजकत्वेनोपाधित्व-स्वीकाराच्चेति पक्षेतरेऽतिव्याप्तिश्च[ऽतिव्याप्तेश्च]। न च व्यतिरेके पर्वते-

## प्रकाशः

लक्षणमिदम्। गोत्वाश्वत्वयोराकाशादिघटात्यन्ताभावयोश्चातिप्रसङ्गात्, अन्योन्याभाव-प्रतियोगिन्यसत्त्वाच्च। एवं च वह्न्यादिसाधनसमानाधिकरणाकाशात्यन्ताभावाधि-करणमहानसाद्यधिकरणवृत्तितया साधनाव्यापकत्वाभावात् आर्द्रेन्धनत्वादिकमप्यु-पाधिः [1]न स्यादिति दूषणे सत्येव दूषणान्तरमाह—साधनेति। साधनपक्षधर्माव-च्छिन्नौ क्रमेणोदाहरति—मित्रेति। उद्भूतरूपवत्त्वस्येति। उद्भूतपदं प्रत्यक्षपरं

## तर्कचूडामणिः

दिति भावः। प्रतियोगीति। एतच्चोपलक्षणम्। तद्वन्निष्ठान्योन्याभावप्रतियोगि-तानवच्छेदकत्वं तत्त्वमित्यपि बोध्यम्। नन्वभावाधिकरणानधिकरणत्वं तत्, अतो न दोष इत्यत आह—आकाशेति। ननु तन्निरूपणोपयोगिनिरूपणविषयत्वमपि विशेषणम्, अत आह—अन्योन्येति। अत्र घटादेरपि वह्न्यादिव्यापकतापत्तिः। तस्यापि तादृशाकाशात्यन्ताभावाधिकरणवृत्तित्वेन तदधिकरणानधिकरणत्वाभावात्। न चोपाधिशरीरनिविष्टव्यापकत्वमात्रनिर्वचनमत्राभिमतम्, न तु सार्वत्रिकं तन्निर्व-चनम्। तथा च घटादेर्वह्निव्यापकत्वेऽपि नोपाधित्वम्, उक्तविधयैव साधन-व्यापकत्वादिति वाच्यम्। एवं हि तन्निवृत्त्या साध्यव्यावृत्त्यापत्तेः। उपाधिशरीर निविष्टव्यापकनिवृत्त्या व्याप्यनिवृत्तेरावश्यकत्वादिति दूषणे सत्येव दूषणान्तरमाह—एवं चेति।

1. क. 'न' नास्ति

तरान्यत्वादित्यत्र इतरान्यत्वस्याप्रसिद्धिवारणार्थं पर्वतपदं विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वान्न स उपाधिः । बाधोन्नीतस्याप्यनुपाधितापत्तेः । न चेष्टापत्तिः, इतरान्यत्वस्याप्रसिद्ध्या विशेषणं विना व्याप्त्यग्रहेण तत्सार्थक्यात् ।

---

### प्रकाशः

समव्याप्तोपाध्यभिप्रायम् । यद्वा साधनव्यापकत्वशङ्कापरिहारार्थं तदिति ध्येयम् । पक्षेतरत्वस्योपाधित्वं [1]मन्यमानोऽपि नैयायिकसिद्धान्तानुसारेणैव तल्लक्षणेऽतिव्याप्तिं ददाति—पक्षेतरेति । बाधानुन्नीतपक्षेतर इत्यर्थः । पक्षमितरं यदिति व्युत्पत्त्या पर्वतेतरत्वादिपरं पक्षेतरपदं पक्षातिरिक्ते साध्यव्यापकताभिप्रायेण बोध्यम् । अतिव्याप्तेश्चेति । त्वन्मत इति शेषः ।

---

### तर्कचूडामणिः

ननु अस्तु शाकपाकजत्वादेरुपाधित्वम्, तावता कथमवच्छिन्नव्यापकोपाध्यव्याप्तिः । तत्राह — साधनेति । [2]अवच्छिन्नसाध्यव्यापकावित्यर्थः । तर्हि मतान्तरे व्यर्थतैव, तत्राह—यद्वेति । वायावनुद्भूतरूपशङ्कासम्भवेन तद्व्यापकत्वशङ्केति भावः । ननु चार्वाकमते पक्षेतरत्वस्योपाधितया कथं तत्रातिव्याप्त्यभिधानम्, तत्राह — पक्षेति । बाधोन्नीतस्य न्यायमतेऽपि [3]लक्ष्यत्वादाह — बाधेति । ननु सर्वस्यापि पक्षत्वेन तदितराप्रसिद्धिः । किं च पक्षेतरस्य [4]साधनव्यापकतया नोक्तलक्षणवत्त्वम् । अपि चेतरशब्दस्य सर्वनामतया ङेः स्मिन्नादेशः स्यात्, तत्राह -- पक्षमिति । तथा च पक्षशब्दस्य विशेषपरतया नाप्रसिद्धिः । व्युत्पत्तिबलेन च तदितरत्वधर्मलाभान्न द्वितीयदोषः । अस्य सर्वनामशब्दत्वाभावाच्च न तृतीयोऽपीति भावः ।

---

1. ख. मन्वानोऽपि
2. क. ग. 'अवच्छिन्नसाध्यव्यापकावित्यर्थः' नास्ति
3. ग. अलक्ष्यत्वात्
4. ख. साधनत्वव्यापकतया

वस्तुगत्या साध्यव्यापकः पक्षेतर उपाधिरिति चेत्, अस्तु तथा, तथापि पक्षातिरिक्ते साध्यव्यापकताग्रहादुपाधेर्दूषकत्वम्, तच्च तत्राप्यस्ति। अन्यथा पक्षे साध्यसंदेहादनुपाधित्वे उपाधिमात्रमुच्छिद्येत। विपक्षाव्यावर्तकविशेषणशून्यत्वं विशेषणम्। तेन बाधोन्नीतपक्षेतरस्य परिग्रहः, तत्र पक्षस्यैव विपक्षत्वात्, न तु पर्वतेतरत्वादेरिति चेत्—न। न हि वस्तु विपक्षाव्यावर्त्तकविशेषणशून्यम्, सर्वत्र प्रमेयत्वादेस्सत्त्वात्।

## प्रकाशः

[1]ननु व्यर्थविशेषणत्वराहित्ये सतीत्युक्तलक्षणं विशेषणीयम्, अतो नातिप्रसङ्ग इत्यत आह—न चेति। न स उपाधिरिति। न स उक्तोपाधिलक्षणाक्रान्त इत्यर्थः। तत्सार्थकत्वादिति। [तत्सार्थक्यादिति]। तथा चोक्तलक्षणसत्त्वात् बाधानुन्नीतपक्षेतरेऽतिव्याप्तिस्तदवस्थेति भावः। वस्तुगत्येति। बाधानुन्नीतस्तु न साध्यव्यापक इति न तत्रातिव्याप्तिरिति भावः। पक्षातिरिक्त इति। तथा चोक्तलक्षणे साध्यव्यापक[2]पदं पक्षातिरिक्तसाध्यव्यापकपरमेव वाच्यम्। तथा चाति-

## तर्कचूडामणिः

केचित्तु यत्र सर्वनामशब्दस्य स्वार्थपरत्वं तत्रैव तत्कार्यम्, अन्यथा संकेतितेतरशब्दात्तदापत्तेः। तथा च प्रकृतेऽपि न स्वार्थपरत्वम्। किं तु भावप्रधाननिर्देशेन तत्त्वपरत्वमित्याहुः। प्राञ्चस्तु पक्षः पर्वत इतरो यस्मादिति बहुव्रीह्याश्रयणान्न दोष इत्याहुः।

व्यतिरेकसाधने व्यर्थविशेषणत्वेऽपि उक्तलक्षणसत्त्वादतिव्याप्तिरेवेत्यत आह—नन्विति। उपाधित्वाभावोपपादनमतिव्याप्तावनुकूलमेवेत्यत आह—न स इति। ननु पक्षातिरिक्ते साध्यव्यापकताग्रहेऽपि वस्तुतः साध्यव्यापकताभावान्नातिव्याप्ति-

1. ख. ननु व्यतिरेके व्यर्थ-

2. क, 'पदं पक्षातिरिक्तसाध्यव्यापक' नास्ति।

तत्रैषात्तेति विशेषणे सिद्ध्यसिद्धिव्याघातः । तथापि च साध्यव्यापकत्व-साधनाव्यापकत्वे तत्र स्त इति तद्व्यावृत्त्या पक्षे साध्यव्यावृत्तिः । अतो

## प्रकाशः

व्याप्तिस्तदवस्थेति भावः । विपक्षेति । निर्विशेषणगोत्वाद्युपाधावव्याप्तिवारणाय [1]निषेधद्वयादरः । प्रमेयत्वादेरिति । तस्य केवलान्वयित्वेनाव्यावर्तकत्वादिति भावः ।

परसिद्धान्तानुसारेण परोक्तस्योपाधिलक्षणस्य पक्षेतरेऽतिव्याप्तिमुक्त्वा सम्प्रत्यनुमानद्वेषी चार्वाकः तस्योपाधित्वमुपपादयति—तथापि चेति । विपक्षाव्यावर्तकविशेषणशून्यत्वाभावेऽपीत्यर्थः । [2]तत्रेति । पर्वतेतरत्वादावित्यर्थः । तद्व्यावृत्त्येति ।

## तर्कचूडामणिः

गित्यत आह—तथा चोक्तेति । ननु [3]विपक्षाव्यावर्तकविशेषणानवच्छिन्नसाध्यव्यापकताकत्वं विवक्षितम् । प्रमेयत्वस्याव्यावर्तकत्वेऽपि तदवच्छिन्नव्यापकताकत्वाभावान्नाव्याप्तिः । पक्षेतरत्वस्य [4]तादृशविशेषणानवच्छिन्नव्यापकताकत्वाभावान्नातिव्याप्तिश्चेति पूर्वापरितोषं हृदि निधायाह—परेति । सम्प्रतीति । अतो न पूर्वापरविरोध इति भावः । [5]अत्रेति । अत्र ब्रूमः—पक्षेतरत्वोपाधित्ववादिनः शुद्धसाध्यव्यापकत्वमेवाभिमतम् । न च [6]पक्षीयसाध्यसंशये [7]तन्निश्चयासम्भव इति वाच्यम् । [8]तत्र साध्यनिश्चयाभावेन व्यापकता[9]ग्रहाविरोधात् । अन्यथा उद्भूतरूपवत्त्वादेरपि साध्यव्यापकतानिश्चयो न स्यात्, पक्षे साध्यसंशयात् ।

1. ख. निषेधद्वयान्तर्भावः
2. ख. 'तत्रेति । पर्वतेतरत्वादावित्यर्थः' नास्ति ।
3. ख. विपक्षव्यावर्तक-
4. क. तादृशविशेषणव्यापकता-
5. ग. अथेति
6. क. 'पक्षीयसाध्य' नास्ति ।
7. क. तन्निश्चयसम्भवः
8. क. अत्र
9. क. ग्रहविरोधात्

**हेतोर्व्यभिचार एव । व्यभिचारे चावश्यमुपाधिरिति पक्षेतर एव तत्रोपाधिः स्यात् । तावन्मात्रस्यैव दूषकत्वाच्च व्यर्थं विशेषणम् ।**

---

## प्रकाशः

अत्रेदं चिन्त्यम् — पक्षेतरत्वादेः पक्षनिष्ठसाध्यव्यापकत्वाभावात् पक्षातिरिक्त-साध्यव्यापकत्वमेवाभिमतम् । एवं च तद्व्यावृत्त्या पक्षे पक्षातिरिक्तसाध्यव्यावृत्तावपि[1] पक्षनिष्ठसाध्याव्यावृत्तेः कथं व्यभिचारः । साध्यतावच्छेदकावच्छिन्नप्रतियोगिता-कात्यन्ताभावसामानाधिकरण्यस्य व्यभिचारत्वादिति । विशेषणमिति । विपक्षाव्या-वर्तकविशेषणशून्यत्वरूपमित्यर्थः ।

---

## तर्कचूडामणिः

अत एव सिद्धान्ते ग्रन्थकारोऽपि 'पक्षे साध्यनिश्चयान्न पक्षेतरत्वमुपाधिः' इति वक्ष्यति । तथा च तद्व्यावृत्त्या शुद्धसाध्यव्यावृत्तिरपि सिध्यतीति । तदिदमुक्तम् — 'साध्यव्यापकत्वसाधनाव्यापकत्वे तत्र स्तः' इति ।

व्यापकनिवृत्तिमात्रस्य व्याप्यव्यतिरेकप्रयोजकतया साधनाव्यापकत्वस्य व्यर्थत्वमुच्यत इति भाति । तदयुक्तम् । धूमानुमाने वह्निसामग्र्या उपाधित्वा-पत्तेरित्यत आह—**विपक्षेति । तथापीत्यापाततः** । वस्तुतस्तु व्यभिचार[2]संशया-धायकतया तन्मते उपाधेर्दोषत्वेन स्वव्याघातकत्वाभावेन न जातित्वमिति बोध्यम् । चार्वाकमते तस्योपाधितया कथं तदभावस्तत्राह — **उपाधित्वेति** । दूषणसमर्थत्वे कथं तदभावाभ्युपगमस्तत्राह — **एवं चेति** । ननु पक्षेतरे [3]दूषकत्वाभावेऽपि लक्षणसत्त्वादतिव्याप्तिः स्यादित्यत आह — **पक्षेति** । ननु [4]'साध्याव्याप्यत्वं

---

1. क. 'अपि' नास्ति
2. ग. संशायकतया
3. क. दूषकाभावेऽपि
4. ख. साध्यव्यापकत्वं

अत एवानुमानमात्रोच्छेदकतया जातित्वान्न पक्षेतर उपाधिरित्यपास्तम् । दूषणसमर्थत्वेन जातित्वाभावात् । एतेन पक्षेतरव्यावृत्त्यर्थं प्रकारान्तरमपि निरस्तम् । उपाधित्वाभावेऽपि दूषणसमर्थत्वात् ।

अथोपाधिः स्वव्यतिरेकेण सत्प्रतिपक्षोत्थापकतया दूषणम् । पक्षेतरत्वव्यतिरेकश्च न साध्याभावसाधकः, असाधारणत्वात् । न तु व्यभिचारोन्नायकतया दूषणम् । यथा हि साध्यव्यापकोपाध्यव्याप्यतया हेतोः साध्याव्याप्यत्वं तथा साध्यव्याप्यहेत्वव्यापकतयोपाधेर्न साध्यव्यापकत्वमपि सिध्येत् । व्याप्तिग्राहकस्योभयत्रापि साम्येन विनिगमकविरहात् ।

---

## प्रकाशः

दूषणेति । यद्यप्युपाधिना व्यभिचारोन्नयनेऽपि[1] पक्षेतरस्योपाधित्वासम्भवेन[2] नास्य दूषणसमर्थत्वम् । तथाप्यापातत एव तदुक्तम् । प्रकारान्तरमिति । [3]तदन्यत्वे सतीत्यादिविशेषणमित्यर्थः । उपाधित्वाभावेऽपीति । उपाधित्वाभावाभ्युपगमेऽपीत्यर्थः । एवं च दूषणसमर्थत्वेनोपाधित्वमेव स्वीक्रियताम्, तद्व्यावृत्त्यर्थं किं प्रकारान्तरानु[4]सरणेनेत्यर्थः ।

पक्षेतरे दूषकताबीजमेव नास्ति । तथा च तद्व्यावृत्त्यर्थं प्रकारान्तरानुसरणमुचितमेवेत्याशयेन [5]शङ्कते — अथेति । न त्विति । व्याप्तिविरहोन्नायकतया

---

## तर्कचूडामणिः

हेतोः' इत्यग्रिमग्रन्थे व्याप्तिविरहानुन्नायकत्वे हेतुरुच्यते । तथा च [6]वैयधिकरण्यं, तत्राह —व्याप्तीति । एवमपि व्यभिचारानुन्नायकत्वे हेतोरनभिधानाद्वैयधिकरण्य-

---

1. क. 'अपि' नास्ति ।
2. ख. त्वसम्भवेन
3. क. 'तद्' नास्ति ।
4. क. सरणमित्यर्थः
5. क, आह
6. क. वैयर्ध्याधिकरण्यं

तस्माद्यथा साध्यव्याप्येन हेतुना साध्यं साधनीयं तथा साध्यव्यापकोपाधिव्यावृत्त्या साध्याभावोऽपि साधनीयो व्याप्तिग्रहतौल्यादिति दूषकताबीजम्। सोऽयं सत्प्रतिपक्ष एवेति। मैवम्। एवं हि सत्प्रतिपक्ष उपाध्युद्भावनं न स्यात्, सत्प्रतिपक्षान्तरवत्। किं चैवं बाधोन्नीतोऽपि पक्षेतरो नोपाधिः स्यात्, व्यतिरेकेऽसाधारण्यात्।

---

## प्रकाशः

चेत्यपि द्रष्टव्यम्। साध्याव्याप्यत्वमिति। साध्यव्यभिचारित्वं चेत्यपि द्रष्टव्यम्। एवं हीति। पक्षवृत्तिश्चैवमुपाधिर्न स्यादित्यपि द्रष्टव्यम्। इष्टापत्तिमाशङ्क्य दूषणान्तरमाह — किं चेति। [1]यद्यपि बाधोन्नीतपक्षेतरे नासाधारण्यम्। बाधेन व्यतिरेके पक्षस्यैव सपक्षत्वेन तद्व्यावृत्तत्वाभावात्। तथापि पक्षमात्रवृत्तिरसाधारण इति मताभिप्रायेणेदं बोध्यम्।

---

## तर्कचूडामणिः

मेवेत्यत आह—साध्येति। [2]पक्षेति। तमो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्र अश्रावणत्वमुपाधिर्न स्यादित्यर्थः। इष्टेति। न च [3]कथकसम्प्रदायविरोधः, तस्यैव सन्दिग्धत्वादिति भावः।

केचित्तु सत्प्रतिपक्षेऽपि तदुद्भावनं स्यादेव। अन्यतरबाधप्राप्तौ बहुबाधकल्पनात एकबाधकल्पनाया एव लघुत्वमिति विनिगमकप्रवृत्त्यर्थं तदुपन्याससम्भवादित्याहुः। तन्न। अनुकूलतर्कसत्त्वे एकस्यापि प्रबलत्वात्। तदसत्त्वे बहूनामप्यसाधकत्वात्। 'शतमप्यन्धानां न पश्यति' इति न्यायात्। अत एव 'व्याप्तिपक्षधर्मते बलम्' इति वक्ष्यति। व्यतिरेक इति। साध्यमान इति शेषः।

---

1. क. 'यद्यपि' नास्ति
2. श्र. 'पक्षेति' नास्ति
3. ख. ग. कथं सम्प्रदाय-

ननु बाधे नोपाधिनियमः, धूमेन ह्रदे वह्निसाधने तदभावात् । न तु हेतुमति पक्षे बाधे पक्षेतरोपाधिनियमः, प्रत्यक्षे वह्नौ कृतकत्वेनानुष्णत्वे साध्ये अतेजस्त्वादेरुपाधित्वसम्भवादिति चेत् —

---

## प्रकाशः

[अत्र] इष्टापत्तिं तटस्थः शङ्कते — **नन्विति**। **नोपाधिनियमः** न पक्षमात्रवृत्तिव्यतिरेकप्रतियोग्युपाधिनियमः । **अतेजस्त्वादेरिति**। तव्द्यतिरेकश्च न पक्षमात्रवृत्तिः, प्रदीपादावपि [1]तद्वृत्तेरिति भावः ।

**अतेजस्त्वं** विनेति । यद्यप्यत्रापि वह्नीतरत्वादिकमुपाधिर्भवत्येव, उपाधेर्नित्यदोषत्वात् । न च वह्नीतर[2]त्वव्यतिरेकस्य पक्षे [3]भागासिद्धतया [4]सत्प्रतिपक्षानुत्थापकतया [5]नोपाधित्वं तस्येति वाच्यम् । अतेजस्त्वसमनियतस्याप्यनेकस्योपाधित्वसम्भवात् । तथापि[6] पक्षमात्रवृत्तिव्यतिरेकप्रतियोग्युपाधिं विना अन्यस्योपाधेर-

---

## तर्कचूडामणिः

बाधोन्नीतस्य तस्योपाधित्वं न्यायमतेऽप्यस्तीति शङ्कानुपपत्तिरित्यत आह —**अत्रेति**। ननु बाधे पक्षापक्षवृत्तिव्यतिरेकप्रतियोग्युपाध्यङ्गीकारेऽपि न क्षतिः । तत्र व्यतिरेके असाधारण्याभावात् । किं च बाधे [7]उपाध्यनङ्गीकारे अतेजस्त्वादेरुपाधित्वसम्भवादित्यग्रिमग्रन्थविरोध इत्यत आह — **न पक्षेति**। यद्यपि साधनवत्यपि बाधे [8]न तन्नियमः, [9]गन्धप्रागभावस्थले व्यभिचारात् । तथापि तत्र बाधानङ्गीकारमतेन, अभ्युपगमवादेन वा एतदुक्तमिति ध्येयम् । [10]**अतेजस्त्वसमेति**। उष्णस्पर्शा-

---

1. क. 'तद्' नास्ति
2. क. 'त्व' नास्ति
3. ख. भागासिद्धितया
4. क. सत्प्रतिपक्षानुमापकतया
5. क. अनौपाधित्वम्
6. क. 'तथापि' नास्ति
7. ख. ऽपाधिनियमानङ्गीकारे
8. क. 'न' नास्ति
9. ग. 'गन्ध' नास्ति
10. ख. अतेजस्त्वेति

न। तेजोमात्रपक्षत्वे अतेजस्त्वं विना अन्यस्योपाधेरभावात्। किं च [अपि च] पर्वतावयववृत्त्यन्यत्वं पर्वतेतरद्रव्यत्वं ह्रदपर्वतसंयोगानाधारत्वं ह्रदपर्वतान्यत्वादिकमुपाधिः स्यादेव। व्यतिरेके असाधारण्याभावात्, व्यतिरेकिणा सत्प्रतिपक्षसम्भवाच्च।

---

## प्रकाशः

सम्भवादित्यर्थः। एतदपि शुद्धसाध्यव्यापकोपाधिमभिप्रेत्य। अन्यथा तेजोघटान्यतरत्वावच्छिन्नसाध्यव्यापकघटत्वाद्युपाधिसम्भवादसंगतिरेव स्यादिति ध्येयम्।

ननु [1]सपक्षव्यावृत्तत्वमेवासाधारण्यम्, न तु पक्षमात्रवृत्तित्वम्, केवलव्यतिरेकिविलयापत्तेः। तथा च न बाधोन्नीतस्थलेऽप्यसाधारण्यमित्यस्वरसादाह—**अपि चेति। ह्रदेति।** [2]एतच्च पर्वतो यत्र ह्रदसंयोगी तत्र बोध्यम्। **असाधारण्याभावादिति।** पर्वतावयवरूपादौ सपक्षेऽपि वृत्तेरिति भावः। **व्यतिरेकिणेति।**

---

## तर्कचूडामणिः

नाश्रयत्वादेरित्यर्थः। **तथापीति।** उष्णस्पर्शानाश्रयत्वादेरपि तादृशव्यतिरेकप्रतियोगित्वादित्यर्थः। **अन्यथेति।** घटत्वं तु न शुद्धसाध्यव्यापकम्, [3]पटादौ तद्व्यभिचारादित्यर्थः। व्यतिरेकिविलयापत्तेरित्यनन्तरं 'किं तु सपक्षव्यावृत्तत्वम्' इति शेषः।

ननु ह्रदपर्वतसंयोगानाधारत्वं नोपाधिः, व्यतिरेके असिद्ध्यापत्तेरित्यत आह—**पर्वत इति।** पर्वतावयववृत्तित्वस्यापि सपक्षीभूतह्रदादिव्यावृत्तत्वेनासाधारण्यमेवेत्यत आह—**पर्वतेति।** ननु पर्वतावयववृत्त्यन्यत्वरूपोपाधिव्यतिरेकस्य साध्या-

---

1. क पक्षमात्रवृत्तित्वं नासाधारण्यम्· व्यतिरेकविलया·
2. ख, 'एतच्च' नास्ति
3. ख. अश्वादौ

**न चासाधारण्यम्, तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वात् तस्मादुभयोरपि व्याप्तिग्राहकसाम्ये विरोधान्न व्याप्तिनिश्चयः। किं तूभयत्र**

---

## प्रकाशः

पर्वतेतरत्वादिव्यतिरेकिणि व्यतिरेकव्याप्तिपुरस्कारेण सत्प्रतिपक्षसम्भवादित्यर्थः।

**तस्यापीति**। असाधारण्यस्यापीत्यर्थः। तथा च सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवत् [1]तत्र सत्प्रतिपक्षेऽसाधारण्यं न दोषः। 'शतमप्यन्धानां न पश्यति' इति न्यायात्, एकेनापि बहूनां प्रतिबन्धाच्चेति भावः। नन्वेवमुपाधेर्दूषकतैव न स्यात्, व्यभिचारोन्नायकतापक्षस्य प्रागेव [2]निरस्तत्वात् सत्प्रतिपक्षोत्थापनस्य च त्वयैव दूषितत्वादित्याशङ्क्य उपसंहरति—**तस्मादिति**। **उभयोः**—साध्योपाध्योः साध्यसाधनयोश्चेत्यर्थः।

---

## तर्कचूडामणिः

भावेन सहान्वयव्याप्तिसत्त्वात् व्यतिरेकिणेत्यनुपपन्नम्। किं च स्वस्यैव व्यतिरेकितया व्यतिरेकिणेत्यनुपपत्तिस्तत्राह—**पर्वतेति**। तथा च पूर्वोक्तपर्वतेतरत्वस्योपाधित्वे व्यतिरेकिणेत्यस्य व्यतिरेकव्याप्तिपुरस्कारेणेत्यर्थः। **व्यतिरेकव्याप्तीति**। व्यतिरेकसहचारादन्वयव्याप्तिरेव गृह्यत इति पक्षे तद्ग्रहोऽपि सम्भवतीति ध्येयम्।

तथापि कथमसाधारण्यदोषपरिहार इत्यत आह—**तथा चेति**। ननु बहुत्वात् प्राबल्यमित्याशङ्क्य किमनुकूलतर्के सति, उत न। अन्त्ये आह—**शतमिति**। आद्ये—**एकेनेति**। दूषकताबीजान्तरसद्भावे कथं [3]संशायकतया दूषकताभिधानमित्यत आह—**नन्वेवमिति**। उपाधौ न साध्यव्याप्तिग्रहसामग्री, तस्य व्यापकत्वात्, तद्व्याप्तिग्रहस्य हेतुनिष्ठव्याप्तिग्रहाविरोधित्वाच्चेत्यत आह—**उभयोरिति**।

---

1. ख. तत्रासाधारणो न दोषः
2. ख. दूषितत्वात् सत्प्रतिपक्षोत्थापकत्वस्य
3. ख. संशयतया

व्यभिचारसंशयः। तथा च व्यभिचारसंशयाधायकत्वेनोपाधेर्दूषकत्वम्। तच्च पक्षेतरेऽप्यस्ति। तदुक्तम्। उपाधेरेव व्यभिचारशङ्केति।

भवतु वोक्तन्यायेन सकलानुमानभङ्गभिया पक्षेतरोऽनुपाधिः तथापि लक्षणमतिव्यापकम्। नापि साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वमुपाधित्वम्। दूषकताबीजस्य व्यभिचारोन्नयनस्य तत्प्रतिपक्षस्य वा साम्येन विषमव्याप्तस्याप्युपाधित्वात्। तथा दूषकतायां साध्यव्याप्यत्वस्याप्रयोजकत्वाच्च।

---

## प्रकाशः

तच्चेति। तथा च तद्वारणार्थं विशेषणं व्यर्थमित्यर्थः। पक्षेतरमात्रस्योपाधित्वे[1] तेनासाधकतानुमानेऽपि स एव दोष इत्यभिप्रायेण परस्तत्रातिव्याप्तिं परिहृत्य पुनरतिव्याप्तिदोषमालम्बते---भवतु वेति। आचार्यलक्षणं दूषयितुमाह---नापीति। पर्वतेतरत्वादिकं च न समव्याप्तमिति न तत्रातिव्याप्तिरिति भावः। विषमेति। तथा च तत्राव्याप्तिरिति भावः। तत्र साधनावच्छिन्नसाध्यव्यापकोपाध्यव्याप्ति[2]रपि बोध्या।

---

## तर्कचूडामणिः

तथापि लक्षणे किं दूषणमायातमित्यत आह---तथा चेति। सकलानुमानभङ्गेऽपि चार्वाकस्य न क्षतिरित्यत आह---पक्षेतरेति। यद्यपि व्यतिरेके असाधारण्याभावे सतीति विशेषणान्नाव्याप्तिः। तथापि पर्वतावयववृत्त्यन्यत्वादौ अतिव्याप्तिरिति भावः। समपदप्रयोजनमाह---पर्वतेति। साधनावच्छिन्नेति। पक्षधर्मावच्छिन्नेत्यपि बोध्यम्। ननु पूर्वोक्ताव्याप्तिसत्त्वे प्रयोजकत्वमपि न लक्षणमिति अथेतिग्रन्थानुपपत्तिरत आह---समेति। तस्मिन् सत्यभवत इत्यादिना कार्यकारण-

---

1. क. त्वेनासाधकतासाधकानुमानेऽपि 2. क. रिति बोध्यम्

अथ साध्यप्रयोजको धर्म उपाधिः । प्रयोजकत्वं च न न्यूनाधिकदेशवृत्तेः । तस्मिन् सत्यभवतः तेन विनापि भवतः तदप्रयोजकत्वात् । अन्यथा पक्षेतरस्याप्युपाधित्वप्रसङ्गादिति चेत् — न । दूषणौपयिकं हि प्रयोजकत्वमिह विवक्षितम् । तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमेवेति तदेव प्रयोजकम्, नत्वधिकं व्यर्थत्वात् ।

---

## प्रकाशः

समव्याप्तस्यैवोपाधित्वमित्यत्र उपपादकमाशङ्कते — अथेति । अभवतः— अविद्यमानस्य । [1]भवतः— विद्यमानस्य । अन्यथा — विषमव्याप्तस्योपाधित्वे । पक्षेतरस्यापीति । साधनावच्छिन्नपक्षेतरस्येत्यर्थः । यद्यपि तत्र साध्यव्यापकतापि नास्ति पक्ष एव व्यभिचारात् । तथापि पक्षातिरिक्तसाध्यव्यापकत्वाभिप्रायेण [2]इदं [3]बोद्धव्यम् । एवं सति पर्वतेतरवृत्तिवह्निसामग्र्यादेरुपाधित्वं स्यादेव, पक्षातिरिक्तसाध्य[4]समव्याप्तत्वादिति दूषणे सत्येव दूषणान्तरमाह — दूषणेति ।

---

## तर्कचूडामणिः

योरेव प्रयोज्यप्रयोजकतोच्यत इति प्रतिभाति । न च तद्युक्तम् । निषिद्धत्वादेरधर्मसाधकताप्रयोजकतापत्तेरित्यत आह—अभवत इति । तेन विनापि भवतस्तत्प्रयोज्यत्वमन्यथाशब्दार्थ इति भ्रमं वारयति — विषमेति । एवं सति केवलान्वयिनि पक्षेतरत्वमुपाधिः स्यात्, तस्य [5]साध्यसमव्याप्तत्वात् । न च तत्र साध्याभावाप्रसिद्ध्या व्यभिचारसत्प्रतिपक्षोन्नायकताया असम्भवात् नोपाधित्वमिति वाच्यम् । तथापि लक्षणस्य तत्रातिव्याप्तेः । [6]न हि व्यभिचाराद्युन्नायकत्वमपि लक्षणशरीर-

---

1. क. 'भवतः विद्यमानस्य' नास्ति
2. क. 'इदं' नास्ति
3. ख. बोध्यम्
4. ख. समत्वात्
5. ख. साध्यव्याप्तत्वात्
6. ख. 'न हि'.........नातिव्याप्तिः स्यात् । नास्ति

अथोपाधिः [ननूपाधिः] स उच्यते यद्धर्मोऽन्यत्र प्रतिबिम्बते, यथा जपाकुसुमं स्फटिकलौहित्ये उपाधिः । तथा चोपाधिवृत्तिव्याप्यत्वं हेतुत्वाभिमते चकास्ति, तेनासावुपाधिः । न च व्याप्यत्वमात्रेणादूपकत्वमिति साध्यव्यापकतापीष्यते । तथा च समव्याप्त एवोपाधिरिति चेत्— तत् किं

## प्रकाशः

पुनस्तदेव शङ्कते—नन्विति । स्ववृत्तिधर्मोपसंक्रामकत्वरूपोपाधिपदप्रवृत्तिनिमित्तानुरोधात् [1]साध्यव्याप्यत्वम्, व्यभिचारोन्नयनार्थं च साध्यव्यापकत्वमिति अर्थात् समव्याप्त एवोपाधिरित्यर्थः । ननु विषमव्याप्तस्यापि स्वधर्मोऽन्यत्र [2]दोषवशादारोप्यत एवेति कथं तस्य न लक्ष्यता । न च व्याप्तिरूपधर्मसंक्रामकत्वं तत्पदप्रवृत्ति-

## तर्कचूडामणिः

निविष्टम्, येन तदभावान्नातिव्याप्तिः स्यात् । साध्यात्यन्ताभावसामानाधिकरण्यरूपव्यभिचाराप्रसिद्धावपि साधनसमानाधिकरणात्यन्ताभावप्रतियोगिसाध्यकत्वरूपव्यभिचारप्रसिद्धया तदुन्नयनसम्भवाच्चेति दोषे सत्येव दोषान्तरमाह—एवं सतीति ।

तदेवेति । समव्याप्तस्यैवोपाधित्वमित्यत्रोपपादकमित्यर्थः । नन्वेवं [3]साध्यव्याप्यत्वं व्यर्थम्, [4]साध्यव्यापकत्वमात्रेणैवोपाधिशब्दवाच्यतासिद्धेरित्यत आह—स्ववृत्तीति । ननु रजतादेरपि शुक्तिविशेष्यकरजतत्वारोपहेतुभूतज्ञानविषयरजतत्वादिधर्मवत्तया रजतादावप्युपाधिपदप्रयोगापत्तिः । [5]प्रतिबिम्बादिभ्रमे जलादेः स्ववृत्तिधर्मोपसंक्रामकत्वाभावादुपाधिपदवाच्यतानुपपत्तिः । न हि तत्र वृक्षादावारोप्यमयोग्रत्वादि ? जलादिनिष्ठमिति दोषे सत्येव दोषान्तरमाह—नन्विति । ननु लाभादा-

1. क साध्यव्यापकत्वं
2. ख. वह्नयादौ दोष-
3. ग. क. साध्यव्यापकत्वं
4. ग. साध्याव्यापकत्व-
5. ख 'प्रतिबिम्बादि............ तत्प्रयोगोपपत्तिः' नास्ति ।

विषमव्याप्तस्य दूषकताबीजाभावान्नोपाधिशब्दवाच्यत्वम् ? तथात्वेऽप्युपाधिपदप्रवृत्तिनिमित्ताभावाद्वा ? नाद्यः । तस्यापि व्यभिचाराद्युन्नायकत्वात् । नापरः, न हि लोके समव्याप्त एवान्यत्र स्वधर्मप्रतिबिम्बजनके एवोपाधिपदप्रयोगः । लाभाद्युपाधिना कृतमित्यादौ लाभादावुपाधिपदप्रयोगात् ।

## प्रकाशः

निमित्तमिति वाच्यम् । दृष्टान्ते जपाकुसुमादावभावादिति दूषणे सत्येव दूषणान्तरमाह—तत्किमिति । [1]लाभादाविति । तद्वदेव विषमव्याप्तेऽपि उपाधिपदप्रयोगे विरोधाभावादिति भावः । ननु लोकव्यवहारानुमेयः संकेतः । [2]न च लाभादाविवात्र [3]लौकिकव्यवहार इत्यत आह — किं चेति । लौकिकव्यवहाराभावेऽपि परीक्षकव्यवहारादत्रोपाधिपदवाच्यत्वमिति भावः ।

## तर्कचूडामणिः

युक्तप्रवृत्तिनिमित्ताभावेऽपि निमित्तान्तरबलात् तत्प्रयोगोपपत्तिः, तस्य नानार्थत्वादित्यत आह—तद्वदेवेति । विषमव्याप्तेऽपि शक्त्यन्तरकल्पने बाधकाभावादिति भावः । साधकाभाव एव बाधक इति शङ्कते—नन्विति । लौकिकेति । व्यवहारमात्रमेव व्युत्पत्तिग्राहकम्, न तु लौकिकत्वविशेषितं गौरवादिति भावः । एतच्च प्रौढिवादेन बोध्यम् ।

वस्तुतस्तस्य तत्पदवाच्यत्वाभावेऽपि शास्त्रीयोपाधिपदप्रयोगविषयत्वमक्षतमेव । व्यभिचाराद्युन्नायकतया दूषकत्वमात्रेण लक्षणया तत्र प्रयोगसम्भवात् । अत एव विषमव्याप्तस्तु नोपाधिपदवाच्य इति ग्रन्थकृतोक्त इति ध्येयम् ।

1. ख 'लाभादाविति- .......... विरोधाभावादिति भावः' नास्ति । 2. क. 'न च' नास्ति 3. क. लोकव्यवहारः

किं च न शास्त्रे लौकिकव्यवहारार्थमुपाधिव्युत्पादनम्, किं त्वनुमानदूषणार्थम्। तच्च साध्यव्यापकत्वे सति साधनाव्यापकत्वमात्रमिति शास्त्रे तत्रैवोपाधिपदप्रयोगः।

---

## प्रकाशः

समव्याप्तस्यैवोपाधित्वमुपपादयितुं कस्यचिन्मतमाह —अन्ये त्विति। यस्य साध्यव्यापकस्य साधनाव्यापकतया अभावः [1]साधनव्यापकत्वमिति यावत्। [2]एतदपि प्रसञ्जितं बोद्धव्यम्। अन्यथा असम्भवात्, उपाधेः साधनाव्यापकत्वात्। एवं च सति यदि येन प्रसञ्जितेन साधनव्यापकत्वेन हेतुसाध्ययोर्व्यभिचाराभाव

---

## तर्कचूडामणिः

ननु विषमव्याप्तोपाध्यभावोऽपि[3] व्यभिचारविरोध्येवेति कथं विषमव्याप्तोपाधि[4]निरासः इत्यत आह—यस्येति। नञ्द्वयवैयर्थ्यादाह—साधनेति। प्रसञ्जने हेतुमाह—अन्यथेति। ननु प्रसञ्जितस्य तस्य न [5]व्यभिचारविरोधित्वम्, उपाधेः साधनव्यापकत्वप्रसञ्जनेऽपि साध्यसाधनयोर्व्यभिचारानपायात्। किं च वह्निसामग्रीनिष्ठसाधनव्यापकत्वमपि साध्यसाधनव्यभिचारविरोधीति धूमानुमाने तत्सामग्र्या उपाधितापत्तिरित्यत आह—एवं चेति। साध्यसाधन[6]व्यभिचाराभावापादकसाधनव्यापकत्वप्रसञ्जनविषयत्वस्य लक्षणत्व इत्यर्थः। ननु तद्व्यापक [7]व्याप्यस्य [8]तद्व्याप्यत्वानियमात् कथमापादानमित्यत आह—जन्येति। विरोधाभावादिति। प्रमेयभावत्वस्य विनाश्यतावच्छेदकत्वादिति भावः। ननु व्यभिचारे विषमव्याप्तस्य यस्य

---

1. क. साधनाव्यापक-
2. ख. तदपि
3. क अभावेऽपि
4. ग. निषेधः
5. क. ख. व्यभिचारि-
6. ग. व्यभिचारापादक-
7. क. व्याप्यत्वस्य
8. ख. तद्व्याप्यत्वनियमात्

अन्ये तु यदभावो व्यभिचारविरोधी स उपाधिः। न च विषमव्याप्तस्याभावो व्यभिचारं निरुणद्धि। तस्याभावेऽपि व्यभिचारात्। अस्ति ह्यनित्यत्वव्यापकं प्रमेयत्वम्, तद्व्याप्यं च गुणत्वम्। न चानित्यत्वगुणत्वयोर्व्याप्तिरस्ति। समव्याप्तिकस्य च व्यतिरेकस्तथा। न हि साध्यव्यापकव्याप्यीभूतस्य व्याप्यं यत् तत् साध्यं व्यभिचरति।

---

## प्रकाशः

आपादयितुं [1]शक्यते स साधनाव्यापकस्तत्र हेतावुपाधिरित्यर्थः। तादृशश्च समव्याप्त एव। तस्य [2]साध्यव्याप्यतया तद्व्याप्यत्वेन हेतोः साध्यव्यभिचाराभावनियमात्, व्याप्यव्याप्यस्य सुतरां व्याप्यत्वात्।

नन्वेवं ध्वंसो विनाशी जन्यत्वादित्यत्र विषमव्याप्ते भावत्वोपाधावतिव्याप्तिः[3]। जन्यत्वं यदि भावत्वव्याप्यं स्यात् विनाशित्वव्यभिचारि न स्यादित्यापादनसम्भवात् [4]जन्यभावत्वस्यैव नाश्यतावच्छेदकत्वादिति चेत्—न। यद्व्याप्यत्वं सर्वत्र साधने तत्साध्यव्यभिचाराभावमापादयति तत्त्वस्य विवक्षितत्वात्। भावत्वव्याप्यत्वं च प्रमेयत्वादौ प्रसञ्जितं न तमापादयति, प्रमेयत्वस्य भावत्वव्याप्यत्वेऽपि विनाशित्वव्यभिचारे विरोधाभावादिति।

**तस्याभावेऽपीति**। विषमव्याप्तस्य साधनव्यापकत्वेऽपीत्यर्थः। व्यतिरेक इति। साधनव्यापकत्वमित्यर्थः।

---

## तर्कचूडामणिः

कस्यचिदावश्यकतया 'तस्याभावेऽपि' इति ग्रन्थानुपपत्तिरत आह—**विषमेति**। तस्य साधनव्यापकत्वे प्रसञ्जितेऽपि साधने व्यभिचाराभावप्रसञ्जनाभावादिति मूलार्थः।

---

1. क. शङ्क्यते
2. क. साध्यव्यापकतया
3. क. अव्याप्तिः
4. क. जन्यत्वे सति भावत्वस्यैव विनाशिताव-

व्यभिचारे चानततस्साध्यमेवोपाधिः, अभेदेऽपि व्याप्यव्यापकत्वात् साधनाव्यापकत्वादिति स्वीचक्रुः ।

---

## प्रकाशः

ननु सर्वत्र समव्याप्तस्याभावात् व्यभिचारे चावश्यमुपाधिरिति [1]भग्नमित्यत आह— व्यभिचार इति । वस्तुतस्तु साध्यसम[2]नियतमनेकं तथा भवतीति ध्येयम् । एवमपि साध्यव्यापकत्वस्योपाधौ व्यर्थत्वात् समव्याप्तस्यैवोपाधित्वमिति[3] भग्नमेवेत्याह —तत्रापीति । न चेष्टापत्तिरित्याह— न चेति । [4]तथा चेति । साध्यव्याप्यत्वनिश्चयस्य व्याप्तिलक्षणीभूतानोपाधिकत्वज्ञानाधीनत्वादिति भावः । एतच्चानौपा-

---

## तर्कचूडामणिः

समव्याप्तोपाधौ साधनव्यापकत्वमेव व्यभिचारविरोधीत्युक्तम् । अत्र तूपाध्यभाव इति विरोध इत्यत आह—साधनव्यापकत्वमिति । निषिद्धत्वादेः साध्यभिन्नस्याप्युपाधित्वात् साध्यमेवेति कथमुक्तमित्यत आह—नन्विति । तथा च साध्यमुपाधिरेवेति मूलग्रन्थार्थ इति भावः । ननु साध्यं नोपाधिः, व्यभिचारसत्प्रतिपक्षोन्नायकत्वाभावात् । न हि साध्यव्यभिचारतद्विरहाभ्यां साधने पक्षे वा साध्यव्यभिचारतद्विरहयोरुन्नयनं सम्भवति । साध्यव्यभिचारतद्विरहयोर्निश्चये अनुमितिवैयर्थ्यात् । तदनिश्चये अनुमानायोगादित्यस्वरसादाह —वस्तुत इति । [5]साध्यव्याप्यत्वस्याव्यभिचारप्रयोजकत्वेऽपि न विषमव्याप्तस्योपाधित्वम्, [6]साध्यव्याप्यत्वाभावादित्याशङ्क्य पराभिमतमेव खण्डयतीत्याह —एवमिति । व्यर्थत्वादिति । साध्यसाधनाव्यभिचारानापादकत्वादिति भावः । न चेष्टापत्तिरिति । यद्यपि साध्यव्याप्याव्याप्यस्य

---

1. ख. अत्रापि भग्नम्
2. क नियतमेकं
3. क. 'इति' नास्ति ।
4. क. 'तथा चेति' नास्ति ।
5. साध्यव्याप्यव्याप्यत्वस्य
6. क. साध्यव्यापकत्वात्
   ग. साध्यव्याप्यत्वात्

तन्न। तत्रापि ह्यव्यभिचारे साध्यव्याप्यव्याप्यत्वं तन्त्रम्, आवश्यकत्वात् लाघवाच्च न तु साध्यव्यापकव्याप्यत्वमपि, भवतैव व्यभिचारस्य दर्शितत्वात्। न च साध्यव्याप्यव्याप्यत्वमेव अनौपाधिकत्वम्। साध्यव्याप्यमित्यत्रापि हि अनौपाधिकत्वं तदेव साध्यम्। तथा चानवस्थेति।

**प्रकाशः**

धिकत्वज्ञानं व्याप्तिग्राहेतुरिति मतमवलम्ब्योक्तम्। तत्किं साध्यव्यापकव्याप्यत्वमेवानौपाधिकत्वम्। तथा च न तत् व्याप्तिलक्षणं स्यात् इत्युक्तगुणत्वाद्यतिव्याप्तिः स्यादित्यत आह — **अनौपाधिकत्वे चेति**। तथा च यावत्साध्यव्यापक[1]व्याप्यत्वं तत्त्वम्। तच्च नातिव्याप्तमिति भावः। **तदेवेति**। तथा च विषमव्याप्तस्यापि तथा-

**तर्कचूडामणिः**

सोपाधित्वे धूमस्यापि वह्निव्याप्यालोकाव्याप्यस्य सोपाधितापत्तिः। तथापि साध्यव्याप्यत्वावच्छिन्नाव्याप्यत्वं तत्। न च धूमादेस्तथात्वम्। वह्निव्याप्यधूमसामग्र्यास्तद्व्यापकत्वादितीष्टापत्तिश्चादिहृदयम्। [2]भवेदुक्ताव्याप्यत्वमुपाधिः, यदि [3]साध्यव्याप्यव्याप्यत्वमनौपाधिकत्वम्, तदेवायुक्तमिति परिहर्तुर्हृदयं वेदितव्यम्।

[4]साध्यव्याप्यत्वमित्यत्र प्रविष्टाया व्याप्तेरन्योन्याभावादिगर्भत्वेनानौपाधिकत्वस्याप्रवेशेन तत्रापीति मूलानुपपत्तिरित्यत आह — **साध्येति**। **लक्षणीभूतेति**। ज्ञापकीभूतेत्यर्थः। अनौपाधिकत्वज्ञानं न हेतुरित्युक्तम्। तथा च नानवस्थेत्यत आह—**एतच्चेति**। वस्तुतः साध्यव्याप्याव्याप्यत्वं न सोपाधित्वम्। तथा सत्युपाधेरदोषत्वापत्तेः। हेतौ साध्यव्याप्यत्व[5]विरहमनवगम्य साध्यव्याप्यत्वावच्छिन्नव्याप्ति-

1. ख. 'व्याप्य' नास्ति।
2. क भवेदुक्तव्याप्य-
3. ख साध्यव्याप्याव्याप्य-
4. ख. साध्याव्याप्यत्व-
5. ख. 'विरह' नास्ति।

अनौपाधिकत्वे च व्याप्तिलक्षणे यावदिति पदं साध्यव्यापके विशेषणं दत्त-मेव । किं च यस्मिन् सत्यनुमितिर्न भवति तदेव तत्र दूषणम् । न तु यव्द्यतिरेके भवत्येवेत्येतद्धर्मम् । विरुद्धत्वादेरप्यदोषत्वापत्तेः । नापि पक्ष-

## प्रकाशः

त्वाद्दूषणत्वमिति भावः । **न तु यव्द्यतिरेक इति** । ननु समव्याप्तव्यतिरेके व्यभिचाराभावनियमेऽपि [1]तथात्वमिति नियमो नास्ति, [2]ह्रदो वह्निमान् [3]धूमवत्त्वादित्यादौ तादृशापाधेरभावेऽपि स्वरूपासिद्धया अनुमित्यभावादिति चेत् — न । पक्षवृत्तित्वे बाधप्रतिरोधाभावेऽपि च यव्द्यतिरेके [4]लिङ्गसमीचीनत्वनियमस्तदेव तत्र दूषणमित्यर्थात् । **विरुद्धत्वादेरिति** । आदिपदात् [5]व्यभिचारित्वादिपरिग्रहः । अन्यतरव्यतिरेकेऽप्यन्यतरसत्त्वे लिङ्गस्यासमीचीनत्वादित्यर्थः । यद्यपि यव्द्यतिरेके भवत्येव व्यभि-

## तर्कचूडामणिः

विरहस्यावगमायोगात्, तदवगमे तस्यैव दोषत्वमिति भावः । **तत्किमिति** । साध्य-[6]व्याप्यव्याप्यत्वं निराकुर्वता साध्यव्यापकव्याप्यत्वमनौपाधिकत्वं वाच्यमिति भावः । ननु नेदं दूषकताबीजम्, येन तज्ज्ञानापेक्षायामनवस्था । किं तु यद्धत्त्वेनोपस्थितस्य साधनाव्यापकत्वाभावो व्यभिचारविरोधी तद्धर्मवत्त्वे सति तद्धर्मविशिष्टत्वं प्रवृत्ति-निमित्तम् । न च साध्यव्यापकत्वविशिष्टस्य साधनाव्यापकत्वाभावस्तथेति न विषम-व्याप्त उपाधिरित्यनुशयात् **किं चेत्युक्तम्** । तथापि यद्धत्त्वेनोपस्थितस्य यद्धर्मे सति व्यभिचार इत्येव विषमव्याप्तसाधारणप्रवृत्तिनिमित्तमुचितम्, न तु तद्व्यावृत्तं गुरुतर-

1. ख. अनुमितिनियमः
2. ख. जलह्रदः
3. क. धूमवत्त्वादित्यत्र
4. ख. लिङ्गस्य समीचीनत्व-
5. ख. व्यभिचारादि-
6. ख. व्याप्याव्याप्यत्वं

धर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम् । साधनावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तत्वात् ।

## प्रकाशः

चागभाव [1]इत्यर्थे यथाश्रुतेनैवोपपत्तिः, युक्तं च तथा, व्यभिचारविरोधीत्यनेन पूर्वपक्षे तथैवोक्तत्वेन तस्यैव निराकर्तुमुचितत्वात् । तथापि कुसुमाञ्जलिप्रकारानुरोधादेवं व्याख्यातम् । तत्रानुमितिपदस्य कण्ठरवेणैवाभिधानात् । साधनावच्छिन्नेति । [2]प्रागभावो विनाशी जन्यत्वादित्यत्र भावत्वाद्युपाध्यावव्याप्तमित्यर्थः ।

## तर्कचूडामणिः

मित्यप्यभिप्रायो द्रष्टव्यः । ततः किमायातमित्यत आह—तथा चेति । तथात्वमिति । अनुमितिनियम इत्यर्थः । स्वरूपासिद्ध्यर्थेति । बाधप्रतिरोधाभ्यामित्यपि[3] द्रष्टव्यम् । अत एव बाधप्रतिरोधाभावेऽपि च इत्युक्तम् । लिङ्गसमीचीनत्वेति । हेत्वाभासशून्यत्वेत्यर्थः । यथाश्रुतेनेति । [4]पक्षवृत्तित्वादिविशेषणं विनेत्यर्थः । तथापीत्यापाततः । उक्तन्यायेनानुमितिपदस्य तत्रापि व्यभिचाराभावपरतया व्याख्यानसम्भवादिति ध्येयम् । ध्वंसपक्षकविनाशित्वसाध्यकजन्यत्वानुमाने साधनस्यापि पक्षधर्मत्वान्न व्याप्तिरित्यत आह—प्रागभाव इति । न च तत्पक्षकानुमाने तदनुपाधित्वमिष्टमेवेति वाच्यम् । तस्य नित्यदोषत्वादिति भावः ।

ननु तत्रापि प्रागभावजन्यान्यतरत्वस्य पक्षधर्मस्यैवावच्छेदकत्वसम्भवान्नाव्याप्तिः । तस्यापि पक्षादन्यत्र साध्यव्यापकत्वात् । न चानादिमात्रपक्षके जन्यत्वहेतौ न पक्षधर्मस्यावच्छेदकत्वम् । अनादिजन्यान्यतरत्वस्याप्रसिद्ध्या अवच्छेदकत्वासम्भ-

1. ख. इत्यर्थत्वे
2. ख. अत्यन्ताभावः
3. ख. ग. 'अपि' नास्ति ।
4. ग. विपक्ष-

शब्दोऽभिधेयः प्रमेयत्वादित्यत्र अश्रावणत्वस्योपाधित्वापत्तेश्च। शब्दधर्मिकाभिधेयत्वं यत्र रूपादौ तत्र अश्रावणत्वं व्यापकम्, पक्षे प्रमेयत्वस्य साधनस्याव्यापकं हि तत्। आर्द्रेन्धनवत्त्वादावुपाधौ पक्षनियतताहशधर्माभावाच्च।

## प्रकाशः

अन्ये तु न लक्षणमात्रनिर्वचनमिह प्रकृतम्। किं तु येन रूपेण ज्ञात उपाधिर्हेतुदोषः तेन रूपेण तस्य निर्वचनम्। न चोक्तेनैव रूपेण ज्ञातस्तथा। [1]तथात्वेनाज्ञातस्यापि साधनावच्छिन्नसाध्यव्यापकत्वे। [2]ज्ञातस्य भावत्वादेस्तत्रोपाधित्वेन [3]दोषत्वादिति भाव [4]इत्याहुः।

शब्दोऽभिधेय इति। एतच्च पक्षातिरिक्तसाध्यव्यापकत्वमादाय द्रष्टव्यम्। [5]आर्द्रेन्धनवत्त्वादाविति। यद्यपि [6]द्रव्यत्वादे तत्रावच्छेदकत्वं सम्भवति, अन्यथा सिद्धान्तेऽप्यगतेः। तथापि तेन रूपेण ज्ञातस्यापि शुद्धसाध्यव्यापकत्वेनैव[7] ज्ञातस्य

## तर्कचूडामणिः

वादिति वाच्यम्। अनादित्वजन्यत्वान्यतरधर्मवत्त्वस्यैव अवच्छेदकत्वसम्भवात्। अत्यन्ताभावजन्यान्यतरत्वस्यैवावच्छेदकत्वसम्भवाच्च। पक्षैकदेशवृत्तेरपि पक्ष[8]धर्मतया साधनस्यापि पक्षधर्मत्वादित्यरुचेराह—अन्ये त्विति। किं तु येनेति। अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यत इत्यग्रिमग्रन्थस्वरसादिति भावः। तत्रेति। ध्वंसो विनाशीत्यत्रेत्यर्थः। नन्वनुमितिप्रतिबन्धकज्ञानाविषयोपाधि-

1. ख. तत्त्वेन
2. ख. ज्ञायमानस्य
3. क दोषत्वाभाव इत्याहुः
4. ख. 'इत्याहुः' नास्ति
5. ख. आर्द्रेति
6. ख. द्रव्यत्वादौ तदवच्छेदकत्वं
7. क. 'एव' नास्ति
8. ख. धर्मत्वात् पक्षधर्मपदस्य साधनसमानाधिकरणधर्मपरत्वादित्यरुचेराह

अथ साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः । तेन ध्वंसस्य जन्यत्वेन ध्वंसप्रतियोगित्वे साध्ये साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः, श्यामत्वे शाकाद्यन्नजत्वमुपाधिरिति । तन्न । पक्षधर्मावच्छिन्नसाध्यव्यापकस्योपाधेरव्यापनात् । जलं प्रमेयं रसवत्त्वादित्यत्र रसवत्त्वावच्छिन्नसाध्यव्यापकपृथिवीत्वस्योपाधित्वप्रसङ्गात् । सोपाधित्वादसाधकमित्यत्र साधनावच्छिन्नसाध्यव्यापकव्यभिचारित्वे वा साधनावच्छिन्नेत्यस्य व्यर्थत्वप्रसङ्गाच्च ।

---

## प्रकाशः

दोषत्वादिति भावः । तथा च येन रूपेण ज्ञातस्य दोषत्वं तन्निर्वचनं यदीदं, तदेदं दूषणं द्रष्टव्यम् । यद्वा अवच्छेदकस्य [1]साध्ये उपाधिव्याप्यतावच्छेदकमभिप्रेत्यैतदुक्तम् । तथा चार्द्रेन्धनव्याप्यतावच्छेदकं [2]धूमे धूमत्वमेव, न त्वन्यत्, गौरवादिति भावः । [3]पक्षेति । वायुः प्रत्यक्षः वायुत्वात् प्रमेयत्वाद्वा इत्यादावुद्भूतरूपवत्त्वाद्युपाधौ अव्यापनादित्यर्थः । इदमपि पक्षातिरिक्तसाध्यव्यापकतामाश्रित्यैव । परमार्थतस्त्वव्याप्तिरेव दूषणं ज्ञेयम् ।

---

## तर्कचूडामणिः

स्वरूपमपि सिद्धान्ते निरूपयिष्यत एवेत्यनुशयादाह—यद्वेति । ननु वायुप्रत्यक्षत्वानुमाने प्रत्यक्षस्पर्शाश्रयत्वरूपसाधनावच्छिन्नव्यापकमस्त्येवेति नाव्याप्तिरित्यत आह—वायुरिति । वायुत्वादिति । तत्र साधनावच्छिन्नसाध्याप्रसिद्धेरित्यर्थः । यदि विरुद्धत्वादसाधारणत्वाद्वा नोपाधिनियमः तदा हेत्वन्तरमाह—प्रमेयत्वादिति । तर्कबलात् पक्षे साध्यनिश्चये कथमुपाधिरित्यनुशयादाह—परमार्थत इति ।

---

1. ख. साध्यव्याप्यता-
2. क. 'धूमे' नास्ति ।
3. ख. पक्षधर्मेति

किं च पक्षद्वयेऽपि विशिष्टसाध्यव्यभिचारं विशिष्टसाध्यव्यतिरेकं वा प्रसाध्य पश्चात् केवलसाध्यव्यभिचारः केवलसाध्यव्यतिरेको वा साधनीयः । तथा चार्थान्तरम् । केवलसाध्ये हि विवादो न तु विशिष्टे ।

---

## प्रकाशः

ननु [1]व्यभिचारित्वस्याभावगर्भतया, अखण्डाभावे न वैयर्थ्यम् । अन्यथा साध्यव्यापकव्यभिचारित्वादित्यत्रापि [2]साध्यव्यभिचारित्वमात्रस्यैव व्याप्यतया उपाधिनामाधिकतासाधनं न स्यादित्यनुशयेनाह—किं चेति ।

परम्परया तत्रोपयोगान्नार्थान्तरमिति शङ्कते—अथेति । अप्राप्तकालत्वादिति । तदानीं विशिष्टव्यभिचारस्यानाकाङ्क्षितस्याभिधानादिति भावः । [3]तत्रासिद्धाविति । शुद्धसाध्यव्यभिचार[4]लिङ्गिभूतविशिष्टसाध्यव्यभिचारसिद्ध्यर्थम् उपाधिरुद्भाव्य इत्यर्थः । तर्हीति । साक्षादेव शुद्धसाध्यव्यभिचारोन्नायकस्योपाधित्वेन

---

## तर्कचूडामणिः

अन्यथेति । यद्यपि साध्यव्यापकव्यभिचारित्वादित्यत्र साध्यस्य व्यापकविशेषणतया न यथोक्तविशेषणविशेष्यभावे वैयर्थ्यम्, साधनावच्छिन्नेत्यादौ त्ववच्छिन्नपदं व्यर्थमेव । तथाप्यखण्डाभावे न वैयर्थ्यमित्यत्रैव तात्पर्यं बोध्यम् । शुद्धसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टव्यभिचारस्याकाङ्क्षितत्वेन कथमप्राप्तकालत्वमित्यत आह—तदानीमिति । उपाधेः शुद्धसाध्यव्यभिचारालिङ्गत्वात् कथं तत्रासिद्धावुपाधिरित्युक्तमित्यत आह—शुद्धसाध्येति । परम्परयापि व्यभिचारोन्नायकतया उपाधेर्दोषत्वं स्यादित्यत आह—साक्षादिति । ननु साध्यव्यापकव्यभिचारापेक्षया

---

1. ख. व्यभिचारित्वादित्यस्य
2. ख. साध्यव्यभिचारमात्रस्य
3. क. तत्रेति
4. क. लिङ्गीभूत—

अथ प्रकृतसाध्यव्यभिचारसिद्ध्यर्थं विशिष्टसाध्यव्यभिचारः साध्य इति चेत्--न। अप्राप्तकालत्वात्। प्रथमं साध्यव्यभिचार एवोद्भाव्यः, तत्रासिद्धावुपाधिरिति चेत्—तर्हि प्रकृतानुमाने नोपाधिः दूषणं स्यात्। किं च साध्यव्यभिचारहेतुत्वेन पक्षधर्मावच्छिन्नसाध्यव्यापकव्यभिचार एवोद्भावनीयो नोपाधिः।

स्यादेतत्। पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः। पर्यवसितं साध्यं पक्षधर्मताबललभ्यम्। यथा शब्दोऽनित्यत्वातिरिक्त-

---

## प्रकाशः

दोषत्वाभ्युपगमादिति भावः। ननु साक्षात्त्वं [1]गुर्वित्यनुशयेनाह—किं चेति। नोपाधिरिति। तस्य साध्यव्यभिचारव्यधिकरणतया तद्व्याप्यत्वेन तत्साधनीयोपन्यासानर्हत्वादिति भावः।

रत्नकोशकारमतमाशङ्कते—[2]स्यादेतदिति। [3]पक्षेति। तथा च बाधानुन्नीतपक्षेतरेऽपि नातिव्याप्तिरिति भावः। कृतकत्वमिति। यद्यप्यत्र व्याप्तिसत्त्वे व्यभिचारव्याप्तोपाधेरनुपपत्तिः। न च पक्षधर्मताबललभ्यानित्यत्वव्यभिचारस्य प्रमे-

---

## तर्कचूडामणिः

साध्यव्यापक एव लघुत्वादुद्भावनीय इत्यत आह—तस्येति। [4]साध्यतावच्छेदकावच्छिन्नसाध्याभावसाधने न सत्प्रतिपक्षत्वमित्यत आह—विरोधेति। अत एव

---

1. क. प्रयोजकं for गुरु
2. ख. स्यादिति
3. ख. 'पक्षेति ............ न च' इति ग्रन्थो लुप्तः।
4. क. ग. 'साध्य ............ न सत्प्रतिपक्षत्वमित्यत आह' नास्ति।

शब्दत्वमात्रातिरिक्तधर्मवान् मेयत्वादित्यत्र पर्यवसितं यत् साध्यमनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिः।

यदि च तत्रैव कृतकत्वमपि शब्दे साध्यते, तदा अनित्यत्वमुपाधिः। तदुक्तं—'वायुक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः पर्यवसितं

## प्रकाशः

यत्ते सत्त्वान्नोक्तदोष इति वाच्यम्। एवं हि तादृशवह्निव्यभिचारितया धूमस्यापि सोपाधितापत्तेः।

तथापि [1]नायमनित्यः अकृतकत्वादिति सत्प्रतिपक्षोत्थापकतया उपाधित्वात्। न चास्य भिन्नप्रकारतया सत्प्रतिपक्षोत्थापकत्वं कथम्? सत्प्रतिपक्षे विरोधमात्रस्य तन्त्रत्वेन पर्यवसितानित्यत्वरूपसाध्याभावसाधनद्वारा [2]तदुत्थापनक्षमत्वेनैवोपाधित्वमित्येतन्मततात्पर्यम्। न च कृतकत्वस्य पक्षवृत्तितया तद्व्यतिरेकस्य स्वरूपासिद्धत्वेन [3]सत्प्रतिपक्षोत्थापकत्वमपि कथमिति वाच्यम्। शब्दनित्यतावादिनः उपाधिदातुर्मते शब्दस्याकृतकत्वादिति भावः।

## तर्कचूडामणिः

केवलान्वयिनोऽपि [4]सत्प्रतिपक्षत्वं वक्ष्यत इति भावः। व्यभिचारानुन्नायकतया कथं दूषकताबीजसाम्यमित्यत आह—सत्प्रतिपक्षेति। ननूपाधेर्व्यभिचारव्याप्तत्वात् तत्सत्त्वे व्यभिचारावश्यम्भाव इत्यत आह—तथा चेति। [5]अत एवासिद्ध्युन्नायकत्वमते कठिनसंयोगेन पृथिवीत्वसाधने अनुष्णाशीतस्पर्शवत्त्वमुपाधिरिति भावः।

1. ख. 'नायमनित्यः .............. कथम' नास्ति।
2. क. 'तदुत्थापन ................ स्वरूपासिद्धत्वेन' नास्ति।
3. क. तदुत्थापकत्वमपि
4. क. ग. सत्प्रतिपक्षितत्वं
5. ख. अत एव............भावः' नास्ति।

नियमयन् दूषकताबीजसाम्राज्यात्' इति। अनेन पक्षधर्मसाधनावच्छिन्न-साध्यव्यापकोपाधिः संगृह्यते तादृशसाध्यस्य पर्यवसितत्वादिति।

## प्रकाशः

अत एव कृतकत्वसाधनमाशङ्क्य निषेधति—यदि चेति। दूषकेति। सत्प्रतिपक्षोत्थापकत्वादित्यर्थः। व्यभिचारोन्नायकतापक्ष एवोपाधेर्व्यभिचारव्याप्यत्वं न [1]त्वन्यत्रापीति भावः।

ननु पर्वतो वह्निमानित्यादावपि पाषाणवत्त्वादिकमुपाधिरेवं स्यात्। तस्यापि पक्षधर्मताबललभ्यपर्वतीय[2]वह्निव्यापकत्वात् साधनाव्यापकत्वाच्च। न चेष्टापत्तिः, प्रमेयत्ववदव्यभिचरितस्यापि [3]धूमस्य सोपाधित्वाविरोधादिति वाच्यम्। पक्षवृत्तित्वे-नास्य सत्प्रतिपक्षोत्थापनेऽप्यसमर्थत्वात्। धूमे वह्निव्यभिचाराभावेन [4]तदुन्नयनस्या-

## तर्कचूडामणिः

ननु पक्षधर्मताबललभ्यत्वं यदि पक्षतावच्छेदकावच्छिन्नत्वं तदा 'अनेन' इत्यग्रिमग्रन्थविरोधः। न हि [5]तत्र पक्षतावच्छेदकावच्छिन्नव्यापकतास्ति। यदि पक्ष वृत्तिधर्मसमानाधिकृतत्वमात्रं, तदा बाधानुन्नीतपक्षेतरत्वेऽतिव्याप्तिरिति चेत्—न। पक्षवृत्तिसाध्यव्यापकत्वस्यैव विवक्षितत्वात्। [6]तथा च बाधोन्नीतपक्षेतरेऽव्याप्तिरिति दोषे सत्येव दोषान्तरमाह—नन्विति। अनित्यद्रव्यासमवेतत्वं द्वेधा—गगनवद-समवेतत्वेन, शब्दवन्नित्यद्रव्यसमवेतत्वेन वा। तत्राद्यमादाय पर्यवसानं वारयति—असमवेतत्वेति। घटरूपादौ व्यभिचारवारणाय हेतौ द्रव्यपदम्। ननु महत्त्वान-धिकरणद्रव्यत्वमात्रस्यैवाव्यभिचारात् परमाण्वादौ व्याप्तिग्रहसम्भवाच्च जन्यपदवैयर्थ्य-

1. ख. त्वन्यथापि
2. क. 'वह्नि' नास्ति
3. क. 'धूमस्य' नास्ति
4. ख. तदुभयस्य
5. ख. 'तत्र' नास्ति।
6. क. ख. 'तथा च' नास्ति।

तत्र । एवं हि द्व्यणुकस्य सावयवत्वे सिद्धे द्व्यणुकम् अनित्यद्रव्या- समवेतं जन्यमहत्त्वानधिकरणद्रव्यत्वादित्यत्र निस्पर्शद्रव्यसमवेतत्वमुपाधिः स्यात् । भवति हि नित्यद्रव्यसमवेतत्वं पर्यवसितं साध्यम्, तस्य व्यापकं साधनाव्यापकं च ।

### प्रकाशः

सम्भावितत्वात् । तथा च तत्रातिव्याप्तिरित्र नेपाधितैवेति दूषणे सत्येव दूषणान्तर- माह—एवं हीति । असमवेतत्वपर्यवसानवारणायाह—सावयवत्व इति । जन्येति । अत्र परमाणवसिद्धिदशायां मनसोऽ[1]णुत्वासिद्धिदशायां च गगनादौ व्याप्तिग्रहार्थं जन्यपदम् । अखण्डाभावे न वैयर्थ्यमिति ध्येयम् । व्यभिचारावारकस्यापि व्याप्ति- ग्रहौपयिकत्वादेव न वैयर्थ्यमित्यन्ये । जन्यमहत्त्वं महत्त्वावान्तरजातिविशेष इति न वैयर्थ्यमित्यपरे । निस्पर्शेति । अत्र द्रव्यपदं [2]समव्याप्तोपाध्यभिप्रायेणेति बोध्यम् ।

### तर्कचूडामणिः

मित्यत आह—अत्रेति । तर्हि मनसि व्याप्तिग्रहोऽस्त्वित्यत आह—मनस इति । ननु 'द्व्यणुकस्य सावयवत्वे सिद्धे' इत्यभिधानात् [3]परमाणवसिद्धिदशायामित्यनुपपन्नम् । द्व्यणुके साध्यसिद्धिदशायां मनोऽणुत्वाप्रतिपत्तौ च न मानमित्यपरितोषादाह— अखण्डाभावेति । महत्त्वानधिकरण[4]द्रव्यत्वस्य गगनादिसपक्षव्यावृत्तत्वेनासाधार- ण्यापत्त्या तद्वारणाय जन्यपदं सार्थकम् । व्यभिचारावारकस्यापि व्याप्तिग्रहौपयिकतया सार्थकत्वादिति केषांचिन्मतम् । तदाह—व्यभिचारेति । अन्य इत्यस्वरसोद्भाव- नम् । तद्बीजं तु गगनादिकिंचित्सपक्षव्यावृत्तत्वेऽपि सर्वसपक्षव्यावृत्तत्वाभावात् नासाधारण्यम् । अन्यथा शब्दादिसपक्षव्यावृत्तत्वेन जन्यत्वघटितहेतोरप्यसाधारण्या- पत्तेरिति जातिविशेषे मानाभाव इत्यस्वरसं दर्शयति—अपर इति ।

इत्युपाधिवादपूर्वपक्षः

1. क अणुत्वदशायां
2. ख. समव्याप्तिकोपाध्यभि-
3. ख परमाणुसिद्धि-
4. क 'द्रव्य' नास्ति

किं च पक्षधर्मताबललभ्यसाध्यसिद्धौ निष्फल उपाधिः। तदसिद्धौ च कस्य व्यापकः। न हि सोपाधौ पक्षधर्मताबलात् साध्यं सिध्यति, यस्य व्यापक उपाधिः स्यादिति।

---

### प्रकाशः

नन्वत्र पक्ष एव साध्याव्यापकत्वात् पर्यवसितसाध्यव्यापकत्वं नास्त्येवेति नातिव्याप्तिरित्यपरितोषादाह---किं चेति[1]।

कर्तव्योपाधिलक्षणस्य प्रथमं संग्राह्यमाह---यव्द्यभिचारित्वेनेति। यव्द्यभिचारित्वेन [2]लिङ्गेन साधनस्य साध्यव्यभिचारित्वं प्रमीयते स उपाधिरित्यर्थः। न

---

### तर्कचूडामणिः

ननु 'लक्षणं तु' इत्यादिनैव [3]लक्षणकरणात् यव्द्यभिचारित्वेनेति ग्रन्थवैयर्थ्यमित्यत आह---कर्तव्येति। लक्ष्यस्वरूपानवगमे [4]लक्षणस्य सम्यक्त्वानवगमात् तत्स्वरूपं प्रथमं वाच्यमिति भावः। व्यभिचारित्वेनेति तृतीयाबलात् साध्यव्यभिचारित्वं जन्यते ज्ञायते वेति स्यात्। तच्च न संभवति। साध्यव्यभिचारस्य तदजन्यत्वात् सद्धेतावपि तद्भ्रमसम्भवेनातिव्याप्तेश्चेत्यत आह--यव्द्यभिचारित्वेनेति। वह्निर्धूमव्यभिचारी गोत्वव्यभिचारित्वात् इत्यत्र धूमव्यभिचारित्वप्रमितिसत्त्वेन गोत्वादेरुपाधितापत्तिरित्यत आह---लिङ्गेनेति। गोत्वव्यभिचारस्तु धूमसामग्र्या धूमव्यभिचारित्वव्यभिचारीत्यर्थः।

---

1. क. एतदनन्तरम् 'पूर्वपक्षसंक्षेपः' इत्यधिकपाठः।
2. ख. 'लिङ्गेन' नास्ति
3. ख. ग. लक्षणकथनात्
4. क लक्षणस्य सम्यग्ज्ञानानवगमात्
ख. लक्षणसत्यत्वानवगमात्

## उपाधिवादसिद्धान्तः

अत्रोच्यते । यदव्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिः ।

---

## प्रकाशः

चाकाशादिसाध्यके हेतौ घटादेरुपाधितापत्तिः, [1]घटव्यभिचारित्वेन आकाशादिव्यभिचारप्रमासम्भवादिति वाच्यम् । घटव्यभिचारित्वं हि घटात्यन्ताभावसामानाधिकरण्यम् । एवं च [2]सामानाधिकरण्यमात्रस्यैव गमकत्वे शेषवैयर्थ्यात् ।

---

## तर्कचूडामणिः

नन्वेवं प्रमीयत इति व्यर्थम् । सद्धेतौ व्यभिचारभ्रमजनकघटव्यभिचारादेरलिङ्गत्वादिति चेत् — न । लिङ्गपदस्य व्याप्यमात्रपरत्वेन धूमो वह्निव्यभिचारी तत्सामग्रीव्यभिचारित्वादिति वह्निव्यभिचारभ्रमजनकवह्निसामग्र्यामतिव्याप्तिवारकत्वात् ।

अत्र साध्यव्यभिचारित्वं शुद्धसाध्यव्यभिचारित्वम् । तेन व्यञ्जनवत्त्वादौ विशिष्टसाध्यव्यभिचारप्रमितिहेतौ नातिव्याप्तिः । न चैवं व्यभिचारानुमितिदशायामेवोपाधिः स्यादिति नित्यदोषत्वं तस्य व्याहन्येतेति वाच्यम् । साधननिष्ठसाध्यव्यभिचारानुमितिहेतुतावच्छेदकावच्छिन्नव्यभिचारप्रतियोगित्वस्य विवक्षितत्वात् । न चावच्छिन्न[3]साध्यव्यापकोपाधिस्थले उपाधिव्यभिचारमात्रस्य साध्यव्यभिचारालिङ्गत्वात् [4]तत्राव्याप्तिरिति वाच्यम् । विशेषिताविशेषितसाधारणोपाधिव्यभिचारस्य लिङ्गत्वेनात्र विवक्षितत्वात् । प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्ये उद्भूतरूपव्यभिचारित्वादित्यादिना विशेषितस्योपाधिव्यभिचारस्य लिङ्गत्वेनोत्तरत्र प्रदर्शयिष्यमाणत्वात् ।

---

1. ख. घटस्य व्यभि-
2. ख. साधिकरणत्वमात्रस्यैव
3. ख. साध्यव्यभिचारोपाधि-
4. ख. तत्रातिव्याप्ति-

## तर्कचूडामणिः

नन्वेवमयं गन्धो गुणत्वादित्यत्र [1]साध्याव्यापकमसुरभित्वमुपाधिः [स्यात्, तद्व्यभिचारित्वस्यापि विशेषितस्य शुद्धसाध्यव्यभिचारानुमापकत्वात्]। तथा हि गुणत्वं गन्धत्वव्यभिचारि सुरभित्वतद्व्याप्यान्यत्वे सति असुरभित्वव्यभिचारित्वादित्यनुमानसम्भवात्। न च व्यभिचार[2]स्थलान्यत्वाविशेषितेन यव्यभिचारित्वेनेति विवक्षितम्, प्रकृते च व्यभिचारस्थलं यत् सुरभित्वादि तदन्यत्वेनैव विशेषितमिति नातिव्याप्तिरिति वाच्यम्। गुणत्वासुरभित्वरूपत्वानीति[3]प्रमितिविशेष्यत्वे सति असुरभित्वव्यभिचारित्वादित्यनेन व्यभिचार[4]स्थलान्यत्वाविशेषितेन लिङ्गेन व्यभिचारानुमानसम्भवादिति चेत्—न। असुरभित्वस्य सुरभित्वाभावविशिष्टगन्धव्यापकत्वेन तदुपाधित्वसंभवात्।

केचित्तु यव्यभिचारित्वेनेति नियामकत्वे तृतीया। तथा च [5]यव्यभिचारस्थले [6]साधनस्य साध्यव्यभिचारनियमस्तत्रोपाधिरित्यर्थः। घटव्यभिचारस्थले वह्नेर्धूमव्यभिचारेऽपि न घटस्योपाधित्वम्। तव्यभिचारस्थले सर्वत्र वह्नेर्धूमव्यभिचाराभावात्। व्यञ्जनवत्त्वव्यभिचारस्थले धूमस्य विशिष्टसाध्यव्यभिचारनियमेऽपि शुद्धसाध्यव्यभिचारानियमात् [7]न तत्रातिव्याप्तिः। न चैवं वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ रूपादेरनुपाधितापत्तिः। तव्यभिचारस्थले रूपादौ प्रमेयत्वादेः [8]प्रत्यक्षव्यभिचाराभावादिति वाच्यम्। साध्यगतव्याप्यतावच्छेदकवति यव्यभिचारस्थल इति विवक्षितत्वात्। प्रमेयत्वादावपि साध्यनिष्ठव्याप्यतावच्छेदकं यत् द्रव्यत्वं तद्वति द्रव्ये रूपवत्त्वव्यभिचारिणि बहिरिन्द्रियप्रत्यक्षत्वव्यभिचार इति तत्संग्रहादित्याहुः।

---

1. क. ग. साध्यव्यापकम्
2. ख. स्थलान्यत्वविशेषितेन
3. ख. प्रतीति-
4. ख. स्थलान्यत्वविशेषितेन
5. ख. यव्यभिचारि-
6. क. साधनस्यासाध्य-
7. क. ग. 'न' नास्ति
8. ख. प्रत्यक्षव्यभिचारा

लक्षणं तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्। यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं पर्यवसितं साध्यम्।

---

## प्रकाशः

यस्य [1]साध्यसमानाधिकरणस्य व्यभिचारित्वेनेति विवक्षितत्वाद्वा[2]। साधनपक्षधर्मावच्छिन्न[3]साध्यव्यापकोपाधिव्यभिचारित्वेन यथा साध्यव्यभिचारित्वानुमितिस्तथाग्रे स्फुटम्।

यद्धर्मेति। न तु पक्षधर्मतावललभ्यं तत्। तथा च न पूर्वोक्तदोष इति भावः। ननु साध्यप्रसिद्ध्यवच्छेदकधर्मस्य यावत्त्वं विवक्षितं यत्किंचित्त्वं वा। नाद्यः, वायुः प्रत्यक्षः प्रत्यक्ष[4]स्पर्शाश्रयत्वादित्यत्र उद्भूतरूपवत्त्वस्यानुपाधितापत्तेः। तस्य साध्यप्रसिद्ध्यवच्छेदकप्रमेयत्वाद्यवच्छिन्नप्रत्यक्षत्वाव्यापकत्वात्। नान्त्यः, धूमेऽपि महानसत्वावच्छेदेन प्रसिद्धवह्निव्यापकव्यञ्जनवत्त्वादेरुपाधितापत्तेरिति चेत्—

अत्र केचित्। यत्किंचिद्धर्म एव विवक्षितः। किं तु साधनव्यापकीभूतः विशेषणाव्यभिचारीत्यग्रिमग्रन्थपर्यालोचनया तथैव लाभात्। व्यञ्जनवत्त्वं च न [5]धूमव्यापकीभूतधर्मावच्छिन्नवह्निव्यापकमिति नोक्तदोषः।

---

## तर्कचूडामणिः

नन्वखण्डोपाधौ न वैयर्थ्यम्। अन्यथा प्रमेयत्वादेर्हेतुत्वं न स्यात्, तत्रापि प्रमात्वस्यैव तत्त्वापत्तेरित्यरुचेराह—यस्येति। उपाध्यायमतमाह—अत्र केचिदिति। अत्रावच्छेदकत्वं तत्सामानाधिकरण्यमात्रम्। अन्यथा बहिर्द्रव्यत्वादेरनवच्छेदकत्वापत्तेः। विशेषणेति। तत्र साध्यप्रसिद्ध्यवच्छेदकधर्मस्य व्यापक-

---

1. क. साध्यसामानाधिकरण्यस्य
2. क. 'वा' नास्ति।
3. क. साधनाव्यापको-
4. क. धर्माश्रय-
5. क. धूमादिव्यापकी-

## प्रकाशः

नन्वेवं प्रमेयत्वेन वायोर्ब[1]हिरिन्द्रियप्रत्यक्षत्वसाधने द्रव्यत्वावच्छिन्न[1]बहिरिन्द्रियप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वं कोकिलादिसाधारणेन मित्रापुत्रत्वेन मित्रातनये श्यामत्वसाधने मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकं शाकपाकजत्वं च नोपाधिः स्यात्। न च तयोः शुद्धसाध्यव्यभिचारानुन्नायकत्वेनानुपाधित्वमिष्टमेवेति वाच्यम्। प्रमेयत्वं बहिरिन्द्रियप्रत्यक्षत्वव्यभिचारि द्रव्ये उद्भूतरूपव्यभिचारित्वात् द्रव्यत्ववत्, मित्रापुत्रत्वं श्यामत्वव्यभिचारि मित्रातनये नरे वा शाकपाकजव्यभिचारित्वात् अघटत्ववदित्येवं तयोरपि शुद्ध[2]साध्यव्यभिचारोन्नायकत्वादिति चेत्—

न। उक्तरीत्या तयोस्तत्र व्यभिचारोन्नायकत्वेऽपि [3]अनुपाधित्वस्यैवेष्टत्वात्। अविशेषितेनैव यद्व्यभिचारित्वेन लिङ्गेन हेतोर्विशिष्ट[4]साध्यव्यभिचारेऽपि साध्यमाने पक्षधर्मताबलेन केवलसाध्यव्यभिचारः सिध्यति तस्यैव शुद्धसाध्यव्यभिचारोन्नायकस्योपाधित्वव्यवहारात्। स च साधन[5]व्यापकधर्मावच्छिन्न-

---

## तर्कचूडामणिः

त्वाभिधानादिति भावः। व्यञ्जनवत्त्वं चेति। महानसीयत्वस्य धूमाव्यापकत्वादिति भावः।

**नन्वेवमिति**। साध्यप्रसिद्धयवच्छेदकद्रव्यत्वमित्रातनयत्वयोः साधनाव्यापकत्वादिति भावः। न चेति। न चेवं प्रत्यक्षस्पर्शाश्रयत्वादिना प्रत्यक्षत्वे साध्येऽपि नोद्भूतरूपवत्त्वमुपाधिः स्यात्। शुद्धसाध्यव्यभिचारानुन्नायकत्वादिति वाच्यम्। तत्र विशिष्टव्यभिचारसिद्धेरेव विशेषणाव्यभिचारिणि विशेष्यव्यभिचारसिद्धिपर्यवसन्नत्वात्, न चेह विशेषणाव्यभिचारित्वमिति भावः। स चेति।

---

1. क. 'बहिरिन्द्रियप्रत्यक्षत्व' नास्ति
2. क. साध्यव्यभिचारित्वात्
3. क. अनौपाधिकत्वस्य
4. क. 'साध्य' नास्ति
5. क, व्यापकीभूतधर्मावच्छिन्न गुण

## प्रकाशः

साध्यव्यापक एव भवति । न चैवं तत्र व्यभिचारो न स्यात्, 'व्यभिचारस्योपाधिव्याप्यत्वादिति वाच्यम् । न हि तत्रोपाधिरेव नास्तीति ब्रूमः । किं त्वेतयोरनुपाधित्वं, प्रत्यक्षसामग्र्यादेः साधनव्यापकधर्मावच्छिन्नसाध्यव्यापकस्य तत्राप्युपाधित्वसम्भवादित्याहुः ।

तन्न । शुद्धसाध्यव्यभिचारोन्नयनस्य दूषकताबीजसत्त्वे[2] तयोरनुपाधित्वस्य वक्तुमशक्यत्वात् ; निरुक्तलक्ष्यतावच्छेदकेन तयोः संग्रहाच्च । स्वयं लक्षणकरणासामर्थ्येन एतद्व्यावर्तनाय [तत्र] विशेषणान्तरप्रक्षेपस्यानुचितत्वात् । अन्यथा शुद्धसाध्य[3]व्यापकमात्रसंग्राहक लक्ष्यतावच्छेदकमभिधाय साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधि[4]लक्षणमतिसुकरमेव स्यात् ।'

---

## तर्कचूडामणिः

तत्रैव [5]विशेषणाव्यभिचारसम्भवादिति भावः । तत्किं दूषकताबीजाभावादनयोरनुपाधित्वम्, उत लक्ष्यतावच्छेदकाभावात् । आद्य आह—शुद्धेति । अन्त्ये त्वाह—निरुक्तेति । ननु लक्ष्यतावच्छेदके अविशेषितेनेति विशेषणदानान्न तस्य लक्ष्यत्वमित्यत आह—स्वयमिति । तत्र—लक्ष्यतावच्छेदक इत्यर्थः । अन्यथेति । स्वकर्तव्यलक्षणानुरोधेन लक्ष्यतावच्छेदककरण इत्यर्थः । शुद्धेति । यद्व्यभिचारमात्र साध्य[6]व्यभिचारत्वावच्छिन्नव्यापकताकानुमितिजनकमिति लक्ष्यतावच्छेदककरणसम्भवादिति भावः । अग्रिमग्रन्थविरोधं परिहरति—विशेषणेति ।

---

1. ख. तस्योपाधि-
2. क. सत्त्वेन
3. ख. 'व्यापक........ साध्य' नास्ति ।
4. क. लक्षणमिति
5. ख. विशेषणव्यभि-
6. क व्यभिचारि-

## प्रकाशः

यदि च तदनुपुरमोऽपि [1]पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधि[2]स्फुरणं व्यभिचारोन्नयनेनानुमिति[3]प्रतिबन्धात् तस्यैवोपाधित्वे [4]तल्लक्षणाव्याप्तिरिति मन्यसे तदा साधनव्यापकधर्मावच्छिन्न[5]साध्यव्यापकप्रत्यक्षसामग्र्युपाध्यस्मरणे उक्तरीत्या व्यभिचारोन्नायकयोस्तयोः स्फुरणेऽप्यनुमिति[6]प्रतिबन्धात् तयोरप्युपाधित्वे एतल्लक्षणाव्याप्तेरपि वज्रलेपत्वात् । विशेषणाव्यभिचारिणीत्यादिकं च प्रकृताभिप्रायकम् । [7]अन्यत्र तु प्रकारान्तरेणापि [8]शुद्धसाध्यव्यभिचारोन्नयनमिति ध्येयम् ।

---

## तर्कचूडामणिः

उपाध्यायोक्तं मतान्तरमाह —यत्त्विति । साध्यप्रसिद्ध्यवच्छेदकस्य किंचित्त्वमेव विवक्षितम् । अतो वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र रूपवत्त्वोपाधौ नाव्याप्तिः । अवच्छेदकत्वं चात्रान्यूनवृत्तित्वम् । अतो [9]वह्निप्रसिद्धिन्यूनदेशवृत्तिमहानसत्वावच्छिन्नवह्निव्यापके व्यञ्जनवत्त्वादौ नातिव्याप्तिः । नन्वेवं बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वमुपाधिर्न स्यात् । बहिर्द्रव्यत्वस्य [10]प्रत्यक्षत्वरूपसाध्यवति गुणादावभावेन साध्यप्रसिद्धिन्यूनदेशवृत्तित्वादित्यत आह —साधनवतीति । तथापि कथमव्याप्तिनिरास इत्यत आह—तेनेति । तथा च [11]साधनवद्वृत्तिसाध्यप्रसिद्ध्यन्यूनवृत्तित्वमवच्छेदकत्वं विवक्षितम् । बहिर्द्रव्यत्वमपि तथा, प्रत्यक्षस्पर्शाश्रयत्वरूपसाधनवति यावति प्रत्यक्षत्वं प्रसिद्धं तावति सर्वत्र तस्य वृत्तेः ।

---

1. क. पक्षधर्माद्यवच्छिन्न-
2. क. स्मरणे
3. क. प्रतिबन्धकत्वात्
4. क. तल्लक्षणेऽव्याप्तिः
5. ख. न्ने प्रत्यक्षसामग्र्याद्युपाध्यस्फुरणे
6. क. प्रतिबन्धकत्वात्
7. क, अन्यत्रापि
8. क. 'शुद्धसाध्य' नास्ति
9. क वह्निसिद्धि-
10. ख. ग. प्रत्यक्षरूप-
11. ख. साधनवृत्तिसाध्यान्यून-

## प्रकाशः

यत्तु [1]यद्धर्मावच्छेदेनेत्यत्र साधनवतीति शेषः। तेन यद्धर्मावच्छेदेन साधनवति साध्यं प्रसिद्धं तद्धर्मावच्छिन्नसाध्यं पर्यवसितत्वेनाभिमतमिति।

[2]तन्न। वायुः प्रत्यक्षो वायुत्वादित्यादौ [3]उद्भूतरूपवत्त्वाद्युपाधावव्याप्तेः। उक्तलक्ष्यतावच्छेदकसंगृहीतत्वेन व्यभिचारोन्नयनसमर्थत्वेन च [4]तदनुपाधित्वस्य वक्तुमशक्यत्वात्।

नन्वस्तूक्तरीत्या व्यभिचारोन्नायकस्योपाधित्वेन संग्राह्यत्वम्। संग्राहकं च तद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति तद्धर्मावच्छिन्नसाधनाव्यापकत्वम्। यत्र साधनाव्यापकत्वं [5]तद्धर्मावच्छिन्नसाध्यव्यापकत्वं वा [6]स्वानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं वा लक्षणमस्तु।

---

## तर्कचूडामणिः

यद्यप्यत्रापि वायुः प्रत्यक्षः प्रमेयत्वादित्यादावुद्भूतरूपवत्त्वोपाधावव्याप्तिरेव। बहिर्द्रव्यत्वस्य प्रमेयत्वरूपसाधनवति रूपादावभावेन तादृशसाध्यप्रसिद्धिन्यूनदेशवृत्तित्वात्। तथाप्युपाध्यायमते तदनुपाधित्वस्येष्टतया तदुपाधित्वव्यवस्थापनपूर्वकं तत्राव्याप्त्यभिधानं यत्नगौरवापादकमिति उभयसिद्धोपाधावव्याप्तिमाह—वायुरिति। तत्र [7]साधनवद्वृत्तिसाध्यप्रसिद्धेरभावादिति भावः। ननु तस्यानुमानस्य विरुद्धत्वेनासाधारणत्वेन च न तत्रोपाधिनियम इत्यत आह—उक्तेति। संगृहीतत्वे हेतुमाह—व्यभिचारेति।

उपाध्यायोक्त[8]लक्षणान्तरमाशङ्कते—नन्विति। तद्धर्मेति। उद्भूतरूपवत्त्वादेर्बहिर्द्रव्यत्वाद्यवच्छिन्नसाध्यव्यापकत्वात् तादृशसाधनवति पक्षे अभावादु-

---

1. क. 'यद्' नास्ति।
2. ख. तत्तुच्छम्
3. ख. उद्भूतरूपादावव्याप्तेः
4. क. 'तद्' नास्ति
5. ख. तद्वृत्तिधर्मा-
6. ख. 'स्वानधिकरणी ... ... ... साध्यव्यापकत्वं वा' नास्ति।
7. ग. साधनवृत्ति-
8. ग. दोषान्तर-

## प्रकाशः

अथैवं गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यत्र[1] तद्गन्धप्रागभावकालीनत्वावच्छिन्नसाध्यव्यापकं तद्गन्धप्रागभावकालीनत्वावच्छिन्नपृथिवीत्ववति पक्षे साधनाव्यापकम् एतत्कालीन[2]रूपवत्त्वमुपाधिः स्यात् । न चेष्टापत्तिः । अपसिद्धान्तादिति चेत् —

न । यद्धर्मवति साध्यव्यापकत्वं तद्धर्मवति साधनाव्यापकत्वादित्यर्थात् । उक्तोपाधिस्तु न तथा, तद्धर्मवति [3]सपक्षे साधनव्यापकत्वात् । न चैवं

## तर्कचूडामणिः

पाधित्वम् । व्यञ्जनवत्त्वं तु महानसीयत्वावच्छिन्न[4]वह्निव्यापकमिति नोपाधिरित्यर्थः । यत्रेति । रूपवत्त्वादेर्घ्यादौ [5]तदव्यापकत्वं तद्वृत्तिबहिर्द्रव्यत्वाद्यवच्छिन्नसाध्यव्यापकत्वं चेति उपाधित्वम् । व्यञ्जनवत्त्वस्य तु यत्र पर्वतादौ साधनाव्यापकत्वं न तद्वृत्तिधर्मावच्छिन्नव्यापकत्वमिति [6]नोपाधित्वमिति भावः । स्वेति । स्वम् उपाधित्वेनाभिमतं व्यञ्जनवत्त्वमपि स्वानधिकरणह्रदवृत्तिह्रदमहानसान्यतरत्वावच्छिन्नव्यापकमेवेति तत्रातिव्याप्तिरित्यत आह —**साधनाधिकरणेति** । पक्षीकृतघटे [7]गन्धवत्त्वसत्त्वेऽपि एतत्कालीनरूपवत्त्वाभावेन साध्याव्यापकत्वमित्यत आह — [8]**तद्गन्धेति** । भाविगन्धप्रागभावकालीनत्वविशिष्ट[9]साध्यमस्तीत्यत उक्तं **तदिति** । यत्र पक्षे साधनाव्यापकत्वं तद्वृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वात् पक्षस्य स्वानधिकरणत्वाच्चेत्यर्थः । **अपसिद्धान्तादिति** । उपाधिसत्त्वे व्यभिचारापत्तेरित्यर्थः ।

1. ख. इत्यादौ
2. ख. रूपवत्त्वादिकं
3. क· पक्षे साध्याव्यापकत्वात्
4. क. ख. धूमाव्यापकमिति
5. ख. तव्द्यापकत्वात्तद्वृत्ति-
6. ख. नोपाधिरित्यर्थः
7. ख. गन्धवत्त्वे सत्यपि
8. ख. 'तद्' नास्ति ।
9. ख. साध्यत्वमप्यस्ति

## प्रकाशः

श्यामो मित्रापुत्रत्वादित्यत्र नरत्वावच्छिन्नश्यामत्वव्यापके मित्रापुत्रहंसादौ साधनाव्यापकं शाकपाकजत्वमुपाधिर्न स्यात्, नरत्ववति साध्यव्यापकस्य तस्य तद्वति साधनाव्यापकत्वाभावात् । मित्रापुत्रस्य नरस्य सर्वस्यैव शाकपाकजत्वादिति वाच्यम् । नरहंसान्यतरत्वमादाय तत्राप्युक्तलक्षणसत्त्वात् । अत्र वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ रूपत्वावच्छिन्नसाध्यव्यापकमुद्भूतत्वमुपाधिः संग्राह्य एवेति न तत्रातिव्याप्तिः । प्रमेयत्वं प्रत्यक्षव्यभिचारि रूपे उद्भूतत्वव्यभिचारित्वात् गुणत्ववत्

---

## तर्कचूडामणिः

तद्धर्मावच्छिन्नत्वं द्वेधा, तद्विशिष्टवृत्तित्वं तदाश्रयवृत्तित्वं चेति । तत्र प्रथमेऽतिव्याप्तावपि [1]द्वितीये न दोष इत्याह —न यद्धर्मेति । नरत्ववति मित्रातनय एव साधनाव्यापकत्वमस्तीत्यत आह—मित्रापुत्रस्येति । नरेति । तद्वति हंसे साधनाव्यापकत्वसम्भवादिति भावः ।

नन्वेवं वायुः प्रत्यक्षः प्रमेयत्वादित्यत्रोद्भूतत्वादिकमप्युपाधिः स्यात्, रूपत्वावच्छिन्नसाध्यव्यापकत्वात् तदवच्छिन्नसाधनाव्यापकत्वाच्चेत्यत आह—अत्रेति । ननु प्रमेयत्वस्य [2]रूपत्वाव्यभिचाराभावेन विशिष्टसाध्यव्यभिचारानुमितेः शुद्धसाध्य[3]व्यभिचारापर्यवसानेन तस्य संग्राह्यतैव नेत्यत आह—प्रमेयत्वमिति । घटत्वादौ व्यभिचारादाह—रूप इति । नन्वस्य शुद्धसाध्याव्यापकत्वं स्पष्टमेव । रूपत्वस्यापक्षधर्मत्वेनासाधनत्वेन चावच्छिन्न[4]साध्यव्यापकतापि नेति कथं संग्राह्यतेत्याशङ्क्य

---

1. क. 'द्वितीये' नास्ति ।
2. ख. रूपत्वव्यभि-
3. ख. व्यभिचारपर्यवसाने तु तस्य
4. ख. 'साध्यव्यापकतापि........ समानाधिकरण' नास्ति ।

## प्रकाशः

इत्यादिक्रमेण तस्यापि शुद्धसाध्य[1]व्यभिचारोन्नायकत्वसम्भवात् । न च तस्य [2]स्वीकृतविविधोपाधिबहिर्भावात् उपाधित्वस्वीकारे अपसिद्धान्तः । तस्योपलक्षणत्वात्, पक्ष[3]धर्मावच्छिन्नसाध्यव्यापकमध्य एव प्रवेशाद्वा । पक्षधर्मपदेन साधनसमानाधिकरणधर्मस्यैव विवक्षितत्वादिति चेत् —

अत्र वदन्ति । घटः पृथिवी द्रव्यत्वादित्यत्र [4]घटान्यत्वावच्छिन्नपृथिवीत्वव्यापकं पक्ष एव साधनाव्यापकं घटावृत्ति[5]गुणवत्त्वमुपाधिः । [6]तत्र चोक्तानि लक्षणान्यव्याप्तानि । घटान्यत्ववति साध्यव्यापकस्य तस्य तद्वति साधनाव्यापकत्वाभावात्, पक्षे साधनाव्यापकस्य [7]तस्य तद्वृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वाभावात् सानधिकरणीभूत[8]साधनाधिकरणीभूतपक्षधर्मावच्छिन्नसाध्यव्यापकत्वाभावाच्च ।

न च शुद्धसाध्यव्यभिचारानुन्नायकत्वेनायमुपाधिरेव न [9]भवतीति वाच्यम् । द्रव्यत्वं पृथिवीत्वव्यभिचारि द्रव्यत्वघटत्वप्रमेयत्वानीति |प्रतीतिविशेष्यत्वे सति

---

## तर्कचूडामणिः

निराकरोति — न चेति । नन्वेवं परिगणनविरोध इत्यत आह — पक्षेति । ननु पक्षधर्मत्वमपि नेत्यत आह — पक्षेति । पक्षधर्मपदस्य साधनसमानाधिकरणधर्मपरत्वाभावे परमाणु[10]रूपं प्रत्यक्षं प्रत्यक्षस्पर्शाश्रयत्वादित्यादौ द्रव्यत्वावच्छिन्नसाध्यव्यापकत्वेन गृह्यमाणमुद्भूतरूपवत्त्वमुपाधिर्न स्यात् इति भावः । घटान्यत्वेति ।

---

1. क. व्यभिचारोन्नयन-
2. क. स्वीकृतोपाधि-
3. ख. 'धर्मावच्छिन्न- ........ साधनसमानाधिकरण' नास्ति ।
4. क. घटत्वावच्छिन्न-
5. अ. गुणत्व-
6. क. तत्रैवोक्तानि
7. क. तद्धर्मा-
8. क. 'साधनाधिकरणीभूत' नास्ति ।
9. क. 'भवति' नास्ति
10. ख ग रूपप्रत्यक्ष

## प्रकाशः

घटावृत्तिगुणवत्त्वव्यभिचारित्वात् प्रमेयत्ववत् इत्यादिक्रमेण [1]तत्सम्भवात्। अत्र च स्वरूपासिद्धिवारणाय द्रव्यत्वेति। न च व्यभिचारावारकत्वेन वैयर्थ्यमिति वाच्यम्। त्रितयगोचरप्रतीतिविशेषविशेष्यत्वे व्यर्थत्वशङ्कानवकाशात्। व्यर्थविशेष्यत्ववारणाय पटत्वेति। एवं च पटत्व एव व्यभिचारवारणाय विशेष्यमिति मन्तव्यम्। व्याप्तिग्रहस्थानार्थमाह [2]प्रमेयत्वेति। घटत्वे व्यभिचार[3]वारणाय सत्यन्तम्।

यद्वा द्रव्यत्वं पृथिवीत्वव्यभिचारि द्रव्यत्वभिन्नघटधर्मान्यत्वे सति घटावृत्तिगुणवत्त्वव्यभिचारित्वादिति अखण्डाभावे न वैयर्थ्यमिति ध्येयम्।

न च यद्व्यभिचारित्वमात्रेण साधनस्य साध्यव्यभिचारसिद्धिः स एवोपाधित्वेन संग्राह्यः, अत्र च विशेषणान्तरप्रक्षेपेण तथात्वमिति वाच्यम्। एवं हि

---

## तर्कचूडामणिः

घटान्यत्वस्याप्युक्तन्यायेन पक्षधर्मत्वादिति भावः। लक्षणत्रितयाभावं क्रमेण दर्शयति—घटान्यत्ववतीति।

त्रितयेति। घटत्वप्रमेयत्वे इति प्रतीतिविशेष्यत्वस्य प्रकृतहेतावप्रविष्टत्वेन व्यर्थतानवकाशादिति भावः। ननु त्रितयप्रतीतिविशेष्यत्वग्रहकाले द्वितयप्रतीतिविशेष्यत्वमपि गृहीतमेव। तयोरभेदात्, भेदेऽपि तुल्यवित्तिवेद्यत्वात्। [4]तथा च लघुशरीर [5]एवोपस्थिते व्याप्तिग्रहः, न तु गुरुणीत्यरुचेराह—यद्वेति। घटत्वपटत्वयोर्व्यभिचारवारणाय विशेषणविशेष्ये। नन्वत्रापि असिद्धिवारकद्रव्यत्वभिन्नत्व व्यर्थमित्यत आह—अखण्डेति। ननु यद्व्यभिचारित्वं साध्यप्रसिद्ध्यवच्छेदक-

---

1. क. तत्सत्त्वाभावात्
2. क. प्रमेयत्वमिति
3. ख. अत्र ग्रन्थपातः
4. ग. तस्माल्लघु-
5. क. ख. एवेत्युपस्थिते

## प्रकाशः

प्रत्यक्षत्वे साध्ये प्रमेयत्वादौ साधने उद्भूतरूपवत्त्वादिकमुपाधिरेव नेति किं तत्संग्रहार्थमुक्तलक्षणानुसरणप्रयासेन । स्वसामर्थ्येन एतद्व्यावर्तनाय लक्ष्यतावच्छेदके विशेषणान्तरदानमनुचितमेवेति ।

## तर्कचूडामणिः

विशेषणातिरिक्तमनपेक्ष्य साध्यव्यभिचारं साधयति स एवोपाधिः । उद्भूतत्व[1]व्यभिचारित्वं च साध्यप्रसिद्ध्यवच्छेदक[2]रूपवत्त्वविशेषणमेवापेक्षते । घटावृत्तिगुणवत्त्वव्यभिचारित्वं [3]चातादृशं प्रतीतिविशेष्यत्वादिकमपेक्षत इति नास्योपाधित्वमित्यत आह—स्वसामर्थ्येनेति । एतत्संग्राहकलक्षणस्यैव वक्ष्यमाणतया तत्संकोचानुपपत्तेरिति भावः ।

अत्र केचित् । सर्वेषामुपाधीनामनुगतं [4]दूषकतावच्छेदकं वाच्यम् । सति सम्भवे त्यागायोगात् । तच्च न साध्यव्यापकत्वादि, अवच्छिन्नव्यापकोपाध्यव्याप्तेः । नापि साध्यप्रसिद्ध्यवच्छेदकेत्यादिघटितम्, व्यञ्जनवत्त्वादेरुपाधितापत्तेः । तथा च अतिप्रसङ्गभङ्गायानुगमाय च तद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति तद्धर्मावच्छिन्नसाधनाव्यापकत्वमेव सर्वोपाधिसाधारणं दूषकतावच्छेदकमिति तदभावाच्च घटावृत्ति[5]गुणवत्त्वमुपाधिः । न चास्य दूषकतावच्छेदकत्वे अनेन रूपेणाज्ञातस्य शुद्धसाध्यव्यापकत्वादिना ज्ञातस्य आर्द्रेन्धनादेरनुपाधित्वं[6] स्यादिति वाच्यम् । अनतिप्रसक्तस्यास्य दूषकतावच्छेदकस्यावश्यकतया तदज्ञानदशाया[7]मनुपाधित्वेष्टेरित्याहुः ।

अत्र ब्रूमः । अननुगतयत्तदादिघटितोपाधीनामनुगत[8]दूषकतावच्छेदकानपेक्षत्वेन क्वचिच्छुद्धसाध्यव्यापकत्वम् अन्यत्रावच्छिन्नसाध्यव्यापकत्वादीत्यननुगत-

1. ग. व्यभिचारत्वं च
2. क. रूपत्व-
3. ग. नातादृशं
4. क. दूषकताबीजं
5. ख. गुणत्वम्
6. क उपाधित्वम्
7. ग. अनुपाधित्वस्येष्टापत्तेः
8. क ख. दूषकत्वानपेक्षत्वेन

## तर्कचूडामणिः

मेव दूषकतावच्छेदकम् । न चानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यत इत्यग्रिमग्रन्थविरोधः । अवच्छेदकाननुगमेऽपि तद्ग्रन्थविरोधात् ।

किं च शुद्धसाध्यव्यापकत्वादिज्ञानदशायामनुपाधितापत्तिः । न चेष्टापत्तिः । [1]तदापि तस्य व्यभिचारोन्नायकत्वेनानुपाधित्वस्य दुर्वचत्वात् । न च तदास्य पृथगेव दोषत्वम् । अपसिद्धान्तात् । अवच्छिन्नसाध्यव्यापकत्वादिज्ञानदशायां पृथक्त्वेन, शुद्धसाध्यव्यापकत्वादिज्ञानदशायामुपाधित्वेनेति वैपरीत्यापत्तेश्च ।

ननु विशेषणान्तरमादाय साध्यव्यभिचारोन्नायकस्याप्युपाधित्वे द्रव्य उद्भूतरूपव्यभिचारित्वादित्यादौ द्रव्यत्वस्य तदुन्नायकतया प्रत्यक्षत्वसाध्ये उपाधितापत्तिरिति चेत्—भ्रान्तोऽसि । न हि व्यभिचारानुमापकस्य सर्वस्याप्युपाधित्वमाचक्ष्महे, येनैवं ब्रूयाः । किं तु यव्द्यभिचारित्वं विशेषितमविशेषितं वा साध्यव्यभिचारं प्रमापयति तस्यैवोपाधित्वम् । द्रव्यत्वादेश्च व्यभिचारो नानुमितिप्रयोजक इति न तस्योपाधित्वम् । तदिदमुक्तम् — 'न च व्यभिचारोन्नायकत्वमेवोपाधित्वम् अप्रयोजकत्वसाध्यव्यापकव्यभिचारित्वयोरप्युपाधितापत्तेः' इति ।

एतेन तस्यैवोपाधित्वं यस्योपाधिघटकशरीरमात्रं साध्यव्यभिचारानुमानोपयोगि, न स्वपरान्तर्भावेण व्यभिचारानुमापकस्यापि; वायुप्रत्यक्षत्वानुमाने द्रव्यत्वस्याप्युपाधितापत्तेः । रूपवत्त्वव्यभिचारसाहित्येन द्रव्यत्वस्यापि साधननिष्ठसाध्य[2]व्यभिचारानुमानोपयोगित्वात् । तथा च घटावृत्ति[3]गुणवत्त्वं नोपाधिरिति परास्तम् ।

लाघवेन साधननिष्ठ[4]साध्यव्यभिचारानुमितिहेतुतावच्छेदकावच्छिन्नव्यभिचारप्रतियोगिसाध्यसमानाधिकरणत्वस्यैव लक्ष्यतावच्छेदकत्वात् । न च व्यञ्जनवत्त्वादिव्यावृत्त्यर्थमुक्तलक्षणस्यैवानुसरणीयतया घटावृत्ति[5]गुणवत्त्वव्यावृत्तमेव लक्ष्यताव-

---

1. ग. तथापि
2. ग व्यभिचारोपयोगित्वात्
3. ग. गुणत्वं
4. ग. 'साध्य' नास्ति
5. ग. गुणत्व-

## प्रकाशः

वयं तु ब्रूमः । यदुक्तरीत्यापि व्यभिचारोन्नायकस्योपाधित्वेन संग्राह्यत्वम्, तदा पर्यवसितसाध्यव्यापकत्वे सति साध्यसमानाधिकरणत्वे सति वा साध्यव्यभिचारिसाधनाव्यापकत्वमुपाधिलक्षणं बोध्यम् । अत्र च निरधिकरणे साध्यविरुद्धे च सर्वथा उपाधिव्यवहाररहितेऽतिव्याप्तिवारणाय सत्यन्तम् । व्यञ्जनवत्त्वादेर्धूमादिहेतौ उपाधित्वप्रसङ्गवारणाय साध्यव्यभिचारीति ।

---

## तर्कचूडामणिः

च्छेदकं स्वीकर्तव्यमिति वाच्यम् । उक्तोपाधिसाधारणस्य व्यञ्जनवत्त्वादिव्यावृत्तस्य [2]लक्षणान्तरस्य सम्भवादित्याह — वयं तु ब्रूम इति । यदीति । असंग्रहपक्ष उपाध्यायोक्तमेव लक्षणमिति भावः । वस्तुतस्तु तस्याप्युक्तन्यायेन संग्राह्यत्वमेव । यदिशब्दो यदि वेदाः प्रमाणमितिवत् । पर्यवसितेति । साध्यप्रसिद्ध्यवच्छेदकधर्मावच्छिन्नत्वं पर्यवसितत्वम् । अवच्छेदकत्व च यत्किंचित्त्वं विवक्षितम् । नियमांशप्रवेशे गौरवमित्यनुशयादाह — साध्यसमानाधिकरणत्व इति । साध्यव्यभिचारि यत् साधनं तदव्यापकत्वमित्यर्थः । निरधिकरणगगनादावतिव्याप्तिवारणाय साधिकरणत्वमात्रं विशेषणमस्तु, न तु साध्यव्यापकत्वं तत्सामानाधिकरण्यं वा व्यर्थत्वादित्यत [1] आह— साध्यविरुद्धे चेति । इयं गौः पशुत्वात् इत्यत्राश्वत्वस्याप्युपाधित्व[3]प्रसङ्गवारणायेत्यर्थः । तदुपाधित्वमिष्टमेवेत्यत आह — सर्वथेति । निरुक्तस्य दूषकतावच्छेदकत्वं [4]मन्यमानो दर्शयति—नन्विति । तर्हि निर्वचनवैयर्थ्यमित्यत आह—इदं त्विति । ननु दूषकतावच्छेदकाननुगमे सति किं [5]संग्राहकानुगमेनेत्यत आह—यथेति । इदमिति । निरुक्तस्य दूषकतावच्छेदकत्वमित्यर्थः ।

---

1. क. भिन्ने
2. ख. ग. लक्षणान्तरसम्भवात्
3. क. 'प्रसङ्ग' नास्ति
4. ख. ग. मन्वानो
5. ग. संग्राहकानुमानेन

## प्रकाशः

नन्वेवमुपाधिज्ञानकाल एव साधने साध्यव्यभिचार[1]भाननियमात् तदुन्नयनद्वारा अस्य दूषकत्वं न स्यादिति चेत्—भ्रान्तोऽसि। न ह्यनेनैव रूपेण ज्ञातस्य व्यभिचारोन्नायकत्वम्। किं तु शुद्धसाध्यव्यापकत्वपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादिना। इदं तु सकलसंग्राहकमात्रम्। यथा साधारणादीनां विपक्ष[2]वृत्तित्वादिनैव दूषणत्वम्। संग्राहकमात्रमुभयकोट्युपस्थापकत्वादि। इदं सर्वैरेवाभ्युपेयम्। अन्यथा पर्यवसितत्वाद्यस्फुरणे शुद्धसाध्य[3]व्यापकत्वस्फुरणेऽपि व्यभिचारोन्नायकत्वं न स्यात्।

न चानुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमिहोपाधित्वं निरूप्यमित्यग्रिमग्रन्थविरोध इति वाच्यम्। तस्य यथाश्रुताभिप्रायेण साधनाव्यापकत्वं वाच्यमित्यभिप्रायेण वा सर्वसमाधेयत्वात्। [4]यद्वा साध्यव्यापकताग्रहस्थलातिरिक्ते साधनसमानाधिकरणो यो धर्मस्तदवच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्।

---

## तर्कचूडामणिः

**यथाश्रुतेति।** अस्मदुक्तसाध्यव्यभिचारित्वविशेषणविनाकृतपर्यवसितसाध्यव्यापकत्वसाधनाव्यापकत्वाभिप्रायेणेत्यर्थः। नन्वेवं विवक्षितलक्षणस्य [5]मूलकृदनभिप्रेतता स्यादित्यरुचेराह—**साधनेति।** तदंशस्यासल्लक्षणेऽपि प्रवेशान्न विरोधः। व्यतिरेकिधर्मत्वस्य लक्षणत्ववादिमते तदंशज्ञानं न किंचिदपि प्रतिबन्धकमिति तद्ग्रन्थस्य प्रकृतसंगतिरिति भावः। **एवमिति।** निरुक्तस्य दूषकतानवच्छेदकत्वेऽवच्छिन्नसाध्यव्यापकत्वादीनामेव दूषकतावच्छेदकत्व इत्यर्थः। [6]**अन्यथेति।** शुद्ध-

---

1. क. अभान-
2. क. वृत्तित्वेन दूषकत्वम्
3. क, 'व्यापकत्व' नास्ति।
4. ख. 'यद्वा.........साधनाव्यापकत्वम्' इति ग्रन्थो नास्ति।
5. ग. मूलकृदभिप्रेतता न स्यात्
6. ख. 'अन्यथेति.........इत्यर्थः' नास्ति।

## प्रकाशः

नन्वेवं [1]पर्वतत्वरूपपक्षधर्मावच्छिन्नवह्निव्यापकत्वेन [2]धूमाव्यापकत्वेन च ज्ञातस्य पाषाणवत्त्वादेः शुद्धसाध्यव्यभिचारानुमापकत्वं स्यात् । अन्यथा तेन रूपेण [3]ज्ञातस्योद्भूतरूपवत्त्वादेरपि तन्न स्यात् अविशेषादिति चेत्—न। धूमे वह्निव्यभिचारस्य बाधितत्वेन तत एव [4]तदनुमित्यभावात्, बाधानवतारदशायां लिङ्गादिप्रतिसन्धानकाले [5]तद्भ्रमानुमितेरिष्टत्वादिति दिक् ।

## तर्कचूडामणिः

साध्यव्यापकत्वादेरेव दूषकतावच्छेदकत्व इत्यर्थः । किं धूमे [6]वह्न्यव्यभिचारनिश्चयदशायां व्यभिचारानुमितिरापाद्या[7] उत तदनिश्चयदशायाम् । आद्य आह—धूम इति । द्वितीये त्वाह—बाधेति ।

यदत्र केनचित् प्रलपितम्—भ्रमविषयः । ([8]संग्राह्यमानत्वात्) [संग्राह्यः ज्ञायमानत्वात्] इत्यत्र प्रमाविषयत्वमुपाधिः । तत्र प्रमाविषयत्वस्य केवलान्वयितया साधनाव्यापकत्वाभावादव्याप्तिः । नीलधूमो वह्निव्याप्यः धूमत्वादित्यत्र नीलविशिष्टत्वमुपाधिः । तत्र साधनस्य साध्यव्यभिचाराभावात् अव्याप्तिरिति । तत्तुच्छम् । उभयोरपि सद्धेतुत्वेन तत्रोपाधेरभावात् । उपाधेर्व्यभिचारव्याप्तत्वात् । तदेतदाह—दिगिति ।

अत्रेदं चिन्त्यम् । निरुक्तस्यैव संग्राहकतया सर्वोपाधिलक्षणत्वे वह्निना धूमानुमाने घटाश्रयत्वादेरुपाधितापत्तिः । तस्य साध्यसमानाधिकरणत्वात्,

---

1 क पर्वतत्वावच्छिन्नसाध्य-
2. ख. 'धूमाव्यापकत्वेन' नास्ति
3. ख. ज्ञातस्योद्भूतरूपेणाज्ञातस्योद्भूतरूपवत्त्वादेरपि
4. ख. तदनुमित्यनुभवात्
5. क तदनुमितेः
6. ख वह्निव्यभिचार-
7. ख, आपाद्यते
8. ख स न ज्ञायमानत्वात्

## प्रकाशः

न च यन्व्यभिचारित्वेनेत्यादिना निरुक्तस्यैव सकलसंग्राहकत्वे किमनेनेति वाच्यम् । तस्य लक्ष्यतावच्छेदकत्वेनोपयोगात्, अस्य च लक्षणत्वात् । अत एव ग्रन्थकृता लौकिक[1]प्रत्यक्षलक्षणं लक्ष्यतावच्छेदकमभिधायैव कृतम् । इतरभेदानुमान [2]एव तस्य पक्षतावच्छेदकत्वेनोपयोगादिति संक्षेपः ।

---

## तर्कचूडामणिः

तत्साधनस्य साध्यव्यभिचारित्वाच्च । न चैवमपि साध्यव्यापकत्वघटितलक्षणे न दोषः, तस्य [3]साध्याव्यापकत्वादिति वाच्यम् । तस्यापि घटात्यन्ताभावानधिकरणत्वाद्यवच्छिन्नसाध्यव्यापकत्वात् । न च तस्य साध्यप्रसिद्धिन्यूनदेशत्वादनवच्छेदकत्वमिति वाच्यम् । एवं हि बहिर्द्रव्यत्वादेरपि प्रत्यक्षत्वन्यूनदेशत्वादनुपाधितापत्तेः । महानसत्वादेरपि न्यूनवृत्तित्वादेवानवच्छेदकत्वे व्यञ्जनवत्त्वादिनिरासाय साध्यव्यभिचारीति विशेषणदानायोगाच्च ।

न च वह्निना धूमानुमाने घटाश्रयत्वादिकमुपाधिरेवेति वाच्यम् । तव्द्यभिचारस्य साधननिष्ठसाध्य[4]व्यभिचाराननुमापकत्वेन लक्ष्यतावच्छेदकानवच्छिन्नत्वात् । न हि [5]घटाश्रयत्वव्यभिचारित्वं [6]धूमत्वव्यभिचारित्वे लिङ्गम् । धूमसामग्र्यादौ व्यभिचारात् ।

न च वह्निर्धूमव्यभिचारी धूमतव्द्याप्यान्यत्वे सति घटाश्रयत्व[7]व्यभिचारित्वादिति विशेषितं घटाश्रयत्वव्यभिचारित्वं लिङ्गमेवेति वाच्यम् । (सत्यस्यैव) [सत्यन्तस्यैव] गमकत्वे (विशेष) [विशेष्य] वैयर्थ्यात् । यदि च तद्धर्मावच्छिन्न-

---

1. ख. प्रत्यक्षादिलक्षणं
2. ख. एकस्य पक्षता-
3. क. ख. साध्यव्यापक-
4. ख. ग. व्यभिचारानुमा-
5. ख. ग. घटाश्रयित्व-
6. ख. ग. 'धूमव्यभिचारित्वे' नास्ति ।
7. ग. व्यभिचारादिति

## तर्कचूडामणिः

साध्यव्यापकत्वादिकं विवक्षितम्, तदा साध्यव्यभिचारिपदवैयर्थ्यम्। पूर्वोक्तघटावृत्ति-[1]गुणवत्त्वादावव्याप्तिश्च। न च घटाश्रयत्वस्यावच्छिन्नसाध्योपाधित्वे [2]इष्टापत्तिः। घटाश्रयत्वव्यभिचारित्वस्य घटात्यन्ताभावानधिकरणत्वावच्छिन्नधूमव्यभिचारित्वानुमापकत्वात्। [3]शुद्धसाध्योपाधित्वं तु न संभवति, [4]शुद्धसाध्याव्यापकत्वादिति वाच्यम्। एवं हि उद्भूतरूपवत्त्वादेः प्रत्यक्षत्वमात्रे [5]उपाधितानुपपत्तिः। व्यञ्जनवत्त्वादेरप्युक्तप्रकारेणोपाधित्वनिरास[6]सम्भवे तन्निराकरणाय साध्यव्यभिचारिपदानुपादानापत्तेश्च।

यदपि दूषकतावच्छेदकमननुगतमिति, तदपि न। पाषाणत्त्वादेरप्यवच्छिन्नसाध्यव्यापकतया दूषकत्वापत्तेः। न चावच्छिन्नसाध्यं प्रति तदुपाधित्वमिष्टमेवेति वाच्यम्। व्यञ्जनवत्त्वादेरप्येवमुपाधित्वसम्भवे तन्निराकरणानुपपत्तेः। न च दूषकतावच्छेदकातिप्रसक्तिर्न दोषाय। तथा च तत्सत्त्वेऽपि [7]संग्राहकलक्षणाभावादेव पाषाणवत्त्वादेरनुपाधितेति वाच्यम्। अतिप्रसक्तस्य दूषकतावच्छेदकत्वाभावात्। तदेव हि दूषकतावच्छेदकं, यज्ज्ञाने सति व्यभिचारज्ञानद्वारा अनुमितिप्रतिबन्धः। न चावच्छिन्नसाध्यव्यापकत्वादिज्ञानं तथा, तज्ज्ञानेऽपि पाषाणवत्त्वादेः हेतुव्यभिचारज्ञानद्वारा अनुमितप्रतिबन्धकत्वाभावादिति।

अत्र ब्रूमः। लक्ष्यतावच्छेदकं तु पूर्वोक्तमेव। लक्षणं तु साधननिष्ठ-[8]साध्याव्याप्यत्वानु[9]मापकाव्याप्यत्वप्रतियोगित्वे सति साध्यसमानाधिकरणत्वम्। उपाधिव्याप्तिविरहस्य साध्यव्याप्तिविरहे लिङ्गत्वान्नासम्भवः। आकाशसाध्यकहेतौ

---

1. ग. गुणत्वादावव्याप्तेः
2. ग. इष्टापत्तेः
3. ख. शुद्धसाध्यस्योपा-
4. ग. शुद्धसाध्यव्यभिचारानुमापकत्वात्
5. ख. उपाधितानुपपत्तेः
6. ग. सम्भवेन
7. ख. व्यापकलक्षणा-
8. ख. साध्यव्यापकत्वा-
9. ख. मापकव्याप्य-

स च धर्मः क्वचित्साधनमेव । क्वचित् द्रव्यत्वादि । क्वचिन्महानसत्वादि । तथा हि समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुट एव । व्यापकव्यभिचारिणस्त-

## प्रकाशः

[1]क्वचित्साधनमिति । [2]ध्वंसो विनाशी जन्यत्वादित्यादौ भावत्वाद्युपाधावित्यर्थः । क्वचिदद्रव्यत्वादीति । वायुः बहिर्द्रव्यप्रत्यक्षः प्रमेयत्वादित्यादौ रूप-

## तर्कचूडामणिः

घटादेरुपाधित्ववारणाय साध्यसमानाधिकरणत्वविशेषणम् । साध्याव्याप्यत्वं शुद्धसाध्याव्याप्यत्वम् । तेन विशिष्टसाध्याव्याप्यत्वानुमापकाव्याप्यत्वप्रतियोगिनि व्यञ्जनवत्त्वादौ नातिव्याप्तिः । विशिष्टसाध्ये च तदुपाधित्वमिष्टमेव । अवच्छिन्नसाध्यव्यापकोपाधेश्च शुद्धसाध्यव्याप्यत्वोन्नायकतायाः वक्ष्यमाणत्वात् न [3]तत्राव्याप्तिः । द्रव्यत्वं पृथिवीत्वाव्याप्यं द्रव्यत्वघटत्वप्रमेयत्वानीति प्रतीतिविशेष्यत्वे सति घटावृत्ति[4]गुणवत्त्वाव्याप्यत्वादित्यादिक्रमेण तत्रापि शुद्धसाध्याव्याप्यतोन्नायकतायाः [5]सत्त्वान्नाव्याप्तिः । दूषकतावच्छेदकं चाननुगतमनतिप्रसक्तं बोद्धव्यम् । तदेतदभिसन्धायाह —संक्षेप इति ।

केचित्तु साध्यप्रसिद्ध्यवच्छेदकर्किचिदवच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वं तत्त्वम् । व्यञ्जनवत्त्वस्यापि यदवच्छिन्नव्यापकत्वं तदवच्छिन्नोपाधित्वमिष्टमेव । वह्निसामान्ये च नोपाधित्वम्, तदव्यापकत्वादित्याहुः ।

तन्न । उद्भूतरूपवत्त्वादेरपि विशिष्टसाध्योपाधितापत्तौ शुद्धसाध्ये तदुपाधित्वाभावप्रसङ्गादिति दिक् ।

1. क. क्वचिदिति
2. क. 'ध्वंसो,.. .....क्वचिन्महानसत्वादीति' नास्ति ।
3. ख. तत्रातिव्याप्तिः
4. ख. गुणत्वाव्याप्यत्वात्
5. ख. सत्त्वान्नातिव्याप्तिः

व्याप्यव्यभिचारनियमात् । साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव । यथा ध्वंसस्यानित्यत्वे साध्ये भावत्वस्य, वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च विशेषणाव्यभिचारिणि साधने विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात् । अत एव नार्थान्तरम् । विशेषणाव्यभिचारित्वेन ज्ञाते साधने

---

## प्रकाशः

वत्त्वाद्युपाधावित्यर्थः । क्वचिन्महानसत्वादीति । अयं धूमवान् वह्निमत्वादित्यादौ व्यञ्जनवत्त्वाद्युपाधावित्यर्थः । सर्वविधस्योपाधेरुक्तं स्वरूपमुपपादयति—तथा हीति । अत एवेति । न हि विशिष्टव्यभिचारसाधनानन्तरं विशेष्यव्यभिचारसाधनम्, येनार्थान्तरं स्यात् । किं तु तत्सिद्धिरेव पक्षधर्मताबलात् [1]विशेष्यव्यभिचारमादायैव, यदालिङ्गनं विना पक्षे [2]साध्यप्रसिद्ध्यपर्यवसानं तदेव पक्षधर्मताबलात् सिध्यतीति भावः । [3]एतदेव दर्शयति —अन्यथेति । एतच्च प्रकृताभिप्रायेण । [4]अन्यत्र तु प्रकारान्तरेण शुद्धसाध्यव्यभिचारोन्नयनेऽपि नार्थान्तरमिति ध्येयम् ।

---

## तर्कचूडामणिः

ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रापि साधनस्यावच्छेदकत्वं सम्भवतीति पृथगुपादानानुपपत्तिः, आत्मनि द्रव्यत्वाद्यवच्छिन्नसाध्यसत्त्वेऽप्युपाधेरभावान्नास्यावच्छेदकत्वमपीत्यत आह—वायुरिति । व्यञ्जनवत्त्वादीति । यद्यपि व्यञ्जनवत्त्वव्यभिचारस्य न धूमव्यभिचारलिङ्गत्वम्, तत्सामग्र्यादौ व्यभिचारात् । तद्धूमतव्याप्यान्यत्वे सतीति विशेषणे विशेष्यवैयर्थ्यम् । तथाप्यतद्गुणसंविज्ञानबहुव्रीहिणा आर्द्रेन्धनवत्त्वमेवोक्तमिति ध्येयम् । अत एव टीकान्तरे तथैवास्ति । ननु

---

1. क. विशिष्ट-
2. ख. साध्यप्रतीत्यपर्यवसानं
3. क. तदेव
4. ख. अन्यत्रोक्तप्रकार-

**विशिष्टव्यभिचारः सिध्यन् विशेष्यसाध्यव्यभिचारमादायैव सिध्यति, पक्षधर्मताबलात्, अन्यथा प्रतीतेरपर्यवसानात् । न च पक्षधर्मताबलात् प्रकृतसिद्धावर्थान्तरम् ।**

---

## प्रकाशः

ननु विशेष्याभावविशिष्टाभावयोर्भेदात्[1] विशेष्यव्यभिचारविशिष्टव्यभिचारयोरपि भेदात् पक्षधर्मताबलादपि[2] विशिष्टव्यभिचार एव सिध्येत्, [3]न तु विशेष्यव्यभिचारः अनुमितेर्व्यापकतावच्छेदक[4]रूपप्रकारकत्वनियमात् इत्यनुशयेनाह —

---

## तर्कचूडामणिः

तथाहीत्यदिना लक्षणस्य लक्ष्यानुगतेरप्रदर्शनादसंगतिमाशङ्क्य लक्ष्यतावच्छेदकस्यैव सकललक्ष्यानुगतिरुच्यत इत्याह — **सर्वेति** । स्वरूपं लक्ष्यतावच्छेदकमित्यर्थः । नन्वनाकाङ्क्षितविशिष्टसाध्यव्यभिचारानुमाने कुतो नार्थान्तरमित्यत आह— **नहीति** । ननु साध्यतावच्छेदकावच्छिन्नस्य पक्षतावच्छेदकसामानाधिकरण्यसिद्धावेव पक्षधर्मतायाः सामर्थ्यम्, न तु अव्यापकसिद्धावित्यत आह — **यदालिङ्गमिति** । ननु [5]प्रतीत्यपर्यवसानादेव [6]विशेषसिद्धिरुच्यते पक्षधर्मताबलादिति ग्रन्थेनेत्यत आह — **एतदेवेति** । ननु वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ विशिष्टव्यभिचारानुमितेः कथं विशेष्यव्यभिचारविषयकत्वम्, तत्र प्रमेयत्वस्य [7]विशेषणाव्यभिचारित्वादित्यत आह—**एतच्चेति** । प्रत्यक्षस्वशर्श्रयत्वादिसाधनाभिप्रायेणेत्यर्थः ।

ननु संसार्यात्मत्वे व्यभिचारः, तस्य द्रव्यत्वव्याप्यत्वेऽप्युद्भूतरूपव्यभिचारेऽपि प्रत्यक्षत्वव्यभिचाराभावात् रूपवत्त्वस्य द्रव्य[8]प्रत्यक्षत्वव्यापकत्वाभावेन तव्द्यभिचार-

---

1. ख. भेदेन
2. क. 'अपि' नास्ति ।
3. ख. 'न तु विशेष्यव्यभिचारः' नास्ति ।
4. क. तावच्छेदकरूप-
5. ग. प्रमितिपर्यव- ।
6. ख. विशेष्य- ग. विशेषण-
7. ग. विशेषणव्यभि-
8. क. प्रत्यक्षत्वव्यापकाभावेन ग. प्रत्यक्षव्यापकत्वा-

**यद्वा प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वात् महत्त्ववत् ।**

---

## प्रकाशः

**यद्वेति** । साध्ये हेतौ च प्रत्यक्षपदं बहिरिन्द्रियप्रत्यक्षपरम् । तद्रूपत्वादौ व्यभिचारादाह—सत्यन्तम् । द्रव्यत्वमव्यभिचारि व्यापकं यस्येत्यर्थः । न च षष्ठीतत्पुरुषः । तथा च सत्यन्तमात्रस्यैव [1]गमकत्वे शेषवैयर्थ्यापत्तेः दृष्टान्तसिद्धिस्वरूपासिद्ध्योरापत्तेश्च । तद्घटत्वादौ व्यभिचारादाह—**द्रव्येत्यादि** । अत्र च [2]यद्यपि प्रत्यक्षत्वव्यापकव्यभिचारित्वादित्यस्यैव [3]गमकत्वमिति द्रव्यपदसहितसत्यन्तं व्यर्थम् । तथापि व्यभिचारस्याभावगर्भतया [4]द्रव्यघटितप्रतियोगिकाखण्डाभाव[5]गर्भहेतौ न व्यर्थविशेषणतेति भावः ।

---

## तर्कचूडामणिः

स्यालिङ्गत्वापत्तिश्चेत्यत आह — **साध्य इति** । रूपत्वस्य द्रव्य[6]प्रत्यक्षत्वव्यभिचारादाह—**तद्रूपत्वादाविति** । ननु द्रव्यत्वाव्यभिचारित्वे सतीत्यस्य द्रव्यत्वप्रतियोगिकात्यन्ताभाव[7]समानाधिकरणत्वमर्थो वाच्यः, न तु द्रव्यत्वव्यापकत्वम्, असिद्ध्यापत्तेः । तथा चाग्रेतनं व्यभिचारनिर्वचनं विरुध्येतेत्यत आह — **द्रव्यत्वमिति** । **शेषवैयर्थ्येति** । द्रव्यत्वव्यापकस्य सर्वस्यापि प्रत्यक्षत्वव्यभिचारित्वादित्यर्थः । **दृष्टान्तेति** । महत्त्वस्य द्रव्यत्वाव्यापकत्वादित्यर्थः । **तद्घटत्वादाविति** । यद्यपि घटमात्रस्य प्रत्यक्षतया [8]घटत्व एव साध्याभावः, तथापि योगिनिर्मिते तदीयप्रत्यक्षविषये अस्मदाद्यगृहीते लौकिकप्रत्यक्षविषयत्वाभावेन घटत्वे साध्यप्रसिद्धिशङ्कायां तद्घटत्वेत्युक्तम् । वस्तुतस्तत्पदमनुपादेयमिति ध्येयम् ।

---

1. ख. व्याप्यत्वे
2. क 'यद्यपि' नास्ति ।
3. ख. गमकत्वे द्रव्य-
4. ख. द्रव्यतद्घटित-
5. ख. घटितहेतौ
6. ख. प्रत्यक्षव्यभि-
7. ख. असमाना-
8. ख. घट एव

तस्य मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनयत्वाव्यभिचारित्वे सति श्याममित्रातनयत्वव्यापकव्यभिचारित्वात् अघटत्ववत् । अव्यभिचारश्च तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वम् । तच्चाभेदेऽपि ।

---

## प्रकाशः

वस्तुतस्तु द्रव्यप्रत्यक्षत्वव्यापकपदमुद्भूत[1]रूपवत्त्वाद्युपाधिपरम् । अतो नोक्तदोषः । न चैवमस्योपाधित्वेन साध्यव्यभिचारानुमापकत्वं न निर्वहेत् । तदा हि तन्निर्वहति यदि तस्य पर्यवसितसाध्यव्यापकत्वज्ञानं व्यभिचारानुमानप्रयोजकं भवतीति वाच्यम् । [2]विपक्षबाधकत्वेन [3]व्याप्तिग्रहौपयिकतया तत्प्रयोजकत्वसम्भवात् । यद्यपि [4]प्रमेयत्वहेतौ [5]प्रत्यक्षत्वव्यभिचारित्वानुमाने निरुक्तद्रव्यत्वाव्यभिचारित्वं स्वरूपासिद्धम्, तथापि द्रव्ये रूपव्यभिचारित्वादित्येव तदनुमानम् । तत्र न ह्येकेनैव रूपेण सर्वत्र व्यभिचारानुमानमिति नियम इति भावः ।

---

## तर्कचूडामणिः

ननु [6]द्रव्यप्रत्यक्षत्वव्यापकत्वेन गृह्यमाणं यत् रूपवत्त्वं तद्व्यभिचारस्यैव लिङ्गत्वमस्तु लाघवात् । किं तद्व्यापकेनेत्यत आह—**वस्तुत इति** । तत्रोपाध्यायोक्तदोषमाह—**न चेति** । जयदेवोक्तपरिहारमाह—**विपक्षेति** । ननु मित्रातनयत्वव्यापकत्वमात्रस्यैव हेतुत्वे शेषवैयर्थ्यम् । श्यामत्वव्यापकव्यभिचारित्वस्यैव गमकत्वे विशेषणान्तरवैयर्थ्यं चेत्यत आह—**हेत्वर्थ इति** । **वैकल्यमिति** । मित्रातनयत्वाव्याप्यत्वादिति भावः । **दृष्टान्तत्वात्**—[7]दृष्टान्तीभूताघटत्वाश्रयत्वादित्यर्थः । ननु तत्रापि शाकपाकजत्वव्यभिचारित्वं संदिग्धमेवेत्यत आह—**तत्रेति** । यद्यपि

---

1. क. रूपवत्त्वादिपरम्
2. क. विपक्षबाधकेन
3. क. व्याप्तिग्रहोपाधिकतया
4. ख. प्रमेयत्वादिहेतौ
5. क. प्रत्यक्षव्यभिचारानु-
6. ग. द्रव्यत्वप्रत्यक्ष-
7. क. दृष्टान्तीभूतं न घटत्वा-

## प्रकाशः

उक्तप्रकारं साधनावच्छिन्नसाध्य[1]व्यापकोपाधिस्थलेऽप्याह—**तथा मित्रेति।** हेत्वर्थः पूर्ववत् । न चाघटत्वदृष्टान्ते साधनवैकल्यम् । यत्र मित्रातनय एव कुतोऽप्यासवाक्यादितः शाकपाकजत्वाभावोऽवगतः [2]तस्यैवाघटस्य घटभिन्नस्य सम्भवे तत्त्वस्य (तस्य) दृष्टान्तत्वात् । तत्रापाठ्यभावानवगतौ संदिग्धोपाधितापत्तेः । [3]डित्थ इतिवत् अघट इति मित्रातनयस्य संज्ञाभेदः । [4]तद्वृत्तिधर्मो वा अघटत्वमित्यप्याहुः ।

अन्ये तु यत्किञ्चिदधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वमेवाव्यभिचारित्वं प्रकृते विवक्षितम् । तच्च यद्यपि तत्सामानाधिकरण्यमात्रपर्यवसन्नं [5]ततो व्यभिचारिसाधारणम् । [6]तथापि सतीति पदस्य महिम्ना विशिष्टवैशिष्ट्यलाभात् यदधिकरण-

---

## तर्कचूडामणिः

शङ्कितोपाधित्वमेव तस्य, तथापि निश्चितोपाधित्वदशायां प्रकृतग्रन्थावतारः, अन्यथा व्यभिचारानुमानयोगादिति भावः ।

ननु घटभिन्नस्य कस्यचिन्मित्रातनयस्य शाकपाकजत्वाभावेऽपि तत्र वर्तमानमघटत्वं पटादिसाधारणमेव, प्रतिव्यक्ति तन्नानात्वे मानाभावात् । तथा च तत्र सत्यन्ताभावादसिद्धितादवस्थ्यमित्यत आह—[7] **डित्थ इतिवदिति । मित्रातनयस्येति ।** [8]अश्यामस्येति शेषः । ननूक्तव्यभिचारोन्नयनप्रकारस्य वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र रूपवत्त्वाद्युपाधावसम्भवात् तत्र प्रकारान्तरमनुसरणीयं स्यात् । न चैकेन प्रकारेण व्यभिचारोन्नयनसम्भवे बहुप्रकारकल्पनं न्याय्यमित्यनुशयादाह — **अन्ये त्विति ।**

---

1. क. व्यापकस्थले
2. क. तस्यैव घटभिन्नस्य दृष्टान्तत्वात्
3. क. सिद्धार्थ इतिवत्
4. ख. तद्वृत्त्यघटत्वमेवाघटत्वमित्यप्याहुः
5. ख, 'ततो' नास्ति
6. क. तथा च सतीति
7. ख. 'डित्थ इतिवदिति' नास्ति; ग. सिद्ध
8. ख. ग. श्यामस्येति

**यद्वा यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः स उपाधिः ।**

---

## प्रकाशः

तावच्छेदेन मित्रातनयत्वसामानाधिकरण्यरूप[1]तदव्यभिचारविशिष्टता [2]तदधिकरणतावच्छेदेन शाकपाकजत्वव्यभिचारवैशिष्ट्यं हेत्वर्थोऽभिमतः । तेन न व्यभिचारिसाधारण्यम् । इदं चाश्यामकिंचिन्मित्रातनय[3]वृत्तित्वात् घटान्यत्वेऽप्यस्तीति न तत्र साधनवैकल्यमित्याहुः ।

पूर्वं साक्षात् शुद्धसाध्यव्यभिचारोन्नायकस्योपाधित्वमङ्गीकृत्य विशिष्टसाध्य[4]व्यापकस्यापि साक्षादेव तथात्वमिति दर्शितम् । सम्प्रति साक्षात् विशिष्टसाध्य[5]व्यभिचारानुमानद्वारा वा तदुन्नायकस्य दोषत्वे [6]विशेषाभावात् कथंचित्तदुन्नायक एवोपाधिरित्यभिप्रेत्याह — **यद्वेति** । [7]**साधनव्यभिचारीति** । साधनं व्यभिचारि

---

## तर्कचूडामणिः

**यत्किंचिदिति** । [8]वक्ष्यमाणमप्यव्यभिचारनिर्वचनमेवंपरमिति भावः । **व्यभिचारीति** । श्याममित्रातनयकोकिलान्यतरत्व इत्यर्थः । तत्रोक्तहेतुमति श्यामत्वव्यभिचाराभावादिति भावः । **तेनेति** । तत्र हि न मित्रातनयत्वावच्छेदेन शाकपाकजत्वव्यभिचारित्वम्, किं तु कोकिलत्वसामानाधिकरण्यावच्छेदेनेति भावः । [9]एतन्मते अघटत्वदृष्टान्तस्यापि सामञ्जस्यमित्याह — **इदं चेति** । एतन्मते प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वसामानाधिकरण्यावच्छेदेन उद्भूतरूपवत्त्वव्यभिचारित्वादिति पूर्वत्रापि हेत्वर्थो द्रष्टव्यः । सामानाधिकरण्यावच्छेदेनेति विशेषणाच्च घटतद्रूपान्यतर-

---

1. क. तदव्यव्यभिचारित्ववि-
2. ख. तदधिकरणावच्छेदेन
3. ख. व्यक्तित्वात्
4. क. व्यभिचारस्यापि
5. क. व्यभिचारद्वारा
6. क. विशिष्टाभावात्
7. क. साधनेति
8. ग. वक्ष्यमाणव्यभिचारनिर्वचनमेव मधुरमिति
9. क. तन्मते

तत्त्वं च साक्षात् परम्परया वेति नार्थान्तरम्। किं चार्थान्तरस्य पुरुषदोष-तया आभानान्तरस्य तत्राभावात् उपाधिरेव भावत्वादिकं दोषः।

न चैवं शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वम्, जलं प्रमेयं रसवत्त्वादित्यत्र पृथिवीत्वमुपाधिः स्यात्। केवलान्वयित्वसाधकप्रमाणेन तत्र साध्यसिद्धुरुपाधेर्विशिष्टाव्यापकत्वात्। न च पक्षेतरे स्वव्याघातकत्वे-नानुपाधावतिव्याप्तिः। तत्रानुकूलतर्काभावेन साध्यव्यापकत्वानिश्चयात्। सहचारदर्शनादेस्तेन विना संशायकत्वादित्युक्तम्। बाधोन्नीते चानुकूल-

## प्रकाशः

वस्य साधनाव्यापक इत्यर्थः। साध्यव्यभिचारोन्नायकस्वव्यभिचारित्वेनेति शेषः। तेन साध्यव्यभिचारोन्नायकाप्रयोजकत्वादौ नातिप्रसङ्गः। अभ्युपेत्याह — **किं चेति**। अर्थान्तरस्येत्युपलक्षणम्, अप्राप्तकालस्यापि द्रष्टव्यम्। [1]**तत्राभावादिति**। तत्रा-स्फुरणादित्यर्थः। तत्रेति। पक्ष इति शेषः। [2]**विशिष्टाव्यापकत्वादिति**।

## तर्कचूडामणिः

त्वादौ न व्यभिचारः। वायुः प्रत्यक्षः प्रमेयत्वादित्यत्रापि द्रव्यत्वसामानाधिकरण्याव-च्छेदेन बहिरिन्द्रिय[3]प्रत्यक्षत्वव्यभिचारित्वस्य हेतुत्वसम्भवान्नासार्वत्रिकतेति ध्येयम्।

ननु साधनाव्यापकस्य साध्यव्यभिचारोन्नायकत्वविशिष्टस्यैवोपाधित्वमिति पूर्व-मप्यभिधानात् कल्पान्तरत्वानुपपत्तिरित्यत आह— **पूर्वमिति**। ननु साधनव्यभि-चारित्वं साधनात्यन्ताभाववद्गामित्वम्। तथा च वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र रूपवत्त्वोपाधावव्याप्तिरित्यत आह— **साधनमिति**। [4]व्यभिचारशब्दस्य तत्समा-

1. क. तत्रेति
2. क विशिष्टेति
3. ख. प्रत्यक्षव्यभि-
4. क. व्यभिचारि-
   ग. व्यभिचारपदस्य

तर्कोऽस्त्येवेति। एवं पर्वतावयववृत्त्यन्यत्वादेरपि नोपाधित्वम्। पक्षमात्र-व्यावर्तकविशेषणवत्त्वात्।

अत एव धूमे आर्द्रेन्धनप्रभववह्निमत्त्वम्, द्रव्यबहिरिन्द्रियप्रत्यक्षत्वे उद्भूतरूपवत्त्वम्, मित्रातनयश्यामत्वे शाकपाकजत्वम्, जन्यानित्यत्वे

---

## प्रकाशः

पक्षधर्मावच्छिन्नसाधनावच्छिन्नसाध्यस्य पक्ष एवाव्यापनादित्यर्थः। तत्रेति। यद्यप्यनु-कूलतर्कस्य ग्रन्थकृन्मते न व्याप्तिग्राहकत्वम्, तथापि तदभावे निवर्तकाभावेन व्यभिचारसंशयान्न साध्यव्यापकत्वनिश्चय इति भावः।

[1]पक्षमात्रेति। यद्यप्येतत् सदुपाधावपि कुत्रचिदस्ति तथाप्यनुकूलतर्का-भावादेव [2]साध्यव्यापकत्वानिश्चय इति भावः। यद्यपि पर्वतपदं पर्वतावयववृत्ति-रूपादेरपि व्यावर्तकम्। तथाप्युक्तस्योपाधेरुपाधितायां [3]तस्य तत्त्वं न प्रयोजकम्, किं तु [4]तस्य पक्षमात्रव्यावर्तकत्वमेव [5]तथा, तेनैवोक्तोपाधीनां साधनाव्यापकता

---

## तर्कचूडामणिः

नाधिकरणात्यन्ताभावप्रतियोगित्वपरत्वे दोषतादवस्थ्यमित्यत आह—साधनेति। ननूक्तरीत्या अर्थान्तरस्यैवाभावे कथं तस्य पुंदोषत्वाभिधानमित्यत आह—अभ्यु-पेत्येति। ननु [6]व्यभिचाराद्याभासान्तरसत्त्वे कथं तदभाव इत्यत आह—तत्रेति।

ननु [7]पक्षातिरिक्ते साध्यसिद्धावपि न क्षतिः [8]तत्रोपाधेरपि सत्त्वादित्यत आह—पक्ष इति। [9]कुत्रचिदिति। धूमवानयं वह्निमत्त्वादित्यत्र पर्वतेतरत्वादा-वित्यर्थः। उपाधितायाम्—साधनाव्यापकतायाम्। तस्य पर्वतपदस्य। तत्त्वं—

---

1. क. पक्षेति
2. क. साध्यव्यापकत्वनिश्चयः
3. क. 'तस्य' नास्ति
4. ख. 'तस्य' नास्ति।
5. क. तथापि तेनैव
6. क ग. व्यभिचाराद्यभावान्तर-
7. ख. पक्षातिरिक्तोक्तसाध्य-
8. ख. तत्रोपाधेरसत्त्वात्
9. ख. अत्र केचिदिति।

भावत्वमुपाधिः । तदुत्कर्षेण साध्योत्कर्षात् । अनन्यथासिद्धान्वयव्यतिरेकतो वैयक्रात् कारणतावगमेन घटोन्मज्जनप्रसङ्गेन साध्यव्यापकतानिश्चयात् ।

ननु किं कार्यकारणयोरेव व्याप्तिः, तथा च बहुधा व्याकुली स्यादिति चेत्—न । तदुपजीव्यान्येषामप्यनुकूलतर्केण व्याप्तिग्रहात् ।

---

## प्रकाशः

निर्वाहादित्यभिप्रेत्य तथोक्तम् । एवं चोपाधिताप्रयोजकीभूतपक्षमात्रव्यावृत्तिप्रयोजकविशेषणवत्त्वादिति प्रकृतग्रन्थार्थो द्रष्टव्य इत्याहुः ।

त्रिषु यथासंख्यं तर्कमाह—[1]तदुत्कर्षेणेति । चतुर्थे तर्कमाह— घटेति । [2]प्रतियोगिध्वंसप्रागभावानवच्छिन्नसमयस्य प्रतियोगि[3]समयत्वनियमादिति भावः । घटोन्मज्जनप्रसङ्गमदृष्ट्वैव शङ्कते—[4]तत्किमिति । रसादेरपि रूपाव्याप्यतापत्तेरिति भावः । नेति । सर्वत्र कार्यकारण[5]भावस्योपजीवनमावश्यकम्, क्वचित् साक्षात्

---

## तर्कचूडामणिः

रूपादिव्यावर्तकत्वम् । [6]न प्रयोजकमित्यर्थः । तथा—साधनाव्यापकताप्रयोजकामित्यर्थः । तेनैवेति । साधनवत्पक्ष[7]व्यावर्तकत्वेनेत्यर्थः । नन्वेवमपि पक्षमात्रव्यावर्तकविशेषणवत्त्वादिति हेतोरसिद्धिरित्यत आह—एवं चेति । उपाधिताप्रयोजकीभूतपदार्थान्तरव्यावृत्तिरेव मात्रचोऽर्थ इति नासिद्धिरिति भावः । सर्वेषहेतूनां सर्वत्रान्वयशङ्कां निरस्यति—त्रिष्विति । यद्यपि चतुर्षु यथासंख्यमित्येव वाच्यम्, न तु चतुर्थस्य पार्थक्येन योजना, तथापि तत्र वक्तव्यसद्भावात् पृथक्कृतमिति ध्येयम् । ननु घटप्रागभावध्वंसरूपघटस्य ध्वंसेऽपि यथा न प्रागभावोन्मज्जनम्,

---

1. क तदिति
2. क. प्रतिध्वंस-
3. ख कालत्व-
4. क तदिति
5. क. ग्रहस्योप-
6. ग. 'न प्रयोजकमित्यर्थः' नास्ति
7. क. व्यावर्तनेन . ख. व्यावर्तकेन

यत्र साध्योपाध्योर्हेतुसाध्ययोर्वा व्याप्तिग्राहकसाम्यान्नैकत्र व्याप्तिनिश्चयस्तत्र संदिग्धोपाधित्वम्, व्यभिचारसंशयोपधायकत्वात्। यदा च तादृशैकत्रानुकूलतर्कावतारस्तदा हेतुत्वमुपाधित्वं वा निश्चितम्। पक्षेतरस्य स्वव्याघातकत्वेन न हेतुव्यभिचारसंशायकत्वम्। अतो न संदिग्धोपाधिरपि सः।

---

## प्रकाशः

क्वचित् परम्परयेति (भावः) [आहुः]।

[1]पक्षेतरस्येति। स्वव्याघातकत्व[2]लक्षणप्रतिकूलतर्केण तस्य साध्याव्यापकत्वनिर्णयात् इति भावः। यद्यपि विशेषादर्शनदशायामुपाधित्वसंशयेन व्यभिचारसंशयाधायकत्वमपि[3] तस्य, तथापि वस्तुत उपाधित्वाभावेन [4]शङ्कितोपाधित्वं तस्य

---

## तर्कचूडामणिः

एवं घटानुन्मज्जनमपीत्यत आह—**प्रतियोगीति**। नन्वकार्यकारणयोरपि [5]तर्कमूलव्याप्तेरुक्तत्वात् शङ्कानुपपत्तिरित्यत आह—**घटेति**। बहुव्याकुलीमेवाह—**रसादेरिति**। ननु रूपरसादीनां कार्यकारणभावं विनापि व्याप्तिग्रहादुपजीव्यत्वमसिद्धमित्यत आह—**सर्वत्रेति**। नीरूपस्य रसवत्त्वे रसस्य रूपवज्जन्यत्वस्य गृहीतस्य बाधप्रसङ्ग इति तथापि कार्यकारणभावोपजीवनमावश्यकमिति भावः। गोत्वादिना अश्वत्वाभावाद्यनुमाने परम्परयापि न तदपेक्षेत्यनुशयं सूचयति —**आहुरिति**।

ननु पक्षेतरत्वस्योपाधित्वविरहो न स्वव्याघातकत्वात्। किं त्वनुकूलतर्काभावेन [6]साध्याव्यापकत्वनिश्चयादेव। सति हि [7]तद्व्यापकत्वनिश्चये [8]स्वव्याघात-

---

1. क. पक्षेति
2. ख. रूपप्रति-
3. क 'अपि तस्य' नास्ति।
4. ख. सन्दिग्धोपाधित्वं
5. ख. तन्मूलाव्याप्तेः लक्ष्यत्वात्
6. ख. साध्यव्यापकत्व-
7. ख तद्व्यापकनिश्चये
8. ख. स्वस्य घातकत्वा-

यत्तु पक्षेतरस्य यथा साध्यव्यापकत्वं तथा साध्याभावव्यापकत्वमपि, ग्राहकसाम्यात् । तथा चोभयव्यापकनिवृत्त्या साध्यतदभावाभ्यां पक्षे निवर्तितव्यम् । न चैवम्, तथा च पक्षेतरः साध्यव्यापकतासंशयेन संदिग्धः कथं परं दूषयेदिति ।

तन्न । तथापि हि साध्यव्यापकतापक्षमालम्ब्य हेतुव्यभिचारसंशया-

## प्रकाशः

नास्तीत्यर्थः ।

[1]साध्यव्यापकतापक्षमिति । साध्यव्यापकताकोटिमित्यर्थः । तथाचोक्तरीत्या [2]साध्याव्यापकत्वनिर्णय एव तत्र (वाच्यम्) [वाच्यः]। तेन [3]न [4]तत्संशया-

## तर्कचूडामणिः

कत्वायोगात् । तथा हि तस्योपाधित्वे तेनाप्यसाधकतानुमाने पक्षेतरस्योपाधित्वं स्यादित्येव तस्य स्वव्याघातकत्वम् । न च तत्सम्भवति । अनुकूलतर्केण [5]तस्या-साधकत्वव्याप्यत्वे निश्चिते तदव्यापकोपाधेः साध्याव्यापकत्वनिश्चयेन तत्र पक्षेतरत्वस्य निश्चितशङ्कितोपाधि[6]त्वायोगादित्यत आह — स्वव्याघातकत्वेति । इदं चापाततः । वस्तुतस्तर्केण हेतोः [7]साध्यव्याप्यत्वे निश्चिते तदव्यापकतया [8]साध्याव्यापकत्वनिश्चयादेवानुपाधित्वं बोध्यम् । अत एव हेतौ यदा तर्कानवतार-स्तदा तदुपाधित्वमाशङ्क्य निराकरोति—यद्यपीति। यदि [9]विशेषादर्शनदशायां

1. क. साध्येति
2. ख. साध्यव्यापकत्वानिर्णयः
3. ख. 'न' नास्ति ।
4. क. तत्संशायकत्वम्
5. ख. तस्य साधकत्व-
   ग. तस्य बाधकत्व-
6. क. स्यादित्यतः
7. ख. साध्यव्यापकत्वनिश्चये
8. ग. साध्याव्यावर्तकत्व-
9. ग. 'विशेषादर्शन.........व्यभि-चारसंशयात्' नास्ति ।

धायकत्वेन दूषणं स्यादेव। ननु यत्रोपाधिस्तत्रानुकूलतर्को यदि नास्ति, तदा तदभावेनैव व्याप्तिग्रहः। अथास्ति तदा साध्यव्याप्याव्यापकत्वेनोपाधिः साध्याव्यापकत्वनिश्चयान्नोपाधिरित्युभयथापि नोपाधिर्दूषणम्। न च व्याप्त्यभावव्याप्यमुभयम्, अत उपाधिरपि तदभावोन्नयनेन दोष इति वाच्यम्। उपाधेरात्मलाभार्थमनुकूलतर्काभावोपजीवकत्वेन तस्यैव दोषत्वादिति चेत्—

न। सोपाधावेकत्र साध्यतदभावसम्बन्धस्य विरुद्धत्वात् अवच्छेदकभेदेन तदुभयसम्बन्धो वाच्यः। तथा च साधने साध्यसम्बन्धितावच्छेदकरूपानुकूलतर्काभावोपजीवनमन्तरेणोपाधिरावश्यकः तथानुकूल-

प्रकाशः

धायकत्वमिति भावः। **उभयमिति**। अनुकूलतर्काभावः उपाधिश्चेत्युभयमुपाधिरिति[1] आत्मनः साध्यव्यापकत्वनिश्चयार्थमित्यर्थः। अनुकूलतर्कसत्त्वे हि हेतोः साध्यव्याप्यतया उपाधेः [2]साधनाव्यापकतया साध्याव्यापकत्वनिश्चयादित्यर्थः। **सोपाधाविति**। साधारण इति शेषः। विरुद्धे साध्यसम्बन्धाभावेऽ[3]प्युपाधि-

तर्कचूडामणिः

पक्षेतरत्वोपाधिसंशयाधीनव्यभिचारसंशयादनुमितिप्रतिबन्ध आपाद्यते तदेष्टापत्तिः। यदि च तस्यापि शङ्कितोपाधित्वेन पूर्वोक्तलक्षणानामतिव्याप्तिरुच्यते तदाह—**वस्तुत इति**।

ननु [4]पक्षेतरत्वस्य साध्यव्यापकतायाः अनङ्गीकारात् तत्पक्षमवलम्ब्येत्यनुपपन्नमित्यत आह—**साध्येति**। कथं [5]तर्हि [6]तदुपाधित्वनिरास इत्यत आह—

1. ख. उपाधेरिति
2. ख. तदव्यापकतया
3. क. उपाधित्वस्वीकारात्
4. ग. तस्य
5. ख. 'तर्हि' नास्ति।
6. ग. 'तद्' नास्ति।

तर्काभावोऽप्यावश्यक इति उभयोरपि विनिगमकाभावात् दूषकत्वम् ।

अन्ये तु यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्तते स धर्मस्तत्र हेतावुपाधिः । स च धर्मो यस्याभावात्पक्षे साध्यसाधनसम्बन्धाभावः

---

## प्रकाशः

स्वीकारादिति ध्येयम् । विनिगमकाभावादिति । उपाध्यभावे निरुपाधित्वभङ्ग-प्रसङ्ग एवानुकूलतर्कः स्यादिति अनुकूलतर्काभावस्यापि स्वरूपलाभार्थमु-पाध्युपजीवकत्वम् । एवं चोभयोरपि [1]परस्परापेक्षिततयोपजीव्यत्वाविशेषात् विनि-गमनाभाव इति भावः ।

---

## तर्कचूडामणिः

तथा चेति । उभयपदेनानुकूलतर्कस्य ग्रहणं वारयति—अनुकूलेति । ननु निषिद्धत्वादुपाधिस्वरूपे नानुकूलतर्काभावस्योपजीव्यत्वमित्यत आह—आत्मन इति । निश्चयहेतुत्वमेवाह—अनुकूलेति । विरुद्ध इति । यद्यपि विरुद्धे तदुभयसम्बन्धा-भावादुपाधिरनावश्यकः । तथापि साधारणे क्लृप्तत्वादत्रापि [2]दोषत्वमिति भावः ।

ननूभयोरावश्यकत्वेऽपि अनुकूलतर्काभावस्योपजीव्यत्वात् विनिगमकाभावोऽ-सिद्ध इत्यत आह—उपाधीति । यद्यपि साधारणस्य साध्यतदभावसम्बन्धोऽधि-करणभेदेनैवेति तदुभयसम्बन्धो न विरुद्धः, न वा विरोधभञ्जनायोपाधेरावश्य-कता । अन्यथा साधारणस्योपाधितदभावसम्बन्धोऽपि विरुद्ध इति तत्राप्युपाधि-सम्बन्धितावच्छेदककल्पनापत्तावनवस्थाप्रसङ्गः । तथाप्युपाधिनिराकरणादिना निषिद्धत्वादेः साध्यव्यापकत्वसाधनाव्यापकत्वयोः निराकर्तुमशक्यत्वेन दोषत्वमेव

---

1. क. परस्परापेक्षोपजीव्यत्वाविशेषा-भावात्
2. ख. दूषणत्वमिति ।

यथा आर्द्रेन्धनवत्त्वम्। व्यावर्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके। अत एव तत्र साध्यसाधनसम्बन्धाभावः पक्षे।

---

## प्रकाशः

अन्ये त्विति। क्वचित्साधनवति यद्व्यावृत्त्या लिङ्गेन यस्य साधनस्य साध्यव्यावृत्तिरनुमातुं [1]शक्यते तस्मिन् साधने स उपाधिरित्यर्थः। स चेति। एतच्च पक्षावृत्त्युपाधिमभिप्रेत्योक्तम्। तदन्यस्थले चान्यत्र क्वचित्साधनवति स्वव्यतिरेकात् साध्याभावसाधने व्यभिचारज्ञानद्वारैव तस्य दूषकत्वमिति भावः। साध्यसाधन-सम्बन्धाभावोऽपि [2]तत्र नास्तीति कृत्वा [3]एतदुक्तम्। वस्तुतः साध्याभावमात्रे तात्पर्यम्। तावतैव दूषकत्वसम्भवात् अत एव यद्व्यावृत्त्या साध्यं निवर्तत इत्युक्तम्। अत एवाह—व्यावर्तते हि तद्व्यावृत्त्या धूमवत्त्वमिति। तत्रेति। [4]अयोगोलक इत्यर्थः। यत एव तत्र साध्यं व्यावर्तते अत एव साध्यसाधन-सम्बन्धाभावोऽपीत्यर्थः।

---

## तर्कचूडामणिः

निराकार्यम्। तच्च न सम्भवति। व्यभिचाराद्युन्नायकत्वेन तद्दोषताया अवश्य-वाच्यत्वादित्यत्र तात्पर्यम्।

[5]मणिकण्ठादिमतमाह—अन्ये त्विति। ननु ह्रदो वह्निमान् धूमवत्त्वा-दित्यत्र वह्निसामग्र्या उपाधितापत्तिः। तद्व्यावृत्त्या ह्रदे साध्यव्यावृत्तेरित्यत आह—साधनवतीति। पक्ष एवेति न नियमः, अन्धकारो द्रव्यमित्यत्र अश्रावणत्वादे-रनुपाधितापत्तेरित्यत आह—[6]क्वचिदिति। [7]स्थापनानुमानस्य प्रतिपक्षस्य सत्त्वे

---

1. क. न शक्यते
2. ख. तत्रास्तीति
3. ख. तदुक्तम्
4. क. अत्रायोगोलके
5. क. मणिकण्ठकारादि-
6. ख. केचिदिति
7. ख 'स्थापना ......... समा-नाधिकरणे' नास्ति।

एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोः सम्बन्धो निवर्तमानः पक्षधर्मताबलादनित्यत्वाभावमादाय सिध्यति। तथा वायावुद्भूतरूपवत्त्वं निवर्तमानं बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्तयत् प्रत्यक्षत्वाभावमादाय सिध्यति। तथा चोभयत्रापि पक्षे साध्याभावसिद्ध्या साध्यसाधनसम्बन्धाभावोऽस्तीति। अत एव बाधानुन्नीतपक्षेतरस्यानुपाधित्वम्। स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्तकत्वादिति।

---

## प्रकाशः

यत्तु तत्र साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिरिति तात्पर्यगत्या लक्षणमुक्तं भवतीति। तन्न। तस्य पूर्वपक्ष एव दूषितत्वात् विरुद्धोपाध्यसंग्रहापत्तेः।

एतेन [1]साध्यसाधनसम्बन्धव्यापकत्वे [2]सति [3]साधनाव्यापकत्वं तेनोक्तमिति निरस्तम्। विरुद्धे साध्यसाधनसम्बन्धाभावेन तदुपाध्यसंग्रहात्। [4]स्वव्याघात-

---

## तर्कचूडामणिः

कथं साध्याभावानुमितिरित्यत आह—**अनुमातुं शक्यत इति**। सद्धेतौ घटादेरुपाधित्ववारणाय **लिङ्गेनेति**। व्याप्यपक्षधर्मेणेत्यर्थः। अत्र [5]साध्यसमानाधिकरणेति व्यावृत्तिप्रतियोगिविशेषणम्, तेन घटव्यावृत्त्या गगनव्यावृत्त्यनुमानसम्भवेन गगनसाध्यकहेतौ घटादेरुपाधित्वप्रसङ्ग इति दूषणमलग्नकं बोध्यम्। ननु पक्षअश्रावणत्वव्यतिरेकाभावेन [6]तत्राव्याप्तिरित्यत आह—**एतच्चेति**। नन्वेवं पक्षवृत्तेरुपाधित्वमेव न स्यात्, पक्षे स्वव्यतिरेकस्यासिद्धतया सत्प्रतिपक्षानुन्नायकत्वादित्यत आह—**तदन्येति**।

---

1. क. 'साध्य' नास्ति।
2. ख. 'सति' नास्ति।
3. ख. साधनाव्यापकमित्यनेनोक्तमिति
4. क. स्वव्यापकत्वेन त।
5. ग. 'साध्य' नास्ति
6. ख. तत्र तिव्याप्ति-

यत्तूपाधिमात्रस्य लक्षणं व्यतिरेकिधर्मत्वम्। पक्षेतरोऽपि क्वचिदुपाधिः। तत्तदुपाधेस्तु तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाव्यापकत्वम्। न च वह्निधूमसम्बन्धोपाधिः पक्षेतरत्वं स्यादिति वाच्यम्। आपाद्याप्रसिद्धेरिति।

तन्न। अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकमुपाधित्वमिह निरूप्यम्। तच्च न व्यतिरेकित्वम्, अतिप्रसङ्गात्। विशेषलक्षणत्वे तु वह्निधूमसम्बन्धे पक्षेतरत्वस्योपाधित्वप्रसङ्गाच्च।

---

## प्रकाशः

कत्वेनेति। तेनापि स्वव्यतिरेकद्वारा पक्षे साध्याभावसाधने पक्षेतरस्योपाधित्वप्रसङ्गेनेत्यर्थः।

केषांचिन्मतं दूषयितुमुपन्यस्यति—यत्त्विति। [1]केवलान्वयिनः [2]साधनव्यापकत्वेन व्यभिचारोन्नयनद्वारा दूषकत्वाभावादुपाधित्वमसम्भवीति तन्निवृत्त्यर्थं (व्यतिरेकिणीत्युक्तम्) (व्यतिरेकीत्युक्तम्)। आपाद्येति। वह्निधूमसम्बन्धोपाधित्वाप्रसिद्धेरित्यर्थः। वह्निधूमसम्बन्ध इति। न ह्यत्र वह्निधूमसम्बन्धोपाधित्व-

---

## तर्कचूडामणिः

ननु साध्यं निवर्तत इत्युपक्रमविरुद्धं साध्यसाधनसम्बन्धव्यावृत्तिप्रतिपादनमित्यत आह—साध्येति। ननु विद्यमानस्यापि तस्य प्रतिपादने प्रयोजनं न पश्याम इत्यत आह—वस्तुत इति। नन्वेतद्वाक्यविरोधेन यद्व्यावृत्त्येत्यत्रापि साध्यसाधनसम्बन्धव्यावृत्तिरेव विवक्ष्यतामित्यत आह—अत एव चेति। अतःशब्दार्थमाह—यत इति।

---

1. क. केवलान्वयिनि        2. क. साध्यव्यापकत्वेन

केचित्तु साधनव्यापकोऽप्युपाधिः क्वचित् यत्र पक्षावृत्तिर्हेतुः । यथा करका पृथिवी कठिनसंयोगादित्यत्रानुष्णाशीतस्पर्शवत्त्वम् । न च तत्र स्वव्याघातो दोषः । सर्वत्रोपाधेर्दूषणान्तरसंकरादित्याहुः ।

---

प्रकाशः

मापाद्यम् । किं तु वह्निधूमसम्बन्धे [1]पर्वतेतरत्वोपाधित्वम् । एतच्च पर्वते बाधितसाध्यके पर्वतवृत्तिहेतौ प्रसिद्धमेवेति भावः । [2]धूमाव्यापकत्वेन निश्चिते पर्वतेतरत्वे वह्निव्यापकत्वमापाद्यमित्यत्र तात्पर्यमित्यन्ये ।

ननु सत्प्रतिपक्षोत्थापकत्ववत् बाधोत्थापकत्वेनापि दूषकत्वे विशेषाभावात् साध्यव्यापकत्वे सति पक्षावृत्तित्वमेवोपाधित्वे प्रयोजकमिति ये मन्यन्ते [3]तन्मतमुपन्यस्यति — केचित्त्विति । अत्रेदमनभिमतिबीजम् । 'सोपाधाववश्यं व्यभिचारः' इत्यादिना उपाधेर्व्यभिचारव्याप्यत्वस्य सर्वसिद्धत्वात् [4]अत्राव्यभिचारित्वे तदसम्भवः । न च तत्र व्यभिचारोन्नयनवदत्रापि बाधोन्नयनस्य दूषकताबीजस्य सत्त्वादुपाधित्वं

---

तर्कचूडामणिः

उपाध्यायमतं दूषयति — यत्त्विति । (अस्येति ।) [तस्येति] । वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र रूपवत्त्वोपाध्यव्याप्तिरिति भावः । जयदेवमतं दूषयति— एतेनेति । प्रत्यक्षत्वसाधकप्रमेयत्वहेतौ रूपवत्त्वोपाध्यव्याप्तिरिति दोषे सत्येव दोषान्तरमाह--विरुद्धेति । गगनादावतिव्याप्तिवारणाय धर्मत्वविशेषणमिति द्रष्टव्यम् । नन्वापाद्यमुपाधित्वं प्रसिद्धमेवेत्याशङ्क्य उपाधित्वमात्रापादने इष्टापत्त्या विशिष्टमेवापाद्यम् । तच्चाप्रसिद्धमित्याह— वह्नीति । आपाद्याप्रसिद्धिं परिहरति— नहीति ।

---

1. ख. पर्वतेतरोपाधित्वम्
2. क. धूमव्यापकत्वेन
3. क. तमुपन्यस्यति
4. क अत्राव्यभिचरिते

साध्यं च नोपाधिः, व्यभिचारसाधने साध्याविशिष्टत्वात्। अनुमितिमात्रोच्छेदप्रसङ्गाच्च। स चायं द्विविधः निश्चितः सन्दिग्धश्च। साध्य-

## प्रकाशः

स्यादेवेति वाच्यम्। एवं हि [1]अनुमितिविरोध्युपस्थापकमात्रस्यैवोपाधित्वे अप्रयोजकत्वादेरपि तदन्तर्भावापत्तेः। तत्र वृद्धव्यवहाराभावान्न तथेति यदि, तदा व्यभिचारिण्येव हेतौ साधनाव्यापकस्यैवोपाधित्वव्यवहारात् [2]तस्यापि न तत्त्वमिति तुल्यम्। यत्रेति। हेतोः पक्षवृत्तित्वे तद्व्यापकीभूतस्योपाधेरपि पक्षवृत्तितया तद्व्यतिरेकस्य स्वरूपासिद्धत्वेन [3]बाधानुत्थापकत्वादित्यर्थः। ननु साध्यस्वरूपोपाधौ उक्तलक्षणमव्यापकम्, [4]स्वस्य स्वाव्यापकत्वादित्यत आह—साध्यमिति। तथा च व्यभिचारोन्नयनपक्षे साध्याविशिष्टत्वात् यथास्य न संग्राह्यत्वम्, [5]तथा तत [6]एवात्रापीति भावः। यद्यप्ययं साध्यव्यभिचारी [7]साध्यव्यापकव्यभिचारित्वादित्यत्रोपाधि-

## तर्कचूडामणिः

ननु [8]पर्वतेतरत्वोपाधित्वं न सम्बन्धसामान्येन, इष्टापत्तेरिति तत्साध्यव्यापकतया तत्साधनव्यापकतया च तद्वत्त्वं वाच्यम्। तच्चाप्रसिद्धमेवेत्यत आह—**धूमेति**। ननु [9]साधनव्यापकोपाधिवादिमते व्यभिचारोन्नायकत्वायोगात् सत्प्रतिपक्षोन्नायकत्वं वाच्यम्। तच्च न सम्भवति। स्थापनाहेतोरसिद्धत्वेनातुल्यबलतया सत्प्रतिपक्षासम्भवादित्यत आह—[10]**नन्विति**। **विशेषाभावादिति**। साध्याभावानु-

1. क 'अनुमिति' नास्ति। विरोध्युपस्थापकमात्रस्येति पाठः।
2. ख. अस्यापि
3. ख. बाधाद्यनु-
4. ख तस्याव्यावर्तकत्वादित्याह
5. क. 'तथा' नास्ति।
6. ख. एव तत्रापीति
7. क. साध्यसाधक-
8. क. पर्वतेतरोपाधिमत्त्वं
9. ख. साधनोपाधिमते
10. ग. सत्प्रतिपक्षेति।

व्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधायकतया निश्चितोपाधिः । यथा वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वम् ।

यत्र च साधनाव्यापकत्वसन्देहस्साध्यव्यापकत्वसंशयो वा तदुभयसन्देहो वा तत्र हेतुव्यभिचारसंशयाधायकतया सन्दिग्धोपाधिः ।

---

## प्रकाशः

भेदान्न साध्याविशिष्ट्यम् । तथापि साध्यवत् हेतोरपि संदिग्धत्वेन साध्यवैशिष्ट्यम् । वस्तुतः साध्यव्यापकत्वज्ञानस्य विपक्षबाधकत्वेन व्यभिचारानुमानप्रयोजकत्वादुपाधिव्यभिचारित्वमेव तत्र हेतुरित्युक्तम् । एवं च साध्यावैशिष्ट्यमिति भावः । अनुमितीति । अत्रेदं चिन्त्यम् । सद्धेतौ साध्यस्य साधनाव्यापकत्वाभावादेवानुपाधित्वमिति कथमनुमितिमात्रोच्छेदः । न चानन्तरोक्तसाधन[1]व्यापकोपाधिवादिमतसिद्धमिति वाच्यम् । तन्मतेऽपि यत्र [2]पक्षवृत्तिहेतुस्तत्रैव तस्य तथात्वेन पक्षवृत्तिहेतौ साध्यस्यानुपाधितयानुमितिमात्रोच्छेदासम्भवादिति । प्रसङ्गादाह — स चेति ।

---

## तर्कचूडामणिः

मितिहेतुताया अविशेषादित्यर्थः । ननु निर्धूमे वह्निमति धूमेन वह्निसाधने वह्निसामग्र्याः उपाधित्वापत्तिः । न चेष्टापत्तिः । तत्र स्वव्यतिरेकेण बाधोत्थापकत्वायोगादित्यत आह—पक्षावृत्तित्वमिति । अत्रावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तिः । साध्यपदेन पर्यवसितसाध्यविवक्षायां व्यञ्जनवत्त्वादावतिव्याप्तिः । किं च पूर्वोक्तश्रावणत्वादावव्याप्तिश्च । तस्य पक्षावृत्तित्वाभावादिति दोषे सत्येव दोषान्तरमाह— अत्रेति । ननूपाधेः पक्षवृत्तित्वमात्रेणैव बाधोत्थापकत्वसम्भवे हेतोः पक्षावृत्तित्वम-

---

1. क व्यापकोपाधिमत इदम्   2. क. पक्षातिरिक्तहेतु-

यथा मित्रातनयत्वेन श्यामत्वे साध्ये शाकाद्याहारपरिणतिजत्वम्। न च तेनैव हेतुना शाकपाकजत्वमपि साध्यम्। तत्र श्यामत्वस्याधित्वादुभयस्यापि साधनेऽर्थान्तरम्। श्यामत्वमात्रे विवादो न तूभयत्र।

---

## प्रकाशः

कश्चिदत्रोपाधिरस्ति न वेत्याकारो न सन्दिग्धोपाधिः, तस्याः [1]शङ्कापिशाचित्वेन [2]अप्रतिबन्धकत्वादित्यन्यथैवाह — यत्रेति। अर्थान्तरमित्यापाततः। परमार्थतस्तूभयसाधनेऽपि प्रत्येकं प्रत्येकमुपाधिः स्यादेवेति दूषणं द्रष्टव्यम्। तृतीयं सन्दिग्धोपाधिमुदाहरति—यथा शाकेति।

---

## तर्कचूडामणिः

किञ्चित्करमित्यत आह—हेतोरिति। स्वाव्यापकत्वादिति। भेदगर्भं व्यापकत्वमादायेदं बोध्यम्। नन्वेतन्मते बाधोत्थापनेनोपाधेर्दोषत्वात् 'व्यभिचारिसाधन' इति ग्रन्थानुपपत्तिरित्यत आह — तथा चेति। नन्वेवं सन्दिग्धासिद्धेरपि [3]साध्यावैशिष्ट्यान्तर्भावापत्तिः। तत्रापि हेतोः साध्यवदेव सन्दिग्धत्वात्। न च यत्र पक्षे साध्यतदभावयोरन्यतरनिश्चयः[4] हेतोश्च सन्देहः तत्रैव सन्दिग्धासिद्धिरिति वाच्यम्। तत्र [5]बाधसिद्धसाधनाभ्यामेवानुमितिप्रतिबन्धसम्भवेन हेतुसन्देहस्यादोषतापत्तेरित्यनुशयादाह — वस्तुत इति। इदमिति। अनुमितिमात्रोच्छेदापादनमित्यर्थः।

ननु शाकपाकजत्वस्यापि श्यामत्ववदेव पक्षे सन्दिग्धत्वात् तत्साधने नार्थान्तरमित्यत आह—अर्थान्तरमित्यापातत इति। ननु शाकपाकजत्वे साध्यव्यापकतानिश्चयस्यैवोक्तत्वात् तत्सन्देहप्रदर्शनानुपपत्तिरित्यत आह—तृतीयमिति।

---

1. क शङ्कापिशाचकत्वेन
2. क. प्रतिबन्धक-
3. ग. साध्यवैशिष्ट्या-
4. ख. अन्यतरत्वे निश्चय
5. क. बाधे

न चैवं धूमाद्दहनानुमानेऽपि वह्निसामग्री उपाधिः स्यात्। तत्र वह्निनेव तत्सामग्र्यापि समं धूमस्यानौपाधिकत्वनिश्चयात्। अत्र तु मित्रातनयत्व-व्याप्यश्यामसामग्र्या स्थातव्यमित्यत्र कार्यकारणभावादीनां व्याप्तिग्राह-काणामभावात्।

अत एव साध्यसामग्र्या सह हेतोरपि यत्र व्याप्तिग्राहकमस्ति तत्र सामग्री नोपाधिः। यत्र तु तन्नास्ति तत्र साप्युपाधिरित्यभिसन्धाय सामग्री च क्वचिन्नोपाधिर्न तु सर्वत्रेत्युक्तम्। यथा तुल्ययोगक्षेमयोरुपाधे-व्यापकतासन्देहे ईश्वरानुमाने शरीरजन्यत्वाणुत्वादिः। न च शाकपाक-जन्यत्वस्य साध्यव्यापकतासन्देहे मित्रातनयत्वे।

यत्तु उपाधिसन्देहो नोपाधिः न वा हेत्वाभासान्तरमिति तदुद्भावने निरनुयोज्यानुयोग इति। तन्न। सन्दिग्धानैकान्तिकवत् व्यभिचारसंशया-धायकत्वेन दूषकत्वात्, उपाधेरिव व्यभिचारनिश्चयाधायकतया।

---

**प्रकाशः**

सन्दिग्धेति। [1]दूषणत्वमात्रे दृष्टान्तोऽयम्। यद्यपि प्रथमेऽपि सन्दिग्धो-पाधिना साध्याभाववति साधनसन्देहो नाधेयः, किं तु साधनवत्येव पक्षे पक्षसमे

---

**तर्कचूडामणिः**

शाकपाकजत्वस्यानुकूलतर्कावतारे यदा श्यामत्वव्यापकतानिश्चयः तदास्य प्रथमोदाह-रणत्वम्। यदास्य तदनवतारः तदास्य तृतीयोदाहरणत्वमिति भावः।

ननु सन्दिग्धानैकान्तिकस्य व्यभिचारशङ्काधायकत्वेन दोषत्वाभावात् दृष्टान्तानुपपत्तिरित्यत आह—**दूषकत्वेति**। **प्रथमेनेति**। तस्य साधनावच्छिन्न-साध्यव्यापकतया साधनवत्येव पक्षे पक्षसमे वा स्वव्यावृत्तिसन्देहेन साध्याभाव-

---

1. क, दूषकत्वेति व्याख्यानादृतः पाठः

### प्रकाशः

वा स्वव्यावृत्तिसन्देहेन साध्याभावसन्देहः। स च न व्यभिचारसन्देहतया दोषः अनुमानमात्रोच्छेदापत्तेः। तथापि तदुच्छेदभिया स्वरसवाहिनस्तस्याप्रतिबन्धकत्वे-ऽप्याहितस्य [1]तस्य प्रतिबन्धकत्वमेव, [2]फलबलात्। अत एव क्षित्यादिकं द्विकर्तृक-मित्यादौ [3]अप्रयोजकतया आहितस्तादृशोऽपि प्रतिबन्धक एवेति भावः।

यद्वा उपाध्यादिसन्देहेन हेतौ उत्कट[4]कोटिको व्यभिचारसन्देह आधीयत इति फलबलात्तस्य प्रतिबन्धकत्वम्। यद्यप्युपाधिसन्देहः स्वरूपसत्त्वेन प्रतिबन्धको

---

### तर्कचूडामणिः

सन्देहादिति भावः। द्वितीयतृतीययोश्च साध्यव्यापकत्वनिश्चयाभावान्नैवमिति भावः। ततः किमित्यत आह — स चेति। साध्याभाववत्तया निश्चिते हेतुसन्देहस्यैव प्रतिबन्धकत्वादिति भावः। ननु लाघवेन साध्याभावसामानाधिकरण्यसंशयत्वेनैव प्रतिबन्धकत्वमित्यत आह—अनुमानेति। तादृशोऽपि—पक्षीयव्यभिचारसंशयोऽपीत्यर्थः। ननु पक्षीयसन्देहोऽपि स्वकारणाहित एव। न च सन्देहाहितत्वं तदर्थः। पक्षीयसंशयधारायास्तथापि प्रतिबन्धकत्वापातात्। न च संशयत्वेन संशयजन्यत्वं विवक्षितम्। पूर्वपूर्वसंशयस्य चोत्तरोत्तरसंशये कोट्युपस्थितित्वेनैव हेतुत्वमिति वाच्यम्। अप्रयोजकत्वनिश्चयाहितव्यभिचारसन्देहस्यादोषतापत्तेरित्यनुशयादाह—यद्वेति। हेतुमत्तया निश्चिते उपाध्याद्यनाहितो यो व्यभिचारसन्देहस्तद्भिन्नव्यभिचारज्ञानत्वं वा सर्वव्यभिचारज्ञानसाधारणं प्रतिबन्धकतावच्छेदकं बोध्यम्।

केचित्तु व्यभिचारसंशयत्वेनैव तस्य प्रतिबन्धकत्वम्। [5]न त्वन्याहितत्वान्तर्भावोऽपि गौरवात् साध्याभाववत्तया निश्चिते हेतुसंशयस्यानाहितस्याप्रतिबन्धकत्वा-

---

1. ख. तस्यापि प्रति-
2. क. फलत्वात्
3. क. अप्रयोजकाहितस्तादृशः प्रति-
4. क. कोटिव्यभिचारसंशयः
5. ख. न त्वन्याहितत्वात् गौरवात्

इदानीमुपाधेर्दूषकताबीजं निरूप्यते। नाप्यस्य व्यतिरेकद्वारा सत्प्रतिपक्षत्वेन दूषकत्वम्। तदा हि सत्प्रतिपक्षे सत्प्रतिपक्षान्तरवदुपाधेरुद्भावनं न स्यात्। न च प्रतिपक्षबाहुल्येनाधिकबलार्थमुद्भावनम्। 'शतमप्यन्धानां न पश्यति' इति न्यायात्, एकेनापि बहूनां प्रतिबन्धाच्च। व्याप्तिपक्षधर्मते हि बलम्, तच्च तुल्यमेव। न तु भूयस्त्वमपि, एकस्मादप्यनुमितिदर्शनात्। सन्दिग्धोपाधेरदूषकतापत्तेश्च। तद्व्यतिरेकस्य पक्षे सन्दिग्धत्वात्।

---

## प्रकाशः

न तु ज्ञातः। परं प्रति च तदुद्भावनं तज्ज्ञापकं न तु तदुत्पादकमित्यकिंचित्करं, तथापि सन्देह[1]ज्ञापनमुखेन पराभिमतव्याप्तौ साधकमानाभावप्रदर्शनपरं तदिति तात्पर्यम्। तत्र साधकाभावमापादयत् तत्तत्संशयमापादयतीति [2]सप्रयोजनमित्याहुः। तुल्यमेवेति। ज्ञातमिति शेषः। इष्टापत्तिमाशङ्क्य [3]दूषणान्तरमाह— सन्दिग्धोपाधेरिति। तद्व्यतिरेकस्येति। [4]एतच्च पक्षे साधनाव्यापकतासन्देहेन सन्दिग्धो-

---

## तर्कचूडामणिः

पत्तेश्च। न चैवमनुमानोच्छेदः, [5]तर्कानवतारे इष्टत्वात्। [6]तदवतारे तस्यैवोत्तेजकत्वात् विरोधिदर्शनविरहसहकृतसंशयस्यैव सर्वत्र प्रतिबन्धकत्वाभ्युपगमादित्याहुः। अकिञ्चित्करमिति। उपाधिसन्देहोद्भावनमिति शेषः। [7]तदिति। उपाधिसन्देहोद्भावनमित्यर्थः। ननु विरुद्धयोरुभयोरेकत्र व्याप्तिपक्षधर्मतान्यतरभङ्गस्यावश्यकतया कथं तुल्यतेत्यत आह—[8]ज्ञातमिति। ननु शरीरजन्यत्वव्यतिरेकस्य क्षित्यादौ पक्षे निश्चितत्वात् कथं सन्देह इत्यत आह—एतच्चेति। नन्वमित्रातनयपक्षश्यामत्व-

---

1. ख. ज्ञापनादिमुखेन
2. ख. सप्रयोजकम्
3. क. 'दूषणान्तरम्' नास्ति।
4. ख. एतत्तु
5. ख. तर्कावतारे
6. ग. तदनवतारे
7. क. 'तदिति' नास्ति।
8. ग. 'ज्ञातमिति........स्यादित्यत आह' नास्ति।

अपि चैवं बाधोन्नीतपक्षेतरस्योपाधित्वं न स्यात् । व्यतिरेकेऽसाधारण्यात् । पक्षवृत्तिश्चोपाधिर्न स्यात्, यथा घटोऽनित्यो द्रव्यत्वादित्यत्र कार्यत्वम्; अन्धकारो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वादित्यत्राश्रावणत्वम्, तद्व्यतिरेकस्य पक्षावृत्तित्वात् । न च नायमुपाधिः, तल्लक्षणसत्त्वात्, अन्यथापि दूषकत्वसम्भवाच्च ।

## प्रकाशः

पाधिर्यस्तदभिप्रायेणास्तम्, न तु तद्व्यतिरेकेणासाधारण्यम् । बाधदशायां सपक्षीभूते पक्ष एव तस्य वृत्तेः । न च [1]यत्र पक्षे स्वस्य साध्याभावनिश्चयाभावे सति आप्तवाक्यादिना पक्षेतरत्वस्योपाधित्वनिश्चयस्तदभिप्रायेण [2]एतदुक्तमिति वाच्यम् । तत्रापि व्यतिरेकिणा सत्प्रतिपक्षसम्भवात् । न चासाधारण्यम् । तस्यापि सत्प्रतिपक्षोत्थापकतया दोषत्वादित्यपरितोषादाह — **पक्षेति** । पक्षवृत्तित्वज्ञानदशायामुपाधेर्दोषत्वं न स्यादिति भावः । **स्वत इति** । (?) यद्यप्युपाधिज्ञानस्य स्वतः प्रतिबन्धकत्वं नाशङ्कितम्, किं त्वनौपाधिकत्वज्ञानविघटकत्वम् । तथाप्यनौपाधिकत्व[3]ज्ञानमपि न व्याप्तिज्ञानकारणमित्युक्तमिति भावः ।

## तर्कचूडामणिः

साध्यकमित्रातनयत्वहेतौ शाकपाकजत्वं साधनाव्यापकतया सन्दिग्धम् । तत्रापि पक्षे नोपाध्यभावसन्देह इत्यत आह— **पक्ष इति** । ननूपाधेः पक्षवृत्तित्वेऽपि तदनवगमदशायां तद्व्यतिरेकेण साध्याभावानुमितिः स्यादित्यत आह— **पक्षेति** । **तथापीति** । तज्ज्ञानहेतुत्वे हि तद्विघटकतया व्याप्तिधीप्रतिबन्धकत्वं स्यादिति भावः ।

**यद्यपीति** । उपाधिज्ञाने सत्यपि व्यभिचारानुमितावनुमित्यप्रतिबन्धादिति[4] भावः । ननु दूषकताबीजासम्भवे चोदिते तद्बीजमेव वाच्यम्, न तु साध्यव्यापक-

1. ख तत्र
2. ख. एव तदुक्तम्
3. ख. ज्ञानमेव न
4. ग. अनुमितिप्रतिबन्धादिति

किं च साध्यव्याप्याव्यापकत्वेनोपाधेः साध्याव्यापकत्वे तद्व्यतिरेकेण कथं सत्प्रतिपक्षः? न ह्यव्यापकव्यतिरेकादव्याप्यव्यतिरेकः। नापि व्याप्तिविरहरूपतया। असिद्धत्वेनानौपाधिकत्वस्य व्याप्तित्वनिरासात्। नाप्यनौपाधिकत्वज्ञानस्य व्याप्तिधीहेतुत्वस्य तत्त्वेन व्याप्तिज्ञानकरणविघटकतया व्याप्यत्वासिद्धावन्तर्भावः। न ह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यव्याप्तिज्ञानं प्रति प्रतिबन्धकमित्युक्तम्।

न च साध्यव्यापकाव्याप्यत्वज्ञाने विद्यमाने साधनस्य साध्यव्याप्यत्वज्ञानं नोत्पत्तुमर्हतीति वाच्यम्। न हि साध्यव्यापकव्याप्यत्वज्ञानं व्याप्तिज्ञानकारणम्, येन तत्प्रतिबन्धकं स्यात् किं तु साध्यव्यापकव्यभिचारित्वेन साध्यव्यभिचारित्वज्ञानद्वारा। नापि व्यभिचारोन्नायकत्वेन, यथा हि साध्यव्यापकव्यभिचारितया साधनस्य साध्यव्यभिचारित्वमनुमेयम्, तथा साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमुपाधेरप्यनुमेयम्, व्याप्तिग्राहकसाम्यात्। नापि साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया। साध्यव्याप्याव्यापकत्वेनोपाधेरेव साध्याव्यापकत्वसाधनात्। तस्मादुपाधिर्हेत्वाभासान्तरमिति।

---

## प्रकाशः

तर्हि व्यभिचारज्ञानद्वारैवास्य दूषणत्वमस्त्वित्यत आह—नापीति। [1]तस्मादुपाधिरिति। यद्यपि [2]ज्ञायमानतया प्रतिबन्धत्वाभावात् हेत्वाभासत्वशङ्का नास्त्येव, तथाप्युपाधिदोषत्ववादिना केनापि रूपेण [3]तस्य दोषत्वेऽवश्यं वक्तव्येऽनुमित्यसाधारणं दोषत्वमेव हेत्वाभासत्वं वाच्यमिति भावः। [4]व्यभिचारोन्नायकत्वेनैवास्य दूषणत्व-

---

1. क. तस्मादिति
2. क. ज्ञायमानत्वेनाप्रतिबन्धकत्वाभावात्
3. ख अस्य
4. क. व्यभिचारोन्नायकस्य दूषकत्वम्

**उच्यते । आर्द्रेन्धनवत्त्वादेस्तर्कादिना साध्यव्यापकत्वसाधनाव्यापकत्वे निश्चिते दूषकताबीजचिन्तनम् । यदि हि साध्यसाधनसहचारदर्शनेनोपाधौ साध्यव्यापकतानिश्चय एव नास्ति, तदोपाधित्वनिश्चयाभावात् दूषकत्वं नास्तीति क्व बहिर्भावान्तर्भावचिन्ता ।**

---

## प्रकाशः

मित्यभिसन्धाय पूर्वोक्तदोषं निरस्यन्नाह — [1]**अर्द्रेन्धनेति** । **बीजचिन्तनमिति** । निश्चितोपाधिदूषकताभिप्रायेणेदम् । **तस्मादुपाधेर्निश्चयादिति** । उपाधेर्निश्चयादौचित्यावर्जितो [2]मानसो व्यभिचारनिश्चय इत्यर्थः ।

**व्याप्तिविरहेति** । तदनुमापकतयेत्यर्थः । [3]यद्यपीदं दूषकताबीजं आकाशं द्रव्यत्वाव्याप्यं तद्व्यापकगुणवत्त्वाव्याप्यत्वादिति[4] न्यायेन गुणवत्त्वादावप्यस्ति । न च तस्योपाधित्वमेव, लक्ष्यतावच्छेदकासंगृहीतत्वात् आकाशवन्निष्ठात्यन्ताभावप्रति-

---

## तर्कचूडामणिः

त्वादिनिर्णयप्रदर्शनमित्यत आह—**व्यभिचारेति** । ननु शङ्कितोपाधेः साध्यव्यापकत्वाद्यनिश्चयेऽपि व्यभिचारसंशयद्वारा दोषत्वात् तन्निश्चयानन्तरमेव दूषकत्वमिति कथमुक्तमित्यत आह – **निश्चितेति** ।

ननूपाधिनिश्चयाधीन[5]व्यभिचारनिश्चयस्यानुमितिरूपत्वे यद्वेति वक्ष्यमाणपक्षाभेदापत्तिः इत्यत आह—**उपाधेरिति** । प्रामाण्यसंशयाद्विषयसंशयवदिति भावः । ननूनयनं यदि प्रत्यक्षं तदा नियमासम्भवः । व्याप्तिविरहस्याप्यधिकरणाद्यसंनिकर्षे प्रत्यक्षेण ग्रहीतुमशक्यत्वात् । यद्यनुमितिः तदा तस्य [4]व्याप्तिप्रत्यक्षप्रतिबन्धकत्वं

---

1. क, अर्द्रेति
2. क. मनसो
3. ख. यद्यप्येतत
4. क. गुणवत्त्वाव्यापकत्वात्
5. क. व्यभिचारि-

किं च सत्प्रतिपक्षतया व्याप्यत्वासिद्धतया स्वातन्त्र्येण वा यदि दोषत्वं सर्वथा साध्यव्यापकतानिश्चयो वाच्यः तेन विना तेषामभावात् । तस्मादुपाधिनिश्चयात् व्यभिचारनिश्चयः तत्संशयात्तत्संशय इति व्यभिचारज्ञानद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वा उपाधेर्दूषकत्वम् ।

---

## प्रकाशः

योगित्वरूपसाधनाव्यापकत्वाभावेन लक्षणासंगृहीतत्वाच्च । तथापि [1]दूषकताबीजातिप्रसङ्गस्यादोषत्वमेव । अत एवाप्रयोजकत्वादेरपि व्यभिचारोन्नायकत्वम् । [2]दोषत्वे वा स्वव्यभिचारित्वेन व्याप्तिविरहोन्नायकत्वं तद्बीजमिति भावः ।

यद्वा उपाधिना स्वव्यभिचारित्वेन साधने साध्यव्यभिचारित्वमनुमेयमित्याह—यद्वेति । एतच्च यत्र व्यभिचारः [3]साध्याभावाधिकरणसंनिकर्षाभावादयोग्यस्तत्र

---

## तर्कचूडामणिः

[5]न स्यात् । प्रत्यक्षे [6]ग्राह्याभावानुमितेरप्रतिबन्धकत्वादित्यत आह—**तदनुमापकतयेति** । अन्यत्र प्रत्यक्षे ग्राह्याभावानुमितेरप्रतिबन्धकत्वेऽपि व्याप्तिप्रत्यक्षे ग्राह्याभावज्ञानमात्रं प्रतिबन्धकमिति भावः । **यद्यपीति** । तथा चेदं द्रव्यम् आकाशवत्त्वादित्यादौ गुणवत्त्वादिकमुपाधिः स्यादित्यर्थः । **लक्ष्यतेति** । आकाशस्य गुणवत्त्वात्यन्ताभावसामानाधिकरण्यरूपगुणवत्त्व[7]व्यभिचाराभावादिति भावः । ननु तत्र लक्षणसत्त्वे तदनुरोधेन लक्ष्यतावच्छेदकमपि वाच्यमित्यत आह— **आकाशवदिति** । [8]साध्यव्यभिचारानुमापकव्यभिचारप्रतियोगित्वमेव तद्बीजमिति नाप्रयोजकत्वादावतिप्रसङ्ग इति दूषकताबीजातिप्रसङ्गो दोष एवेत्यत आह—**दोषत्वे वेति** ।

---

1. ख. दूषकताबीजस्याति-
2. क. दोषत्वं
3. ख. 'साध्याभाव' नास्ति
4. ग. 'व्याप्ति' नास्ति
5. क. 'न' नास्ति
6. ग. ग्राह्यानुमितेः
7. ग. व्यभिचारादिति
8. ख. साध्यव्यभिचारितानु-

यद्वा साध्यव्यापकाभाववद्वृत्तितया साध्यव्यभिचारित्वमुन्नेयम् ।

## प्रकाशः

बोध्यम् । अन्यथा उपाधिव्यभिचारित्वरूपविशेषदर्शनजन्यव्यभिचारप्रत्यक्षमेव स्यात् । करादिदर्शनजन्यपुरुषप्रत्यक्षवत् [1]समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वात् । न च यत्रापि व्यभिचारानुमितिस्तत्रापि तज्जनकपरामर्शस्यैव व्याप्तिधीप्रतिबन्धकत्वे सम्भवति न तस्याः प्रतिबन्धकत्वमिति वाच्यम् । प्रत्यक्षेण व्याप्तिग्रहे विरोधिव्याप्यबुद्धेरप्रतिबन्धकत्वात् । अनुमानेन तद्ग्रहे सत्प्रतिपक्षतया तत्र प्रतिबन्धकत्वस्येष्टत्वात् । न च ग्राह्याभावानुमितेरपि [2]प्रत्यक्षाप्रतिबन्धकत्वमिति वाच्यम् । प्रत्यक्षसामान्ये तथाभावेऽपि व्याप्तिप्रत्यक्षं प्रति साधारण्येन अनुमित्यादिसाधारणव्यभिचारज्ञानसामान्यस्यैव प्रतिबन्धकत्वकल्पनात् । कथमन्यथा प्रत्यक्षान्तराप्रतिबन्धकत्वेऽपि ग्राह्याभावसंशयात्मनो व्यभिचारसंशयस्य व्याप्तिधीप्रतिबन्धकत्वमिति भावः ।

## तर्कचूडामणिः

ननन्वयनपदस्य प्रत्यक्षपरत्वे पूर्वाभेद इत्यत आह—**यद्वेति** । **अन्यथेति** । साध्याभावाधिकरणादिसंनिकर्षसत्त्व इत्यर्थः । ननु परामर्शजन्यत्वेऽनुमितिरेवेत्यत आह—**करादीति** । **प्रत्यक्षेति** । अनुमित्साविरहसहकृतायाः इति शेषः । **तस्याः**—व्यभिचारानुमितेरित्यर्थः । परामर्शस्य किं [3]व्याप्तिप्रत्यक्षे प्रतिबन्धकत्वम्, उत तदनुमितौ, नाद्य इत्याह—**प्रत्यक्षेणेति** । पीतत्वाभावव्याप्यबुद्धावपीतप्रत्यक्षोदयादिति भावः । **कथमन्यथेति** । यद्यपि ग्राह्याभावव्याप्यबुद्धेरन्यत्राप्रतिबन्धकत्वेऽपि व्यभिचारव्याप्यबुद्धेर्व्याप्तिधीप्रतिबन्धकत्वं स्यादेव । व्याप्तिप्रत्यक्षे विरोधिज्ञानत्वेनैव प्रतिबन्धकत्वकल्पनात् । तथापि व्यभिचारानुमितेः प्रतिबन्धकत्वमक्षतमेवेति भावः ।

1. क साधनविषये
2. क प्रत्यक्षप्रति-
3. ग. 'व्याप्ति' नास्ति ।

न च साधनाभाववद्वृत्तित्वमुपाधिरिति वाच्यम् । उपाधिमात्रोच्छेद-

## प्रकाशः

व्याप्तिविग्रहाद्यनुमानद्वयेऽप्युपाधिमाशङ्क्य निराकरोति—न चेति । साध-नेति । वह्निर्धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वात् इत्यादौ वह्न्यभाववद्वृत्ति-त्वादिकमुपाधिरित्यर्थः । यद्यप्येतदयोगोलकत्वादौ साध्याव्यापकम्, तथापि व्यभि-चारास्फुरणदशायामेवोपाध्युपन्यासेन तदानीमुपाधित्वभ्रमात् व्यभिचारानुमितिप्रति-बन्धः स्यादिति भावः । उपाधीति । तथा च तदुच्छेदापत्तिलक्षणप्रतिकूलतर्केण तस्य साध्याव्यापकत्वनिर्णयात् नोक्तदोष इति भावः ।

## तर्कचूडामणिः

वस्तुतस्तु विरोधित्वप्रकारकज्ञानविवक्षायां व्यभिचारानुमितेरप्रतिबन्धकत्वा-पत्तिः । विरोधिगोचरज्ञानत्वविवक्षायां धूमव्याप्तिविरोधि[1]वह्निज्ञानदशायां वह्नौ धूमव्याप्तिग्रहप्रतिबन्धापत्तिरिति ध्येयम् । न च व्यभिचारज्ञानत्वेन [2]प्रतिबन्धकत्व स्वैत्याभावसामानाधिकरण्यस्य शङ्कितेऽवगमेन तत्र स्वैत्यव्याप्तिग्रह[3]प्रतिबन्धापत्तिरिति वाच्यम् । अप्रामाण्येनाज्ञातत्वस्यापि व्यभिचारज्ञाननिष्ठप्रतिबन्धकतावच्छेदकत्वात्. स्वैत्याभावसामानाधिकरण्यज्ञानस्य [4]निश्चिताप्रामाण्यकत्वादिति भावः ।

ननु व्यभिचारानुमाने यत् साधनं तदभाववद्वृत्तित्वं नोपाधिः । तस्य साध्याव्यापकत्वात् । प्रमेयत्वादौ सोपाधिके साधनाभावाप्रसिद्धेश्चेत्यत आह—वह्निरिति । तथापीति । वह्नेरयोगोलकादौ [5]साध्यव्यभिचारानिश्चयदशायामेव आर्द्रेन्धनवत्त्वाद्युपाधिरुद्भावनीयः । अन्यथा तदुद्भावनवैयर्थ्यात् । तथा च तस्यां

1. ग. वह्निज्ञान-
2. क. प्रतिबन्धके
3. ख. ग. प्रतिबन्धकतापत्ति-
4. ख. ग. निश्चितप्रामाण्य-
5. ख. साध्यव्यभिचारनिश्चय- ग. साध्याव्यभिचारनिश्चय-

प्रसङ्गात् । सत्प्रतिपक्षे पूर्वसाधनव्यतिरेकवत् । अवृत्तिगगनादौ साध्या-व्यापकत्वात् ।

---

## प्रकाशः

ननु नोपाधिमात्रोच्छेदः, प्रमेयत्वादौ व्यभिचारिण्यपि साधने तदभाववद्वृत्तित्वस्योपाधेरसम्भवात् साधनाभावाप्रसिद्धेरित्यनुशयादाह — अवृत्तीति । अत्र व्यभिचारास्फुरणदशायामपि [1]साध्याव्यापकत्वं सुग्रहमेवेति भावः । एतच्च व्याप्तिविरहानुमानाभिप्रायेणोक्तमिति ध्येयम् । वृत्तिघटितव्यभिचारस्यावृत्तावसंभवेन तत्साध्यके साध्याव्यापकत्वासम्भवात् ।

यत्तु—उभयकोट्युपस्थापकतावच्छेदक[2]रूपवत्त्वलक्षणव्यभिचारोऽत्र साध्यः । स च सपक्षविपक्षव्यावृत्तत्वमादाय गगनादावस्त्येवेति । तन्न । अनुमितिप्रतिबन्धार्थं हि व्यभिचारानुमानम् । न च तस्य ज्ञानमनुमितिप्रतिबन्धकम् । [3]अविरोधिविषयत्वात् । किं तु विपक्षगामित्वादिज्ञानमेव तथेति ।

---

## तर्कचूडामणिः

दशायां व्यभिचारानुमाने वह्न्यभाववद्वृत्तित्वस्योपाधित्वं सुग्रहमेवेति भावः । ननु व्याप्तिग्राहकानुकूलतर्कादिसत्त्वेन [4]साध्यव्यापकताग्रहे उपाधिमात्रोच्छेदो न प्रतिबन्धक इत्यत आह—तथा चेति । नन्वयोगोलकत्वादिवृत्तिमत्पदार्थेऽपि व्यभिचारसत्त्वे अवृत्तिगगनादावित्यभिधानं व्यर्थमित्यत आह—अत्रेति । ननु व्यभिचारानुमानपक्षे कथं गगनादौ साध्याव्याप्त्यभिधानमित्यत आह व्याप्तीति । गगनादौ मूलानुमान[5]व्यभिचाराभावादिति भावः । अविरोधीति । विरोध्यविषयत्वादित्यर्थः ।

---

1. ख. तस्याव्यापकत्वं
2. ख. 'रूप' नास्ति ।
3. क. विरोध्यविषयकत्वात्
4. ग. साध्याव्यापकता-
5. ख. ग. व्यभिचारादिति-

संयोगादौ हेतौ साधनव्यापकत्वाच्च ।

अथोपाध्याभासाः । असाधारणविपर्ययो यथा—अन्वयव्यतिरेकिणि साध्ये बाधोन्नीतान्यपक्षेतरत्वम् । अप्रसिद्धसाध्यविपर्ययो यथा—

## प्रकाशः

[1]ननु वृत्तिमत्त्वपक्षधर्मावच्छिन्नसाध्यव्यापकत्वान्नोक्तदोष इत्यपरितोषादाह—संयोगादाविति । संयोगविशेषादावित्यर्थः । तथा च संयोगविशेषाद्वायुः प्रत्यक्ष इत्यत्र, संयोगविशेषः प्रत्यक्षत्वव्यभिचारी तव्द्यापकव्यभिचारित्वादित्यनुमाने संयोगविशेषाभाववद्वृत्तित्वं तव्द्यापकव्यभिचारित्वादिरूपसाधनव्यापकत्वान्नोपाधिरित्यर्थः ।

उपाधिवदाभासमानानामुपाधिज्ञानाधीनज्ञानत्वादाह—अथेति । व्यभिचारानुन्नयनदशायां सत्प्रतिपक्षोत्थापनेनानुमितिप्रतिबन्धात् तदुत्थापनद्वाराप्यस्य दूषकत्वमेव । दूषितस्तु नियमपक्ष इत्यभिप्रेत्य उपाधेः सत्प्रतिपक्षोत्थापकतापक्षमवलम्ब्य

## तर्कचूडामणिः

ननु साधनाभाववद्वृत्तित्वं न यत्किंचित्साधनाभाववद्वृत्तित्वम्; वह्नेरपि यत्किंचिद्वह्न्यभावसमानाधिकरणतया [2]साधनाव्यापकतापत्तेः । किं तु साधनतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वम् । न च संयोगस्य व्यभिचारिणः संयोगसामान्याभावसामानाधिकरण्यम् । गुणादावेव तादृशाभावसत्त्वेन तत्र [3]संयोगस्यासत्त्वादित्यत आह—संयोगविशेषेति । ननु पूर्वोक्तवह्न्यभाववद्वृत्तित्वस्य संयोगविशेषे साधनव्यापकतोच्यत इति भ्रमं वारयति—तथा चेति ।

अथशब्दोक्तानन्तर्ये हेतुमाह—उपाधिवदिति । ननु व्यभिचारोन्नायकतयोपाधेर्दोषत्वाभिधानात् सत्प्रतिपक्षोन्नयनेन तदाभासनिरूपणमनुपपन्नमित्यत आह—

1. क. 'ननु' नास्ति
2. क. ख. साधनव्यापकता-
3. ख. संयोगस्य सत्त्वात्

केवलान्वयिनि साध्ये पक्षेतरत्वादि। बाधितसाध्यविपर्ययो यथा—वह्निरुष्णस्तेजस्त्वादित्यत्राकृतकत्वम्। पक्षाव्यापकविपर्ययो यथा—क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्राणुव्यतिरिक्तत्वम्। अत्राणुव्यतिरेकस्य क्षित्यादेरेकदेशवृत्त्या भागासिद्धः। पूर्वसाधनव्यतिरेको यथा—शर्करारसोऽनित्यः अनित्यवृत्तिगुणत्वात्, रसो नित्यो रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात् रसत्ववदित्यादौ।

---

## प्रकाशः

तदाभासानाह—असाधारणेति। केवलान्वयिनि सपक्षस्य, केवलव्यतिरेकिणि विपक्षस्य व्यतिरेकेऽसम्भवात् असाधारण्यासम्भव इत्यत आह—अन्वयव्यतिरेकिणीति। पक्षाव्यापकेति। पक्षस्याव्यापकविपर्यय इत्यर्थः।

पूर्वसाधनताया इति। अत्र पूर्वसाधनव्यतिरेकित्वं नोपाधित्वप्रयोजकत्वमिति तात्पर्यम्। [1]साध्यव्यापकताग्रहे सति तादृशस्याप्यजन्यत्वादेरुपाधित्वस्वीकारा-

---

## तर्कचूडामणिः

व्यभिचारेति। तदुत्थापनद्वारेति। तद्द्वारापीत्यर्थः। नहि सत्प्रतिपक्षोन्नयनमते दूषणमसङ्गतमित्यत आह—नियमेति। व्यतिरेक इति। उपाधिव्यतिरेकात् साध्यव्यतिरेके साध्यमान इत्यर्थः। नन्वनणुत्वव्यतिरेकस्याणुत्वस्यापि पक्षैकदेशपृथिव्यादिव्यावर्तकत्वात् कथं पक्षाव्यावर्तकत्वमित्यत आह—पक्षाव्यापकेति।

तादृशस्येति। शब्दोऽनित्यः श्रावणत्वादित्यत्र पूर्वसाधनजन्यत्वाभावस्य भावत्वावच्छिन्नसाध्यव्यापकस्योपाधित्वादित्यर्थः। ननु सत्प्रतिपक्षस्थले अन्यतरस्यावश्यमसमीचीनतया समीनोच्छेद इष्ट एवेत्यत आह—द्वितीयस्येति। किं च

---

1. क. साध्यव्यापकताग्राहके

पूर्वसाधनतायाः प्रयोगानुरोधित्वेनाव्यवस्थितत्वात् कदाचिन्नित्यत्वसाधनव्यतिरेकस्योपाधित्वं कदाचिदनित्यत्वसाधनव्यतिरेकित्वस्येति वस्तुव्यवस्था न स्यात् । उपाधेर्नित्यदोषत्वाच्च । न हि यद्येन सोपाधिसम्बद्धं तत् तेनानुपाधित्वसम्बद्धं सम्भवति । न तु सत्प्रतिपक्षोच्छेदः पूर्वसाधन-

## प्रकाशः

दिति । न त्विति । समीचीनप्रतिपक्षोच्छेदः द्वितीयप्रतिपक्षस्य सोपाधित्वनियम इति यावत् । न तु [1]सत्प्रतिपक्षहेत्वाभासोच्छेद इत्यर्थः । सत्यपि तस्योपाधित्वे तदप्रतिसन्धानेन दशाविशेषे तद्भावत्वसम्भवात् । किं च यथाश्रुते यत्रैवोपाधेः साध्याव्यापकत्वं तत्रैव स्थापनायाः व्यभिचारे [2]साध्याव्यापकत्वग्रहे उपाधिना तद्ग्रहे व्यभिचारेणोभयथा [3]विशेषदर्शनासम्भवे सत्प्रतिपक्षासम्भवात् अग्रिमग्रन्थविरोधः । तथा च [4]यथोक्तमेव मनोरमम् ।

## तर्कचूडामणिः

त्वन्मते साध्याव्यापकत्वेनानुपाधित्वादित्यस्य मूलवाक्यस्य तज्ज्ञानेनानुपाधित्वज्ञानादित्यर्थो वाच्यः । अन्यथा वस्तुतस्तस्यानुपाधित्वेऽपि तज्ज्ञानेन सत्प्रतिपक्षहेत्वाभासोच्छेदस्य दुरपह्नवत्वात् । स च न सम्भवति, अग्रिमग्रन्थविरोधात् । तथाहि शब्दो नित्यः गगनगुणत्वात् तत्परिमाणवदिति स्थापनाहेतोर्यत्र घटाकाशसंयोगादौ व्यभिचारित्वं तत्र गगनगुणत्वव्यतिरेकस्योपाधित्वेनाभिमतस्य द्वितीयानुमानसाध्यानित्यत्वाव्यापकत्वग्रहे पूर्वहेतोर्व्यभिचारग्रहध्रौव्यम् । साध्यव्यापकत्वग्रहे द्वितीयानुमाने सोपाधिकत्वग्रहध्रौव्यमिति विशेषदर्शनसम्भवेन अगृह्यमाणविशेषदशायामित्यग्रिमग्रन्थविरोधः । [5]अस्मन्मते सोपाधितानियममात्रापादने स्थापनाया व्यभिचार-

1. क. सत्प्रतिपक्षहेतुत्वाभास- पक्षत्वसम्भवात्
2. ख. साध्यव्याप्यकत्व-
3. क. विशेषादर्शनसम्भवेन सत्प्रति-
4. क 'यथा' नास्ति ।
5. क. अस्मिन्मते

व्यतिरेकस्यानुपाधित्वे बीजम् । स्थापनाया यथाभासत्वं तत्र पूर्वसाधनव्यतिरेकस्य साध्यव्यापकत्वेनानुपाधित्वात् । न च पूर्वहेतोस्तत एवासाधकत्वात् सत्प्रतिपक्षवैयर्थ्यं तत्रेति वाच्यम् । अगृह्यमाणविशेषदशायां

## प्रकाशः

[1]आभासत्वमिति । व्यभिचारेणेति शेषः । [2]तत एवेति । आभासताप्रयोजकव्यभिचारादित्यर्थः । [3]नित्यत्वादिरिति । यद्यपि नित्यत्वं तत्र सदुपाधिरेव।

## तर्कचूडामणिः

स्थले स्वरूपसत्साध्याव्यापकत्वमात्रपरत्वेन ज्ञानपरत्वाभावान्न विरोध इत्याह—किं चेति । यथाश्रुत इति । [4]सत्प्रतिपक्षहेत्वाभासोच्छेद इति स्वीकारे । व्यभिचार इति । सतीति शेषः । [5]साध्याव्यापकत्वग्रहे व्यभिचारेण स्पष्टीकृतेन विशेषादर्शनासम्भवेन स्थापनाया दुर्बलत्वज्ञानेन तद्ग्रहे पूर्वसाधनव्योमगुणत्वाभावस्य [6]साध्यव्यापकत्वग्रहे उपाधिना व्योमगुणत्वाभावेन द्वितीयानुमानस्य दुर्बलत्वज्ञानेनेति योजनीयम् । न च [7]व्योमगुणत्वाभावस्य [8]साध्याव्यापकत्वग्रहे पूर्वसाधनस्य व्यभिचारग्रहनियमेऽपि तस्य साध्यव्यापकत्वज्ञाने द्वितीयानुमाने व्यभिचारग्रह नावश्यकः । उपाधेर्व्यभिचारव्याप्यत्वाप्रतिसन्धानदशायां तज्ज्ञानेऽपि व्यभिचारज्ञानासम्भवात् । तथा च पक्षद्वयेऽपि कथमन्यतरहेतौ [9]हीनबलत्वावगम इति वाच्यम् । उपाधिज्ञानस्यैचित्यावर्जितमानसव्यभिचार[10]निश्चयस्य हेतुत्वमिति [11]मतमा-

1. क आभासकत्वमिति
2. क. अत एवेति
3. क. नित्यत्वादिति
4. ग. सत्प्रतिपक्षे
5. ख. साध्यव्यापकत्व-
6. क. ग. साध्याव्यापकत्व-
7. ग. ध्यातृगुणत्वाभावस्य
8. क. ग. साध्यव्यापकत्व-
9. ख. हीनत्वावगम-
10. क. निश्चयहेतुत्वम्
11. ख. अर्थमाश्रित्य

सत्प्रतिपक्षसम्भवात् । पूर्वसाधनव्याप्यव्यतिरेकी यथा—अकर्तृकत्वानुमाने नित्यत्वादिः । पक्षत्रितयान्यतरान्यो यथा प्रसिद्धानुमाने पर्वतजलहृदान्यतरान्यत्वम् । पक्षेतरसाध्याभावो यथा अत्रैव पर्वतेतराग्निमत्त्वम् । न चात्र

---

## प्रकाशः

न च प्रागभावे [1]साध्याव्यापकत्वान्न तथा, भावत्वरूप[2]पक्षधर्मावच्छिन्नसाध्यव्यापकत्वात्; तथापि [3]तत्त्वं नोपाधित्वप्रयोजकम्, वस्तुव्यवस्थानुपपत्तेरेव । किं तु साध्यव्यापकताग्रहानुकूलतर्कादिसत्त्वम् । तदसत्त्वे [4]चाभासत्वमित्यत्र तात्पर्यम् ।

---

## तर्कचूडामणिः

श्रित्य एतद्ग्रन्थावतारात् । यद्वा प्रतिबध्यत्वाभिमतलिङ्गापेक्षया वैलक्षण्यवत्तया अनिर्धार्यमाणत्वमत्र तुल्यबलत्वं विवक्षितम् । तथा चान्यतरहेतावुपाधिप्रतिसन्धानमात्रेण हीनबलत्वमेवेति बोध्यम् ।

ननु धूमादिहेतोर्यत्र[5] ह्रदादावसिद्धत्वेनाभासत्वं तत्र धूमाभावस्य न द्वितीयानुमानसाध्य[6]वह्न्यभावाव्यापकत्वमित्यत आह—व्यभिचारेणेति । तच्छब्देनानुपाधित्वपरामर्शं वारयति—आभासतेति । तत्रेति । क्षित्यादिकमकर्तृकं शरीराजन्यत्वादित्यत्रेत्यर्थः । तत्त्वम् । पूर्वसाधन[7]व्यतिरेकित्वम् । ननु पक्षेतरत्वादेः

---

1. ख. साध्यव्यापकत्वा-
2. क. 'रूप' नास्ति ।
3. क. तथात्वमनौपाधिकत्व-
4. क. तस्यासत्त्वमित्यत्र
5. ग. 'यत्र' नास्ति ।
6. ख वह्न्यभावव्यापकत्वम्
7. ख. ग. व्याप्यव्यतिरेकित्वम्

व्यर्थविशेषणत्वं दूषणम् । तत्त्वेऽपि उपाधेराभासत्वात् । तत्तुल्यं च यथा—अत्रैव पर्वतेतरेन्धनवत्त्वम् । एवं वह्निसामग्र्यादिकमूह्यम् ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे उपाधिवादः



प्रकाशः

साध्यव्यापकताग्राहकाभावात् [1]उपाध्याभासत्वमुक्त्वा साधनाव्यापकताग्राहकाभावात् तदाह—एवमिति ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे उपाधिवादः

—:०:—

तर्कचूडामणिः

[2]साध्याव्यापकतयानुपाधित्वेऽपि वह्निसामग्र्यादेस्तद्व्यापकतया कथमनुपाधित्वमित्यत आह—साध्येति ।

[3]इति [4]श्रीधर्मराजाध्वरीन्द्रविरचिते तर्कचूडामणौ
अनुमानखण्डे उपाधिवादः



1. क. उपाध्यभावसत्त्वम्
2. ख. साध्यव्यापकतया
   ग. साधनाव्यापकतया
3. ख. Colophon न दृश्यते
4. क. श्री धर्मराजविरचिते

## अथ पक्षताप्रकरणम्

व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते। तत्र न तावत् संदिग्धसाध्यधर्मत्वं पक्षत्वम्। संदेहो हि न विशेषणम्, परामर्शपूर्वं लिङ्गदर्शनव्याप्तिस्मरणादिना तस्य नाशात्। नोपलक्षणम्, अव्यावर्तकतापत्तेः। नापि साधकबाधकप्रमाणाभावः, उभयाभावस्य प्रत्येकसत्त्वेऽपि सत्त्वात्।

---

### प्रकाशः

अवसरसंगत्या आह—**व्याप्तीति**। व्याप्तिनिरूपणानन्तरमित्यर्थः। पक्षत्वे निरूपिते तद्धर्मत्वं [1]सुनिरूपमिति तन्निरूपयति—**तत्रेति**। **संदिग्धेति**। केवलान्वयिन्यपि संदेहस्याग्रे उपपाद्यत्वादिति भावः। **अव्यावर्तकतेति**। अतीतस्याप्युपलक्षणत्वेन तादृशसंशयविषयत्वात् साध्यस्य सिद्धसाधनेऽपि पक्षता स्यादित्यर्थः। व्यासज्य[2]प्रतियोगिकाभावाभिप्रायेणाह — **उभयेति**। केवलान्वयिनि बाधकाप्रसिद्धिश्चेत्यपि द्रष्टव्यम्।

---

### तर्कचूडामणिः

ननु [3]व्याप्त्यानन्तर्येऽपि तन्निरूपणानन्तर्याभावात् व्याप्तिनिरूपणपूर्वभाव एवैतन्निरूपणस्य किं न स्यादित्यत आह—**व्याप्तीति**। ननु [4]पक्षत्वनिरूपण प्रतिज्ञाविरोध इत्यत आह—**पक्षत्व इति**। ननु केवलान्वयिनि [5]साध्याभावा प्रसिद्ध्या कथं सन्देह इत्यत आह—**केवलेति**। अभिधेयत्वं शब्दनिष्ठात्यन्ताभावप्रतियोगि न वेति सन्देहसम्भवादिति भावः। यत्र साध्ये कदाचिदपि कस्यापि न सन्देहस्तत्रोपलक्षितसाध्यवत्त्वाभावेन व्यावर्तकत्वमस्त्येवेत्यत आह—**अतीतस्यो**

---

1. क. सुनिरूपितमिति
2. क. प्रतियोगिकाभिप्रायेण
3. ग. व्याप्तेरानन्तर्ये
4. ग. पक्षधर्मत्वनिरूपणे
5. क. ख साध्याभावप्रसिद्ध्या

नाप्यभावद्वयं तथा। बाधकप्रमाणाभावस्य व्यर्थत्वात्। ह्रदादेः पक्षत्वेऽपि बाधहेत्वसिद्ध्यादेरावश्यकत्वेन अनुमित्यनुत्पादात्। नापि साधकप्रमाणाभावः। 'श्रोतव्यो मन्तव्यः' इति श्रुत्या समानविषयकश्रवणानन्तरं मननबोधनात्। प्रत्यक्षदृष्टेऽप्यनुमानदर्शनात्। एकलिङ्गावगतेऽपि लिङ्गान्तरेण तदनुमानाच्च। 'मन्तव्यश्चोपपत्तिभिः' इति स्मरणात्।

अथ सिषाधयिषितसाध्यधर्मा धर्मी पक्षः। तथा हि मुमुक्षोः शब्दादात्मावगमेऽपि मननस्य मोक्षोपायत्वेन सिद्धिविशेषानुमितीच्छया आत्मानुमानम्। अत एव 'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः। न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः' इति वाचस्पतिवचनयोरविरोधः, अनुमित्सातद्विरहाभ्यां तदुपपत्तेरिति चेत्—न। संदेहवत् परामर्शपूर्वं सिषाधयिषाया अप्यभावात्।

## प्रकाशः

नन्वेवमस्त्वित्यत आह — **नापीति**। ननु शब्दातिरिक्तत्वं साधके विशेषणम्, अत आह—**प्रत्यक्षेति**। सजातीयत्वं तत्र विशेषणमाशङ्क्याह— **एकेति**। **सन्देहवदिति**। न चेश्वरसिषाधयिषामादाय तदापि तत्सत्त्वमस्त्येवेति वाच्यम्। व्यधिकरणसिषाधयिषामादाय सिद्धसाधनस्थलेऽपि पक्षतापत्त्या सिद्धि-

## तर्कचूडामणिः

[1]व्यावर्तनीयसिद्धसाधनस्थलाव्यावर्तकत्वादित्यर्थः। ननु प्रतियोगि[2]सत्त्वस्याभावविरोधितया कथमेकसत्त्वे उभयाभाव इत्यत आह — **व्यासज्येति** व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिकेत्यर्थः। प्रत्यक्षस्थले अनुमित्सायामप्यनुमितिर्न स्यादित्यपि द्रष्टव्यम्।

1. ग. व्यावर्तनीयत्वसिद्ध- 2. क. सत्त्वस्याविर्भाव-

योग्यतायाश्चानिरूपणात् । सिषाधयिषाविरहेऽपि घनगर्जितेन मेघानुमानात्, स्वकारणाधीनतृतीयलिङ्गपरामर्शबलेन अनपेक्षितानुमानदर्शनाच्चेति ।

---

## प्रकाशः

समानाधिकरणसिषाधयिषाया एव विवक्षणीयत्वात् । न च तद्वारणाय [1]तज्जनकत्वमेव विवक्ष्यताम्, तच्चेश्वरसाधारणमिति वाच्यम् । तदपि हि न सिषाधयिषात्वेन ग्राह्यम्, अतिप्रसङ्गात् । किं तु सिद्धिसमानाधिकरणसिषाधयिषात्वेनैव । एवं चावश्यकत्वात् प्रथमोपस्थितत्वाच्च तदेवास्तु । किं चैवं सिद्धसाधनोच्छेदः, भगवदिच्छायास्तत्रापि सत्त्वात् । न च तत्र तत्सत्त्वेऽपि न तस्याः सिषाधयिषात्वम् । तत्तत्सिद्धिसामग्रीसाहित्यमेव [2]हि सिसृक्षादिवत्तस्यास्तथात्वमिति वाच्यम् । एवं हि तत्सामग्र्यभावे सिषाधयिषाविरहस्तद्भावे च सामग्रीविरह इत्यन्योन्याश्रयात् । योग्यतायाश्चेति । तदवच्छेदक[3]रूपापरिचयादिति भावः ।

---

## तर्कचूडामणिः

[4]तज्जनकत्वमिति । प्रकृतानुमितिजनकत्वमित्यर्थः । व्यधिकरण[5]जन्यसिषाधयिषा च न जनिकेति भावः । तदपीति । जनकत्वमित्यर्थः । [6]अतिप्रसङ्गादिति । व्यधिकरण[7]जन्येच्छाया अपि जनकत्वापत्तेरित्यर्थः । सिद्धीति । तत्तत्सिद्धीत्यर्थः । आवश्यकत्वात् । अवच्छेदकत्वेनावश्यकत्वादित्यर्थः । प्रथमेति । अवच्छेदकाज्ञाने अवच्छेद्याज्ञानादित्यर्थः ।

---

1. क. 'तद्' नास्ति ।
2. क. 'हि' नास्ति
3. क रूपपरिचयात्
4. क ख 'तद्' नास्ति ।
5. ग. जन्यसिद्धसिषाधयिषा
6. ख. 'अति ........ आवश्यकत्वादित्यर्थः' नास्ति ।
7. ग. जन्येच्छाजनकत्वा-

उच्यते । सिषाधयिषाविरहसहकृतसाधकप्रमाणाभावो [ मानाभावो ] यत्रास्ति स पक्षः । तेन सिषाधयिषाविरहसहकृतं साधकप्रमाणं यत्रास्ति स न पक्षः । यत्र साधकप्रमाणे सत्यसति वा सिषाधयिषा यत्र वा उभयाभावस्तत्र विशिष्टाभावात् पक्षत्वम् । यद्यपि पक्षत्वस्य केवलान्वयित्वात् नास्य भेदकत्वम्, तथापि पक्षपदप्रवृत्तिनिमित्तमुक्तम् ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे पक्षताप्रकरणम् ।

——:०:——

## प्रकाशः

[1]सिषाधयिषाविरहसहकृतेति । अत्र च साधकमानपदं सिद्धिपरम् । तेन तादृशसिद्ध्यभाव एव पक्षता । न चैवं संशयोत्तरप्रत्यक्षस्थलेऽपि पक्षतासत्त्वेऽनुमित्यापत्तिः । [2]समाने विषये सिषाधयिषाविरहसहकृतप्रत्यक्षसामग्र्या अपि तत्प्रतिबन्धकत्वे तत एव तदनुत्पत्तेरित्युक्तम् अनुमितिलक्षणव्याख्यानावसरे तत्रैवानुसन्धेयम्[3] ।

## तर्कचूडामणिः

नन्वत्र सिद्धिसामानाधिकरण्यस्यावश्यकत्वेऽपि प्रथमोपस्थितत्वेऽपि च पक्षताघटकसिषाधयिषा तत्सिद्धिजनकसिषाधयिषैव । न तु समानाधिकरणसिषाधयिषा विवक्षिता, उक्ताव्याप्त्यपरिहारादित्यनुशयादाह—**किंचेति** । **तदवच्छेदकेति** । साधकबाधकप्रमाणाविषयत्वस्य दूषितत्वादिति भावः । ननु लिङ्गपरामर्शस्यानुमितिपूर्वं नियमतः सत्त्वेन साधकमानाभावोऽसिद्धः । तदितरसाधकमान-

1. क. सिषाधयिषेति
2. क. समानविषये
3. क. एतदनन्तरम् 'इति ध्येयम्' इत्यधिकपाठः ।

## प्रकाशः

ननु 'सन्देहवत् परामर्शपूर्वं सिषाधयिषाया अप्यभावात्' इति स्वयमेवोक्तत्वात् तदा तत्प्रयुक्ता कथं पक्षता, उपलक्षणपक्षस्य तद्वदेवाति[1]प्रसञ्जकत्वादिति चेत्—

अत्र वदन्ति। परामर्शोत्पादानन्तरं स्वकारणादनुमित्सा तदुत्तरक्षण एव पुनः स्मरणलक्षणपरामर्शः तदुत्तरक्षण एव चानुमितिरिति विनश्यदवस्थानुमित्साप्रयुक्ता तदानीं निर्विघ्नैव। यद्वा प्रथमं तत्रानुमितीष्टसाधनतायाः प्रकृतव्याप्त्यादेश्च समूहालम्बन[2]रूपमेव स्मरणम्, तदुत्तरक्षण एव चानुमित्सा, तदुत्तरक्षण एव विनश्यदवस्थव्याप्त्यादिस्मरणसाचिव्यात् मानसः परामर्शः, तदुत्तरक्षण एवानुमितिरिति अतोऽपि सा [3]तत्र सुलभैव।

---

## तर्कचूडामणिः

विवक्षायाम् अनुमित्यनन्तरमनुमित्यापत्तिरित्यत आह—**अत्रेति। सिषाधयिषेति।** प्रत्यक्षातिरिक्तसिद्धिमात्रगोचरेत्यर्थः। ननु तर्ह्युभयाभावः पक्षतास्त्वित्यत आह—**इत्युक्तमिति।**

**तद्वदेवेति।** सन्देहोपलक्षणत्वपक्षवदित्यर्थः। **उपाध्यायमतमाह—अत्रेति। तदुत्तरक्षण एव च पुनरिति।** न च विनश्यदवस्थपरामर्शादनुमित्सासहितात् अनुमित्युपपत्तौ स्मरणलक्षणपरामर्शान्तराभ्युपगमो व्यर्थ इति वाच्यम्। [4]स्वकारणाधीनानुमित्साकाले पूर्वपरामर्शनाशादिति भावः। पुरुषभेदेन व्यवस्थितं [5]कल्पान्तरमाह—**यद्वेति। इष्टसाधनताया इति।** तज्ज्ञानस्यानुमित्साहेतुत्वे-

---

1. ख. प्रसक्तत्वादिति
2. ख. 'रूप' नास्ति।
3. ख. तदा
4. क. स्वकरणा-
5. क कालान्तर-

## तर्कचूडामणिः

नावश्यकत्वादिति भावः। **अनुमित्सेति।** इच्छासामग्र्याः बलवत्त्वादिति भावः। **अतोऽपीति।** प्रकारादिति शेषः। (**सेति।**) सिषाधयिषेत्यर्थः।

ननु परामर्शस्याविनश्यदवस्थस्यैवानुमितिहेतुत्वं वाच्यम्। अन्यथा यत्र [1]शाब्दादिपरामर्शानन्तरक्षण एव हेतोर्व्याप्तिपक्षधर्मतान्यतरभङ्गभ्रमः, तत्रापि विनश्यदवस्थपरामर्शादनुमित्यापत्तेः। न च तस्यैवानुमितिप्रतिबन्धकत्वान्नानुमितिरिति वाच्यम्। साक्षादविरोधिनस्तस्य जनकज्ञानविघटनमन्तरेण प्रतिबन्धकत्वायोगात्। तस्य चात्र सत्त्वेनान्यतरभङ्गज्ञानस्याकिंचित्करत्वात्।

न च परामर्शानन्तरमेव न तद्भङ्गज्ञानम् सम्भवति, परामर्शस्यैव तत्र प्रतिबन्धकत्वात्। तथा च विशेषदर्शनं पूर्वज्ञाने अप्रामाण्यज्ञानं वा वाच्यम्। तत एव [2]पूर्वपरामर्शविनाशान्नानुमितिरिति वाच्यम्। पूर्वज्ञानेऽप्रमाण्यज्ञानं विशेषदर्शनं चान्तरेण पीतः शङ्ख इतिवत् दोषप्राबल्यादेव तद्भङ्गप्रत्यक्षभ्रमसम्भवात्।

न चैवं शङ्खपीतत्वज्ञानवदेव दोषजन्यत्वान्नेदमनुमितिप्रतिबन्धकमिति वाच्यम्। न हि दोषजन्यत्वेन [3]तस्याप्रतिबन्धकता, किंत्वप्रामाण्यनिश्चयेन। अन्यथा भ्रममात्रस्याप्रतिबन्धकतापत्तेः। न हि प्रकृते तद्भङ्गज्ञानेऽप्रामाण्यज्ञाननियमः। मानाभावात्।

न चानुमितिसामग्र्या बलवत्त्वात् परामर्शानन्तरमनुमितिरेव, न तु [4]तद्भङ्गज्ञानमिति वाच्यम्। एवं हि परामर्शानन्तरं बाधावतारायोगेन बाधस्य हेत्वाभासत्वानुपपत्तेः। यदि च फलबलात्तत्र तथा, तदात्रापि तुल्यम्।

---

1. ख. ग. शब्दादि
2. ख. 'पूर्व' नास्ति।
3. ग. अस्य प्रति-
4. क. तद्भङ्गज्ञानमनुमितिरिति

## प्रकाशः

[1]यदा तु कथंचित् स्मरणादिरूपपरामर्शानन्तरमनुमित्सोत्पद्यते ततो विनश्यदवस्थपरामर्शादनुमितिरिति[2] तदा विनश्यदवस्थायाः पूर्वं सत्त्वात् [3]तदनुमित्यनन्तरं तदनुमित्यात्मकपरमर्शात् पुनरनुमित्यन्तरं मा भूत् अतः स्वविषयानुपहिता सिषाधयिषा[4]पदेनोक्तमिति [ पदेनोक्तेति ] द्रष्टव्यम् ।

## तर्कचूडामणिः

[5]न चाविनश्यदवस्थपरामर्शस्यैव हेतुत्वे तदनन्तरं विषयपरिशोधकतर्कोपगमो विरुध्यत इति वाच्यम् । तत्रापि तर्केण संशये निरस्ते पुनः [6]परामर्शसम्भवात् । तस्मात् परामर्शानन्तरमनुमित्सा ततोऽनुमितिरित्ययुक्तमित्यनुशयं द्योतयति—कथंचिदिति । विनश्यदवस्थाया इति । सिषाधयिषाया इति शेषः । यद्यपि प्रथमानुमितिसमये स्थित्यवस्थैव सिषाधयिषा तथापि द्विक्षणावस्थायित्वमभिप्रेत्येदम् । ननु परामर्शविनाशादेव नानुमित्यन्तरमित्यत आह—तदनुमितीति । लिङ्गोपहितलैङ्गिकभानाभिप्रायेणेदम् । स्वविषयेति ।

ननु यत्र सिषाधयिषानन्तरे [7]क्षण एवानुमितिः, तत्रापि सिषाधयिषानुमितिदशायां तदुपहितैव । न हि तदुपहितस्य तद्भिन्नत्वमिति चेत्—न । [8]तदुपहितत्वात्यन्ताभाववत एव [9]तदनुपहितपदेन विवक्षितत्वात् । तस्याश्च [10]सिषाधयिषाया अनुमितिदशायां तदुपहितत्वेऽपि तत्पूर्वक्षणे तदत्यन्ताभाव[11]सत्त्वेन नोक्तदोषः ।

---

1. क. यद्वा कथंचित्
2. ख. 'इति' नास्ति ।
3. ख. 'तदनुमित्यनन्तरम्' नास्ति ।
4. ख. पदेन विवक्षितं द्रष्टव्यम् ।
5. क. न च विनश्य-
6. ग. परामर्शासम्भवात्
7. क ख. क्षणेऽनुमितिः
8. ख. तदनुपहित-
9. ख. तदुपहित-
10. ग. सिषाधयिषानुमिति-
11. ख. ग. सत्त्वेनोक्तदोषः

## प्रकाशः

अन्ये तु द्वित्रिक्षणान्तरितायामपि सिषाधयिषायामनुमितेरनुभूयमानत्वात् सिषाधयिषापदेन स्वोत्पत्त्युत्तरकालीनस्वविषयसिद्ध्यनुत्पादकाल एवात्र विवक्षितः। न चैवमद्य सिषाधयिषायां व्यासङ्गादिना सिद्ध्यनुत्पादे मासाद्यनन्तरं [1]प्रत्यक्षीकृतेऽपि विषये पक्षतासत्त्वेनानुमित्यापत्तिरिति वाच्यम् । सिद्ध्यननुगुणानन्तरितत्वेनाप्यनुत्पादकालस्य विशेषणीयत्वात् । [2]लिङ्गदर्शनव्याप्तिस्मरणादिव्यवहितद्वित्रिक्षणान्तरितायां सिषाधयिषायामेतदस्त्येवेति तत्रानुमितिः। मासाद्यनन्तरं च नानुमितिः, तत्र सिषाधयिषायाः बहुभिरुदासीनैरन्तरितत्वादित्याहुः ।

अत्रेदं चिन्त्यम् । एवं यत्रानुमित्सानन्तरं सिद्ध्यननुगुणविषयान्तरसञ्चारः [3]तदव्यवहितोत्तरक्षण एव स्मरणलक्षणः परामर्शस्तत्रानुमितिर्न स्यात् । न चेष्टापत्तिः। परामर्शाव्यवहितपूर्वसमये विनश्यदवस्थानुमित्सासत्त्वेन एकक्षणान्तरितायां तस्यामनु-

## तर्कचूडामणिः

नन्वेवमपि यत्र सिद्ध्यनन्तरमनुमितिद्वयं मे भूयात् इतीच्छा तत्र प्रथमानुमित्यनन्तरं द्वितीयानुमितिर्न स्यात्। न चात्र द्वितीयानुमितिर्न भवत्येव। अन्यथा यावज्जीवमनुमिनुयामितीच्छायां तथानुमित्यापत्तेरिति वाच्यम् । [4]तत्र फलाभावनिश्चयेनातथाभूतानुमित्साया एव पक्षतापादकत्वादिति चेत्—न । स्वविषयतावच्छेदकावच्छिन्नानुपहितस्यैवानुमितिहेतुत्वेन[5]विवक्षितत्वात् । अनुमितिद्वयं मे भूयात् इत्यत्र स्वविषयतावच्छेदकद्वित्वावच्छिन्नत्वं नैकैकानुमितेः, द्वित्वस्य व्यासज्यवृत्तित्वादिति भावः ।

1. ख. पक्षीकृतेऽपि
2. क. लिङ्गपरामर्शव्याप्ति-
3. क. तदव्यवहितक्षणे
4. ख. तत्र तथा फलाभाव-
5. क. म. 'अनुमितिहेतुत्वेन' नास्ति ।

## प्रकाशः

मित्युत्पादः, लिङ्गपरामर्शादिना द्वित्रिक्षणान्तरितायां तस्यामनुमित्यनुत्पाद इत्यत्र मानाभावात्। स्वव्यापारीभूतेन व्यवधानस्योभयत्रापि तुल्यत्वात्। तस्मात् यदि व्यवहितायामपि सिषाधयिषायामनुमित्युत्पादोऽभ्युपेयते तदा यावत्क्षणानन्तरमनुमित्यभाव उभयसिद्धः तावत्क्षणानन्तरितत्वेनानुत्पादकाला विशेषणीय इति वय युक्तमुत्पश्यामः।

न चैवमनुमित्यानन्तरं प्रत्यक्षीकृते विषये [1]तदग्रिमक्षणोत्पन्नपरामर्शेनानुमितिजननापत्तिः। तन्मते इष्टापत्तेः। प्रत्यक्षानन्तरोत्पन्नायां द्वित्रिक्षणव्यवहितायां तस्यामनुमित्या भाव्यम्, न तु प्रत्यक्षाव्यवहितपूर्वक्षणोत्पन्नायां द्वित्रिक्षणव्यवहितायां तस्यामित्यत्र नियामकाभावादिति।

---

## तर्कचूडामणिः

यत्तु [2]फलन्यूनविषयपरामर्शस्यैवानुमितिहेतुत्वात् नानुमित्यात्मकपरामर्शस्यानुमितिहेतुत्वमिति [3]विनश्यदवस्थयापि सिषाधयिषया नानुमित्यन्तरोत्पादप्रसङ्ग इति। तत्तुच्छम्। [4]व्याप्यत्वादिप्रकारकतयैव तस्य हेतुत्वेनोक्तरूपेण जनकत्वे गौरवात् मानाभावाच्च। अनुमितिद्वयेच्छास्थले द्वितीयानुमित्यनुत्पादप्रसङ्गाच्च।

जयदेवमतमाह—**अन्ये त्विति। सिद्ध्यननुगुणेति।** प्रकृतानुमित्यननुगुणेत्यर्थः। कालविशेषस्याधिकरणत्वातिरिक्तरूपेण जनकत्वे मानाभावः। अन्यथा तत्तत्कालविशेषत्वेन जनकत्वे कारणान्तरविलोपापत्तेः। सिषाधयिषाया एव जनकत्वसम्भवे तादृशकालविशेषस्य जनकत्वकल्पने गौरवाच्चेति दोषे सत्येव दोषान्तरमाह—**अत्रेति।** नन्वननुगुणव्यवधानमेव तत्र मानमित्यत आह—

---

1. क. तदापि तत्क्षणोत्पन्न-
2. ख. फलान्यू.
3. ख. विनश्यदवस्थाया अपि सिषाधयिषायाः
4. ग. व्याप्यत्वप्रकार-

## प्रकाशः

सिषाधयिषा चात्र न सिद्धित्वप्रकारिका सिद्धीच्छा विवक्षिता। मननस्थले तद्विरहेण पक्षतानापत्तेः। नापि सिद्धिविषयेच्छामात्रम्। प्रत्यक्षेण जानीयामितीच्छायामपि [1]पक्षतापत्त्या अनुमित्यापत्ते। नाप्यनुमितित्वप्रकारकेच्छामात्रम्। एकलिङ्गावगते लिङ्गान्तरेण जानीयामिति अनुमित्सायामप्यनुमित्यभावापत्तेः। नाप्यनुमितिमात्रगोचरेच्छा सा, [2]अनुमितिप्रसिद्ध्यनन्तरं पुनर्जानीयामितीच्छायां प्रत्यक्षादिसामग्रीविरहकाले परामर्शसत्त्वेऽप्यनुमित्यभावापत्तेः। किं त्वनुमितिगोचरेच्छामात्रं विवक्षितम्। सा च सिद्धित्वप्रकारिका [3]अनुमितित्वप्रकारिका वेति विशेषोऽनादरणीयः।

---

## तर्कचूडामणिः

**स्वेति**। ननु सिषाधयिषा न पक्षताप्रयोजिका, सिद्धिस्थले तद्विनाशेऽपि अनुमितिदर्शनादित्यत आह—**तस्मादिति**।

वस्तुतस्तु व्यवहितसिषाधयिषायामनुमितिरेव न भवति। यत्रानुमितिस्तत्र सिषाधयिषाप्यव्यवहिताप्यस्तीति द्रष्टव्यम्। **एवमिति**। व्यवहितसिषाधयिषाया अपि प्रयोजकत्व इत्यर्थः। **तन्मत इति**। [4]कालविशेष एव सिषाधयिषापदेन विवक्षित इति [5]मत इत्यर्थः। **मननेति**। सिद्धिसामान्येच्छायाः यत्किंचिद्विशेषसिद्धिनिवर्त्यत्वादिति भावः। **एकेति**। लिङ्गान्तर[6]जन्यज्ञानत्वस्यैव प्रकारतया अनुमितित्वस्याप्रकारत्वादिति भावः। **किं त्विति**।

ननु प्रत्यक्षादन्येन जानीयामितीच्छायां शाब्दसामग्रीकाले लिङ्गपरामर्शादनुमित्यापत्तिः, पक्षतासत्त्वात्। न च [7]शाब्दज्ञानाविषयत्वमिच्छाविशेषणम्।

---

1. ख. पक्षतापत्तौ
2. ख. 'अनुमितिप्र' नास्ति।
3. क. अन्यप्रकारिका
4. ग. आकाङ्क्षाविषय एव।
5. ख ग. 'मत इति' नास्ति।
6. ग ज्ञानजन्यत्वस्यैव
7. ग. शाब्दज्ञानाविषयत्वम्

## प्रकाशः

न चैवं धूमेन वह्न्यनुमित्सायां आलोकादिनापि तदनुमित्यापत्तिः। [1]यानुमितिर्यत्रोत्पद्यते तद्गोचरानुमित्साया विवक्षितत्वात्। न चैवं पुरुषं जानीयामितीच्छायां संशयस्थले प्रत्यक्षसामग्र्यां सत्यामनुमित्यापत्तिः, अनुमित्सासत्त्वे प्रत्यक्षसामग्र्यापि प्रतिबन्धासम्भवादिति वाच्यम्। प्रत्यक्षसामग्र्यां प्रत्यक्षातिरिक्त-

---

## तर्कचूडामणिः

अनुमित्यनन्तरं पुनर्जानीयामितीच्छायां लिङ्गपरामर्शे सति प्रत्यक्षादिसामग्रीविरहेऽपि अनुमित्यनापत्तेरिति चेत्—न। तत्र शाब्दसामग्र्या एव प्रतिबन्धकत्वात्। न च विनिगमकाभावः। अनुभवस्यैव विनिगमकत्वात्।

**आलोकेति**। वह्निव्याप्यत्वपरामर्शे सतीति शेषः। तल्लिङ्गकानुमितिगोचरेच्छाया विवक्षितत्वान्न दोष इत्याह—**यानुमितिरिति**। न च धूमालोकाभ्यामनुमिनुयामिति यत्रेच्छा तत्र का गतिरिति वाच्यम्। तत्रोभयलिङ्गकानुमितेरेकदैवोत्पत्तेः। न चानुमितिभेदापत्तिः, न हि कारणभेदात् कार्यभेदः। किं तु प्रागभावभेदात्। अन्यथा अनेककुलालजन्यघटस्यैकत्वानुपपत्तिरिति। ननु प्रत्यक्षसामग्र्येव प्रतिबन्धिकेत्यत आह—**अनुमित्सेति**। अनुमितिगोचरेच्छेत्यर्थः। जानीयामितीच्छापि तदतिरिक्त[2]सिद्धिगोचरेत्यत आह—**मात्रेति**। अनुमितित्वप्रकारिकेच्छा सेत्युक्ते प्रत्यक्षादन्येन जानीयामितीच्छाया उत्तेजकत्वं न स्यादित्यत उक्तं **प्रत्यक्षातिरिक्तसिद्धिमात्रगोचरेति**। [3]नन्वस्या अनुमित्सात्वे अनुमित्यनन्तरं पुनर्जानीयामितीच्छा यत्र तत्र पक्षता न स्यादित्यत आह—**न हीति**। एवं च शाब्द[4]सामग्र्या अपि शाब्दज्ञानातिरिक्तसिद्धिमात्रगोचरेच्छा उत्तेजकेति द्रष्टव्यम्।

---

1. ख. येनानुमितिः
2. क. ख. 'सिद्धि' नास्ति
3. ग. नन्वस्यानुमित्सासत्त्वे
4. ग. सामग्र्यामपि

## प्रकाशः

सिद्धिमात्रगोचरेच्छाया उत्तेजकत्वात् तस्याश्च तत्रासत्त्वात्। न ह्युभयत्रैकैवानुमित्सा विवक्षितेति।

ननु सिषाधयिषा तत्पुरुषीया तत्साध्यीया तत्कालीना अवश्यं विवक्षणीया अन्यथा व्यधिकरणाम् अन्यसाध्यीयाम् अन्यकालीनां च सिषाधयिषामादाय पक्षतासत्त्वेऽपि सिद्धसाधनस्थलेऽप्यनुमित्यापत्तिः। एवं च तादृशसिषाधयिषायाः घनगर्जितस्थलादावप्रसिद्धेः कथं [1]तद्धटिता पक्षतेति चेत्—

अत्राहुः। स्वीयसिषाधयिषाविषयत्वाभावसमानाधिकरणसिद्धिविषयत्वाभावः साध्ये पक्षता। नन्वत्रापि सिषाधयिषायां तत्कालीनत्वं विवक्षितं न वा? आद्ये

---

## तर्कचूडामणिः

केचित्तु सिद्धिगोचरेच्छैव सिषाधयिषा। न चैवं पुरुषं जानीयामितीच्छायां संशयोत्तरप्रत्यक्षसामग्र्यां सत्यां अनुमित्यापत्तिः। स्वनिवर्तकीभूतप्रत्यक्षादिसिद्धि[2]-सामग्र्यसमवहितायास्तस्या विवक्षितत्वात्। सिद्धिसामान्येच्छायाश्च स्वनिवर्तकप्रत्यक्षसामग्रीसमवहितत्वात् न तत्रानुमितिरित्याहुः।

तच्चिन्त्यम्। अनुमित्यनन्तरं प्रत्यक्षेण जानीयामितीच्छायां प्रत्यक्षादिसामग्रीविरहकाले पक्षतासत्त्वादनुमित्यापत्तेः।

विपक्षे बाधकं क्रमेणाह—**अन्यथेति**। इष्टापत्तिमाशङ्क्याह—**एवं चेति**। जयदेवमतमाह—**अत्रेति**। व्यधिकरणसिषाधयिषामादायातिप्रसङ्गनिरासाय

---

1. ख तदाहितपक्षता  2. क ख. सामग्र्यसमवहितायाः

## प्रकाशः

घनगर्जितादावप्रसिद्धिः। अन्त्येऽन्यकालीनसिषाधयिषामादाय [1]पक्षतासत्त्वे [2]सिद्धसाधनस्थलेऽपि पक्षता स्यादिति चेत्—

न। सिषाधयिषाविषयत्वस्य विशेषणत्वेन [3]तत एव तत्कालीनत्वलाभात्, न तु तदपि विशेषणं प्रवेश्यम्, येनोक्तदोषः स्यादिति। एवं च द्वित्रिक्षणान्तरितायां सिषाधयिषायामनुमितिस्तदभ्युपगन्तृमते कथं स्यादिति चिन्त्यम्।

किं च पक्षान्तरे तत्साध्यसिषाधयिषायां यत्र पक्षे सिद्धसाधनं तत्रापि पक्षता स्यात्। तामेव सिषाधयिषामादाय विशिष्टाभावसत्त्वादिति। न च स्वीयतत्पक्षीयसिषाधयिषाविषयत्वाभावो विवक्षितः। यत्र पक्षे [4]यस्य पुरुषस्य कदाचिदपि न सिषाधयिषा तत्पक्षकानुमितिस्थले पुनरप्रसिद्धेरिति चिन्त्यम्।

---

## तर्कचूडामणिः

स्वीयत्वविशेषणम्। [5]विषयत्वविवक्षया च न [6]साध्यान्तरसिषाधयिषामादायातिप्रसङ्गः। आद्य इति। स्वीयतत्कालीनसिषाधयिषायाः अप्रसिद्धेरित्यर्थः। सिषाधयिषाविषयत्वाभावेत्यत्र [7]विषयत्वविशिष्टत्वाभावो विवक्षितः, न तु तत्सम्बन्धित्वाभावमात्रम्, येनातीतसिषाधयिषामादाय विशिष्टाभावसत्त्वे सिद्धसाधनस्थलेऽप्यनुमितिः स्यादित्याह—**सिषाधयिषेति**। एतन्मते पूर्वापरविरोध इत्याह—**एवं चेति**। विशेषणीभूतसिषाधयिषायास्तत्राभावादिति भावः। नन्वेतन्मते सिषाधयिषापदमपि सिषाधयिषानन्तरकालविशेषपरमिति नोक्तदोष इत्यतो दोषान्तरमाह—

---

1. ख. 'पक्षतासत्त्वे' नास्ति।
2. ख. सिद्धसाधनेऽपि
3. ख. 'तत एव' नास्ति
4. क. तस्य
5. ख. विशेषणत्व-
   ग. विषयत्वविवक्षायां च
6. ग व्यधिकरणसिषाधयिषा
7. ग विषयत्वविशिष्टाभावः

## प्रकाशः

[1]वस्तुतो व्यधिकरणाया अन्यकालीनायाश्च तस्यास्तदा तत्पुरुषे विरह एवेति तामादायातिप्रसङ्गाभावात् तल्लिङ्गकतत्पक्षकतत्साध्यकानुमितिगोचरा सा विवक्षणीया। तादृशी च घनगर्जितादिस्थलेऽपीश्वरेच्छैव प्रसिद्धेति नोक्तदोष इति वयम्।

यत्तु सिद्ध्युत्तरानुमितित्वावच्छिन्ने सिषाधयिषा विशेषसामग्री, सामान्यसामग्री परामर्शमात्रमिति [2]विशिष्टाभावरूपा पक्षता अनुमितिहेतुरेव नेति। तन्न। एवं मणिसमवधानकालीनदाहत्वावच्छिन्ने उत्तेजकं विशेषसामग्रीति विशिष्टाभावस्तत्रापि न हेतुः स्यात्। यथा चात्र नेष्टापत्तिस्तथा [3]शक्तौ वक्ष्यते।

ननु [4]तादृशसिद्धेः प्रतिबन्धकतया तदभावरूपा पक्षता प्रतिबन्धकाभावरूपतया हेतुर्वाच्या तच्च न सम्भवति, कार्यासमानकालीनत्वात्। अन्यत्र प्रतिबन्धकाभावस्य कार्यसमान[5]कालीनत्वेनैव हेतुत्वावधारणादिति चेत्—

---

## तर्कचूडामणिः

**किं चेति।** अनुमितिसमानाधिकरणपक्षताया एवानुमितिहेतुत्वे सम्भवति व्यधिकरणायास्तस्या [6]न हेतुत्वमित्यभिप्रेत्याह—**वस्तुत इति।** व्यधिकरणायास्तत्पुरुषे अन्यकालीनायाश्च तदा विरह इत्यर्थः। लिङ्गान्तरेणानुमितीच्छायां प्रकृतलिङ्गेन सिद्धसाधनस्थलेऽनुमित्यापत्तिं वारयति—**तल्लिङ्गकेति।** एवमुत्तरत्रापि व्यावर्त्यं द्रष्टव्यम्।

---

1. ख. 'वस्तुतो ............ इति वयम्' इति ग्रन्थस्त्रुटितः।
2. ख. 'विशिष्टाभावरूपा' नास्ति।
3. ख. 'शक्तौ' नास्ति।
4. क. सदृशसिद्धेः
5. ख. कालीनस्यैव
6. ख. ग. हेतुत्वमयुक्तमित्यभिप्रेत्य

## प्रकाशः

न। मण्याादिसमवधानकालेऽपि दाहापत्त्या बाधकेनान्यत्र तथा कारणत्वेऽप्यत्र तदभावेन गौरवेण च तथा हेतुत्वाभावात्। कार्याभावातिरिक्तप्रतिबन्धकाभावे तथा [1]नियमाद्वा।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे

अनुमानखण्डे [पक्षताप्रकरणम्] पक्षतावादः

——:०:——

## तर्कचूडामणिः

तदभावेन—बाधकाभावेनेत्यर्थः। [2]नन्वन्यत्र क्लृप्तत्वादत्रापि तथेत्यत आह—**गौरवेणेति**। ननु प्रतिबन्धकाभावत्वावच्छिन्नस्यैव कार्यसहभूतत्वेन हेतुत्वम्, न तु प्रतिबन्धकाभावविशेषस्य, संकोचे मानाभावात् [3]वैरूप्यकल्पनायां गौरवाच्च। अन्यथा [4]यागादावप्यपूर्वं न कल्प्येत। अन्यत्र व्यापारं विना क्षणिकस्य हेतुत्वाभावेऽपि प्रकृते तेन विनापि हेतुत्वसम्भवात्। यदि च क्षणिकस्य कालान्तरभाविफलजनकता व्यापारद्वारैवेत्यन्यत्र दृष्टत्वात् यागादावपि तथा, तदा मण्यभावादौ प्रतिबन्धकाभावमात्रस्य तत्सहभूतत्वेन हेतुत्वकल्पनात् अत्रापि तथा। यदि चात्र तदसम्भवः, तदा अनुमितिविशेषे सिषाधयिषाया एव हेतुत्वमस्तु। अत एव न मण्यभावप्रतिबन्दिरपीत्यनुशयादाह—**कार्येति**। अन्यथा घटप्रागभावादेरपि घटादिहेतुत्वं न स्यादिति भावः।

[5]इति श्रीधर्मराजाध्वरीन्द्रविरचिते तर्कचूडामणौ

अनुमानखण्डे पक्षतावादः समाप्तः।



1. ख. नियमादिति
2. क. नन्वत्र
3. क. द्वैरूप्य-
4. क. ख, यागादावपूर्वं
5. ख. ग. इयं पुष्पिका नोपलभ्यते

## अथ परामर्शप्रकरणम्

पक्षधर्मस्य व्याप्तिविशिष्टज्ञानमनुमितिहेतुः । ननु व्याप्यतावच्छेदकप्रकारेण व्याप्तिस्मरणं पक्षधर्मताज्ञानं तथा, लाघवात्. परामर्शहेतुत्वेनावश्यकत्वाच्च । एवं धूमो वह्निव्याप्यो धूमवांश्चायमिति ज्ञानद्वयादेवानुमितिरस्तु । न चानुमितिं प्रति व्याप्यत्वज्ञानमेव हेतुर्लाघवात् (आवश्यकत्वाच्चेति) [उपजीव्यत्वाच्चेति] वाच्यम् । तस्यानुमितेः पूर्वमसिद्धौ युगपदुपस्थित्यभावात् ।

---

### प्रकाशः

व्याप्तिस्मरणमिति । व्याप्तिनिश्चय इत्यर्थः । लाघवादिति । अतिरिक्तविशिष्टवैशिष्ट्यावगाहिज्ञानकल्पनापेक्षया लाघवादित्यर्थः । ज्ञानद्वयादिति । अत्र ज्ञाने [1]द्वित्वमविवक्षितम्, उभयगोचरैकसमूहालम्बनादप्यनुमित्युत्पत्तेरिति ध्येयम् । लाघवादिति । व्याप्यतावच्छेदकप्रकारकज्ञानत्वापेक्षया व्याप्यत्वप्रकारक[2]ज्ञानत्वस्य

---

### तर्कचूडामणिः

ननु व्याप्त्यनुभवादप्यनुमितिदर्शनात् स्मृतिहेतुत्वाभिधानमयुक्तम् । न च तत्पदं ज्ञानमात्रपरम्, व्याप्तिसंशयादप्यनुमित्यापत्तेरित्यत आह—व्याप्तीति । ननु व्याप्यतावच्छेदकप्रकारकज्ञानत्वस्य कारणतावच्छेदकस्य गुरुत्वेन कथं लाघवाभिधानमित्यत आह—[3]अतिरिक्तेति । तृतीयलिङ्गपरामर्शापेक्षया प्रथमोपस्थितिलाघवादित्यर्थः इत्यन्ये । नन्वतिरिक्तज्ञानकल्पनागौरवे सति कथं लाघवाभिधानमित्यत आह — व्याप्यतेति । ननु व्याप्यतावच्छेदकप्रकारकज्ञानस्यैव

---

1. ख. द्वयत्वम्
2. ख. ज्ञानत्वस्यैव
3. ख. 'अतिरिक्तेति ........... लाघवाभिधानमित्यत आह' इति ग्रन्थः त्रुटितः ।

अथ यथा तत्ताविशिष्टस्मरणे सतीन्द्रियसंनिकृष्टे स एवायमित्यभेदप्रत्ययो भवति तथेन्द्रियसंनिकृष्टे धूमे वह्निव्याप्यधूमस्मरणे धूमत्वसाधारणधर्मदर्शनात् व्याप्योऽयमित्यभेदप्रत्ययः स्यात् सामग्र्या वृत्तत्वादिति स एवानुमितिहेतुरिति चेत् — न। प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वात् अनुमितिरेवोत्पद्यते न तु व्याप्याभेदप्रत्यक्षम्। अन्यथा तवापि परामर्शानन्तरं तदनुव्यवसायो वा भवेन्न त्वनुमितिरेव।

## प्रकाशः

लघुत्वादित्यर्थः। उपजीव्यत्वादिति। व्याप्यत्वग्रहं विना व्याप्यतावच्छेदकत्वज्ञानाभावादित्यर्थः। ननु सामग्रीबलेन व्याप्यत्वप्रकारकज्ञानसिद्धौ युगपदुपस्थितिः स्यादिति शङ्कते—अथेति। बलवत्त्वादिति। [1]समानविषये प्रत्यक्षसामग्र्या बलवत्त्वेऽपि भिन्नविषयेऽनुमितिसामग्र्या बलवत्त्वादित्यर्थः। तथा च युगपदुपस्थित्यभाव एवेति भावः। इन्द्रियेति। तथा च व्यभिचारात् लघोरपि न हेतुत्वमिति भावः।

## तर्कचूडामणिः

व्याप्यत्वप्रकारकज्ञाने उपजीव्यत्वात् अस्य कथमुपजीव्यत्वमित्यत आह — व्याप्यत्वेति। नन्वनुमितिपूर्वसमये विशिष्टज्ञानसत्तामात्रेण कथं तद्धेतुत्वम्। तथा च अथत्यादिग्रन्थानुपपत्तिरित्यत आह-—नन्विति।

नन्वनुमितिसामग्र्याः [2]बलवत्त्वेन संशयोत्तरस्थलेऽप्यनुमितिः स्यादित्यत आह—समानेति। ननु तथापि लाघवमप्रत्यूहमित्यत आह—तथा चेति। ननु परामर्शसत्तामात्रेण न हेतुत्वमिति मूलासंगतिमाशङ्क्य न हेतुत्वप्रतिपादनपरं तत्, किं तु व्यभिचाराभावप्रदर्शनपरमित्याशङ्क्य [3]तात्पर्यमाह—तथा चेति।

1. क. समाने
2. ग. बलवत्त्वे संशयो-
3. ग. तत्तात्पर्य-

अथ वह्निव्याप्यो धूम इति स्मरतः पर्वतीयधूमेन्द्रियसंनिकर्षेण प्रथमत एव व्याप्तिधूमत्वयोर्वैशिष्ट्यं यत्र भासते विशेषणज्ञानस्य पूर्वं वृत्तत्वात्, तत्र, यत्र वा आप्तवाक्यात् वह्निव्याप्यवानयमिति ज्ञानं तत्रोभयत्रापि लाघवात् पक्षधर्मव्याप्यत्वज्ञानहेतुत्वकल्पनात्, अन्यत्रापि तथेति चेत् — न। इन्द्रियासंनिकृष्टेऽतीन्द्रिये च लिङ्गे प्रत्यक्षविशिष्टज्ञान-सामग्रीविरहात् तेन विना अनुमित्यनुत्पादापत्तेः अस्मदुक्तसामग्र्याश्च तत्रापि सत्त्वात्। न चानुमानादिना तत्र परामर्शः। अनवस्थानात्।

अथ यथा स देवदत्तो गौरो न वा, परमाणुः गुरुत्वाधिकरणं न वेति संशयः बहिरस्वातन्त्र्येणापि मनसा कोटिस्मरणविशेषादर्शनादिसह-कारिवशाज्जन्यते, यथा वा निद्रासहकारेण बाह्यस्वप्नानुभवस्तथेहापि ज्ञानान्तरोपनीतविशेष्ये व्याप्तिस्मरणसहकृतेन मनसा परामर्शो जन्यते, तदनन्तरमनुमितिदर्शनादिति चेत् — न। व्याप्तिस्मरणादेः प्रमाणान्तर-तापत्तेः। तदेव हि प्रमाणान्तरं यदसाधारणं सहकार्यासाद्य मनो बहिर्गो-चरप्रमां जनयति, यथेन्द्रियादि।

---

## प्रकाशः

परामर्श इति। तथा च न व्यभिचार इति भावः। [1]प्रमाणान्तर-तापत्तेरिति। प्रमाणान्तरत्वेन परिगणनापत्तेरित्यर्थः। [2]न च त्वन्मत इति

---

## तर्कचूडामणिः

ननु [3]प्रमान्तरजनकस्य प्रमाणान्तरत्वमिष्टमेवेत्यत आह—प्रमाणान्तरत्वेनेति। यद्य-पि प्रमावैजात्येन प्रमाणान्तरत्वम्, यथा प्रत्यक्षादेः। अन्यथा प्रमाणानन्त्यापत्तेः। न

---

1. क. प्रमाणेति
2. क. न चेति
3. ख. प्रमाणान्तर-

सशयस्वमो तु न प्रमे इति न निद्रादेः प्रमाणान्तरत्वम्। न च कथं तत्रापि स धूमो वह्निव्याप्य इति व्यवहारः, तदानीं तद्व्याप्यत्वानुभावकाभावादिति वाच्यम्। तत्र स्मृतधूमे धूमत्वेन वह्निव्याप्यत्वानुमानात्। न च तन्मते धूमत्वेन व्याप्यत्वानुभवः सम्भवति।

## प्रकाशः

धूमे [1]वह्निव्याप्यत्वपरामर्शवत् धूमत्वेऽपि वह्निव्याप्तिव्याप्यत्वपरामर्शस्यासम्भवः। विशेष्यासंनिकर्षस्याभयत्रापि समानत्वात्। व्याप्तिस्मृतिर्धूमत्वेन धूमत्वज्ञानमिति मदुक्ता [2]धूमे वह्निव्याप्यत्वानुमितिसामग्री तत्राप्यस्त्येवेति भावः।

अत एवेति। यत एवोक्तयुक्त्या व्याप्यत्वावच्छेदकप्रकारिका धीरनुमितिहेतुः अत एव यदा धूमादिप्रत्येकवृत्तिवह्निव्याप्त्यवच्छिन्नसकलवह्निव्याप्यनिष्ठमहाव्याप्त्यन्तर[3]विषयं या वह्निव्याप्यवान् सोऽवश्यं वह्निमानिति ज्ञानं तदा

## तर्कचूडामणिः

चात्र परामर्शात्मकप्रमायाः प्रत्यक्षादिवैजात्यम्, मानसत्वात्। न चेन्द्रियसंनिकर्षाभावे कथं साक्षात्त्वमिति वाच्यम्, ज्ञानप्रत्यासत्तेः सत्त्वात्। सुरभि चन्दनमित्यत्र [4]तस्य क्लृप्तत्वात् तथाप्यापाततः।

ननु तन्मतेऽप्यनुमानस्य प्रमाणतया कथं धूमत्वेन [5]वन्हिव्याप्त्यनुमानायोग इत्यत आह— धूम इति। यद्यपि संनिकृष्टधूमे व्याप्तिग्रहवत् तत्रैव धूमे धूमत्वस्य वह्निव्याप्तिव्याप्यत्वानुभवसम्भवेन पर्वतवृत्तिधूमेऽपि तद्धूमत्वं वह्निव्याप्तिव्याप्यमिति स्मृतिरूपपरामर्शः सम्भवति, तथापि पक्षविशेष्यकपरामर्शाभिप्रायेणेदं बोध्यम्।

1. ख. वह्निव्याप्ति
2. ख. 'धूमे वह्नि' नास्ति।
3. ख. विषयः
4. ख. 'तस्य' नास्ति।
5. ख. वह्निव्याप्यतायोगात्

अत एव यो वह्निव्याप्यवान् सोऽवश्यं वह्निमानिति व्याप्तिज्ञानवतोऽनुमितिर्नान्यथा। अथ पर्वतीयधूमे धूमत्वेन ज्ञाते वह्निव्याप्योऽयं न वेति संशयेऽप्यनुमितिः स्यादिति चेत् — न। धूमो वह्निव्याप्य इति स्मरणे विद्यमाने धूमत्वज्ञानस्य विशेषदर्शनत्वेन संशयाभावात्। अन्यथा परामर्शोऽपि कुतो न स्यात्। संशयेन प्रतिबन्धादिति चेत् — तुल्यम्। न च सामान्यनिश्चयस्य सामान्यसंशयनिवर्तकत्वात् धूमसामान्ये संशयो मा भूत्, विशेषसंशयस्तु विशेषनिश्चयनिवर्तनीय इति धूमविशेषे संशयनिरासार्थं पृथक् व्याप्तिनिश्चयो वाच्य इति वाच्यम्।

## प्रकाशः

परमनुमितिः, न तु तदभावेऽपीत्यर्थः। अत्र धूमो वह्निव्याप्य इति स्मरणमस्ति न वा। अन्त्ये तदभावादेव नानुमितिः। आद्ये त्वाह—[1]धूमो वह्निव्याप्य इति। तुल्यमित्यापाततः। वस्तुतस्तु संशयाभाव एव तात्पर्यम्। अन्यथा साक्षादविरोधिनः संशयस्य जनकीभूतव्याप्यत्वनिश्चयविघटनद्वारैव प्रतिबन्धकत्वं स्यात् न त्वन्यथेति ध्येयम्।

## तर्कचूडामणिः

नन्वत एवेत्यत्र मीमांसकेन व्याप्यत्वप्रकारकज्ञानादनुमितिरित्युक्तम्। [2]तदेतदयुक्तम्। स्वसिद्धान्तविरोधात्। यो धूमवान् सोऽग्निमानिति ज्ञानादप्यनुमितिदर्शनात् नान्यथेत्यप्ययुक्तमित्यत आह—यत एवेति। ननु व्याप्ति[3]स्मरणाभावदशायां तत्संशयो दुरपह्नव इत्याशङ्क्य विकल्पोत्तरत्वेन व्याचष्टे—अत्रेति। आपातत इत्युक्तमनुशयं द्योतयति—अन्यथेति। वस्तुतो जनकज्ञानं विघटयत इत्यत्र [4]ज्ञान-

1. ख. धूम इति
2. ख. ग. 'तदेतद' नास्ति।
3. ख. स्मरणदशायां
4. क ज्ञानवैयर्थ्यम्

यत्र हि यव्द्यावर्तकधर्मदर्शनं तत्र न तत्संशयः, तच्च सामान्ये विशेषे वेति । वस्तुतस्तु धूमत्वपुरस्कारेण व्याप्तिस्मरणे पक्षधर्मताज्ञाने चानुमितिर्भवत्येव ।

---

### प्रकाशः

[1]यत्र हीति । यदवच्छेदेन यद्धर्मनिश्चयः तद्धर्मज्ञानं [2]तद्धर्मकोटिकसंशयस्य विरोधि लाघवात्, न तु [3]तदवच्छिन्नकोटिकसंशयविरोधि गौरवादित्यर्थः । न च घटत्वेन भेदनिश्चये पृथिवीत्वेन तत्संशयस्याग्रे स्वीकृतत्वात् कथमेतदिति वाच्यम् । एतदनुशयादेव तत्र [4]मतान्तरमिति भावः । न केवलं व्यावर्तकधर्मदर्शनादेव संशयाभावः, किं तु भिन्नविषये प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वादपि न तत्संशय इत्याह — [5]वस्तुतस्त्विति । एवकारो भिन्नक्रमः अनुमितिरेव भवति न तु संशय इत्यर्थः ।

---

### तर्कचूडामणिः

यदवैयर्थ्यमिति परस्य तात्पर्यम् । अत एवास्तु वेत्यादिना व्याप्यभेदाग्रहस्यानुमितिहेतुत्वं परैरुक्तमिति ध्येयम् । ननु [6]धूमत्वस्य वह्निव्याप्तिव्यावर्तकत्वाभावात् तद्दर्शनस्य संशयविरोधित्वमनुपपादितमेव । न च व्यावर्तकपदमवच्छेदकपरम् । तथाप्यगृहीतव्याप्तिकस्य [7]धूमत्वदर्शनमात्रेण वह्निव्याप्तिसंशयनिवृत्त्यापत्तेरित्यत आह— यदवच्छेदेनेति । लाघवादिति । तदवच्छिन्नतत्कोटिकसंशयत्वापेक्षया तत्कोटिकसंशयत्वस्य निवर्त्यतावच्छेदकस्य लघुत्वादित्यर्थः । न चेति । तथा च तदवच्छिन्नतत्कोटिकसंशयत्वमेव तदवच्छेदकम् । गौरवं च प्रामाणिकमिति भावः । जयदेवोक्तपूर्वापरितोषस्य निरस्तत्वात् अभ्युच्चयपर एवोत्तरग्रन्थ इत्याह—न केवलमिति ।

---

1. क. यत्रेति
2. ख. तत्कोटिक-
3. ख. तदवच्छिन्नतत्कोटि-
4. क मतान्तरादिति
5. क. वस्त्विति
6. क. धूमस्य
7. ख. धूमदर्शन-

## तर्कचूडामणिः

ननूत्तरग्रन्थस्य संशयाभावपरत्वे अनुमितिरेव भवतीति ब्रूयात्, न तु भवत्येवेति, अत्यन्तायोगव्यवच्छेदकस्येतरानिषेधकत्वाभावादित्यत आह—एवकार इति। एतेन संशयाभावस्याप्यनुमितिहेतुत्वमिष्टमेव, [1]तन्निवर्तकत्वेन परामर्शस्यानुमित्युपयोगेऽपि तस्यानुमितिहेतुत्वाभावात् व्यभिचारशङ्कानिवर्तकतर्कवदिति केषांचित् व्याख्यानमपास्तम्। उक्तन्यायेन तस्य [2]प्रतिबन्धकत्वाभावात्। न च "संशयेन प्रतिबन्धादिति चेत् तुल्यम्" इति पूर्वग्रन्थविरोध इति वाच्यम्। तस्याभ्युपगमवादमात्रत्वात्। अत एव प्रभाकृता तथैव व्याख्यातमिति भावः।

वयं तु—ननु लाघवेन तत्कोटिकसंशयत्वस्य निवर्त्यतावच्छेदकत्वे धूमवत्त्वेन वह्निमत्त्वस्य व्याप्तिग्रहदशायां गृहीतत्वेन धूमवत्तया गृहीते पर्वते पर्वतो वह्निमान्न वेति संशयो न स्यात्। न चेष्टापत्तिः, अनुभवविरोधात्। न च त्वन्मतेऽपीदंपर्वतत्वेन वह्निनिश्चयेऽपि पर्वतो वह्निमान्नवेति संशयापत्तिरिति वाच्यम्। पर्वतान्तरमादाय तादृशसंशयसम्भवेनेष्टापत्तेः। अत एव [3]तत्तद्धूमत्वेन वह्निसामानाधिकरण्यनिश्चयेऽपि धूमो वह्निव्यभिचारी न वेति धूमत्वेन प्रकारेण धूमान्तरविषयसंशयो मणिकृता सामान्यप्रत्यासत्तिव्यवस्थापनावसरे प्रपञ्चितः। न चैवमपि घटविषयकपूर्वज्ञाने तत्पुरोवर्तिविशेष्यकघटत्वप्रकारकत्वावच्छेदेन घटत्ववद्विशेष्यकत्वरूपप्रामाण्यनिश्चये सति तद्घटविषयकद्वितीयादिज्ञाने तज्ज्ञानत्वावच्छेदेन प्रामाण्यसंशयः स्यात्, तदवच्छेदेन पूर्वं तदनिश्चयात्। न चेष्टापत्तिः, प्रामाण्यनिश्चयवैयर्थ्यापत्तेरिति वाच्यम्। वैषम्यात्। तत्र हि पूर्वज्ञानप्रामाण्यनिश्चयस्य पुरोवर्तिघटत्ववैशिष्ट्यनिश्चयरूपतया घटत्ववैशिष्ट्यसंशयपर्यवसन्नद्वितीयज्ञानविषयकप्रामाण्यसंशयप्रतिबन्धकत्वात्। अन्यथा त्वन्मतेऽपि प्रामाण्यनिश्चयस्य प्रामाण्यतदभावकोटिकसंशयविरोधितया अप्रामाण्यतदभावकोटिकसंशयापत्तेः। न च तत्कोटिकेत्यत्र तत्पदं

---

1. ग. तन्निवर्त्येन
2. ख. प्रतिबन्धकत्वात्
3. क धूमत्वेन

नन्तु भावोऽभावो वा उभयथापि प्रमेयमित्यत्र भावत्वाभावत्वयोर्व्याप्यतावच्छेदकयोरग्रहादनुमानं न स्यात् तदन्यान्यत्वरूपस्यान्यतरत्वस्य

## प्रकाशः

नन्विति। इह पर्वते भावो वाभावो वा उभयथापि प्रमेयमस्तीति भावाभावान्यतरेण प्रमेयवत्त्वानुमितौ भावत्वाभावत्वयोर्व्याप्यतावच्छेदकयोरनिश्चयेनानन्यगत्या व्याप्यत्वधीरनुमितिहेतुरित्यर्थः। न तु [1]भावत्वाभावत्वादिना प्रमेयत्वे साध्ये भावत्वाभावत्वपदं तद्वृत्तिधर्मपरमित्यर्थः। [2]तथा सति उभयथापि प्रमेयः

## तर्कचूडामणिः

तव्द्याप्यमपि लक्षयतीति वाच्यम्। पुरुषत्वनिश्चयानन्तरं करादिसंशयाभावप्रसङ्गादित्यपरितोषादाह — वस्तुत इति। 'अनुमितिर्भवत्येवेति यथाश्रुत एव साधुः, न तु सैव भवतीति, अनुमितिसामग्र्या भिन्नेऽपि विषये संशयप्रतिबन्धकत्वाभावात्। अन्यथा परामर्शानन्तरं [3]बाधकप्रमाणशङ्कातदाहितसाध्यसंशयतन्निवर्तकविषयपरिशोधक[4]तर्काणामसम्भवप्रसङ्गात्। एवं च संशयाभावोऽप्यनुमितिहेतुरिति तात्पर्यम्। अत एव 'संशयेन प्रतिबन्धादिति चेत्तुल्यम्' इति ग्रन्थोऽपि संगच्छते। अत एव च संशयनिश्चयसाधारणव्याप्यभेदग्रहाभावमनुमितिहेतुतया 'अस्तु वा' इत्यादिना आविष्करिष्यतीति ब्रूमः।

जयदेवोक्तमर्थं प्रदर्श्य प्रभाकृन्मतं दूषयति—न त्विति। नन्वेतन्मते भावत्वाभावत्वयोरिति ग्रन्थासंगतिरित्यत आह—[5]भावत्वेति। तथा सतीति।

1. ख. अभावत्वादिना
2. ख. 'तथा सति ............ लिङ्गतावच्छेदकत्वादित्यर्थः' नास्ति।
3. ग. बाधकप्रामाण्यशङ्का
4. ख. तर्काणां सम्भवात्
5. ग. 'भावत्वेति.......... व्याप्यस्याभ्युपगमात्' इति ग्रन्थस्त्रुटित.

लिङ्गत्वाभावादिति चेत् — न । भावत्वाभावत्वान्यान्यतरधर्मत्वस्य लिङ्गत्वात् । एवं धूमालोकान्यतरत्वमपि लिङ्गम् ।

अथ यव्द्यतिरेकज्ञानं यदुत्पत्तिप्रतिबन्धकं तत् तन्निश्चयसाध्यम् । तथा च पक्षधर्मस्य व्याप्यभेदज्ञानमनुमितिप्रतिबन्धकम्, अतो व्याप्याभेदज्ञानं तद्धेतुः सिध्यतीति चेत् — न । धूमत्वपुरस्कारेण व्याप्तिस्मरण-

प्रकाशः

इति पुंलिङ्गनिर्देशापत्तेः । लिङ्गत्वाभावादिति । लिङ्गतावच्छेदकत्वाभावादित्यर्थः । भावाभावान्याप्रसिद्ध्या तदन्यत्वरूपस्य तस्याप्यप्रसिद्धत्वादित्यर्थः । लिङ्गत्वादिति । लिङ्गतावच्छेदकत्वादित्यर्थः । लिङ्गमिति । अयमालोको धूमो वा उभयथापि वह्निव्याप्य इत्यत्रेति शेषः । तत्राप्रसिद्ध्यभावादिति भावः ।

[1]यव्द्यतिरेकज्ञानमिति । ग्राह्यातिरिक्तयव्द्यतिरेकज्ञानमित्यर्थः । यत्तु यव्द्यतिरेकज्ञानत्वावच्छिन्नं यत् प्रतिबन्धकमित्यर्थः । अत एवोक्तं ज्ञानेति । न तु ग्राह्य-

तर्कचूडामणिः

नित्यनपुंसकत्वाभावादिति भावः । नन्वन्यान्यस्यैव लिङ्गतया तत्त्वस्य लिङ्गत्वनिषेधोऽप्ययुक्त इत्यत आह—लिङ्गतेति । ननु व्यभिचारिव्यावृत्तत्वेन तदन्यान्यत्वं लिङ्गतावच्छेदकमेव । न च व्यर्थविशेष्यता, तत्रापि परेण [2]व्याप्त्यभ्युपगमात् । अन्यथा भावत्वाभावत्वान्यतरधर्मत्वस्यापि लिङ्गतावच्छेदकत्वानुपपत्तेरित्यत आह—भावेति । नन्वत्रालोको धूमो वा उभयथापि वह्निरस्तीत्यत्र [3]तदन्यान्यत्वमेव लिङ्गम्, न तु तत्त्वमित्यत आह—अयमिति । ननु घटव्यतिरेकनिश्चयप्रतिबध्ये घटनिश्चये व्यभिचारः, घटनिश्चयस्य तन्निश्चयासाध्यत्वादित्यत आह— ग्राह्यातिरिक्तेति ।

1. क. यव्द्यतिरेकेति
2. ग. व्याप्त्यवगमात्
3. ग. तदन्यान्यदेव

पक्षधर्मताज्ञाने सति विशेषदर्शनान्न धूमे व्याप्यभेदज्ञानम्, किं त्वनुमितेरेव तत्रोत्पत्तिः तत्सामग्रीसत्त्वात्। अतो न व्याप्यभेदज्ञानमनुमितिप्रतिबन्धकम्, येन व्याप्याभेदज्ञानं तद्धेतुः स्यात्। न च धूमत्व-

---

प्रकाशः

विरहज्ञानत्वावच्छिन्नं तथा, ग्राह्यविरहसंशयस्याप्रतिबन्धकत्वादिति यथाश्रुतेनैवोपपत्तौ ग्राह्यातिरिक्तत्वविशेषणमयुक्तमिति। तन्न। एवमप्यव्यभिचारव्यतिरेकज्ञानत्वावच्छिन्नस्य व्यभिचारनिश्चयस्य वा प्रतिबन्धकत्वम्, न च तन्निश्चयस्तद्धेतुरिति व्यभिचारवारणाय तद्विशेषणस्यावश्यकत्वात्। न च धूमत्वेति। पूर्वं [1]पक्षधर्मविषयस्य धूमो न वह्निव्याप्य इत्यस्य सामान्याकारस्यैव व्याप्यभेदज्ञानस्य प्रतिबन्ध-

---

तर्कचूडामणिः

[2]प्रभाकृदुक्तं प्रदर्श्य जयदेवोक्तं दूषयति—यत्त्विति। तद्विशेषणस्य—ग्राह्यभिन्नत्वविशेषणस्येत्यर्थः। ननु व्याप्यभेदज्ञानप्रतिबन्धकतायाः पूर्वमाशङ्कितत्वेन 'न च धूमत्वे' ति ग्रन्थासंगतिरित्यत आह—पूर्वमिति।

एवमुपाध्यायोक्तमर्थं प्रदर्श्य [3]तत्र जयदेवोक्तं दोषं परिहरति—न चेति। जयदेवोक्तमर्थं दूषयति—यत्त्विति। वयं तु ब्रूमः—'अथ पर्वतीयधूम' इत्यत्र [4]व्याप्यभेदसंशयस्य प्रतिबन्धकत्वमाशङ्कितम्। 'अथ यव्द्यतिरेके'त्यत्र व्याप्यभेदज्ञानमात्रस्य संशयनिश्चयसाधारणस्य तदाशङ्कितम्। 'न च धूमत्वे'त्यत्र तन्निश्चयमात्रस्य तदाशङ्कितम्। अत एवोक्तम् 'इयं धूमव्यक्तिर्वह्निव्याप्या नेति' इति। एतद्दोषत्रयनिरासाय सामान्यत एव भेदाग्रहस्य हेतुत्वमस्तु वेत्यादिना वक्ष्यतीति।

---

1. क. पक्षधर्मस्य विषयस्य
2. ग. प्रभाकरोक्तं प्रदर्शयन्
3. ख. 'तत्र' नास्ति।
4. ग. व्याप्यधूमभेद-

**पुरस्कारेण व्याप्तिस्मरणपक्षधर्मताज्ञाने इयं धूमव्यक्तिर्वह्निव्याप्या नेति भ्राम्यतोऽनुमित्यापत्तिः, अतो विशिष्टज्ञानं तद्धेतुरिति वाच्यम्। धूमत्वस्य विशेषस्य दर्शनेन तादृशभ्रमानुत्पत्तेः तत्रानुमितिसद्भावादेव। अन्यथा निश्चयसामग्र्यां सत्यां भ्रमानन्तरं परामर्श एव कुतो न भवति।**

---

## प्रकाशः

कत्वम् अथेत्यादिना शङ्कितम्। संप्रति पक्षधर्मधूममात्रविषयस्य [1]विशेषाकारस्यैव तथात्वमाशङ्क्यत इति न पौनरुक्त्यम्। न चेह धूमव्यक्तिपदवत्तत्र पक्षधर्मपदसत्त्वेनोक्तापौनरुक्त्याभाव इति वाच्यम्। [2]सामान्याकारभेदज्ञानस्यापि पक्षधर्मविषयत्वाविरोधात् तन्मात्रविषयत्व[3]बोधकपदस्य चाभावात्।

यत्तु व्याप्त्यभावभ्रमपरत्वमेतस्य, तस्य व्याप्यभेदभ्रमपरत्वमित्यपौनरुक्त्यमिति। तन्न। [4]वह्निव्याप्यो नेति पदपर्यालोचनयास्यापि व्याप्यभेदभ्रम[5]परत्वावगमात्। अत एवास्तु वेत्यादिना भेदाग्रहस्यैव हेतुत्वमुक्तदोषनिरासाय वक्ष्यति न तु व्याप्त्यभावाग्रहस्येति।

---

## तर्कचूडामणिः

अन्यथेत्यस्य तादृशभ्रमोत्पत्त्यङ्गीकार इति भ्रमं वारयति—**यदीति**। भ्रमसामग्र्या अपि निश्चयसामग्रीत्वेन तस्यां सत्यां कथं भ्रमाभाव इत्यत आह—**निश्चयेति**। परामर्शापादनमिष्टमेवेत्यत आह—**अनवरतमिति**। तस्यैव विवरणं **निरन्तरमिति**। अस्तु, [6]प्रस्तुते किमायातमित्यत आह—**तथा चेति**।

---

1. ख. 'विशेषाकारस्यैव' नास्ति।
2. ख, सामान्याकारेण भेद-
3. क. बोधकस्य
4. ख, वह्निव्याप्या
5. ख. परत्वावसायात्
6. ग. प्रकृते

अस्तु वा व्याप्यतया पक्षधर्मतया चावगतस्य भेदाग्रह एवानुमितिहेतुः, परामर्शहेतुतया तस्यावश्यकत्वात् । अत एवासंनिकृष्टधूमज्ञानादप्यनुमितिः । न चैवं गौरवम्, तदा विशिष्टज्ञानानुपस्थितेः । न च

---

## प्रकाशः

अन्यथेति । यद्यनुमितिसामग्र्यामप्यनुमित्यनुत्पादस्तदेत्यर्थः । निश्चयेति । निश्चयसामग्र्यां व्याप्याभेदनिश्चयसामग्र्यां सत्यां [1]भ्रमाभावादनवरतं निरन्तरं परामर्शः कुतो न भवतीत्यर्थः । तथा च परामर्शस्वीकारपक्षेऽपि यदुत्तरोत्तरपरामर्शधारा नोत्पद्यते तत्रानुमितिसामग्रीबलवत्त्वं तन्त्रमित्यत्रापि ज्ञानद्वयात्मकतत्सामग्रीसत्त्वेऽनुमितिरेव स्यात् न तु [2]व्याप्यभेदप्रत्यक्षमपीति भावः ।

अन्ये तु यदि तत्र तादृशभ्रमोत्पत्तिरभ्युपेया, तदा त्वदभिमतविशेषदर्शनादिरूप[3]परामर्शादिसामग्र्यां सत्यामुक्तभ्रमासम्भवात् तत्र भ्रमोत्पत्त्यधिकरणत्वाभिमत[4]काले परामर्श एव कुतो न भवतीति तन्मतेऽपि पर्यनुयोग इत्यर्थ इत्याहुः ।

---

## तर्कचूडामणिः

[5]जयदेवमतमुक्त्वा प्रभाकृन्मतमाह—अन्ये त्विति । ननु भेदग्रहस्य प्रतिबन्धकताया निरस्तत्वात् तदभावहेतुत्वप्रतिपादन[6]मसंगतमित्यत आह—अभ्युपेत्येति । ननु न्यायनयेऽभेदज्ञानस्य जनकतया तस्याजनकत्वादित्यनुपपन्नमित्यत आह—त्वयेति । असंनिकृष्टानुमितौ व्यभिचारनिश्चये सति तद्धेतुत्वानुमानं बाधितमित्यर्थः । तत्र व्यभिचारसन्देह एव, स च नानुमितिप्रतिबन्धक इत्याशयेनाह—

---

1. ख. भ्रमासम्भवात्
2. ख. व्याप्याभेद-
3. क परामर्शसामग्र्यां
4. क. कालपरामर्श
5. ख. जयदेवोक्तमुक्त्वा
6. ग. इष्टमेवेत्यत

जनकज्ञानाविरोधिनो ज्ञानस्याप्रतिबन्धकत्वात् भेदग्रहो न प्रतिबन्धक इति वाच्यम् । अभेदज्ञानस्याजनकत्वात् । त्वयापि लिङ्गपरामर्शे तादृशस्य प्रतिबन्धकत्वस्वीकाराच्च ।

अथ गोत्वं मधुरत्वावान्तरजातिर्वा लिङ्गं न स्यात् तद्गतधर्मान्तरस्याभावात्, अत एव तस्य विलक्षणत्वादिति चेत् — न । व्यक्तेरेव तत्र

## प्रकाशः

... अभ्युपेत्याह—अस्तु वेति । अभेदेति । त्वयापि [1]जनकज्ञानमित्यादिव्याप्त्यवष्टम्भेनाभेदज्ञानस्य जनकत्वं कल्प्यम्, तत्र बाधितमित्यर्थः । ननु बाधो ? लाघवेन उक्तज्ञानद्वयात्मकसामग्रीत्वकल्पनं यत् तदेवोपन्यस्तव्याप्तिमूलकानुमानबाधितं किं न स्यादित्यरुचेराह—त्वयापीति । तादृशस्य जनकज्ञानाविरोधिनो भेदज्ञानस्य लिङ्गपरामर्शप्रतिबन्धकत्वस्वीकारात् [2]एतस्य कथं जनक[3]ज्ञानविरोधित्वमित्यत उक्तम् अभेदज्ञानस्येति । न ह्यभेदज्ञानं [4]परामर्शे जनकमिति कश्चिदभ्युपैति । तथा च व्यभिचारान्नायं नियम इत्यर्थः । [5]ग्राह्यविरहभिन्नत्वविशेषितापि नेयं व्याप्तिः, अप्रयोजकत्वादित्यत्र तात्पर्यम् ।

## तर्कचूडामणिः

नन्विति । तादृशशब्देन पूर्ववाक्योक्ताभेदज्ञानमुच्यत इति भ्रमं वारयति—जनकेति । एतस्येति । भेदज्ञानस्येत्यर्थः । कथमिति । भेदज्ञानस्यापि परामर्शजनकाभेदज्ञानविरोधित्वमस्त्विति शङ्काशयसत्त्वान्न व्यभिचार इति भावः । उक्तव्याप्तौ किमायातमित्यत आह—तथा चेति ।

1. ख. 'जनकज्ञानमित्यादि......... त्वयापीति' इति ग्रन्थस्त्रुटितः
2. ख. तस्य
3. क. ज्ञानाविरोधि-
4. ख. परामर्शेऽपि
5. ख. ग्राह्यभिन्नत्व-

प्रकारत्वात् । न हि गौर्गोत्वमिति ज्ञानयोरविशेषः । अन्यथा गोत्वमिति ज्ञानस्य निर्विकल्पकत्वापत्त्या व्याप्यत्वग्रहे परामर्शे चानुपयोगात्, गवेतरावृत्तित्वे सति सकलगोवृत्तित्वं गोत्वत्वमित्यनुभवाच्च । न चैवमनवस्था तदितरावृत्तित्वे सति तद्वृत्तित्वस्यानुभवेनापलापासम्भवात् ।

इति परामर्शपूर्वपक्षचिन्तामणिः

---

## प्रकाशः

गोत्वे गोपदप्रवृत्तिनिमित्तत्वं धर्मान्तरमस्तीत्यत उक्तं **मधुरत्वेति** । [1]तस्यां च पदविशेषप्रवृत्तिनिमित्तत्वमपि[2] नास्तीति भावः । **व्यक्तेरिति** । व्यक्तिघटितधर्मस्येत्यर्थः । [3]**न हीति** । न ह्यनयोर्ज्ञानयोर्गोत्वविषयतायां [4]विशेष इत्यर्थः । [5]यथाश्रुतेऽप्रसक्तप्रतिषेधापातादिति ध्येयम् । **निर्विकल्पकेति** । यथा गौरिति ज्ञाने गोत्वांशे निर्विकल्पकत्वमेवमस्यापि निर्विकल्पकत्वापत्त्येत्यर्थः । तथा चात्र व्यक्तिरेव

---

## तर्कचूडामणिः

ननु ग्राह्यभिन्नस्य यो व्यतिरेकस्तद्विषयत्वे सति यज्ज्ञानस्य प्रतिबन्धकता तस्य जनकज्ञान[6]विघटकत्वमिति विवक्षितम् । अभेदज्ञानप्रतिबन्धकभेदज्ञानं ग्राह्यव्यतिरेकविषयमेवेति न व्यभिचार इत्यत आह—**ग्राह्येति** । व्यापकविशेषणीभूतज्ञानपदवैयर्थ्यादिति भावः । ननु [7]व्यक्तेर्जातिनिष्ठत्वाभावेन कथं तद्गत[8]व्याप्यतावच्छेदकत्वमित्यत आह—**व्यक्तिघटितेति** । ननु गौरित्यत्र जातेः, गोत्वमित्यत्र व्यक्तेश्च विशेषणत्वेन [9]तयोरविशेषो न पराभिप्रेतः । किं तु गोत्वगतधर्मान्तरा-

---

1. क. तस्याश्च
2. क. 'अपि' नास्ति
3. क. 'न हीति' नास्ति
4. ख, अविशेषः
5. क. 'यथाश्रुते........ध्येयम्' नास्ति ।
6. स. विषयत्वमिति ।
7. ख. जातेर्व्यक्तिनिष्ठत्वा-
8. ख. ग. व्यापकतावच्छेदक
9. ख. ग. तयोरपि विशेषो

## तर्कचूडामणिः

विषयकत्वमेव तदभिमतम् । [1]तथा चाविशेषनिराकरणे अप्रसक्त[2]निषेधापात इत्यत आह—**न हीति**। ननु गोत्वनिष्ठप्रकाराभावेऽपि गौरिति ज्ञानस्य सविकल्पकत्ववत् [3]अस्यापि तथात्वं स्यादित्यत आह—**गौरिति** । [4]**व्यक्तिरिति** । तद्घटितधर्म इत्यर्थः । ननु व्याप्तिज्ञानादौ सम्बन्धिज्ञानत्वेनोपयोगात् कथमनुपयोग इत्यत आह—**व्याप्यतेति** । न केवलं व्याप्यत्वज्ञानान्यथानुपपत्तिर्गोत्वत्वे मानम् , किं तु प्रत्यक्षमपीत्यभिप्रायेण गवेतरादीत्युक्तं मणाविति द्रष्टव्यम् ।

इति परामर्शपूर्वपक्षः

1. ग. तथा च विशेष-
2. ख. ग. प्रतिषेधापातः
3. ख. ग. अन्यस्यापि
4. ख. 'व्यक्तिरिति' नास्ति ।

अत्रोच्यते। अयमालोको धूमो वा उभयथापि वह्निव्याप्य इति ज्ञानं ततोऽनुमितिः। न च धूमत्वेनालोकत्वेन वा तत्र निश्चयः। अथ तदन्यान्यत्वमेव तत्र लिङ्गम्। न च तदज्ञानदशायामनुमितिदर्शनात् न तथेति वाच्यम्। धूमालोकान्यान्यत्वज्ञानं विना तत्रापि तत्र व्याप्यत्वानिश्चयेन तदर्थं तद्बोधावश्यकत्वादिति चेत्—न। न हि धूमालोकान्यान्यत्वं धूमान्यान्यत्वं वा व्याप्यतावच्छेदकम्, गौरवात्, व्यभिचारावारकविशेषणवत्त्वाच्च। किं तु धूमत्वादिकं, तच्च तत्र संदिग्धमेव।

---

## प्रकाशः

प्रकार इति नाविशेष इत्यर्थः। **अनुपयोगादिति**। व्याप्यतावच्छेदकाप्रतीतेरित्यर्थः। **लिङ्गम्**—लिङ्गतावच्छेदकम्।

न च [1]**तदज्ञानदशायामिति**। तत्रेति शेषः। अन्यथा धूमादेरपि [2]हेतुत्वं न स्यादिति ध्येयम्। **व्यभिचारेति**। व्याप्तिग्रहानुपयुक्तविशेषणवत्त्वादित्यर्थः। **पुरुष इति**। तथा च स्वार्थानुमितौ न किंचिद्बाधकमिति भावः।

---

## तर्कचूडामणिः

ननु धूमालोकान्यान्यत्वस्य वह्निसामानाधिकरण्याभावात् कथं तल्लिङ्गतेत्यत आह—**लिङ्गतेति**।

नन्वनुमितिहेतोस्तस्य कथमहेतुतेत्यत आह—[3]**तत्रेति**। तादृशसंशयस्थलीयानुमितावित्यर्थः। **अन्यथेति**। [4]धूमाज्ञानेऽप्यालोकादिना वह्न्यनुमित्युत्पत्तेरिति भावः। तथा च [5]यदज्ञाने यानुमितिः तस्यां न तल्लिङ्गमिति पर्यवसाने

---

1. क. 'तदज्ञानदशायाम्' नास्ति।
2. ख. तत्र हेतुत्वं
3. ख. ग. न हीति तत्रेति।
4. ग. धूमज्ञाने
5. ख. यज्ज्ञाने यानुमितिस्तस्यां तल्लिङ्गम्

ननु तदन्यान्यद्वह्निव्याप्यमेव व्यभिचाराभावेन व्याप्तिविरहसाधनस्य बाधितत्वात् । पुरुषस्तु तत्र नीलधूमवत्त्वात् इत्यत्रेवाधिकेन निगृह्यते न तु व्याप्यत्वासिद्ध्येति चेत् — न । तदन्यान्यत् धूमालोकस्वरूपमेव तत्र व्याप्यमिति सत्यम् । न च वस्तुगत्या व्याप्यज्ञानादनुमितिः, अतिप्रसङ्गात् । किं तु व्याप्यतावच्छेदकप्रकारकज्ञानात् । न च तदन्यान्यत्वं वह्निव्याप्यतावच्छेदकमित्युक्तम् ।

## प्रकाशः

तदन्यान्यदिति । क्वचित्तदन्यान्यमिति पाठः । [1]तदा तदन्यत् अन्यत् यस्मात्तत् तदन्यान्यमिति बहुव्रीहिर्बोध्यः । तदन्यान्यत्वादिति । धूमत्वालोकत्वान्यान्यधर्मवत्त्वादित्यर्थः । न तु धूमालोकान्यान्यत्वादित्यर्थः । तथा सति व्यर्थविशेषणत्वानवकाशात् 'प्रत्यक्षं हि' इत्यादिना व्यर्थविशेषणत्वमभ्युपेत्य परिहारासम्भवाच्च । न हि धूमालोकान्यान्यत्वे वह्निव्याप्तिव्याप्ततावच्छेदकमन्यान्यत्वमपहाय धर्मान्तरमस्ति, येन व्यर्थविशेषणत्वं स्यात् । धूमालोकादौ वह्निव्याप्यतावच्छेदकं धूमवत्त्वादिकमेवास्तीति तत्र व्यर्थविशेषणत्वं युक्तम् । व्याप्यत्वाभिमते [2]लघुना-

## तर्कचूडामणिः

धूमलिङ्गकानुमितेरा[3]लोकालिङ्गकत्वेन साध्यसत्त्वान्न व्यभिचार इति भावः । नन्वप्रसिद्धिवारकविशेषणमपि व्यर्थं स्यादित्यत आह—व्याप्तीति । तर्हि प्रकृतेऽप्यधिकेन निग्रहः स्यादित्यत आह—तथा चेति । ननु 'अद्ड् डतरादिभ्यः पञ्चभ्यः' (पा. सू. ७-१-२५) इति अद्डादेशे अन्यान्यमिति शब्दोऽसाधुरित्यत आह—क्वचिदिति । ननु व्यर्थविशेषणत्वाभावे सिद्धान्तिन इष्टापत्तिरित्यत आह—प्रत्यक्षं

1. ख. तदा तदन्यान्यमिति बहुव्रीहिर्वेदितव्यः ।
2. क. लघुनावच्छेदेन
3. ख. ग. रालोकलिङ्गकत्वेन

न च तदन्यान्यत्वात् वह्निव्याप्यत्वमपि तत्र नानुमेयम्, व्यर्थविशेषणत्वादिति वाच्यम्। प्रत्यक्षं हि तदन्यान्यत्वविशेषदर्शनात् व्याप्यत्वज्ञानं जनयति। विशेषणज्ञानविशेषणविशेष्यसम्बन्धविशेषणविशेष्येन्द्रियसंनिकर्षतदसंसर्गाग्रहविशेषदर्शनानां सत्त्वेन वह्निव्याप्यत्वप्रत्यक्षसत्त्वात्। न चैवं न प्रत्यक्षेऽपि तदन्यान्यत्वज्ञानं सहकारीति वाच्यम्। अन्वयव्यतिरेकाभ्यां गुरोरपि तस्य विशेषदर्शनत्वेन प्रत्यक्षसहकारित्वात्। तस्मात्तदन्यान्यत्वज्ञानं तत्र व्याप्यताज्ञानोपक्षीणं न तु साक्षादनुमितिहेतुरिति।

---

## प्रकाशः

वच्छेदकेन व्याप्तिग्रहे सम्भवति गुरुणा [1]तदसम्भवात् निरुक्ते च धूमत्वत्वादेरेवावच्छेदकत्वात् तदन्यान्यत्वं नावच्छेदकं गौरवादिति भावः। प्रत्यक्षं हीति यद्यप्युक्तरीत्या व्यर्थविशेषणत्वाभावेन धूमालोकान्यान्यत्वेन वह्निव्याप्यतानुमानं सम्भवत्येव। तथापि प्रत्यक्षसामग्र्याः बलवत्त्वात् तत्सत्त्वे तज्ज्ञानस्यापि विशेषदर्शनत्वेनैवोपयोग इति भावः।

अन्वयेति। करचरणान्यतरवत्त्वनिश्चयानन्तरं संशयोत्तर[2]पुरुषप्रत्यक्षस्य सर्वसिद्धत्वात् गुरोरपि धूमत्वालोकत्वान्यान्यधर्मवत्त्वस्य ज्ञानं प्रत्यक्षसहकारि स्यादित्यर्थः। ननु तदन्यान्यधर्मवत्त्वज्ञानमपि स्वरूपेण प्रत्यक्षसहकारि न वाच्यम्, अतिप्रसङ्गात्। किं तु वह्निव्याप्ति[3]व्याप्यत्वज्ञानत्वेन। तत्तु न सम्भवति। धूमत्व-

---

## तर्कचूडामणिः

हीति। व्यर्थत्वाभावमुपपादयति—न हीति। [4]अन्वयाद्यसिद्धिशङ्कां वारयति—करेति। स्वरूपेणेति। तदन्यान्यधर्मत्वप्रकारकतयेत्यर्थः। अतिप्रसङ्गादिति

---

1. क. तदग्रहात्
2. ख. 'पुरुष' नास्ति।
3. ख. व्याप्यत्वेन, तच्च न।
4. ग. अन्यथाद्यसिद्धि-

## प्रकाशः

त्वादेर्वह्निव्याप्तिव्याप्यतावच्छेदकस्यानिश्चयात् निश्चितस्य तदन्यान्यधर्मवत्त्वत्वादेर्गौरवेण तदनवच्छेदकत्वादिति चेत् — न। व्याप्यतावच्छेदक[1]रूपेणानुपस्थितेऽपि फलबलेन व्याप्तिग्रहस्वीकारात्। सहचारदर्शनादिव्याप्तिधीसामग्रीसत्त्वे तद्व्यतिरेकेण [2]व्याप्तिग्रहव्यतिरेकादर्शनात्। अत एव व्याप्यतानवच्छेदकेन धूमालोकान्यान्यत्वेनोपस्थित एव पक्षधर्मव्याप्तिग्रहः सर्वसिद्ध [3]इति भावः। एवं च यद्यपि वह्निव्याप्तिव्याप्यवत्त्वपरामर्शस्याविकलत्वात् [4]तदनुमानमपि सम्भवति, तथापि प्रत्यक्षसामग्रीसत्त्वेन तन्निरवकाशमिति तथोक्तमिति स्मर्तव्यम्।

ननु व्याप्यतावच्छेदकेन तदनवच्छेदकेन वा व्याप्यत्वनियतसमानाधिकरणतया प्रतीयमानेन रूपेण पक्षधर्मज्ञानमनुमितिहेतुः, तच्चाप्यत्रास्त्येवेत्यनुशयादाह —

---

## तर्कचूडामणिः

वह्निव्याप्तिव्याप्यत्वाग्रहेऽपि तद्दर्शनमात्रेण संशयाद्युत्तरप्रत्यक्षापत्तेरित्यर्थः। धूमत्वत्वादेरिति। व्याप्यतावच्छेदकप्रकारकनिश्चयस्य तद्धेतुत्वादिति भावः। हेतुत्वमसिद्धमिति दूषयति—**नेति**। **तद्व्यतिरेकेणेति**। व्याप्यतावच्छेदक[5]ग्रहव्यतिरेकेणेत्यर्थः। न च द्रव्यत्वेनोपस्थिते धूमे वह्निव्याप्तिग्रहः स्यादिति वाच्यम्। तेन रूपेण [6]व्यभिचाराज्ञाने इष्टापत्तेः। तज्ज्ञाने च तस्यैव प्रतिबन्धकत्वादिति भावः। **एवं चेति**। व्याप्यतावच्छेदकरूपेणानुपस्थितेऽपि व्याप्तिग्रहसम्भव इत्यर्थः।

व्यभिचारिहेतौ हेतुतावच्छेदकस्य नियतत्वाभावात् **प्रतीयमानेने**त्युक्तम्। यद्यप्येवं सति धूमत्वे वह्निव्याप्यत्वनियतसामानाधिकरण्याज्ञानदशायां धूमे [7]वह्निव्याप्तिग्रहेऽपि नानुमितिः स्यात्, उक्तपक्षधर्मताज्ञानासम्भवात्; तथापि [8]व्याप्यत्व-

---

1. ख. रूपेणानिश्चितेन फल
2. क. व्याप्तिग्रहाव्यति-
3. ख, एवेति
4. ख 'तद्' नास्ति।
5. ख. ग. ग्रहस्य व्यति-
6. ख, ग, व्यभिचारज्ञाने
7. ख. 'वह्नि' नास्ति
8. ख. ग. व्याप्यत्वज्ञानप्रकारक-

किं च वह्निव्याप्यवानयमिति शाब्दज्ञाने व्याप्यत्वज्ञानं कारणमित्यन्यत्रापि तथा। अथ वह्निव्याप्यत्वमपि वह्निव्याप्यतावच्छेदकम्,। तथा हि—वह्निनिरूपिता धूमादिप्रत्येकवृत्तिरेव व्याप्तिर्व्याप्तित्वेन सकलधूमादिवृत्तिव्याप्त्यवच्छेदिका आश्रयभेदेनावच्छेदकभेदेन च व्याप्तिभेदादिति चेत् —

न। सकलधूमादिवृत्तिव्याप्तौ मानाभावात् यत्र वह्निव्याप्यस्तत्र वह्निरिति व्याप्तिबुद्धौ शाब्दव्याप्यत्वबुद्धौ च प्रत्येकवृत्तिव्याप्त्याश्रयस्यैव विषयत्वात् प्रत्येकवृत्तिव्याप्तिज्ञानं विना तद्बोधाभावात्।

---

## प्रकाशः

किं चेति। अथ वह्नीति। तथा च यो वह्निव्याप्यवान् सोऽवश्यं वह्निमानिति वह्निव्याप्यत्वावच्छिन्नसकलधूमादिवृत्तिमहाव्याप्तिज्ञानवत एवानुमितिरिति मदुक्तानुमितिसामग्री तत्राप्यस्त्येवेति भावः।

ननु यो धूमवान् स वह्निमानितिवत् यो वह्निव्याप्यवान् सोऽवश्यं वह्निमानिति महाव्याप्त्यनुभवो दुरपह्नवः। अन्यथा पूर्वोक्तलक्षणानामतिव्याप्तिप्रसङ्गात्।

---

## तर्कचूडामणिः

प्रकारकपक्षधर्मताज्ञानहेतुत्वे तात्पर्यम्। अत एव व्याप्त्यनुभवपक्षधर्मताज्ञानयोरेकप्रकारकत्वेनानुमितिहेतुत्वमित्युक्तमिति ध्येयम्। प्रत्येकव्याप्त्यतिरिक्तमहाव्याप्तिमात्रेण कथं व्यभिचारोद्धार इत्यत आह—तथा चेति।

अन्यथेति। वह्निव्याप्यत्वावच्छिन्न[1]निष्ठवह्निनिरूपितव्याप्त्यभावे यदवच्छिन्नसमानाधिकरणेत्यादिलक्षणानामतिव्याप्त्यापत्तेरित्यर्थः। नन्वेवमपि वह्निव्याप्यवानिति

---

1. ग. निष्ठे

अपि च यत्र धूमत्वव्याप्त्योर्वैशिष्ट्यं प्रथममेव प्रत्यक्षेण युगपत् पक्षधर्मे भासते तत्र लाघवात् व्याप्यत्वज्ञानत्वमेव कारणतावच्छेदकम् ।

न चैवमतिरिक्तविशिष्टज्ञानकारणत्वे गौरवं दोषाय । सप्रमाणकत्वात्, कारणताग्रहदशायां फलमुखगौरवस्य सिद्ध्यसिद्धिभ्यामदोषत्वात् ।

---

## प्रकाशः

एवं च शाब्दपरामर्शस्थलेऽप्यनन्यगत्या तज्ज्ञानं कल्पनीयमिति तदुक्तसामग्री तत्राप्यस्त्येवेत्यरुचेराह — अपि चेति । लाघवादिति । व्याप्यतावच्छेदकत्वापेक्षया व्याप्यत्वप्रकारकत्वस्य लघुत्वादित्यर्थः । एवं च वह्निव्याप्यवानयमिति शाब्दपरामर्शस्थलेऽपि महाव्याप्तिज्ञानं न कल्पनीयमिति भावः ।

सप्रमाणकत्वादिति । लाघवसहकृतप्रथमप्रवृत्तविशिष्टज्ञानकारणताग्राहकप्रमाणमूलकत्वादित्यर्थः । ननु गौरवात्तदेव प्रमाणं कथं प्रवर्तेतेत्यत आह—कारण-

---

## तर्कचूडामणिः

शाब्दज्ञाने [1]व्याप्तिद्ध्याभावात् व्यभिचारतादवस्थ्यमित्यत आह—एवं चेति । ननु व्याप्यत्वप्रकारकत्वापेक्षया धूमत्वप्रकारकत्वस्यैव लघुत्वात् कथं लाघवाभिधानमित्यत आह—व्याप्यतेति । व्यभिचारमपि द्रढयति—एवं चेति ।

नन्वनुमितिपूर्वसमये विशिष्टज्ञानस्य प्रमाण[2]सिद्धत्वानभ्युपगमात् [3]सप्रमाणकत्वमसिद्धम् । न च तत् कल्पयितुं शक्यम् । गौरवज्ञानस्य प्रतिबन्धकत्वादित्यत आह —लाघवेति । गौरवज्ञानस्य प्रतिबन्धकत्वं वारयति — प्रथमेति । तदा तदनुपस्थितेरिति भावः । प्रथमप्रवृत्तकार्यान्वितशक्ति[4]ग्राहकप्रमाणवैषम्यमाह —

---

1. ख व्याप्तिद्ध्याभावात्
2. ख. सिद्धत्वाभ्युप-
3. क सप्रमाणत्व
4. ख. 'ग्राहक' नास्ति ।

## प्रकाशः

तेति। विशिष्टज्ञानकारणताग्रहः फलं तत् मुखम् उपस्थितिबीजं यस्य तत् फलमुखम्। तथा च विशिष्टज्ञानस्यासिद्धौ गौरवज्ञानस्यासत्त्वादेव न तत्कारणताग्रहपरिपन्थित्वम्। तत्सिद्धौ च तद्ग्रहैकमानकविशिष्टज्ञानमूलकस्य गौरवज्ञानस्य न तद्ग्रहपरिपन्थित्वम्, उपजीव्यविरोधादिति भावः।

ननु व्याप्यत्वप्रकारकज्ञानविषयीभवद्धर्मिमात्रगतं यत् प्रतीयते तत्प्रकारकपक्ष[1]धर्मताज्ञानत्वेन हेतुत्वमस्तु। तच्च विशिष्टज्ञाने ज्ञानद्वये चास्ति। प्रथमे व्याप्यत्वस्य द्वितीये धूमत्वादेस्तादृशस्य प्रकारत्वेन उभयानुगतस्य [2]हेतुतावच्छेदकत्वात्। तथा च यत्र सामग्रीबलेन विशिष्टज्ञानं तत्र तस्यापि हेतुत्वम्। यत्र [3]तु ज्ञानद्वयं तत्र तत एवानुमितिर्न त्वतिरिक्तविशिष्टज्ञानकल्पनं गौरवात् प्रयोजनाभावाच्चेति चेत्—न। एतदपेक्षया व्याप्यत्वस्यैव लघुत्वात्।

---

## तर्कचूडामणिः

लाघवेति। ननु किमत्र फलम्, गौरवस्य वा कथं तन्मुखत्वम् इत्यत आह—विशिष्टेति। तस्य कारणताग्राहकप्रमाणफलत्वादिति भावः। ननु गौरवासिद्धौ गौरवस्यादोषत्वेऽपि सिद्धस्य तस्य कुतो न दोषत्वमित्यत आह—[4]तत्सिद्धौ चेति।

प्रथमे विशिष्टज्ञान इत्यर्थः। द्वितीये ज्ञानद्वय इत्यर्थः। हेतुत्वमिति। उक्तेन रूपेणेति शेषः। एवं च वह्निव्याप्यवानिति शाब्दज्ञानस्थलेऽपि तादृशव्याप्यत्वप्रकारकतया न व्यभिचार इति भावः। अत्र परमते व्याप्तिज्ञानस्य संनिकृष्टव्यक्तिमात्रविषयतया धूमत्वस्य तन्मात्रगतत्वाभावात् धूमत्वप्रकारकपक्षधर्मताज्ञानात् अनुमितिर्न स्यात्। [5]मात्रार्थाविवक्षायां [6]द्रव्यत्वादिप्रकारकधूमज्ञानादनुमित्यापत्तेरिति दोषे

---

1. ख. धर्मज्ञान-
2. ख. हेतुत्वात्
3. क तज्ज्ञान
4. ग. 'तत्' नास्ति।
5. ख. मात्रार्थविवक्षायां
6. ख धूमत्वादि-

## प्रकाशः

ननु यद्येवं कारणता स्यात् तदातिरिक्तविशिष्टज्ञानकल्पना स्यादिति तर्कितं तदादाय गौरवज्ञानात् धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायेन ज्ञानद्वयस्यैव [1]गुरुणाप्यवच्छेदकेन हेतुत्वं कल्प्यत इति चेत् —[2]न। एवंविधगौरवज्ञानस्य प्रमाणप्रवृत्त्यपरिपन्थित्वात्। अत एव लाघवेन कर्मधारयप्रवृत्त्या निषादस्थपत्यधिकरणे शूद्रस्य विद्याप्रयुक्तिरपूर्वा कल्प्यत [3]इति तवापि सिद्धान्तः। अन्यथा यद्यत्र कर्मधारयः स्यात्, तदा शूद्रस्य विद्याप्रयुक्तिकल्पनागौरवं स्यादिति तर्कित[4]तत्प्रयुक्तिप्रतिसन्धानेन तत्कल्पनमपि न स्यादिति।

---

## तर्कचूडामणिः

सत्येव दोषान्तरमाह—एतदपेक्षयेति। विपक्षबाधकतर्कमाह —अत एवेति। 'एतया निषादस्थपतिं याजयेत्' इति श्रूयते। अत्र निषादानां स्थपतिरिति षष्ठीसमासकल्पने सम्बन्धलक्षणागौरवप्रसङ्गेन कर्मधारय एव कल्प्यते। तत्कल्पनानन्तरं शूद्रस्य विद्याप्रयुक्तिरपि कल्प्यते। फलमुखगौरवस्यादोषत्वादिति परस्यापि सिद्धान्त इत्यर्थः। एतच्चोपलक्षणम्, [5]तर्कितगौरवस्यादोषत्वे सुखत्वावच्छेदेन शरीरादिहेतुत्वमपि न स्यात्। तत्रापि यदि सुखत्वावच्छेदेन तद्धेतुत्वं तदा स्वर्गिशरीरादिकल्पनापत्तिरिति [6]तर्कितगौरवस्य प्रतिबन्धकतया [7]सुखविशेष एव शरीरहेतुत्वकल्पनापत्तेरित्यपि द्रष्टव्यम्।

ननु व्याप्यत्वनियतधर्मप्रकारकज्ञानत्वमुभयसाधारणमवच्छेदकं स्वस्यापि

---

1. ख. गुरुणोऽप्यवच्छेदकत्वं कल्पनीयमिति चेत्
2. ख. 'न' नास्ति।
3. ख. इत्यपि सिद्धान्तः
4. ख. 'तत्प्रयुक्ति' नास्ति।
5. क. तत्कृत-
6. क. तत्कृत-
7. ख. सुखविशेषणे

## प्रकाशः

एतेन ज्ञानद्वयसाधारणमन्यदप्यवच्छेदकं निरस्तम् । व्याप्यत्वप्रकारकत्वापेक्षया [1]सर्वस्यैव गुरुत्वात् । ननु सामान्यस्य औत्सर्गिकतया गुरुणापि पूर्वोक्तावच्छेदकेन हेतुत्वमस्तु । अत एव कर्तृजन्यतावच्छेदकं कार्यत्वमुपाधि[2]रूपं न तु घटत्वादिकं जातिरूपमिति चेत्—न । तत्र घटत्वादीनामानन्त्यात् । यत्र तु विशेषस्यैकस्य लघुत्वं तत्र न सामान्यस्य गुरोरवच्छेदकत्वम् । अत एवाख्यातवाच्यत्वे यत्नत्वमेव तथा न तु व्यापारत्वमिति संक्षेपः ।

---

## तर्कचूडामणिः

स्वव्याप्यत्वादित्यत आह—**एतेनेति** । [3]**नन्विति** । सामान्ये बाधके सत्येव विशेषमादाय कार्यकारणभावग्रहः । अन्यथा संयोगसमवायकारणतावच्छेदकं घटत्वादिकं स्यात्, न तु द्रव्यत्वमिति भावः । **न त्विति** । तस्योपाधितया गुरुत्वादिति भावः । [4]ननु यत्र सामान्यविशेषयोस्तुल्यशरीरता तत्रैव सामान्ये तद्ग्रहः । अत्र च विशेषस्य लघुशरीरत्वात् तदवच्छेदेनैव तद्ग्रह इत्यत आह—**अत एवेति** ।

ननु सामान्यविशेषयोः सामान्यमेव गुर्वप्यवच्छेदकम्, न तु लघुरपि विशेषोऽवच्छेदकः । अन्यथा आत्मप्रत्यक्षे इन्द्रियसंयोगस्य हेतुत्वेन क्लृप्ततया घटादिग्रहेऽपि स एव हेतुरिति सिद्धान्तो भज्येत । तत्रापीन्द्रियसंयोगत्वापेक्षया मनःसंयोगत्वस्य लघुशरीरतया जनकतावच्छेदकत्वोपपत्ताविन्द्रियसंयोगत्वस्य तदनवच्छेदकत्वापत्तेः । अत एव चाख्यातवाच्यतावच्छेदकं सामान्यरूपं व्यापारत्वमेव । न तु लघुशरीरमपि यत्नत्वमिति परसिद्धान्तः ।

---

1. ख. पूर्वस्यैव
2. ख. रूपमपि न तु घटत्वादिकमिति चेन्न
3. क 'नन्विति.........न तु द्रव्यत्वमिति भावः' नास्ति ।
4. ख. 'ननु यत्र ......... अत एवेति' नास्ति ।

## तर्कचूडामणिः

किं च 'धर्मिकल्पनात' इति न्यायेन गुरुशरीरस्यापि व्याप्यत्वनियतधर्मप्रकारकज्ञानत्वस्यैव तदवच्छेदकत्वम्, न तु लघुनोऽपि [1]व्याप्यत्वप्रकारकत्वस्य।

अपि च विशकलितव्यभिचाराभावसहचारस्मरणानन्तरभाविपक्षवृत्तिधूमविषयकपरामर्शजन्यानु[2]मितेस्त्वयैवाभ्युपगमेन व्यभिचारः।

किं च व्यतिरेकिस्थले व्यभिचारः। व्यतिरेकव्याप्तिग्रहपक्षे तत्र पक्षधर्मताज्ञानस्य व्याप्यत्वप्रकारकत्वाभावात् व्यभिचारः। न च व्यभिचारज्ञानविरोधिप्रकारकत्वमेव व्याप्यत्वप्रकारकपदेन विवक्षितमिति नोक्तव्यभिचारद्वयमिति वाच्यम्। व्यभिचारज्ञानप्रतिबन्धकज्ञानविषयत्वरूपतद्विरोधित्वापेक्षया [3]व्यभिचारधीकारणत्वरूपव्यभिचारविरोधित्वस्यालघुत्वेन व्यभिचारविरोधिधूमत्वादिप्रकारकत्वेनैव पक्षधर्मज्ञानस्य हेतुत्वमिति गौरववैपरीत्यापत्तेः।

अपि च पक्षधर्मज्ञानस्यानुमितिहेतुत्वमिति [4]अविवादम्। तत्रातिप्रसङ्गवारणाय व्याप्यतावच्छेदकधूमत्वादिकमेव विषयतयावच्छेदकं कल्प्यम्। लाघवात्, न तु व्याप्यत्वम्। [5]धूमत्वाद्यपेक्षया गुरुशरीरत्वात्। न च धूमत्वादिकमननुगतमेवेति वाच्यम्। व्याप्तेरपि यत्तद्घटितत्वेनाननुगतत्वात्। [6]व्याप्यपदप्रवृत्तिनिमित्तत्वेनानुगम इति यदि तदा तदवच्छेदकत्वेनानुगम इति तुल्यम्। अन्यथा प्रवर्तकीभूतपुरोवर्तिज्ञानेऽपि अतिप्रसङ्गवारणाय इष्टत्वमेव [7]विषयतयावच्छेदकं स्यात्, [8]न त्विष्टतयावच्छेदकम्, अननुगमात्।

---

1. क. व्यापारत्व—
2. ग मितेः सर्वथैवाभ्युपगमेन
3. क. व्यभिचाराधिकरणत्वस्य व्यभिचार—
4. क अविवादं कुत्राति—
5. क. धूमाद्यपेक्षया
6. ग. व्याप्तिपद—
7. ख. विषमतावच्छेदकं
8. ग. न त्विष्टतावच्छेदकम्

## तर्कचूडामणिः

अपि च व्याप्तेः सामानाधिकरण्यविशेषरूपतया पर्वतीयधूमवह्निव्याप्यत्वज्ञाने[1] तद्धूमसामानाधिकरण्येन तद्वह्नेरपि भानादनुमितिवैयर्थ्यम् । न च तद्वह्नौ धूमसामानाधिकरण्यभानेऽपि पर्वतत्वसामानाधिकरण्याभानान्न वैयर्थ्यमिति वाच्यम् । पर्वतत्वसामानाधिकरण्येन भासमानधूमसामानाधिकरण्ये भासमाने पर्वतत्वसामानाधिकरण्यभानस्यावश्यकत्वात् । न हि पर्वतत्वसमानाधिकरणधूमसमानाधिकरणो वह्निरिति ज्ञाने सति वह्नौ पर्वतत्वसामानाधिकरण्यसन्देहस्तद्विपर्ययो वा कदाचित् केनचिदप्यनुभूयते, येन तत्सामानाधिकरण्याभानं कल्प्येत । तस्मात् व्याप्यत्वप्रकारकत्वेन पक्षधर्मताज्ञानं नानुमितिहेतुरिति ।

अत्र ब्रूमः । [2]पक्षधर्मताज्ञानस्य व्याप्यत्वप्रकारकत्वेनैव हेतुत्वम् । न तु तदवच्छेदकप्रकारकत्वेन । तथा सति व्यभिचारिणि लिङ्गे व्याप्तिभ्रमादनुमित्यभावापत्तेः । तत्र हेतुतावच्छेदकस्य व्याप्यतावच्छेदकत्वाभावात् । न च प्रमानुमितावेव तस्य हेतुत्वम् । अनुमिति[3]मात्रहेतोरेव विचार्यमाणत्वात् । शब्दादौ पक्षे प्रमेयत्वादावनित्यत्वव्याप्यत्वभ्रमात् [4]प्रमानुमित्युत्पत्तेश्च । न च व्याप्यत्वनियततया प्रतीयमानधर्मप्रकारकतयैव हेतुत्वम्, अतो न व्यभिचार इति वाच्यम् । एतदपेक्षया व्याप्यत्वप्रकारकत्वस्य लघुत्वात् । धूमत्वादौ वह्निव्याप्ति[5]व्याप्यत्वाज्ञानदशायां धूमादिना वह्न्यनुमित्यभावप्रसङ्गाच्च ।

न च व्याप्तिज्ञान[6]प्रकारप्रकारकत्वेनैव तस्य हेतुत्वम्, तच्च व्यभिचारस्थलेऽप्यस्तीति वाच्यम् । प्रमेयो धूमो वह्निव्याप्य इति ज्ञानानन्तरं प्रमेयवान् पर्वत इति ज्ञानादनुमित्यापत्तेः । न च तत्प्रकारीभूतयावत्प्रकारकत्वं विवक्षितमिति वाच्यम् ।

---

1. ख. भानेन ग. भाने
2. क. पक्षधर्मज्ञानस्य
3. ख. ग. 'मात्र' नास्ति
4. ग. प्रमानुमित्यनापत्तेश्च
5. क. व्याप्यत्वज्ञान—
6. क. प्रकारकलघुत्वेनैव

## तर्कचूडामणिः

तथा सति व्याप्यत्वप्रकारत्वेन पक्षधर्मताज्ञानस्यानुमितिहेतुत्वापत्तेः, एतदपेक्षया व्याप्यत्वप्रकारत्वस्यैव लघुत्वाच्च ।

न च यदवच्छेदेन व्याप्तिग्रहः तत्प्रकारकत्वेनैव पक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यम् । अवच्छेदकस्यानतिरिक्तवृत्तित्वार्थकत्वे व्यभिचारिणि लिङ्गे तदभावादनुमित्यभावापत्तेः । तन्नियतत्वेन ज्ञायमानपरत्वे धूमत्वं [1]तदज्ञानदशायां धूमत्वादिना अनुमित्यभावापत्तेः ।

न च व्याप्तिव्यभिचारित्वेन ज्ञायमानत्वं तदवच्छेदकमिति न दोष इति वाच्यम् । प्रमेयत्वादावपि तत्त्वेनाज्ञानदशायां प्रमेयवानिति ज्ञानादनुमित्यापत्तेः । [2]न हि प्रमेयत्वं सदा तव्द्यभिचारित्वेन ज्ञायत इति नियमः ।

न च यद्विशिष्टत्वेनैवोपस्थिते व्याप्तिग्रहस्तत्प्रकारकत्वं विवक्षितम्, प्रमेयत्वं तु न तथेति वाच्यम् । तव्द्यक्तित्वेनापि व्याप्तिग्रहसमये [3]धूमत्वस्याप्यनवच्छेदकत्वापत्तेः । तस्मात् व्याप्यतावच्छेदकप्रकारकत्वेन हेतुत्वमिति मनोरथमात्रम् । अत एव सामान्यविशेषयोः सामान्यमेव लाघवादवच्छेदकमित्यपास्तम् । तदवच्छेदकत्वासम्भवस्योक्तत्वात् ।

यदपि धर्मिकल्पनात इति तदपि न । उक्तदोषेण धर्मकल्पनाया असम्भवात् । अवच्छेदकलाघवे व्यक्तिगौरवस्यादोषत्वाच्च । अन्यथा स्वर्गादावपि शरीरकल्पनं न स्यात् । न च विशकलितस्थले व्यभिचारः । व्याप्तिज्ञानकरणतावादिनो गङ्गेशस्य मते तत्रानुमित्यभावात्, मतान्तरे व्याप्तिपदस्याव्यभिचारपरत्वात् । अत एव व्यतिरेकिणि न व्यभिचारः ।

---

1. क. तज्ज्ञान—
2. क. तर्हि
3. ख. धूमत्वस्यावच्छेदक—

## तर्कचूडामणिः

यदपि [1]विषयत्वं विवक्षितमिति वाच्यम्। तथा सति व्याप्यत्वप्रकारकत्वेन पक्षधर्मताज्ञानस्यानुमितिहेतुत्वापत्तेः। एतदपेक्षया व्याप्यत्वप्रकारकत्वस्यैव विपरीत-गौरवाभिधानम्, तदपि न। व्यभिचारिण्यव्याप्तेः।

यदपि [2]धूमत्वादिकमेव लाघवाद्विषयतावच्छेदकमिति तदपि मन्दम्। अननुगमेन हेतुत्वानुपपत्तेः। व्याप्यतावच्छेदकत्वस्य व्यभिचारि[3]हेतुतावच्छेदक-साधारणस्य दूषितत्वेन तेन रूपेणाप्यनुगमासम्भवात्।

[4]यद्यपि व्याप्तिरपि अननुगता, तथापि यावत्यनुगतहेतुसम्भवः [5]तावति कार्ये अनुगतं कारणं स्वीकार्यमेव। अत एव प्रमामात्रेऽनुगतगुणाभावेऽपि प्रत्यक्ष-प्रमादावनुगतस्य हेतुत्वमुक्तम्। तथा च वह्न्यनुमितित्वाद्यवच्छेदेन वह्निव्याप्यत्व-प्रकारत्वेनेत्यादिना अनुगतेनैव रूपेण [6]तस्य हेतुत्वम्। न हि तन्मते [7]तादृशानु-मितौ धूमत्वादिप्रकारकत्वेन हेतुत्वं सम्भवति। [8]वह्निलिङ्गानामानन्त्यात्।

न च ममापि धूमलिङ्गकानुमितित्वावच्छेदेन धूमत्वादिप्रकारकत्वेन हेतुत्व-मिति वाच्यम्। धूमलिङ्गकत्वं हि धूमज्ञानजन्यत्वम्। न हि तत् जन्यतावच्छे-दकम्, आत्माश्रयात्।

न चेष्टतावच्छेदकप्रकारकज्ञानं [9]प्रतिबन्दिः, [10]तत्र तस्येच्छाप्रकारकत्वेनैव [11]हेतुत्वेनानुगमाभावात्। उक्तव्यभिचाराच्च। यच्च अपि चेत्यादि। तदपि मन्दम्।

---

1. ग. 'विषयत्वं............... व्याप्यत्वप्रकारकत्वस्यैव' नास्ति।
2. ग. धूमवत्त्वादिकमेव
3. क. हेतुतावच्छेदकसाधारण्यस्य
4. ख. यदपि
5. ख. 'तावति ............प्रकार-त्वेनेत्यादिना' नास्ति।
6. क. तस्याहेतुत्वम्
7. क. तादृगनुमितौ
8. ग. 'वह्नि' नास्ति
9. ख. प्रतिबन्धी ग. प्रतिबन्धः
10. ख. तत्र तस्येष्टापत्तिप्रकारकत्वेनैव
    ग. तत्र पुरोवर्तिज्ञानस्येच्छाप्रकार-त्वेनैव
11. ख. 'हेतुत्वेन ............अतो व्याप्यत्वप्रकारकत्वेनैव' नास्ति।

न चासंनिकृष्टे धूमे तदभावः, भवन्मतानुमितिहेतुव्याप्तिस्मरणधूमत्वज्ञानसहितेन मनसा तदुत्पादात् । यथा परमाणुर्निरवयवद्रव्यं नित्यपरिमाणवत्त्वात् आकाशवत् इत्यादौ प्रत्येकानुमानोपनीतातीन्द्रियसाध्यसाधनयोराकाशवृत्तितया स्मरणे व्यभिचाराज्ञाने मनसा व्याप्त्यनुभवः, अनुमानयोः प्रत्येकतदुभयसहचाराविषयत्वेन व्याप्त्यग्राहकत्वात् । न चातीन्द्रियव्याप्यत्वमतीन्द्रियेऽनुमेयम् । तत्रापि व्याप्तिग्राहकाभावात् ।

न च तदुपनयसहितस्य मनसो बहिरर्थप्रमाहेतुत्वे उपनयस्य प्रमाणान्तरत्वम् । इन्द्रियादेः संनिकर्षवदुपनयस्य नियतव्यापाराभावेन प्रमायाम-

---

### प्रकाशः

अनुमानयोरिति । क्वाचित्काभिप्रायेणेदं बोध्यम् । अन्यतरसाध्यमन्यतरानुमाने पक्षतावच्छेदकीकृत्यानुमानेनापि सहचारग्रहस्य क्वचित्सम्भवात् । नियतेति । स्वरूपस्य निर्वचनम्, अनियतस्य व्यापारत्वाभावादिति ध्येयम् ।

---

### तर्कचूडामणिः

व्यधिकरणवह्निधूम[1]साधारणव्याप्तिभानस्य पक्षीयवह्निसामानाधिकरण्य[2]भानमन्तरेणानुपपत्त्यभावात् । अतो व्याप्यत्वप्रकारकत्वेनैव पक्षधर्मताज्ञानस्यानुमितिहेतुत्वमिति [3]सुष्ठूक्तम् । तदेतत्सर्वमभिसन्धायाह—संक्षेप इति ।

सार्वत्रिकत्वे [4]बाधकमाह—अन्यतरेति । ननु नियतपदप्रयोगात् अनियतो व्यापारः प्रतीयते । तथा च [5]व्यापारवत्त्वमात्रस्य कारणत्वनिर्वाहकतयोपनयस्य प्रमाणत्वं स्यादित्यत आह—अनियतेति ।

---

1, ग, समानाधिकरण-
2, ग, 'भानं' नास्ति ।
3, क, ख, सूक्तम्
4, ग, हेतुमाह
5, ख, ग, व्यापारत्वमात्रस्य

करणत्वात् । सहकारिता च तदभावेऽपि भवति । बहिरिन्द्रियलिङ्गसादृश्यादिव्यापारं विनापि चिन्तोपनीतपदार्थानां बाधकानवतारे संसर्गानुभवस्य सकलजनसिद्धत्वात् । कथमन्यथा कविकाव्यादिकमिति ।

स्यादेतत् । पक्षधर्मस्य व्याप्यताज्ञानं नेन्द्रियेण । वह्नेरसंनिकर्षे तन्नियतसामानाधिकरण्यस्य व्याप्यत्वस्यायोग्यत्वात् । न च धूमत्वेन सकलधूमव्याप्यतावगमात् धूमविशेषे संस्कारात् स्मरणाद्वा उपनीतव्याप्याभेदग्रहः प्रत्यभिज्ञाने तत्ताविशिष्टस्येवेति वाच्यम् । एवं हि धूमवत्त्वेन वह्निमत्त्वज्ञानात् धूमवद्विशेषे पर्वते संस्कारवशात् प्रत्यक्षेण व्याप्तिज्ञानापेक्षेण वह्निमदभेदग्रहो वह्निमत्त्वसंसर्गग्रहो वास्तु, किमनुमानेन ।

---

### प्रकाशः

संस्कारात् स्मरणाद्वेति मतभेदेन । पृथगिति । [1]स्वातन्त्र्येणेत्यर्थः । व्याप्तिस्मरणादिना संशयस्यैवानवस्थानम्, कुतस्तज्जनककोटिस्मृतेरित्यनुशयादाह—

---

### तर्कचूडामणिः

ननु संस्कारस्य प्रत्यासत्तित्वेऽपसिद्धान्त इत्यत आह—मतभेदेनेति । वस्तुतः संस्कारो न प्रत्यासत्तिः, मानाभावात् । प्रत्यभिज्ञादावपि तत्तांशे ज्ञानस्यैव प्रत्यासत्तित्वात्, विशेषणज्ञानत्वेन तज्ज्ञानस्यावश्यकत्वात् । अनुव्यवसायादौ ज्ञानप्रत्यासत्तित्वस्य [2]क्लृप्तत्वाच्च इत्यस्वरसात् स्मरणाद्वेत्युक्तमिति ध्येयम् । ननु स्थाणुत्वपुरुषत्वोभयगोचरसमूहालम्बनादपि विशिष्टज्ञानोत्पत्तेः । पृथग्वह्निस्मरणाभावेऽपि तद्विशिष्टज्ञानं स्यादेवेत्यत आह — स्वातन्त्र्येणेति ।

---

1, ख, स्वातन्त्र्येणेति शेषः                    2. क. स्याक्लृप्तत्वाच्च

पृथग्वह्निमत्त्वस्मरणं तत्र नास्ति, किं तु व्याप्त्यवच्छेदकतयेति चेत्—न। वह्निमान्न वेति संशयानुरोधेन स्वतन्त्रवह्निमत्त्वस्मरणात्। न च विशिष्टज्ञाने स्वतन्त्रविशेषणज्ञानत्वेन हेतुत्वम्, गौरवात्।

अथ यो यत्र विशिष्य पूर्वमवगतः स तत्र संस्कारवशात् यथार्थप्रत्यक्षे भासते, यथा तत्ता प्रत्यभिज्ञाने। न च पर्वते विशिष्य पुरा वह्निरवगतः। यत्र चन्दने सौरभमुपलब्धं तत्र संस्कारवशाच्चक्षुषा सुरभि चन्दनमिति ज्ञानम्, अन्यथा अनुमितिरिति चेत्—तर्हि पक्षधर्मधूमेऽपि न पुरा विशिष्य व्याप्तिरवगतेति कथं संस्कारवशात् तद्गतव्याप्तिबोधः प्रत्यक्षेण।

न च सहचारदर्शनजन्यसंस्कारसहितेनेन्द्रियेण व्यभिचारज्ञानाभावे सति महानसीयधूमवत् पर्वतीयधूमे व्याप्त्यवगमो, वह्नेस्तु न प्रत्यक्षसामग्री संनिकर्षाभावादिति वाच्यम्। हेतुसाध्यसाक्षात्कारं विना प्रत्यक्षेण व्याप्त्यग्रहात्। न च पर्वते वह्निसाक्षात्कारः। न च पक्षधर्मस्य साध्यसामानाधिकरण्यविशेषो व्याप्तिः पक्षे साध्यग्रहं विनेत्युक्तम्।

---

## प्रकाशः

न चेति। गौरवादित्युपलक्षणम्; प्रामाण्यसंशयजन्यार्थसंशये व्यभिचाराच्चेत्यपि द्रष्टव्यम्। सामान्यलक्षणया पर्वते वह्न्यवगमादाह—विशिष्येति।

---

## तर्कचूडामणिः

प्रामाण्येति। तत्र घटत्वादीनां प्रामाण्यविशेषणत्वेन ज्ञायमानतया स्वातन्त्र्याभावादिति भावः।

ननु व्याप्ताविव वह्नावपि ज्ञानप्रत्यासत्तेः सत्त्वात् 'वह्नेस्तु न प्रत्यक्षसामग्री'

उच्यते। विशेषणज्ञानं तस्य विशेष्ये सम्बन्धः तयोरसंसर्गाग्रहो विशेषदर्शनं विशेषणविशेष्येन्द्रियसंनिकर्षो गौरयमित्यादियथार्थविशिष्ट-प्रत्यक्षकारणम्, अस्ति चात्रापि व्याप्तिस्मरणम्, स्मृतव्याप्तेः पक्षवृत्तिधूमे सत्त्वम्।

एकैव हि सा व्याप्तिः तयोरसंसर्गाग्रहो धूमत्वविशेषदर्शनं व्याप्ति-विशिष्टधूमेन्द्रियसंनिकर्षश्च व्याप्तिविशिष्टज्ञानकारणम्। न च वह्निविशिष्ट-ज्ञानसामग्री, वह्नेरसंनिकर्षात्।

---

### प्रकाशः

अलौकिकं प्रत्यक्षं निरस्य लौकिकं तदाशङ्क्य निरस्यति—न चेति। विशेषदर्शनमिति। एतत् (च) संशयाद्युत्तरप्रत्यक्षमभिप्रेत्य। अन्ये तु यद-

---

### तर्कचूडामणिः

इत्ययुक्तम् इत्याशङ्क्य तात्पर्यमाह—[1]अलौकिकमिति। ननु प्राथमिकघटादि-प्रत्यक्षे विशेषदर्शनाभावात् तस्य कथं हेतुत्वमित्यत आह—एतच्चेति। प्रकृतेऽप्ययं वह्निव्याप्यो न वेति संशयानन्तरभाविव्याप्यत्वप्रकारकज्ञानस्य [2]अवह्निव्याप्तिव्याप्यत्व-प्रकारकज्ञानजन्यत्वादिति भावः। यदि गृहीतव्याप्तेः पर्वतीयधूमे धूमत्वज्ञानमात्रादेव यदवच्छेदेनेति न्यायेन संशयप्रतिबन्धः तदा व्याप्यत्वप्रकारकज्ञानस्य संशयोत्तरत्वा-भावात् तत्र विशेष[3]दर्शनमहेतुरेवेत्यभिप्रेत्य जयदेवोक्तमाह—अन्ये त्विति। ननु विशेष्यधूमादौ संयोगसत्त्वेऽपि विशेषणीभूतव्याप्तौ संयुक्तसमवायादेरभावात् कथं तद्विशिष्टेन्द्रियसंनिकर्ष इत्यत आह—[4]व्याप्त्यापीति। ननु ज्ञानप्रत्यासत्तिसत्त्वे कथं संनिकर्षाभाव इत्यत आह—संयोगेति।

---

1. क. लौकिकमिति
2. क. वह्नि-
3. ख. ग. दर्शनं हेतुरेव
4. क. 'व्याप्त्यापीति ............ संनिकर्षाभाव इत्यत आह' इति ग्रन्थस्त्रुटितः।

## प्रकाशः

वच्छेदेनोपनेयज्ञानं तद्दर्शनपरं तदित्याहुः । [1]व्याप्तिविशिष्टेति । व्याप्त्यापि समं ज्ञानलक्षणप्रत्यासत्तेः सत्त्वादित्यर्थः । वह्नेरसंनिकर्षादिति । संयोगलक्षणसंनिकर्षा-भावादित्यर्थः ।

ननु यथा व्याप्तौ ज्ञानमेव प्रत्यासत्तिस्तथा वह्नावपि तदेवास्तु । न च व्याप्तेः सामानाधिकरण्यात्मकत्वेन संयोगादिरूपतया संयुक्तसमवाय [2]एव तत्र प्रत्यासत्तिरिति वाच्यम् । [3]न च संयोगादिकमेव व्याप्तिः, किं तु साध्यादिनानापदार्थविशिष्टम् । न च विशिष्टे संयुक्तसमवायः । न च साध्यादिकं विशेषणम् । न च तत्संनिकर्षोऽ-प्यपेक्षणीयः मानाभावादिति वाच्यम् । विशेषणसंनिकर्षस्यापि हेतुत्वे मानाभावात् । विशेष्यसंनिकर्षत्वापेक्षया विषयसंनिकर्षत्वेन हेतुत्वं लाघवादिति यदि, तदा-[4]विशेषणविशेषणसंनिकर्षेऽपि तुल्यम् । व्याप्तौ वा यथा तथास्तु, वह्नौ ज्ञानमेव प्रत्यासत्तिरस्तु । [5]न च पर्वते पुरा वह्नेरनवगमात् कथं तदुपनीतभानं तत्रेति

---

## तर्कचूडामणिः

न च संयोगेति । अतिप्रसङ्गादिति भावः । लाघवादिति । यद्यपि [6]विशेष्य-विशेषणान्यतरसंनिकर्षेऽपि विशिष्टप्रत्यक्षापत्तिः । कारणतावच्छेदकावच्छिन्नसत्त्वात् । यावत्त्वान्तर्भावे च गौरवम् । तथाप्यन्वयव्यतिरेकाभ्यां विशेषणविशेष्यसंनिकर्षवत विशेषण[7] विशेषणसंनिकर्षोऽपि हेतुरित्यत्र तात्पर्यम् । पर्वते केनापि रूपेण किं [8]वह्नेरनवगमः ? उत पर्वतत्वेन ? आद्ये सामान्येति । अन्त्ये विशिष्येति । अन्यथेति । तद्धूमत्वावच्छेदेन व्याप्तेरनवगमादिति भावः ।

---

1. ख. 'व्याप्तिविशिष्टेति' नास्ति
2. क. 'एव' नास्ति ।
3. ख. न हि
4. ख. विशेषणविशेष्य-
5. क. न च पूर्वं वह्नेरननुगमात्
6. ग. विशेष्यविशेषणयोरन्य-
7. क. ग. विशेष्य-
8. ग. वह्नेरवगमः

## प्रकाशः

वाच्यम् । सामान्यलक्षणया धूमत्वावच्छेदेन वह्निबोधने पर्वतेऽपि तद्भानात् विशिष्य तद्भानस्याप्रयोजकत्वात् । अन्यथा पक्षधर्मे व्याप्तिप्रत्यक्षानुपपत्तेः । वस्तुतस्तु यदवच्छेदेन [1]यो धर्मो भातः तदवच्छेदेन तद्धर्मिज्ञानं तद्धर्मोपनयसामग्री । तथा च धूमवत्त्वेन ज्ञाते वह्निमत्त्वोपनयः स्यादेवेति चेत्—

## तर्कचूडामणिः

नन्वेवं शुक्तौ रजतत्वारोपो न स्यात् । तत्र रजतत्वस्य पूर्वमभानात् । किं च निर्वह्निपर्वते वह्न्यनुमितौ जायमानायां नोपनीतवह्निप्रत्यक्षापादनसम्भवः ; तत्र पूर्वं वह्नेः सामान्यप्रत्यासत्त्याप्यननुभवादित्यस्वरसादाह — वस्तुत इति । तथा च सत्यरजते चाकचक्याद्यवच्छेदेन गृहीतरजतत्वस्य तत्त्वेन गृह्यमाणायामारोपो न विरुद्धः, एवं निर्वह्निपर्वतेऽपीति भावः । [2]न तु यदवच्छेदेन यद्धर्मज्ञानं तदवच्छेदेन तद्धर्मोपनयसामग्री, गौरवादित्यर्थः । अत एव पर्वतीयधूमत्वावच्छेदेन व्याप्त्युपनयः । न च तत्रापि धूमत्वावच्छेदेनैव तदुपनयः, पर्वतीयत्वमपि स्वसामग्री-बलात् [3]भासत इति वाच्यम् । एवं हि धूमत्वावच्छेदेनैव पर्वते वह्न्युपनयः स्वसामग्र्या पर्वतत्वमपि[4] भासत इत्यस्तु, किमनुमानेन । यदि चैवं सति धूमवान् वह्निमान् पर्वतश्चेति ज्ञानं स्यात् न तु पर्वतो वह्निमानिति, तदा धूमो वह्निव्याप्य पर्वतवृत्तिश्चेति ज्ञानं [5]स्यात् न तु पर्वतीयधूमो वह्निव्याप्य इति तुल्यम् ।

वह्निमत्त्वोपनयः इति । पर्वतत्वावच्छेदेनेति शेषः । ननूक्तरीत्या वह्नौ ज्ञानप्रत्यासत्तिसत्त्वेऽपि न तस्य प्रत्यक्षत्वम्, संयोगाभावात् । द्रव्यप्रत्यक्षमात्र

1. ख. यद्धर्मो
2. ख. ननु
3. ग. भातमिति
4. क. 'अपि' नास्ति ।
5. ग. 'स्यात्' नास्ति ।

## प्रकाशः

न। ज्ञानरूपया हि प्रत्यासत्त्या पर्वते वह्निप्रत्यक्षमापाद्यमानमलौकिकमेव स्यात्। [1]न चालौकिकप्रत्यक्षसामग्री मानान्तरप्रवृत्तिप्रतिबन्धिका। तस्याः समानेऽपि विषयेऽनुमित्यादिसामग्रीतो दुर्बलत्वात्। अन्यथा मानान्तर[2]विलयापत्तेः। [3]शाब्दस्थलेऽपि पदादिस्मारित[4]पदार्थानां कवि काव्यमूलभूतज्ञानवत् मनसैव प्रत्यक्ष-संसर्गप्रत्ययसम्भवात् बलवत्त्वस्य [5]च फलबलकल्प्यत्वात्।

---

## तर्कचूडामणिः

संयोगस्य हेतुत्वात्। न तु द्रव्यविशेष्यकप्रत्यक्षे, गौरवात्। निर्विकल्पकस्य संयोगा-जन्यत्वापत्तेश्चेति चेत्—न। न हि द्रव्यप्रत्यक्षत्वं तत्रावच्छेदकम् 'स देवदत्तो गौरः' इत्यादिमानसप्रत्यक्षस्यापि तज्जन्यत्वापत्तेः। नापि बहिरिन्द्रियजन्यतत्प्रत्यक्षत्वम्, अननुगमात्। [6]कालादिप्रत्यक्षतापत्तेश्च। नापि स्वयोग्यद्रव्यप्रत्यक्षत्वम्, इह भूतले घटो नेत्यादौ घटादेरप्रत्यक्षतापत्तेः। न च विद्यमानत्वं द्रव्यविशेषणम्। तस्यापि देशान्तरे विद्यमानत्वात्। तस्मात् द्रव्यगोचरलौकिकप्रत्यक्षत्वावच्छेदेनैव तस्य हेतुत्वम्। तथा च पर्वते अलौकिक[7]वह्निप्रत्यक्षं दुर्वारमेव। अत एव तदेव दूषयति—ज्ञानेति। इष्टापत्तिमाशङ्क्याह—न चेति। ननु लाघवात् प्रत्यक्षसामग्रीत्वेन प्राबल्यकल्पनमित्यत आह—अन्यथेति।

---

1. ख. न च तत्प्रत्यक्ष-
2. क. विलोपापत्तेः
3. ख. शब्दादिस्थले
4. ख. तदर्थानां
5. ख. च फलकल्प्यत्वात्
6. क. कालादिप्रत्यक्षेऽव्याप्तेश्च
7. ग. वह्निप्रत्यक्षत्वं

## प्रकाशः

[1]यद्येवं [यद्यप्येवं] करभ्रमात् संशयोत्तरप्रत्यक्षपुरुषभ्रमो न स्यात् तस्यालौकिकत्वात्, अलौकिकप्रत्यक्षभ्रमसामग्र्या अपि बलवत्त्वे धूमभ्रमाद्वह्न्यनुमितिर्भ्रान्ता न स्यात्। तथापि फलबलादनन्यगत्या दोषविशेषस्यैव तत्र बलवत्त्वप्रयोजकत्वमिति ध्येयम्।

तस्मात् समानविषये लौकिकप्रत्यक्षसामग्र्या बलवत्त्वात् तत्सत्त्वे वह्निप्रत्यक्षमेव स्यात् नानुमितिरित्येवं पराभिमतम्।

तत्रेदमुत्तरम्। न लौकिकवह्निप्रत्यक्षसामग्री, वह्नेरसंनिकर्षादिति। ननु भवेदेवं यदि विशेषणसंनिकर्षोऽपि हेतुः स्यात्। न चैवम्, मानाभावात्। किं तु [2]तज्ज्ञानम्, आवश्यकत्वात्। तच्चात्राप्यस्त्येवेति। [3]न लौकिकवह्निप्रत्यक्षसामग्रीविरह इति चेत्—न। तदितरसकलतद्धेतुसत्त्वे पर्वते वह्न्यनुमितिसमये तद्विशिष्टप्रत्यक्षानुत्पादस्यैव तत्र मानत्वात्। लौकिकप्रत्यक्षसामग्रीसत्त्वेऽ[4]नुमितिसामग्रीसत्त्वेऽनुमितिसामग्रीबलवत्त्वस्यापि वक्तुमशक्यत्वात्। न चात्र प्रत्यक्षमेवोत्पद्यत इति वाच्यम्। वह्निमनुमिनोमीत्यनुभवस्याबाधितत्वात्।

---

## तर्कचूडामणिः

ननु यदवच्छेदेन यद्ग्रहः तत्रैवोपनयसामग्रीति[5] न मानान्तरविलयापत्तिरित्यत आह—**कपीति**। [कवीति]। नन्वेवमपि वह्नेरसंनिकर्षादिति ग्रन्थासंगतिरित्याशङ्क्याह—**तस्मादिति**। ननु प्रत्यक्षसामग्रीसत्त्वेऽपि अनुमितिसामग्र्या प्रतिबन्धान्न प्रत्यक्षमित्यत आह—**लौकिकेति**। जयदेवमतं दूषयति—**यत्त्विति**।

---

1. ख. 'यद्येवं ......... ध्येयम्' नास्ति
2. ख. तज्ज्ञानस्याव—
3. ख. नालौकिक—
4. क. 'अनुमितिसामग्रीसत्त्वे' नास्ति।
5. ग. एतदनन्तरं 'न सर्वत्र तत्सामग्रीति' इत्यधिकपाठः

## प्रकाशः

यत्तु विशेष्यस्य विषयविशेषतया [1]तत्संनिकर्षत्वापेक्षया लाघवाद्विषयसंनिकर्षत्वेनैव हेतुत्वे विशेषणसंनिकर्षोऽपि हेतुरिति। तन्न। एवं हि पर्वते वह्निप्रत्यक्षं स्यादेव। पर्वतरूपविषयसंनिकर्षस्य सत्त्वात्। कारणतावच्छेदकावच्छिन्नयत्किंचित्सत्त्व एव कार्योत्पत्तेः विशेषणसंनिकर्षे विशेष्यासंनिकर्षेऽपि तद्विशिष्टप्रत्यक्षापत्तेश्च।

न च यावद्विषयसंनिकर्षत्वेन हेतुत्वमिति वाच्यम्। एतदपेक्षया विशेष्यसंनिकर्षत्वस्यैव लघुत्वात्। संसर्गस्य पूर्वाज्ञातस्यैव भानाभ्युपगमेन भ्रमस्थले तत्संनिकर्षासम्भवेन व्यभिचाराच्च।

किं च विशेषणविशेष्यसंनिकर्षयोर्नैकमवच्छेदकम्। विशेषणसंनिकर्षस्यालौकिकसाधारणस्यैव हेतुत्वं भ्रमाद्यनुरोधात्। विशेष्यसंनिकर्षस्य च लौकिकस्यैव चक्षुरादिसहकारित्वात्। अन्यथा स्मृत्युपनीते व्यवहिते दण्डस्मृतिमतो दण्डीति चाक्षुषबुद्ध्यापत्तिः।

---

## तर्कचूडामणिः

ननु पर्वते वह्निप्रत्यक्षानुत्पादान्यथानुपपत्त्या विशेषणसंनिकर्षत्वेनापि पृथग्घेतुत्वं कल्प्यत इत्यत आह—विशेषणेति।

ननु विशेष्यसंनिकर्षहेतुत्वेऽपि यावत्स्वविशेषणमावश्यकमेव। अन्यथा घटमात्रसंनिकर्षेऽपि घटपटाविति समूहालम्बनापत्तेरित्यनुशयादाह—[2]संसर्गस्येति। ननु भ्रमस्थले [3]सद्वैशिष्ट्यभानस्य निरस्तत्वेन भासमानरजतत्वसमवायादावपि ज्ञानमेव प्रत्यासत्तिः। रजतत्वस्मरणस्य [4]सविकल्पकतया तद्वैशिष्ट्यावगाहित्वात् इत्यनु-

---

1. ख. तत्संनिकर्षत्वेन हेतुत्वे लाघवाद्विशेषणसंनिकर्षो हेतु—
2. ग. संसर्गेति
3. क. असद्वै—
4. ख. विकल्पनतया

कश्चित्तु धूमत्वे परम्परासम्बन्धेन वह्निव्याप्यत्वं पूर्वं गृहीतम्। तथा च संस्कारोपनीतं वह्निव्याप्यत्वं परम्परासम्बन्धेन पक्षवृत्तिधूमत्वे प्रत्यभिज्ञायते, तद्वृत्तित्वेन पूर्वमनुभवात्। एवं च धूमत्वव्याप्यपरामर्शादेवानुमितिरिति प्राह।

भवतु तावदेवं तथापि जातिरेव लिङ्गं स्यात् न तु व्यक्तिः। तथा च सर्वोपसंहारेण व्यक्तौ व्याप्तिग्रहार्थं सामान्यलक्षणप्रत्यासत्तिव्युत्पादनमफलं स्यात्। दृश्यते च परम्परासम्बन्धज्ञानं विना जातिव्याप्तिमविदुषोऽपि धूमाद्वह्न्यनुमानम्। न हि व्याप्यतावच्छेदकतया भासमानस्यावश्यं व्याप्यताग्रहः, मानाभावात्। तस्मात् पक्षधर्मे व्याप्तिविशिष्टज्ञानं तदनन्तरं विशिष्टवैशिष्ट्यज्ञानं पक्षे वा तृतीयलिङ्गपरामर्शः।

---

### प्रकाशः

अन्ये तु असंसर्गाग्रहदशायामपि दैवात् दण्डस्मृतिमतः संनिकृष्टेऽपि व्यवहितदण्डे पुंसि दण्डीति बुद्धिर्न [1]जायत इति सर्वानुभवसिद्धम्। तथा चान्वयव्यतिरेकाभ्यामेव तस्य हेतुत्वमित्याहुः।

---

### तर्कचूडामणिः

शयादाह—किं चेति। 'अन्ये तु' इत्यस्वरसोद्भावनम्। तद्बीजं तु उक्तस्थले दण्डस्मृतिमतो दण्डीत्यलौकिकप्रत्यक्षं स्यादेव। दण्डांशे ज्ञानप्रत्यासत्तिसत्त्वात्। यदि च तत्रेष्टापत्तिः, तदा ममापि तुल्यम्। यदि च [2]तत्रासंसर्गाग्रह एवेति कल्प्यते, तदा ममापि तुल्यमिति।

---

1. ख. ऽत्पद्यते                    2. क. तत्रासंसर्गाग्रहः

अन्ये तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं व्यापकत्वम्, तत्सामानाधिकरण्यं च व्याप्यत्वम्। तथा च लाघवात् व्यापकताज्ञानमनुमितिहेतुः। साध्यस्य पक्षधर्मव्यापकताज्ञानं च परामर्शः, न तु साध्यव्याप्तस्य पक्षधर्मताज्ञानं साध्यव्याप्यवत्पक्षधर्मताज्ञानं वा, गौरवात्।

अत एव यो यो धूमवान् स सोऽग्निमान् इत्युदाहरणवाक्ये साध्यायागव्यवच्छेदेन धूमव्यापकता वह्नेरुपदर्श्यते। अन्यथा वह्निमानेव धूमवानित्यन्ययोगव्यवच्छेदेनोदाहरणशरीरं स्यात्। दोषोऽपि व्यभिचारादिर्न पक्षधर्मव्यापकं साध्यमित्येवोद्भाव्यः।

## प्रकाशः

पक्षधर्म इति। पर्वतवृत्तिधूमो वह्निव्याप्य इत्याद्याकारकज्ञानमित्यर्थः। विशिष्टेति। वह्निव्याप्यधूमवानयमित्याद्याकारमित्यर्थः। अत एवेति। यो यो धूमवानित्यनेन धूमवति वह्नेरत्यन्ताभावो व्यवच्छिद्यते। तेन तादृशात्यन्ताभावाप्रतियोगित्वं साध्यस्य प्रतिपाद्यते। वह्निमानेव धूमवानित्यनेन वह्न्यभाववान्न

## तर्कचूडामणिः

ननु वह्निव्याप्यधूमवानिति ज्ञानस्यापि व्याप्तिविशिष्टज्ञानत्वात् मतभेदानुपपत्तिरित्यत आह—पर्वतवृत्तीति। अनुमितेः [1]पक्षविशेष्यकत्वे परामर्शस्यापि तथात्वं वाच्यमित्याशयेनोक्तं [2]मणौ तदनन्तरमिति। ननु व्याप्यत्वज्ञानवादिना व्यापकताज्ञानस्याप्यङ्गीकारात् वह्नेर्धूमव्यापकत्वप्रदर्शनमिष्टमेव। किं च वह्निमानेव धूमवानित्यत्र कथं व्याप्तिः प्रतीयत इत्यत आह—[3]यो य इति।

1. क पक्षे
2. क. ग. 'मणौ' नास्ति।
3. क, 'यो' नास्ति।

अथ पर्वतवृत्तिधूमव्यापको वह्निरिति परामर्शो यदि तदा पर्वतीयधूमं प्रति व्यापकतायाः पर्वतधूमसामानाधिकरण्यनैयत्यात् पर्वतवह्निः परामर्शविषय एवेति किमनुमेयमिति चेत्—तर्हि पर्वतीयधूमे नियतसाध्यसामानाधिकरण्यस्य व्याप्यत्वस्य भानं साध्यसामानाधिकरण्यभाननियतमिति व्याप्यत्वभानेऽपि तुल्यम् । यदि च स्मृता व्याप्तिर्धूमेऽवगम्यते तदा व्यापकत्वेऽपि समानम् ।

वस्तुतस्तु व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम्, न तु धूमसामानाधिकरण्यम् । व्याप्यत्वं तु सामानाधिकरण्यविशेष इति तत्रैवानुमितिरफला स्यात् । न चैवं परामर्शस्य चाक्षुषत्वं न स्यात् व्यापकस्य विशेष्यस्येन्द्रियासंनिकर्षादिति वाच्यम् । इष्टत्वात् । असंनिकृष्टधूमादाविव मानस एव हि सर्वत्र परामर्शः । चक्षुरन्वयव्यतिरेकानुविधानं न पक्षवृत्ति धूमोपनयोपक्षीणम् ।

---

### प्रकाशः

धूमवानिति वह्निविरहवदव्यावृत्तत्वं धूमनिष्ठं प्रतिपाद्यते । तदेव च व्याप्यत्वमिति तद्बोधस्यानुमितिहेतुत्वेऽन्ययोगव्यवच्छेदेनैवोदाहरणशरीरं स्यादित्यर्थः ।

अत्रेदमनभिमतिबीजमाहुः । जनकज्ञानस्य यावद्विषयतयापि जनकत्वं तावन्मध्ये यत् प्राधान्येन भासते तदेव जन्यज्ञानेऽपि तावन्मध्ये प्राधान्येन स्फुरतीति नियमः । पुरुषस्य दण्ड इति ज्ञानस्य च दण्डी पुरुष इति ज्ञाने दण्डमात्रविषयतयैव जनकत्वम् । अतो न व्यभिचार इति ।

---

### तर्कचूडामणिः

उपाध्यायोक्तान्यस्वरसबीजानि जयदेवोक्तदोषेण निराकरोति—अत्रेत्यादिना । [1]नन्वभावप्रत्यक्ष एवाधिकरणज्ञानस्य हेतुत्वमित्यत आह—लाघवेनेति ।

---

1. क. ननु भाव—

अथ जनकज्ञाने उपसर्जनतया भातस्य पक्षस्य पर्वतादेरनुमितौ प्राधान्येन भानं न स्यात् । न हि जनकज्ञाने उपसर्जनतयावगतं जन्यज्ञाने प्राधान्येन भासते, तथादर्शनात् । न चानुमितेस्तथात्वमसिद्धम्, पर्वतोऽयं वह्निमानित्यनुमितेर्लोकसिद्धत्वादिति चेत् —

न । पुरुषस्य दण्ड इति ज्ञानानन्तरं दण्डी पुरुष इति ज्ञानजन्यज्ञानदर्शनात् । अन्यथा तत्रापि कथं पक्षविशेष्यकत्वनियमः । न हि कारणीभूतज्ञाने यद् विशेष्यतया भासते तत् कार्यीभूतेऽपि तथा । इह भूतले घटो नास्तीति ज्ञानजन्ये घटाभाववद्भूतलमिति ज्ञाने तत्र च व्यभिचारात् । तस्मात् पक्षवृत्तिलिङ्गपरामर्शस्यायं स्वभावो यत् स्वाश्रयविशेष्यिकामनुमितिं जनयति नातथाभूताम्, एवं ममापि तुल्यमिति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे परामर्शवादः



---

**प्रकाशः**

तन्न । भूतले घटो नास्तीति ज्ञानजन्ये घटाभाववद्भूतलमिति ज्ञाने तथापि व्यभिचारात् । उक्तज्ञानस्य भूतलविषयतयापि जनकत्वात् । न चाभावविशेष्यकप्रत्यक्ष एवाधिकरणज्ञानस्य कारणत्वमिति वाच्यम् । लाघवेनाभावप्रत्यक्षत्वावच्छिन्न एवाधिकरणज्ञानस्य हेतुत्वात् ।

## प्रकाशः

यदपि कैश्चित् तद्बीजमुक्तम् — अयोगव्यवच्छेदेन साधनव्यापकतया [1]वह्नेरुपदर्श्यत इत्ययुक्तम्, केवलान्वयिनि साध्यायोगाप्रसिद्धेरिति। तदपि न। एवमपि लाघवेन व्यापकताज्ञानकारणत्वे दोषानभिधानात्।

---

## तर्कचूडामणिः

लौकिकेत्यपि विशेषणमत्र द्रष्टव्यम्। ननु यावद्विषयेत्यस्य विशिष्ट[2]विषयतेत्यर्थो विवक्षितः। भूतले घटाभाव इति [3]ज्ञानं तु न विशिष्टविषयतया जनकम्, तदुभयगोचरसमूहालम्बनादपि घटाभाववद्भूतलमिति ज्ञानोत्पत्तेः परामर्शस्य च विशिष्टज्ञानत्वेनैव [4]जनकत्वात्। न च दण्डी पुरुष इति ज्ञानस्य विशेष्ये विशेषणमिति न्यायेनोत्पत्तिसम्भवे विशिष्टज्ञानत्वेन जनकत्वं क्वापि नेति दृष्टान्तासिद्धिरिति वाच्यम्। शाब्दज्ञाने पदार्थोपस्थितेर्विशिष्टज्ञानत्वनियतहेतुताकतया तत्सम्भवादिति चेत्—न। जनकज्ञानविषयप्राधान्यादिवदेव जन्यज्ञानविषये प्राधान्याद्युपपत्तौ अप्रयोजकत्वात्, लिङ्गविशेष्यकपरामर्शजन्यानुमितौ व्यभिचाराच्च।

न च तादृशपरामर्शस्य नानुमितिजनकत्वम्। लाघवेन व्याप्तिवैशिष्ट्यविषयकपक्षधर्मताज्ञानत्वेन हेतुत्वात्। न चैवं तथा चायमित्युपनयाकारविरोधः। न हि यो यो धूमवानित्युदाहरणमात्रेण धूमवद्विशेष्यकत्वेन व्याप्तिज्ञानहेतुता। [5]न वा तस्माद्वह्निमानिति निगमनानुरोधेनाबाधितत्वज्ञानस्य पक्षविशेष्यकतया जनकत्वम्। किं तु सम्प्रदायसिद्धत्वमेवावयवानां तथात्वे नियामकं वाच्यम्। अत एवावयवसमानार्थकवाक्यानां सम्प्रदायविरुद्धत्वादेव नावयवत्वमिति विभावयिष्यति।

---

1. क. वह्नेरुपदिश्यत इत्युक्तम्
2. ख. विषयतयेत्यर्थो
3. क. ज्ञानं तद्विशिष्ट—
4. क. जनकत्वम्
5. ख. 'न वा' नास्ति।

## प्रकाशः

यत्तु सामानाधिकरण्यगर्भतया व्याप्तिर्गुर्वी । व्यापकत्वं तु तदप्रवेशाल्लघिवति[1] यदि तस्य हेतुत्वं तदा साध्याप्रतियोगिभूत[2]समानाधिकरणात्यन्ताभावकत्वमेव व्याप्यत्वमस्तु । व्यापकत्वघटकानामेव पदार्थानामत्रापि प्रवेशेन तदपेक्षया गौरवाभावादिति तत्रास्वरसबीजम् ।

तन्न । एतावतापि व्याप्तिज्ञानकारणतायां [3]विनिगमकानुक्तेः । किं च उक्तरूपव्याप्त्यपेक्षया व्यापकत्वमेव लघु । तादृशयावदत्यन्ताभावकत्वस्य यावद्गर्भत्वेन गुरुत्वात् । अन्यथा व्यभिचारिसाधारण्यात् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसामान्याभावरूपव्यापकत्वे यावत्त्वाप्रवेशेन लाघवादिति ।

---

## तर्कचूडामणिः

[4]साध्याप्रतियोगीति । व्यभिचारिणस्तत्प्रतियोगिकात्यन्ताभावसामानाधिकरण्यमिति भावः । यदि तुल्यशरीरत्वेऽपि व्याप्यत्वज्ञानहेतुतापक्षे पक्षविशेष्यकपरामर्शसम्भवो विनिगमक इति ब्रूयात्, तदा दोषान्तरमाह — किं चेति । अन्यथा — [5]यावत्त्वविशेषणाभाव इत्यर्थः । व्यभिचारीति । वह्नेरपि धूमाप्रतियोगिकघटात्यन्ताभावसमानाधिकरणत्वादिति भावः । ननु [6]व्याप्यत्वेऽपि यावत्त्वविशेषणमावश्यकम्, अन्यथा धूमस्यापि वह्निसमानाधिकरण[7]घटात्यन्ताभावाप्रतियोगितया वह्नेर्धूमव्याप्यतापत्तेरित्यत आह — स्वेति । प्रतियोगिसत्त्वसाभावविरोधितया धूमे तत्समानाधिकरणाभावप्रतियोगित्वसत्त्वे तदत्यन्ताभावासम्भव इति भावः ।

---

1. ख, लघीय इति
2. ख. सामानाधिकरण्या—
3. क, विनिगमकाप्राप्तेः
4. ग. साध्यप्रति—
5. ख. अवयवत्व—
6. ख. ग. व्यापकत्वेऽपि
7. ख. ग, घटात्यन्ताभावप्रति॰

## प्रकाशः

अन्ये तु पर्वतवृत्तिधूमव्यापकत्वं वह्नौ ग्राह्यम्। तच्च स्मृतमुपनेयम्। तथा च वह्नाविवान्यत्रापि तद्यदि गृहीतं तदा तस्याप्यनुमितिसामग्री। [1]एवं तस्याप्युपनयोऽन्यत्र गृहीत इति तत्राप्यनुमितिसामग्रीति समूहालम्बनैवानुमितिः स्यात्, नतु एकानुमितिः, उपनेयाप्रतीतावुपनयाप्रसिद्धेः इत्येकमत्वरसबीजम्।

अपरं [2]चैवम्। वस्तुतो लाघवमेव न। तथा हि तत्समानाधिकरणात्यन्ताभावे प्रतियोग्यसमानाधिकरणत्वं विशेषणमावश्यकम्, अव्याप्तिभयात्। तदर्थश्च प्रतियोगिसमानाधिकरणभिन्नत्वम्, प्रतियोगिसामानाधिकरण्याभाववत्त्वं वा उभयथापि प्रतियोग्यधिकरणानधिकरणत्वगर्भम्। तथा चाकाशादेरपि व्यापकत्वापत्तिः। प्रमेयत्वसमानाधिकरणाः ये प्रतियोग्यधिकरणाधिकरणभिन्ना अभावा घटाभावादयः तत्प्रतियोगित्वादाकाशस्य।

ननु मेयत्वसमानाधिकरणस्याकाशात्यन्ताभावस्य प्रतियोग्यधिकरणाधिकरणभिन्नतया तत्प्रतियोगितया आकाशस्य कथं तदप्रतियोगित्वं [3]व्यापकत्वमिति

---

## तर्कचूडामणिः

जयदेवमतमाह—अन्ये त्विति। तदिति। पर्वतवृत्तिधूमव्यापकत्वमित्यर्थः। ननु तादृशव्यापकत्वमन्यत्र न गृहीतमित्यत आह—उपनेयेति। अव्याप्तीति। संयोगस्य द्रव्यत्वाव्यापकताप्रसङ्गेनेत्यर्थः। [4]कर्मादिनिष्ठस्यापि संयोगाभावस्य प्रतियोगिसमानाधिकरणभिन्नत्वाभावात् संयोगस्य सत्ताव्यापकतापत्तिरित्यनुशयादाह—प्रतियोगिसामानाधिकरण्येति। प्रतियोग्यधिकरणाप्रसिद्धयेति।

---

1. क. 'एवं ............ सामग्री' नास्ति।
2. ख. 'चैवम्' नास्ति।
3. क. त्वव्यापकत्व-
4. क. कर्मादिविशिष्टस्यापि

## प्रकाशः

चेत्—न। प्रतियोग्यधिकरणाप्रसिद्ध्या आकाशाभावस्य प्रतियोग्यधिकरणाधिकरणभिन्नत्वाभावेन विशिष्टतादृशाभावाप्रतियोगितया आकाशस्य व्यापकत्वतादवस्थ्यात्।

तस्मात् तद्वारणाय [1]साधनसमानाधिकरणत्वं[2] विशेषणमावश्यकमिति अन्यूनानतिरिक्तपदार्थगर्भतया उभयोः समानतया कथं व्यापकत्वे लाघवमित्यस्वरसबीजमाहुः।

तत्र नाद्यः, विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति [3]न्यायेन धूमे पर्वतवृत्तित्वं धूमव्यापकत्वं च वह्नौ भासत इत्येव पर्वतवृत्तिधूम[4]व्यापकत्वभानोपपत्त

## तर्कचूडामणिः

प्रतियोगिपदं स्वप्रतियोगिपरमेव वाच्यम्। अन्यथाऽभावमात्रस्य यत्किंचित्प्रतियोगिसमानाधिकरणत्वेन तदसामानाधिकरण्याप्रसिद्ध्यापत्तेः। तच्च [5]गगनादौ प्रसिद्धमिति भावः।

अत्र पर्वतवृत्तिधूमव्यापकत्वं पर्वतत्वे महानसीये वह्नौ चान्यत्र गृहीतमेव। न च तत्रानुमित्यापत्तिः। सिद्धसाधनेन बाधेन [6]वा अनुमित्यनुत्पादादिति दोषे सत्येव दोषान्तरमाह—विशेष्य इति। प्रतियोग्यसमानाधिकरणत्वं [7]तदनधिकरणाधिकरणत्वमेव न तु तदधिकरणानधिकरणत्वम्, संयोगाभावस्य कर्मादावपि प्रतियोग्यसामानाधिकरण्याभावापातात्। तच्चाकाशात्यन्ताभावेऽपि प्रसिद्धम्,

1. ख. 'साधन' नास्ति।
2. ख. त्वविशेषण-
3. ख, न्यायात्
4. क. व्यापकत्वाभानेनोपपत्तौ
5. क. गगने अप्रसिद्धमिति
6. क. 'वा' नास्ति
7. क. 'तदनधिकरणाधिकरणत्वं' नास्ति।

## प्रकाशः

मान्यत्रापि तद्ग्रहापेक्षा । धूमव्यापकत्वं च वह्नावेव पुरा गृहीतमिति स्मृतमुपनेयमिति न काप्यनुपपत्तिः ।

न द्वितीयः, प्रतियोग्यधिकरणाधिकरणाः संयोगाभावादयः प्रसिद्धाः । तद्भिन्नत्वस्य आकाशात्यन्ताभावेऽपि सत्त्वात् । [1]प्रतियोगित्वस्य भिन्नत्वप्रतियोगिविशेषणत्वात् । एवमेव स्वोपादानगोचरजन्यकृत्यजन्यत्वादावप्रसिद्ध्युद्धार इत्यग्रे वक्ष्यते । तथा च यथाश्रुतेनैवाकाशव्यापकत्वप्रसङ्गनिरासात् न साधनसमानाधिकरणत्वमत्रापि विशेषणम्, येन व्यापकत्वे लाघवं न स्यादिति ।

किं चान्योन्याभावगर्भव्याप्तेरेवानुमितिहेतुत्वेन ग्रन्थकृदभिमतत्वात् तद्गर्भव्यापकत्वे प्रतियोग्यसामानाधिकरण्याप्रवेशाच्च । अपि चैवमपि [2]सामानाधिकरण्यमात्रमेवोक्तदोषनिरासायास्तु, तथापि व्यापकत्वे लाघवमेव ।

---

## तर्कचूडामणिः

तत्प्रतियोगित्वमेव गगनस्येति दोषे सत्येव दोषान्तरमाह—प्रतियोगीति । ननु स्वप्रतियोग्यधिकरणमप्रसिद्धमित्यत आह—प्रतियोगित्वस्येति । प्रतियोग्यधिकरणाधिकरणभिन्नेत्यत्र प्रतियोगित्वस्य भिन्नत्वप्रतियोगिभूतसंयोगाभावे परम्परया विशेषणत्वात् । तथा च स्वपदोपादानेऽपि यत्र तत्प्रसिद्धिसम्भवः तत्परत्वमेव वाच्यम्, न तु प्रकृतपरत्वमिति भावः । विपक्षे बाधकमाह—एवमिति ।

नन्वेवमपि व्याप्यत्व एव लाघवम्, तस्यान्योन्याभावगर्भतया प्रतियोग्यसामानाधिकरण्याप्रवेशात् । व्यापकतायामत्यन्ताभावगर्भायां तत्प्रवेशादित्यत आह—किं चेति । अभ्युपगमवादेन दोषान्तरमाह—अपि चेति । नन्वस्तु

---

1. ख अप्रतियोगित्वस्येति प्रतियोगिभिन्नत्वस्य विशेषणत्वात्
2. क. साधिकरणत्व

## प्रकाशः

तस्मादिदमत्रास्वरसबीजम् । शब्दादिना [1]व्याप्यत्वे निश्चिते साधने साध्यसामानाधिकरण्यस्य संशये व्यतिरेकनिश्चये वा अनुमित्यनुत्पादात्, तन्निश्चयस्तद्धेतुः । यद्व्यतिरेकज्ञानं यदुत्पत्तिप्रतिबन्धकं तन्निश्चयस्य [2]तद्धेतुत्वात् । न च व्यापकत्वस्य साध्यसामानाधिकरण्यनियततया तज्ज्ञाने [3]तत्संशयाद्यनवकाश इति वाच्यम् । न हि वस्तुतः [4]तद्व्याप्यज्ञानं तद्विरोधि, किं तु व्याप्यत्वेन तज्ज्ञानम् । तथा च तदप्रतिसन्धानदशायां तत्संशयादिकं स्यादेव । [5]यदि चैतद्दोषभिया साध्यसामानाधिकरण्यनियतत्वेनैव व्यापकत्वज्ञानमनुमितिहेतुरिति मन्यसे, तदा विपरीतमेव गौरवमिति ।

(इति श्रीरुचिदत्तविरचिते प्रकाशे परामर्शवादः)

---

## तर्कचूडामणिः

व्यापकताज्ञानस्यैव हेतुत्वम्, उक्तदोषाणां निराकृतत्वादित्याशङ्क्य [6]प्रभाकृदुक्तदोषान्तरमादाय सिद्धान्तयपि—तस्मादिति । प्रत्यक्षेण व्यापकत्वग्रहे [7]सामग्रीवशात् सामानाधिकरण्यमपि [8]गृह्यत एवेति न तत्र संशय इत्यभिप्रायेण शब्दादिनेत्युक्तम् । यद्व्यतिरेकेति । ग्राह्यभिन्नयद्व्यतिरेकेत्यर्थः । न हीति । करादिदर्शनमात्रेण पुरुषत्वसंशयनिवृत्त्यापत्तेरित्यर्थः ।

अत्र ब्रूमः । हेतुसाध्यसामानाधिकरण्यसन्देहस्य व्यापकत्वनिश्चयदशायामनुमितिप्रतिबन्धकत्वेऽपि न तन्निश्चयस्य हेतुत्वम् । लिङ्गोपहित[9]लैङ्गिकभानस्य वक्ष्यमाणतया हेतुसाध्यसामानाधिकरण्यस्याप्यनुमितिविषयतया तत्संशयस्य

---

1. क. व्यापकत्वे
2. ख. तत्र हेतुत्वात्
3. ख. तत्संशयावकाशः
4. क. तद्व्याप्यत्वज्ञानं
5. ख. यदि त्वेतत्
6. ख. ग. प्रभाकरोक्त-
7. ग. सामग्र्यवशात्
   ख. सामग्रीसमावेशात्
8. क. गृह्यतैवेति
9. क. 'लैङ्गिक' नास्ति

## तर्कचूडामणिः

ग्राह्यव्यतिरेकसंशयरूपत्वात् ग्राह्यभिन्नव्यतिरेकज्ञानस्य प्रतिबन्धकत्व एव [1]तन्निश्चयस्य हेतुत्वात् ।

अपि च पक्षधर्मताज्ञानसत्त्वे अनुमितेरेवोत्पत्तिः । तदसत्त्वे तद्विलम्बादेवानुमितिविलम्बः । न तु संशयेन प्रतिबन्धात् । किं च व्यापकत्वं नोक्तरूपम् । येन तन्निश्चयेऽपि सामानाधिकरण्यसन्देहाद्यवकाशः । किं तु सकलसाधनाश्रयाश्रितधर्मावच्छिन्नत्वम् । न ह्येतन्निश्चयेऽपि हेतौ साध्यसामानाधिकरण्यसन्देहः । व्यापकत्वनिश्चयस्य सामानाधिकरण्यनिश्चयरूपत्वात् । अतो लाघवात् व्यापकताज्ञानमेव हेतुरित्यलमतिप्रसङ्गेन ।

( इति धर्मराजविरचिते तर्कचूडामणौ परामर्शवादः )



1. क. तन्निश्चयहेतुत्वात्

## अथ लिङ्गकारणतावादः

एवं लिङ्गपरामर्शः कारणम्, न तु परामृश्यमानं लिङ्गम्। अथ परामर्शमात्रं न हेतुः, अपि तु लिङ्गपरामर्शः। तथा च लिङ्गमपि हेतुः, विशिष्टकारणताग्राहकमानेन बाधकं विना विशेषणस्यापि हेतुत्वग्रहात्। न च लिङ्गं परामर्शपरिचायकत्वेनान्यथासिद्धम्, परिचये विशेषणान्तराभावेन लिङ्गमेव विशेषकम्। तथा चानन्यथासिद्धत्वात् तदपि हेतुः। अन्यथा परिचायकतया संयोगेनान्यथासिद्धमिन्द्रियमपि कारणं न स्यात्।

अपि च धूमवान् वह्निमानिति धूमसमानकालवह्निविषया धूमविशेषणिका अनुमितिः ज्ञायमानविशेषणजन्या विशेषणसमानकालतया विशेष्यविषयेऽशाब्दविशिष्टभानत्वात्, दण्डी पुरुष इति विशिष्टप्रत्ययवत्।

---

### प्रकाशः

दण्डत्वादौ व्यभिचारादाह—बाधकं विनेति। तत्रान्यथासिद्धिरेव बाधिकेत्यर्थः। अन्यथासिद्धमिति। [1]तथा चात्र बाधकमेवास्तीति भावः। धूमवान् वह्निमानिति वर्तमानधूमविशिष्टे वर्तमानवह्निवैशिष्ट्यानुमितिरिति यावत्। तेन नांशतो [2]बाधादिरिति ध्येयम्। ज्ञायमानेति। ज्ञायमान[3]विशेष्यतावच्छेदक-

---

### तर्कचूडामणिः

ननु बाधकमपि तत्र नेत्यत आह—तत्रेति। ननूक्तग्राहकप्रमाणेन हेतुत्वसिद्धावन्यथासिद्धत्वमसिद्धमित्यत आह—तथा चेति। नन्वनागतधूमसमानकालानागतवह्न्यनुमितेरपि पक्षत्वे तत्रांशतो बाधः, विवक्षणीयहेतोरभावेन भागासिद्धिश्चेत्यत आह—वर्तमानेति। ज्ञायमानेति। न चैवमपि तादृश-

---

1. ख. तथा चात्रापि
2. ख. बाध इति
3. क. विशेषतावच्छेदक-

अत एव ज्ञायमानविशेषणजन्यत्वेन विशेषणकालवृत्तितया विशेष्यभाननैयत्यं यथा दण्डी पुरुष इति प्रत्यक्षे, तेन धूमसमानकालीनवह्निसिद्धिः। अन्यथा तत्तद्धूमकालवृत्तिवह्न्यनुमानं न स्यात्, समयविशेषमन्तर्भाव्य व्याप्त्यग्रहात्।

---

## प्रकाशः

जन्येत्यर्थः। तेन ज्ञायमानवह्निजन्यतया नार्थान्तरमिति भावः। **विशेषणेति**। वर्तमानविशेष्यतावच्छेदकविशिष्टे वर्तमानविशेषणान्तरवैशिष्ट्यावगाह्यशब्दविशिष्टज्ञानत्वादित्यर्थः। विशिष्टज्ञानपदं च जन्यानुभवपरम्। तेनेश्वरज्ञाने स्मरणे च न व्यभिचारः। निर्विकल्पकस्य पूर्वप्रतीकेनैव वारणात्। उपमितेश्च यदि सपक्षत्वं नाभ्युपेयते [1]तदा तदन्यत्वमपि विशेषणं देयम्। **विशेष्यभानेति**। विशेषणान्तर[2]भाननैयत्यमित्यर्थः। **अन्यथेति**। तथा च ज्ञायमानविशेषणजन्यत्वमेवानन्यगत्या तत्र नियामकं कल्प्यमित्यर्थः।

---

## तर्कचूडामणिः

पक्षतावच्छेदकजन्यत्वेनार्थान्तरमिति वाच्यम्। धूमस्यैव पक्षतावच्छेदकत्वात्। अत एवोक्तं धूमवह्निमानित्यनुमितिरिति। यद्वा ज्ञायमानयावद्विशेष्यतावच्छेदकजन्येत्यर्थः। तेन धूमवान् पर्वतो वह्निमानित्यनुमितावपि लिङ्ग[3]जन्यत्वसिद्धिः। न चैवं पक्षतावच्छेदकस्याप्यनुमितिहेतुतापत्तिः एतन्मते इष्टत्वात्। अतीतधूमलिङ्गकवर्तमानधूमध्वंससाध्यकानुमितौ व्यभिचारादाह — प्रथमवर्तमानपदम्। वर्तमानयावद्विशेष्यतावच्छेदकविशिष्ट [4]इत्यर्थः। तेन वर्तमानपर्वतत्ववैशिष्ट्यावगाहितया न व्यभिचारतादवस्थ्यम्। वर्तमानधूम[5]लिङ्गकातीतधूमप्रागभाव-

---

1. क. 'तदा' नास्ति
2. क. भानेत्यर्थः
3. क. जन्यत्वे सिद्धिः
4. क. ख. इत्यर्थत्वेन
5. क. ख. लिङ्गकाधीनधूम-

## तर्कचूडामणिः

साध्यकानुमितौ व्यभिचारवारणाय द्वितीयवर्तमानपदम् । न च तत्रापि लिङ्गस्य सत्त्वेनानुमितिहेतुतया न व्यभिचार इति वाच्यम् । तत्र लिङ्गस्य जनकत्वेऽनुमितेर्वर्तमानसाध्यगोचरतापत्तेः । ज्ञायमानविशेष्यतावच्छेदकजन्यत्वस्यैव परमते [1]वर्तमानविशेषणान्तरावगाहित्वप्रयोजकत्वात् । [2]अत एव लिङ्गाजन्यत्वे अनुमितेर्वर्तमानवह्निगोचरता न स्यादित्यनुकूलतर्कं वक्ष्यति । न चैवमपि भूतले घटाभाव इति प्रत्यक्षे व्यभिचारः । अभावत्वस्य विशेष्यतावच्छेदकस्य पूर्वं ज्ञानाभावेन विशिष्टसाध्याभावादिति वाच्यम् । स्वज्ञानव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिज्ञान[3]प्रकारत्वस्य विशेष्यतावच्छेदकविशेषणत्वात् अभावत्वादेश्चानुपस्थितस्यैव प्रकारत्वात् । यद्यपि पुरुष इति प्रत्यक्षेऽपि साध्यमस्त्येव । तथापि साधनवैकल्यपरिहाराय दण्डी पुरुष इति प्रत्यक्षं दृष्टान्तीकृतमिति ध्येयम् ।

ननु वह्नेर्विशेषणतया विशेष्यभानेत्यसङ्गतम् । न चैतन्मते पर्वते वह्निरित्येवानुमितिः । अत एव हेतावपि विशेष्यपदोपादानमिति वाच्यम् । धूमवान् वह्निमानित्यनुमित्याकारप्रदर्शनविरोधात् इत्यत आह—विशेषणेति । [4]विशेषणजन्यत्वं विशेष्यतावच्छेदकजन्यत्वम् इत्यर्थः । यद्यप्येतदनुमानात् अनुमिति[5]विशेष एव लिङ्गहेतुत्वसिद्धिः, तथापि तन्न्यायेनान्यत्रापि लिङ्गस्य जनकत्वं वक्ष्यत इत्याशयः । अत एवानुमितिमात्रजनकत्वं सिद्धवत्कृत्य शङ्कते — नन्विति । ननु वर्तमानविशेष्यतावच्छेदकवति वर्तमानविशेषणावगाहिशाब्द[6]ज्ञानत्वावच्छेदेन ज्ञायमानविशेष्यतावच्छेदकजन्यत्वकल्पनात् वर्तमानवह्न्यनुमितावपि तज्जन्यत्वमावश्यकम् । अनुगतकार्यस्य बाधकं विना अनुगतहेतुजन्यत्वादित्यनुशयादाह — अयोग्येति । ननु योग्यवर्तमानलिङ्गकानुमितौ तद्धेतुत्वमित्यत आह—शाब्देति ।

---

1. क. 'वर्तमान' नास्ति ।
2. क. अतल्लिङ्गा-
3. क. प्रकारस्य
4. ख. विशेष्यजन्यत्वं
5. क. विशेषवह्न्यंशहेतुत्व
6. क. ज्ञानत्वावच्छेदकज्ञायमान-

किं च लिङ्गकरणत्वपक्षे परामर्श एव तद्व्यापारः। परामर्शस्य तु न व्यापारान्तरमस्ति, चरमकारणत्वादिति न तत् करणम्।

अत्रोच्यते। अतीतानागतधूमादिज्ञानेऽप्यनुमितिदर्शनान्न लिङ्गं तद्धेतुः, व्यापारपूर्ववर्तितयोरभावात्।

---

## प्रकाशः

नन्वेवमुभयोर्जनकत्वेऽपि लिङ्गस्य करणत्वे किं विनिगमकमित्यत आह— किं चेति। अतीतेति। नन्वेवमपि विद्यमानलिङ्गकानुमितित्वावच्छेदेन लिङ्गस्य [1]हेतुत्वमिति चेत् – न। अतीतादिस्थले क्लृप्तसामग्र्यैव [2]अनुमित्युत्पत्तौ विशेषसामग्र्यन्तरकल्पने [3]गौरवात् अयोग्यलिङ्गकानुमितौ व्यभिचाराच्च। तत्र परामर्शस्य तद्व्यापारत्वासम्भवेन लिङ्गस्य अकारणत्वात्, शाब्दादिपरामर्शाद्यत्रानुमितिस्तत्र विद्यमानस्यापि [4]योग्यस्यापि लिङ्गस्याकारणत्वाच्च। तत्र परामर्शस्य तद्व्यापारत्वाभावात्। यदि निर्व्यापारस्यैव तस्य तत्र [5]करणत्वम्, तदा [6]तादृशपरामर्शस्यैव तथात्वमस्तु, आवश्यकत्वादिति भावः इति [7]वदन्ति।

---

## तर्कचूडामणिः

ननु विशिष्टकारणता[8]ग्राहकेण विशेषणस्यापि लिङ्गकारणत्वे [लिङ्गस्य कारणत्वे] अयोग्यादिस्थलेऽपि स्वज्ञानद्वारैव लिङ्गस्य हेतुत्वम्। तत्र लिङ्गज्ञानस्याप्रत्यक्षत्वेऽपि [9]तज्जन्यत्वस्योक्तप्रमाणसिद्धत्वात्। न ह्यन्वयव्यतिरेकावेव हेतुताग्राहकाविति चेत्—न। एवं हि पदार्थोपस्थितिहेतुत्वे पदार्थस्यापि हेतुत्वापत्तेः। यदि चातीतादौ व्यभिचारान्न तस्य हेतुत्वम्, तदा प्रकृतेऽपि तुल्यम्। किं च त्वया

---

1. क हेतुत्वमस्तीति
2. क. ख. अनुमित्युपपत्तौ
3. क. ग. गौरवप्रसङ्गात्
4. क. योग्यस्याकारणत्वाच्च
5. क. कारणत्वम्
6. क. तादृशस्य परा-
7. क, 'इति वदन्ति' नास्ति
8. ख. ग्रहेण
9. क. तज्जन्यस्य

न च विद्यमानं लिङ्गान्तरमेव तद्धेतुः. तदा तस्यापरामर्शात्, परामर्शाविषयस्य कारणताग्राहकाभावात् । भाविनि पक्षे व्यक्त्यैक्यमेव वा यत्र लिङ्गं तत्र लिङ्गान्तराभावाच्च । यदि च वर्तमानमेव तत्र लिङ्गं तदा वर्तमानवह्न्यनुमानोपपत्तिः ।

अथ भावि भूतं वा धूमादि न लिङ्गम् । किं तु तत्प्रागभावस्तद्ध्वंसश्च वर्तमान एव, तयोरपि वह्निसमानदेशत्वादिति चेत्—न । अतीतभाविदिनवृत्तितया निश्चितात् वर्तमानतया सन्दिग्धात् धूमादनुमितौ हि न प्रागभावध्वंसौ लिङ्गे. तयोः संदिग्धत्वात् । नापि धूमः तस्यावर्तमानत्वात् ।

---

## प्रकाशः

परामर्शेति । परामर्शद्वारैव त्वयापि [1]लिङ्गकरणत्वाभ्युपगमादिति भावः । भाविनीति । यद्यपि भाविन्यपि पक्षे द्रव्यत्वादेर्लिङ्गस्य विद्यमानत्वं भवत्येव ; तथापि स्वरूपेण तस्य न लिङ्गत्वम्, किं तु पक्षवृत्तितया । तथात्वं च तस्य तदानीं पक्षाभावान्न सम्भवतीत्यभिप्रायेणैतदुक्तम् ।

ननु व्यक्त्यैक्यमेवेत्यसम्भवि, [2]तत्समनियतज्ञानविशेष्यत्वादिलिङ्गान्तरस्य सम्भवात् । न चायमेतदतिरिक्तयावदेतद्धर्मवानित्यत्र एतत्त्वेन निर्दिष्टव्यक्तिविशेषस्यैव

---

## तर्कचूडामणिः

वर्तमानविशेषणावगाहिशाब्दज्ञानत्वावच्छेदेन लिङ्गस्य ज्ञायमानविशेष्यावच्छेदकत्वेन हेतुत्वाभ्युपगमादनुमितिसाधारणहेतुत्वं न स्यात् । अपि च वर्तमानलिङ्गकत्वस्य तज्जन्यत्वरूपतया [3]न वर्तमानलिङ्गजन्यतावच्छेदकत्वम्, आत्माश्रयादित्यादि बहु दूषणं बोध्यम् ।

---

1. ख. लिङ्गस्य कारण-
2. क. तत्समनियतस्य ज्ञानविशेषविशेष्यत्वादेः
3. क. ग. 'न' नास्ति ।

## प्रकाशः

तत्र लिङ्गत्वम्, धर्मान्तरस्य [1]साध्यान्तर्गतत्वेन लिङ्गत्वात् [अलिङ्गत्वात्] इति वाच्यम्। प्रकारभेदेनोभयरूपत्वाविरोधात्। अत एव तोयत्वेन पिपासोपशमनसमर्थतावच्छेदकरूपानुमानमित्यनुशयेनाह—यदि चेति। वर्तमानतया संदिग्धादिति। [2]अवर्तमानादेवेति शेषः। तथा च धूमस्य निश्चितत्वेऽपि न सत्त्वम्, [3]धूमध्वंसादेश्च सत्त्वेऽपि न निश्चितत्वमिति एकस्यापि न हेतुत्वमित्यर्थः।

यत्तु अतीतादिवृत्तितया निश्चितस्य धूमस्य वर्तमानदिने अतीतदिनवृत्तित्वरूपविशेषणध्वंसेन विशिष्टतद्ध्वंसस्य निश्चेतुं शक्यतया तस्यैव हेतुत्वं स्यादिति। तन्न। विशिष्टध्वंसस्य [4]घटादिक्षणिकत्वापत्त्या शक्तौ ग्रन्थकृतैव [5]निराकरिष्यमाणत्वात्। न च तत्र घटादेर्विशेष्यस्य विद्यमानतया विशेषणमात्रध्वंस एव 'सविशेषणे हि' इति न्यायात्। अत्र धूमस्य विशेष्यस्याप्यसत्त्वात् विशिष्टध्वंसः

---

## तर्कचूडामणिः

ननु लिङ्गत्वेनैव लिङ्गस्य तद्ग्रहोऽस्त्वित्यत आह—परामर्शेति। ननु विशिष्टहेतुताग्राहकेण लिङ्गस्य लिङ्गत्वेनैव हेतुत्वं गृह्यते, न तु ज्ञायमानत्वेन। तथा चाज्ञायमानस्यापि हेतुत्वं स्यात्। मा भूत् करणत्व[6]मित्यनुशयादाह—भाविनीति। उभयरूपत्वेति। साध्यसाधनत्वेत्यर्थः। अत एवेति। तत्र तोयत्वेन लिङ्गत्वम्, अवच्छेदकत्वेन साध्यत्वमिति भावः। ननु वर्तमानतया सन्देहेऽपि धूमत्वेन सन्देहाभावात् तेन रूपेण निश्चिताद्वर्तमानादेवानुमितिरस्त्वित्यत आह—अवर्तमानादेवेति।

---

1. क. साध्यान्तर्भूतत्वेन
2. क. अवर्तमानादिति
3. ख. 'धूम' नास्ति।
4. ख. घटादिदक्षिणत्वापत्त्या
5. ख. निरस्यत्वात्
6. ख. ग. इत्याशयादाह

किं च भूतभाविवर्तमानत्वाविषयात् पर्वते धूम इति ज्ञानात् यत्रानुमानं तत्र का गतिः? सर्वत्र प्रागभावाद्यन्यतमवत्त्वं धूमाद्यत्यन्ताभावाभाववत्त्वं वा लिङ्गमिति चेत्—न। व्यर्थविशेषणत्वेन तेषामलिङ्गत्वात्। अन्यतमत्वाज्ञानेऽपि धूमज्ञानादनुमितिसत्त्वाच्च।

---

### प्रकाशः

स्यादिति वाच्यम्। एवमपि विशेष्यध्वंससन्देहे विशिष्टध्वंसस्य सन्दिग्धत्वादेव हेतुत्वं न स्यात्। न हि विशेष्यसत्त्वेऽपि विशेषणध्वंसप्रयुक्तो विशिष्टध्वंस इति भावः।

ननु [1]तद्दिने प्रागभावादेः सन्देहेऽपि न पर्वते तत्सन्देहः, प्रतियोगिसत्त्वेनैव तत्र तस्य निश्चियादिति तत्र तस्य वर्तमानत्वनिश्चयोऽप्यस्तीति न व्यभिचार इत्यरुचेराह—किं चेति। पर्वते धूम इति ज्ञानादिति। वस्तुतोऽतीतादिधूमविषयादिति शेषः। ननु धूमप्रागभावादौ न व्यर्थत्वम्। प्रागभावनिष्ठव्याप्तेर्धूमविशेषणं विना अग्रहात्। यन्निष्ठा व्याप्तिर्यद्विशेषणं विना न गृह्यते तस्यैव सार्थकत्वात्। एवं चाधिक[2]संग्राहकविशेषणस्य गुरुणोऽपि न व्यर्थत्वम्, किं तु

---

### तर्कचूडामणिः

प्रभाकृदुक्तं दूषयति—यत्त्विति। ननु धूमत्वेन रूपेण निश्चितस्य वर्तमानस्यैव तत्रापि [3]जनकत्वमित्यत आह—वस्तुत इति। अधिकसंग्राहकेति। अत्र यन्निष्ठेति न्यायानवतारादापातत एवैतदुक्तम्। अन्यथा धूमालोकान्यान्यत्वस्यापि अधिकसंग्राहकस्य व्याप्यतावच्छेदकत्वापत्तिरिति ध्येयम्। ननु

---

1. क. काले
2. क. संग्राहके
3. क. तज्जनकत्वम्

अपि च धूमप्रागभावादि न लिङ्गम्, न वा तद्धीरनुमितिकारणम्। प्रागभावादीनां व्यर्थत्वात् आवश्यकधूमादिज्ञानादेवानुमितिसम्भवाच्च। किं च लिङ्गं नानुमितिमात्रे हेतुः। लिङ्गं विनापि धूलीपटलाल्लिङ्गभ्रमेणानुमित्युत्पत्तेः। नापि लिङ्गं प्रमानुमितौ परामर्शोऽनुमितिमात्रे हेतुः। तद्विशेषप्रमात्वाप्रमात्वाभ्यामेवानुमितितथात्वात् यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषे तद्विशेषस्य प्रयोजकत्वात्।

---

## प्रकाशः

संकोचविशेषणस्यैव, यथा नील[1]धूमादौ। एवं च धूमात्यन्ताभावाभावत्वेऽपि[2] न व्यर्थत्वमिति पूर्वास्वरसादाह — आवश्यकेति। प्रथमोपस्थितधूमज्ञानादेवानुमित्युत्पादे सिद्धसाधनेनानुमित्यन्तराभावात् तत्प्रागभावादे[3]रहेतुत्वमित्यर्थः। नन्वेवमनुमित्सया प्रागभावादेरनुमितिजनकत्वं स्यादेवेत्यरुचेराह — किं चेति।

---

## तर्कचूडामणिः

धूमस्यावश्यकत्वेऽपि तदज्ञानदशायां तत्प्रागभावादेवानुमितिरस्तु। उपायान्तरस्योपायान्तरादूषकत्वं चेत्यत आह — प्रथमेति। अत्र धूमस्य प्रथमोपस्थितत्वेऽपि व्याप्यत्वेन धूमाज्ञानदशायां प्रागभावादौ च तज्ज्ञानदशायां प्रागभावादित एवानुमितिरिति दोषे सत्येव दोषान्तरमाह — नन्वेवमिति। नन्वेवमपि धूमकालीनत्वविशिष्टवह्न्यनुमितिर्न स्यात्। धूमकालस्य पक्षतावच्छेदकत्वेऽपि तत्कालीनत्ववति पर्वते यदा कदाचिदपि वह्निसिद्धौ विरोधाभावात् पक्षतावच्छेदक[4]धर्मसामानाधिकरण्यमात्रमेव पक्षधर्मताबलात् सिध्यतीत्यभ्युपगमादित्यत आह —

---

1. ख. 'धूमादौ एवं च' नास्ति।
2. ख. अभावेऽपि
3. ख. अतत्त्वमित्यर्थः।
4. ख. ग. 'धर्म' नास्ति।

अथ परामर्शस्य प्रमात्वं विद्यमानलिङ्गविषयत्वम्। तथा चायातं लिङ्गस्य प्रमानुमितिहेतुत्वमिति चेत्—न। भाविना भूतेन वा यदा कदाचिद्विद्यमानेनापि लिङ्गेन परामर्शप्रमात्वसम्भवान्नानुमितिपूर्वसमये तत्प्रमात्वानुरोधेन लिङ्गस्य सत्त्वं कारणत्वं वा। धूमकालीनवह्न्यनुमानं च यदा यत्र धूमस्तदा तत्र वह्निरिति व्याप्तिज्ञानादेव।

अथ वा धूमकालः पक्षतावच्छेदकः। पक्षतावच्छेदकधर्मसमानाधिकरणं च पक्षधर्मताबलात् साध्यं सिध्यतीति धूमकालीनवह्निसिद्धिः।

यत्तु व्यापाराभावान्न परामर्शः करणमिति, [तत्] तथैव किं तु व्याप्तिज्ञानं करणं परामर्शो व्यापारः। न च परामर्शस्य संस्कारो व्यापारः। परामर्शस्य चरमकारणत्वेन संस्कारोत्पादनसमयेऽनुमित्युत्पादनात्।

---

## प्रकाशः

कालिकव्याप्त्यस्फुरणदशायामपि प्रकारान्तरमाह—अथवेति। यथा चैतत्तथा बाधग्रन्थे वक्ष्यामः। तथैवेति। ननु व्यापारवत्त्वैव न [1]करणत्वम्, किं तु [2]क्रियाया अयोगव्यवच्छेदेन सम्बन्धि करणमिति चेत्—न। करणस्य कारकविशेषत्वात् कारकत्वस्य च व्यापारगर्भत्वात्। किं च सर्वदा क्रियायोगव्य-

---

## तर्कचूडामणिः

यथा चेति। पक्षतावच्छेदकावच्छेदेनैव साध्यसिद्धिरनुमानफलमिति वक्ष्यत इति भावः। नन्वनन्यथासिद्धिघटितमेव कारणत्वं न तु व्यापारघटितमित्यिनुशयादाह—किं चेति।

---

1. ख. कारणत्वम् 2. क. क्रियायोग-

## प्रकाशः

वच्छेदश्चक्षुरादावपि नास्ति, कदाचित्कर्मादावप्यस्तीति तस्यापि तत्त्वं स्यादिति। किं तु व्याप्तिज्ञानमिति।

अत्र वदन्ति—अत्र विशकलितानां व्याप्तिशरीरप्रविष्टसहचारादिपदार्थानां स्मरणे सति विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन विशिष्टवैशिष्ट्या-वगाहिपरामर्शोत्पादादनुमितिस्तत्र परामर्शद्वारा व्याप्तिज्ञानस्य [1]कारणत्वं न सम्भवति, तत्पूर्वं तस्यासत्त्वात्। किं च यत्र स्मृतिरूपपरामर्शादनुमितिस्तत्रापि तदसम्भवः।

---

## तर्कचूडामणिः

उपाध्यायोक्तदूषणमाह—अत्रेति। ननु 'विशेष्ये विशेषण'मिति न्यायो बाधित एव। विशिष्टवैशिष्ट्यज्ञानत्वावच्छेदेन [2]विशेषणतावच्छेदकप्रकारक-ज्ञानहेतुत्वात्। कथमन्यथा 'यद्विशेषयो' रिति न्यायेन विशिष्टज्ञानमात्रे विशेषण-ज्ञानस्य हेतुत्वसिद्धिः। कथं वा तन्मूलनिर्विकल्पककल्पना। किं चान्यत्र यथा तथास्तु। प्रकृते परामर्शस्य व्याप्तिप्रकारत्वेनानुमितिहेतुत्वम्, न तु तद्विषयत्वमात्रेण अतिप्रसङ्गात्। न च तद्वारणाय अव्यभिचारप्रकारत्वेनैव तद्धेतुत्वमस्तु लाघवादिति वाच्यम्। व्यभिचारज्ञानवत् व्याप्त्यभावज्ञानस्यानुमितिप्रतिबन्धकतया व्याप्तिप्रकारक-ज्ञानस्यानुमितिहेतुत्वात्। साक्षादविरोधिज्ञानस्य जनकज्ञानविघटनेनैव प्रतिबन्ध-कत्वात्। न चाव्यभिचारसामानाधिकरण्यान्यतरज्ञानविघटनेनैव प्रतिबन्धकत्व-मस्त्विति वाच्यम्। व्याप्त्यभावस्य प्रत्येकाभावान्यविशिष्टाभावरूपतया तज्ज्ञानस्या-व्यभिचारसामानाधिकरण्यान्यतराभावानवगाहित्वात्। अत एव तस्य हेत्वाभासान्त-रत्वम्। अस्तु वा अव्यभिचारज्ञानत्वेन हेतुत्वम्। तथापि न व्यभिचारः, व्याप्ति-ज्ञानपदेन तस्यैव विवक्षितत्वादित्यस्वरसादाह—किं चेति। व्याप्तिसंस्कारस्य किमनु-

---

1. ख. करणत्वं    2. क. विशेष्यतावच्छेदक-

## प्रकाशः

न च तत्र पूर्वानुभवरूपमेव व्याप्तिज्ञानं [1]करणमिति वाच्यम्। तस्यानुमित्यजनकीभूतसंस्कारेणैव व्यवहितत्वात्। व्यापारमात्रस्यैव करणाव्यवधायकत्वोपगमात्। अन्यथा यागादेः [2]स्वर्गादिहेतुत्वरक्षार्थं तज्जन्यापूर्वस्य तद्व्यापारत्वसिद्धये स्वर्गजनकत्वकल्पनापत्तेः। अत एवाहुः—'स्वाङ्गमव्यवधायकम्' इति। न च तत्रानुमितौ संस्कारोऽपि जनकः, तस्य स्मृतित्वापत्तेः, अनुमित्यन्तरे व्यभिचाराच्च।

वस्तुतस्तु स्मृतिरूपपरामर्शे तज्जनकपूर्वानुभवस्य प्रत्यक्षरूपपरामर्शे च व्याप्तिज्ञानस्योपक्षीणत्वादन्यथासिद्धत्वमेव। अन्यथा स्मृतिजन्ये प्रत्यभिज्ञादौ च विशिष्ट-

---

## तर्कचूडामणिः

मितिहेतुत्वम् उत न। अन्त्ये आह—तस्येति। [3]आद्यमनूद्य प्रत्याह—न चेति। ननु व्याप्तिसंस्कारजन्यत्वेऽपि नानुमितेः स्मृतित्वम्, समानविषयसंस्कारजन्यत्वस्यैव [4]तत्त्वे तन्त्रत्वादित्यपरितोषादाह—अनुमित्यन्तर इति। ननु न व्याप्तिसंस्कारोऽनुमितिहेतुः। न चैवमनुभवस्याप्यनुमितिहेतुत्वानापत्तिः, [5]अजनकव्यवहितत्वादिति वाच्यम्। क्षणिकस्य कालान्तरभाविफलजनकतायां फलसमयपर्यन्तस्थायिव्यापारवत्त्वं प्रयोजकम्, न तु मध्यवर्तिनः [6]सर्वस्यापि फलजनकत्वम्। यागध्वंसस्य [7]स्वर्गजनकतया यागस्य स्वर्गहेतुत्वानापत्तेरित्यपरितोषादाह—वस्तुत इति।

ननु प्रत्यभिज्ञादौ पूर्वानुभवस्य न विशेषणज्ञानत्वेन हेतुत्वम्। विशिष्टानुभवेऽव्यवहितविशेषणज्ञानस्यैव हेतुत्वव्यवस्थापनात्। नापि प्रत्यभिज्ञायां तत्तानु-

---

1. ख. कारणम्
2. ख. स्वर्गादिहेतुतारक्षार्थं त्वपूर्वस्याकल्पनापत्तिः। अतः
3. ख. आद्य आह
   ग. आद्यमभिप्रेत्याह
4. ख. ग. तत्र
5. ग. अनेकव्यव-
6. ख. पूर्वानुभवस्यापि
7. क. स्वर्गाजनकतया

## प्रकाशः

ज्ञानजनकविशेषणज्ञानस्यापि कारणत्वापत्त्या बहु व्याकुलं स्यात्। अनुमितौ व्याप्तिज्ञानवत् परामर्श[1]जनकं पक्षतावच्छेदकधर्मादिरूपविशेषणज्ञानमपि कारणं स्यात्। न चानुमितौ कारणानुपपत्त्या सर्वत्रानुमितिपूर्वं व्याप्तिज्ञानं तत्करणं कल्पनीयमिति वाच्यम्। परामर्शरूपासाधारणव्यापारद्वारा मनस एवासाधारणीभूय तत्कारणत्वसम्भवात्। तदुक्तं प्रमेयभाष्यादौ मनोलक्षणावसरे स्मृत्यनुमित्यादिकरणत्वेन मनः साधितमिति।

तदपरे न [2]क्षमन्ते। तथा हि—अनुमितौ मनसः करणत्वे [3]तस्य औत्प्रेक्षिकज्ञानवत् मानसाध्यक्षतापत्तिः। करणान्तरासहकृतमनोजन्यत्वस्यैव मानसत्वनियामकत्वात्। न च परामर्श एव करणान्तरम्, अव्यापकत्वात्। तस्मात् परामर्शजनक-

## तर्कचूडामणिः

भवत्वेन विशेषतो हेतुत्वम्। अन्यत्र क्लृप्ताव्यवहितविशेषणज्ञानादेव तदुपपत्तौ विशेषसामग्रीकल्पने मानाभावादित्यस्वरसादाह —**अनुमिताविति**। न चापसिद्धान्त इत्याह—**तदुक्तमिति**।

तत्र आलोककृदुद्धारमाह—**तदपर इति**। ननु मनोजन्यत्वेन मानसत्वे शाब्दज्ञानादेरपि तत्त्वापत्तिरित्यत आह—**करणेति**। नन्वनुमितिरेव नोत्पद्येत, व्याप्तिज्ञानकरणताया अपि निराकृतत्वादित्यत आह—**तस्मादिति**। ननु जनकताया न जनकतावच्छेदकत्वमित्यत आह—**मननेति**। **न त्विति**। परामर्शे सति तद्विलम्बेनानुमितिविलम्बाभावादिति भावः। **परिशेषेणेति**। मनः[4]करणतायाः निराकृतत्वादिति भावः।

---

1. ख जनकपक्ष-
2. ख. सहन्ते
3. ख. 'तस्य' नास्ति
4. क. कारणतायाः

## प्रकाशः

ज्ञानत्वेन व्याप्तिज्ञानादीनां सर्वेषां कारणता । तेन [1]न व्याप्यव्याप्तिः । मनन-[2]व्यापारकश्रवणत्वादिनेव श्रवणादि[3]प्रतीतीनां मुक्तिकारणत्वम् ।

न च [4]विशेषणविशेषणज्ञानस्य विशिष्टवैशिष्ट्यावगाहिज्ञान इव हेतुहेतुतय व्याप्तिज्ञानादीनामन्यथासिद्धिरिति वाच्यम् । येन रूपेणान्यथासिद्धिस्तदन्येन हेतुत्वाविरोधात् । कुलालपितृत्वेनान्यथासिद्धस्यापि कुलालपितुः कुलालत्वेन घटजनकत्वात् ।

तदिह हेतुहेतुत्वेनान्यथासिद्धत्वेऽपि उक्तक्रमेण जनकत्वमविरुद्धम् । न च तत्र हेतुताग्राहकावन्वयव्यतिरेकौ, न त्विहेति वाच्यम् । तदसत्त्वेऽपि क्रियायाः करणजन्यत्वानुमानस्यैव परिशेषेण [5]विशेषणविशेषपर्यवसितस्य तद्ग्राहकस्य विद्यमानत्वात् ।

---

## तर्कचूडामणिः

नन्वाशुविनाशिनः कारणता स्वनाशक्षणावधिफलाव्यवहितपूर्वक्षणवर्तिव्यापार-सत्तानियतेति कथं व्यापारसंस्कारव्यवहितपूर्वव्याप्त्यनुभवस्य हेतुत्वम् । न च फला-व्यवहितपूर्ववर्तिव्यापारसत्तानियतैव सा, न यथोक्तव्यापारसत्तानियता गौरवादिति वाच्यम् । एवं हि फलाव्यवहितपूर्ववर्तिस्वजन्यसत्तानियता सेत्यस्तु, अतिलाघवात् । एवं च यागादेः स्वर्गहेतुतारक्षार्थमपूर्वस्य स्वर्गजनकत्वकल्पनापत्तिः ।

अथ तथाविध एव करणताव्यवहार इति गौरवमपि प्रामाणिकम्, तदा आशुविनाशिनि तादृश एव हेतुत्वव्यवहार इति गौरवमवधूयापि स्वनाशक्षणावधिक-

---

1. ख. न त्वव्याप्तिः
2. ख. व्यापारवच्छ्रवण-
3. क. प्रतिपत्तीनां
4. क. 'विशेषण' नास्ति
5. क. 'विशेषणविशेषण' नास्ति ।

## प्रकाशः

एतेन पक्षतावच्छेदकज्ञानमपि कथं स्यादित्यनिष्टापादनमपास्तम्। उक्तरूपेणेष्टापत्तेः। न च स्मृतिरूपपरामर्शजनकं [1]न ज्ञानमिति व्यभिचारः। तज्जनकानुभवस्य सत्त्वात्। न च संस्कारव्यवहितः स कथमनुमितौ हेतुरिति वाच्यम्। अनुमितिं प्रति स्मृतिरूपपरामर्शेन स्मृतिरूपपरामर्शं प्रति संस्कारेणाव्यवहितपूर्ववर्तित्वसम्भवात्। न हि यावान् [2]व्यापारजनकः तावान् फलस्येति नियमः। न च व्यापारजनकस्य फलाजनकतया तेन व्यवधानम्। चक्षुःकर्मणः चक्षुर्विषयसंयोगजनकस्य साक्षात्काराजनकत्वेन व्यभिचारात्।

अस्तु वा परामर्शजनकत्वेनैव [3]कारणत्वम्। न तु ज्ञानत्वं [4]प्रवेशनीयम् तथा चास्तु संस्कार एव तत्र कारणम्। न चानुमितेः स्मृतित्वापत्तिः। संस्कारत्वेनैव जनकत्वे तथात्वात्। अन्यथा लिङ्ग[5]करणतापक्षे संस्कारलिङ्गकानुमितौ का

---

## तर्कचूडामणिः

फलाव्यवहितपूर्वक्षणवर्तिव्यापारसत्तानियतैव सेत्यभ्युपगम्यताम्। तथा च [6]फलाजनकसंस्कारव्यवहितानुभवस्य कथमनुमितिहेतुत्वम्। अयं च नियमः आशुविनाशिहेतुतायामेवेति न चक्षुःक्रियाप्रतिबन्धवकाश इत्यपरितोषादाह—अस्तु वेति। न त्विति। गौरवादिति भावः। ननु लाघवात् संस्कारजन्यत्वमेव तत्त्वे तन्त्रमित्यत आह—अन्यथेति। लिङ्गकरणतापक्षो दूषित एवेत्यनुशयादाह—संस्कारेति। ननु संस्कारत्वावच्छिन्नकारणताप्रतियोगिककार्यताश्रयत्वापेक्षया संस्कारजन्यज्ञानत्वस्य लिङ्गाघटितत्वेन लघुत्वादेव प्रयोजकत्वमित्यनुशयादाह—वस्तुत इति। भिन्न-

---

1. ख. 'न' नास्ति
2. क. व्यापारो
3. ख. जनकत्वम्
4. ख. प्रविष्टम्
5. ख. कारणता-
6. ख. फलजनक-

## प्रकाशः

गतिः, संस्कारध्वंसे वा का गतिः। वस्तुतः समानविषयसंस्कारजन्यत्वेन स्मृतित्वम्। अत एव संस्कारव्यापारत्वे [1]समसमयोत्पत्तिकत्वं बाधकं वक्ष्यति अन्यथा [2]स्मृतित्वापत्त्युक्त्यसम्भवादिति।

---

## तर्कचूडामणिः

विषयस्य गृहीतग्राहित्वाभावेन स्मृतित्वासम्भवादिति भावः। उक्त्यसम्भवादिति। अनुमितेः संस्कारजन्यत्वशङ्कायाः असम्भवादित्यर्थः।

अत्रेदं चिन्त्यम्। परामर्शजनकत्वेन व्याप्तिज्ञानादीनामनुमितिहेतुत्वे तेषां परामर्शपूर्ववर्तित्वग्रहानन्तरमेवानुमितिपूर्ववर्तित्वग्रह इत्यन्यं प्रति पूर्ववर्तित्वग्रह इत्यन्यथासिद्ध्यन्तर्भावो [3]वज्रलेपायत एव। न चान्यं प्रतीत्यन्यथासिद्धौ व्यापारभिन्नं प्रतीति विवक्षितम्। तथा सति व्यापारत्वस्य जनकत्वगर्भतया आत्माश्रयापत्तेः। न चान्यं प्रति पूर्ववर्तित्वे ज्ञात एव यदुपस्थितिरित्यर्थः। व्याप्तिज्ञानादेश्च परामर्शपूर्ववर्तित्वग्रहमन्तरेणाप्युपस्थितिरिति वाच्यम्। शब्दपूर्ववर्तित्वग्रहं विनापि द्रव्यत्वादिनापि रूपेण ज्ञानादौ गगनस्यान्यथासिद्ध्यापत्त्या हेतुतावच्छेदकरूपेणोपस्थितेरेवात्र विवक्षिततया हेतुतावच्छेदकत्वेनाभिमतपरामर्शजनकत्वस्य परामर्शपूर्ववर्तित्वग्रहमन्तरेण दुर्ग्रहतया तेन रूपेणानुमितौ तदन्यथासिद्धेर्दुर्वारत्वात्।

न चैवं दण्डस्य दृढदण्डत्वेन हेतुत्वं न स्यात्। भ्रमिजनकत्वरूपदृढत्वस्य घटजनकतावच्छेदकस्य भ्रमिपूर्ववर्तित्वग्रहमन्तरेण दुर्ग्रहतया तेन रूपेण तस्यान्यथासिद्धत्वादिति वाच्यम्। न हि भ्रमिजनकत्वमेव दार्ढ्यम्। दृढत्वेन भ्रमिजनकत्वानु-

---

1. क, तत्समयो-
2. क. स्मृतित्वापत्त्या उक्त
3. ख वज्रलेपायित एव

## प्रकाशः

अत्र ब्रूमः । विशेषणविशेषणज्ञानवत्परापर्शोपक्षीणानामपि पूर्वानुभवव्याप्तिस्मरणादीनां परामर्शजनकत्वेनानुमितिहेतुत्वमन्वयव्यतिरेकादिना कल्पनीयम्, अनुमितौ कारणान्तरानुपपत्त्या वा । नाद्यः, तदभावात् । परामर्शे सति तद्व्यतिरेकेणानुमितिव्यतिरेकासिद्धेः । नान्त्यः, तथापि परामर्शपूर्ववर्तित्वेनैव हेतुत्वमस्तु, लाघवात् । ननु परामर्शजनकत्वेन, नियमानन्यथासिद्धिघटितत्वेन तस्य गुरुत्वात् । तथा चाकाशादीनामपि तद्धेतुत्वापत्तिः । अवच्छेदकलाघवे व्यक्तिगौरवस्यादोषत्वात् । दोषत्वे वा परामर्शप्रागभावत्वेनैव हेतुत्वमस्तु । परामर्शपूर्ववर्तित्वापेक्षयाप्यस्य [1]लघुत्वात् । [2]तत्पूर्ववर्तित्वं हि तत्प्रागभावावच्छिन्नसमयवृत्तित्वम् । तथा च तत्प्राग-

---

## तर्कचूडामणिः

पपत्तेः, तज्जनकत्वस्य तज्जनकतानवच्छेदकत्वात् । किं तु संयोगविशेषोऽन्यद्वा यथाकथंचित् सर्वैरपि निर्वक्तव्यम् ।

एतेन मननादिव्यापारकत्वेन श्रवणादिप्रतिपत्तीनां मुक्तिहेतुत्वमप्यपास्तम् । श्रोतव्य इत्यादिवाक्यात् श्रवणत्वादिनैव हेतुतावगमेन तेन रूपेणाहेतुत्वस्येष्टत्वादिति दोषे सत्येव दोषान्तरमाह—**अत्र ब्रूम इति ।** [3]**विशेषणविशेषणज्ञानवदिति ।** [4]उपक्षीणत्वमात्रे दृष्टान्तः । नन्वेवं बहूनां कारणत्वकल्पने गौरवमित्यत आह—**अवच्छेदकेति ।** अत एव वनस्थदण्डसाधारणदण्डत्वं घटजनकतावच्छेदकमिति भावः । नन्वेवं घटादीनां परामर्शद्वारा अनुमित्युत्पादापत्तिः, कारणतावच्छेदकावच्छिन्नसत्त्वादित्यत आह—**दोषत्वे वेति ।** तत्पूर्ववर्तित्वे तत्प्रागभावस्याप्रवेशेन

---

1. क. लक्ष्यत्वात्
2. क. 'तत्' नास्ति ।
3. ख. ग. 'विशेषण' नास्ति
4. ख. उपक्षीणमात्रत्वे

नापि तर्कः। व्याप्तिग्राहकस्य विषयपरिशोधकस्य वा तस्य तदजन्यत्वादिति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे लिङ्गकारणतावादः



---

## प्रकाशः

भावत्वमेव लघ्विति परामर्शेनैवान्यथासिद्धत्वात् तत्प्रागभावस्य[1] नानुमितिहेतुत्वमिति यदि, तदेतदत्रापि तुल्यम्। कारणान्तरानुपपत्त्या [2]तत्कल्पनमुभयत्रापि तुल्यम। परामर्शजनकत्वेन हेतुत्वपक्षे स्मृतिरूपपरामर्शजनकसंस्कारवत् परामर्शप्रागभावस्यापि हेतुत्वाभ्युपगमाच्च। तथा च कारणान्तरानुपपत्त्यापि तत्प्रागभावत्वेनैव हेतुत्व कल्प्यम्, न तु तज्जनकत्वेन, अतिगौरवात्। एवं च संस्कारव्यवहितस्य पूर्वानुभवस्य तज्जन्यसंस्कारस्य वा हेतुत्वव्यवस्थापनव्यावृत्तिर्न भवतीत्यपरमप्यनुकूलं भवति।

वस्तुतस्तत्प्रागभावस्यापि नानुमिति[3]करणत्वम्। परामर्शनान्यथासिद्धतया [4]तस्य हेतुत्व एव मानाभावात् [5]करणान्यथानुपपत्तिर्मानमिति चेत्--न। मनस

---

## तर्कचूडामणिः

कथं [6]व्यर्थत्वमित्यत आह—तदिति। अवच्छिन्नेति। उपलक्षितेत्यर्थः। ननु परामर्शद्वारा न तत्प्रागभावस्यानुमितिहेतुत्वम्, अन्यप्रागभावस्यान्यत्राजनकत्वादित्यत आह—परामर्शेति।

---

1. क. 'न' नास्ति।
2. क. तत्कल्पनीयम्
3. क. कारणत्वम्
4. क. तद्धेतुत्व एव
5. क. कारणान्यथा-
6. क. व्यर्थत्वादित्यत

## प्रकाशः

एव [1]तत्करणत्वसम्भवात् । तथापि किं विनिगमकमिति चेत्—न । मनसोऽनुमितिहेतुत्वस्य क्लृप्तत्वात् । परामर्शप्रागभावस्य च तद्धेतुत्वेनाक्लृप्तत्वात्, परामर्शप्रागभावत्वापेक्षया मनस्त्वस्य जातितया लघुत्वाच्च ।

नन्वेवमनुमितेर्मानसाध्यक्षतापत्तिः । [2]कारणान्तरासहकृतमनोजन्यत्वस्यैव तन्नियामकत्वादित्युक्तमिति चेत्—न । [3]कारणान्तरं हि [4]प्रमित्यन्तरासाधारणकारणमेव वाच्यम् । अन्यथा [5]स्मृतावसम्भवात् । एवं च प्रमित्यन्तरासाधारणकारणासहकृतमनोजन्यत्वस्यैव मानसत्वनियामकत्वमिति नानुमितेर्मानसत्वम् । अनुमितिरूपप्रमित्यन्तरासाधारणकारणीभूतपरामर्शसहकृतमनोजन्यत्वात् । तदुक्तं शशधरेण--

"न हि मनोजन्यत्वेन मानसत्वम्, किं त्वसाधारणकारणनिरपेक्षमनोजन्यत्वेन । न चानुमित्यादौ तथा, परामर्शादेरसाधारणकारणस्यापेक्षानियमात्"

---

## तर्कचूडामणिः

[6]इष्टापत्तिमाशङ्क्याह—**वस्तुत इति** । **अन्यथेति** । व्यापारवतः सर्वस्यापि करणत्वेन आत्मनोऽपि मनस्संयोगव्यापारवत्त्वेन करणत्वापत्तौ सुखादिप्रत्यक्षस्याप्यमानसत्वापत्तेरित्यर्थः । **प्रमित्यन्तरेति** । मानसत्वाधिकरणप्रमेत्यर्थः । **तथाभावादिति** । [7]तादृशासाधारणनिरपेक्षमनोजन्यत्वादित्यर्थः । न हि प्रमित्यन्तरजनकत्वे

---

1. ख. करणत्वावधारणसम्भवात्
2. ख. करणान्तरासह-
3. ख, करणान्तरं हि
4. ख. प्रमित्यन्तरकरणमेव
5. ख. यथाश्रुतेऽसम्भवात्
6. ख. अत्रेष्टापत्ति-
7. क. तादृशसाधारण-

## प्रकाशः

इति। औत्प्रेक्षिकस्य च तथाभावान्मानसत्वमेव। [1]असाधारणकारणापेक्षया तत्तत्प्रामाण्यव्यपदेशे तत्रापि भूयोदर्शनमसाधारणं कारणमिति। अत एव प्रमाटीका (प्रभाटीका)—'न हि मनो निमित्तमित्येतावता मानसप्रत्यक्षं भवति। तथा सति न किंचिदमानसं प्रत्यक्षम्, प्रत्ययमात्रस्य मनोनिमित्तकत्वात्'।

ननूत्प्रेक्षायाः [2]न प्रमित्यन्तरजनकत्वं परामर्शस्यैव तथात्वमित्यत्रैव किं विनिगमकम्, निर्व्यापारत्वेनोभयोरविशेषादिति चेत्—न। सव्यापारत्वेनाविशेषेऽपि शब्देन्द्रियादेर्विजातीयप्रमाजनकत्वे यदेव तन्त्रं [3]तत्र तदेवात्र विभावय। स्वभाव एव फलबलेन तथेति चेत्—अत्रापि स एव तथास्त्विति न [4]किंचिदेतत्।

## तर्कचूडामणिः

सव्यापारत्वं निर्व्यापारत्वं वा तन्त्रम्। [5]किं तु स्वभावविशेष इत्यभिप्रायेणाह—**नेति**। ननु प्रागभावादिगर्भकारणत्वादिप्रवेशे गौरवात् तदगर्भमेव प्रयोजकमस्तु इत्याशयेनाह—**यद्वेति**। नन्वेवं प्रमित्यन्तरप्रागभावजन्यज्ञानत्वमेव तत्प्रयोजकमस्तु लाघवादित्यपरितोषादाह—**किं चेति**। ननु व्यापारेण व्यापारिणोऽन्यथासिद्धौ चक्षुरादेरपि हेतुत्वं न स्यादित्यरुचेराह—**किं चेति**। ननु मानसेऽपि ज्ञाने ग्राह्याभावग्रहस्य प्रतिबन्धकाभावत्वेन प्रागभावादिसाधारणस्य हेतुतया असम्भव इत्यपरितोषादाह—**इन्द्रियत्वेनेति**।

अत्र ब्रूमः। अनुमितेर्मनः[6]करणकत्वेऽनुमितिरूपविलक्षणप्रमानुपपत्तिः। विलक्षणप्रमितेर्विलक्षण[7]करणजन्यत्वस्य प्रत्यक्षादौ दर्शनात्। विलक्षणकारणमात्रेणैव

---

1. ख. 'असाधारण ............ मनोनिमित्तकत्वात्' नास्ति
2. क. 'न' नास्ति
3. ख. 'तत्र तदेवात्र विभावय' नास्ति।
4. ख. यत्किञ्चिदेतत्
5. क. किं च
6. क. कारणत्वे
7. क. कारण

## तर्कचूडामणिः

वैलक्षण्यकार्यसिद्धौ [1]करणजन्यत्वस्यापि [2]कल्पनानापत्तेः। अबाधितदर्शनानुरोधेन तत्कल्पनमपि तुल्यम्।

किं च मनोजन्यत्वे मानसत्वं दुर्वारमेव। न च प्रमित्यन्तरेत्याद्युक्तमेव तन्नियामकमिति वाच्यम्। प्रमित्यन्तरपदेन [3]मानसत्वानधिकरणप्रमितिविवक्षयामन्योन्याश्रयात्, चक्षुरादिप्रत्यक्षविवक्षायामतिप्रसङ्गात्। न च चाक्षुषादिसकलप्रमायां यदसाधारणकारणं तन्निरपेक्षमनोजन्यत्वमेव तत्प्रयोजकमिति वाच्यम्। एतदपेक्षया [4]मनःकारणकज्ञानत्वस्यैव लघुत्वात्। न चेन्द्रियत्वेन तज्जन्यत्वमेव तन्त्रम्, अनुमितौ [5]मनस्त्वेनैव मनसो हेतुत्वमिति वाच्यम्। [6]करणान्तरसहकृतमनसः इन्द्रियत्वेनैव हेतुतया तस्याप्युपादानात्। प्रत्यक्षादिप्रमाजनकतावच्छेदकरूपावच्छिन्नकरणजन्यत्वाभावादनुमितित्वानुपपत्तेरुक्तत्वाच्च।

न च व्याप्तिज्ञान[7]करणत्वपक्षेऽपि मनसः सव्यापारतया अनुमित्यादिकरणत्वादनुमित्यादेर्मानसत्वापत्तिरिति वाच्यम्। न हि व्यापारवत्त्वमेव करणत्वम्, तथा सति सर्वत्रापि ज्ञाने मनसः करणत्वापत्तौ चक्षुरादिकं करणमिति सिद्धान्तभङ्गापत्तेः। किं त्वसाधारणत्वे सति सव्यापारत्वम्। न च मनसोऽनुमितिमात्रहेतुत्वम्। ज्ञानमात्रे तस्य हेतुत्वात्। न च विषयमनःप्रत्यासत्तिजन्यत्वमेव तत्र तन्त्रम्, न तु अनुमितौ तत्प्रत्यासत्तिरिति वाच्यम्। त्वन्मते [8]तस्या अप्यापादनात्।

न च स्मृतौ मनसः करणत्वेऽपि न तत्प्रत्यासत्तिजन्यतेति वाच्यम्। उक्तन्यायेन तत्राप्यनुभवस्यैव करणत्वात्। [9]न चासाधारणव्यापारयोगित्वमेव करणत्वम्,

---

1. क. कारण-
2. क. कल्पनापत्तेः
3. क 'मानसत्वा.........तत्प्रयोजकमिति वाच्यम्' नास्ति।
4. ख. ग मनःकरणक-
5. क. मानसत्वेनैव
6. क. कारणान्तर-
7. क. कारणत्वे-
8. ग. तस्याप्युपादानात्
9. क. न च साधारण-

## तर्कचूडामणिः

न कारणस्याप्यसाधारणत्वम्, अनुमितावपि परामर्शव्यापारकं मनः करणमास्तामिति वाच्यम्। एवं हि चाक्षुषप्रत्यक्षासाधारणकारणचक्षुर्मनस्संयोगाव्यापारकतया मनसः चाक्षुषादिज्ञानकरणतापत्तेः।

नन्वसाधारणकारणत्वं तन्मात्रहेतुत्वम्। तथाच सुखादि[1]प्रत्यक्षे मनसोऽकरणत्वापत्तिः। पदज्ञानादेः शाब्दज्ञानाद्यकरणत्वापत्तिश्चेति चेत्—न। यस्य यदवच्छिन्नकार्यताप्रतियोगिककारणताश्रयजन्यत्वं तस्य तदवच्छिन्नासाधारणहेतुत्वमित्यभ्युपगमात्। मनसश्च ज्ञानान्तरहेतुत्वेऽपि सुखादिप्रत्यक्षमात्रवृत्तिमानसत्वावच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वान्नाव्याप्तिः। एवं पदज्ञानादावपि।

अपि चानुमितौ मनसः करणत्वं यदि सव्यापारत्वं तदेष्टापत्तिः। प्रत्यक्षादावपि तस्य तथात्वात्। यदि च फलायोगव्यवच्छिन्नत्वं तदा असम्भवः। असदुक्तं तु नास्त्येव। अपि च शाब्दज्ञानादावपि मन एव करणमस्तु। न तु पदज्ञानादिकम्, मनसोऽन्यत्र करणत्वेन क्लृप्तत्वात्। पदज्ञानत्वापेक्षया मनस्त्वस्य लघुत्वात्। न च मानसत्वापत्तिः। त्वदुक्तरीत्या तस्य प्रमित्यन्तरप्रागभावसहकृतमनोजन्यत्वात्। यदि चासाधारणप्रमितेरसाधारणकरणजन्यत्वमावश्यकमिति तत्र न तस्य करणत्वं, तदा अनुमितावपि तुल्यम्।

न चान्यत्र मनसोऽकरणत्वेऽपि अनुमितौ [2]करणान्तरानुपपत्त्या मनसः करणत्वमिति वाच्यम्। मनसोऽपि करणत्वानुपपत्तेरुक्तत्वात्। व्याप्तिज्ञानस्य करणान्तरस्य सत्त्वाच्च। यथा च विशकलितस्थले न व्यभिचारस्तथोक्तमेव।

न च स्मृतिरूपपरामर्शस्थले व्यभिचारः। तत्राप्यनन्यगत्या स्मृत्यनन्तरं मानसपरामर्शान्तरकल्पनात्। न चानुमितिसामग्र्या बलवत्त्वात् स्मृत्यनन्तरमेवानु-

---

1. क. 'प्रत्यक्षे ........ सुखादि नास्ति।　　2. क करणानुपपत्त्या

## प्रकाशः

[1]यद्वा प्रमित्यन्तरप्रागभावासहकृतमनोजन्यत्वं मानसत्वप्रयोजकं लाघवात् । (किं च) इन्द्रियत्वेन मनोजन्यत्वं वा तथा, यथा [2]तवैव संस्कारत्वेन तज्जन्यत्वं स्मृतित्वप्रयोजकमिति नोक्तदोषः ।

यत्तु व्याप्तिप्रकारकपक्षधर्मता[3]ज्ञानत्वेन परामर्शस्य हेतुत्वमिति व्याप्तेः प्रकारत्वेन परामर्शपूर्वं तदुपस्थितेरावश्यकत्वान्न व्यभिचारः । स्मरणलक्षणपरामर्शस्थले तु पूर्वानुभवस्यैव कारणत्वमिति यथाश्रुत एव ग्रन्थः साधुरिति ।

तन्न । एवं व्यभिचारोद्धारेऽप्यन्यथासिद्ध्यनुद्धारात् । किं च व्यभिचाराभावसहचारस्मरणानन्तरं विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति न्यायेन व्याप्तिवैशिष्ट्यविषयकपक्षधर्मताज्ञानाद्प्यनुमितेरनुभूयमानत्वात् न व्याप्तिप्रकारत्वेन तस्य हेतुत्वमिति ।

**विषयपरिशोधकस्य वेति** । नन्वेतस्यानुमितौ कथमुपयोगः । न च विरोधिशङ्कानिवृत्तिद्वारा तथेति वाच्यम् । परामर्शस्यैव विशेषदर्शनत्वेन तन्निवर्तकत्वादिति चेत्—

## तर्कचूडामणिः

मित्युत्पत्तेर्नैवमिति वाच्यम् । करणान्तरस्य दुर्निरूपतया व्याप्तिज्ञानकरणत्वस्यावश्यं वाच्यतयानुभवपरामर्शस्यैवानन्यगत्यानुमितिहेतुत्वकल्पनात् ।

वस्तुतस्तु पूर्वानुभवरूपव्याप्तिज्ञानमेव तत्रानुमितौ कारणम् । तस्यानुमितिजनकसंस्कारेण व्यवधानेऽपि फलाव्यवहितपूर्ववर्तिस्मृतिरूपपरामर्शव्यापारवत्तया हेतु-

1. ख. किं च for यद्वा
2. क. तवै ।
3. क जन्यत्वे

## प्रकाशः

अत्राहुः । विशेषदर्शने स्वरसवाहिनी शङ्का नोदेति । [1]अन्याहिता तूदेत्येव । कथमन्यथा प्रामाण्यशङ्कादिना अर्थनिश्चये [2]सत्यप्यर्थसंशयोदयः । तदिह परामर्शानन्तरं स्वरसवाहिनी [3]साध्यविरहशङ्का [4]निवर्तताम् । बाधकप्रमाणाद्यवतार[5]शङ्कानिबन्धना साध्याभावशङ्का कथं नोदेति । तदुक्तं गुणकिरणावल्यामाचार्यचरणैः—

"विरोधिप्रमाणसदसद्भावशङ्कया मुहूर्तमनुमितौ
[6]विलम्बन्तेऽनुमातारः ।"

इति। तथा च यथा धूमाद्वह्निमतानेन भवितव्यम् [7]तथा कुतश्चित् वह्न्यभावसाधकात् वह्निशून्येनैव न कुत इति शङ्का तत्किं वह्निविरहसाधकमिति जिज्ञासा। सा च

---

## तर्कचूडामणिः

...त्वाविरोधात् । स्वनाशक्षणावधिफलाव्यवहितपूर्ववर्ति[8]व्यापारवत्त्वस्य गौरवेण मननादिव्यापारकश्रवणादेर्हेतुतापत्त्या चाप्रयोजकत्वात् । तस्मात् गङ्गाप्रवाहवत् निर्मले [9]गङ्गेशवचसि बाधितार्थकत्वं [10]न शङ्कनीयमित्यलविस्तरेण।

तर्कस्य किं साक्षादनुमितिहेतुत्वम् उत परम्परया । आद्ये—नन्विति । तर्कं विनाप्यनुमित्युत्पत्तेरिति भावः । द्वितीये—न चेति । जयदेवमतमाह—अत्राहुरिति । प्रामाण्य[11]शङ्कादिना अर्थसंशयोदय इति सम्भवः । बाधकप्रमाण-

---

1. ख. अन्यथाहितोदेत्येव
2. ख. सत्यध्यवसायार्थशङ्कोदयः
3. ख 'साध्य' नास्ति ।
4. क. निवर्त्यताम्
5. क शङ्कानिवर्तनात्
6. ख. विलम्बामह इति
7. क. तथा च
8. क. व्यापारत्वस्य
9. क गङ्गेश्वरवचसि
10. क. अनाशङ्कनीय
11. क. संशयादिनार्थसंशय इति

## प्रकाशः

सत्यपि परामर्शे जायते । सा च यदि निर्वह्निः स्यान्निर्धूमः स्यात् । तथा च न वह्निविरहसाधकं किमप्यत्र । तत्सत्त्वे वह्निसाधकधूमानुपपत्तेरिति तर्केणापनीयत इति विषये परिशुद्धे प्रतिबन्धकशङ्काविरहादनुमितिरविकला भवतीति । यत्र च स्वतःसिद्धशङ्काविरहस्तत्र [1]तर्कस्यापि नोपयोग इति ध्येयम् ।

इति श्रीरुचिदत्तमिश्रविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे लिङ्गकारणतावादः



---

## तर्कचूडामणिः

संशयमुपपादयति—तथा चेति । नन्वेवं नियमतस्तदपेक्षापत्तिरित्यत आह—यत्र चेति । न चानुमितिसामग्र्या बलवत्त्वात् परामर्शानन्तरमनुमितिरेव स्यात्; न तु बाधकप्रमाणसंशय इति वाच्यम् । अनुभवबलेन तत्र [2]तस्याः प्रतिबन्धकत्वादिति भावः ।

इति धर्मराजविरचिते तर्कचूडामणौ
अनुमानखण्डे लिङ्गकारणतावादः

—:०:—

---

1. क. तस्यापि  2. क. तस्याप्रति-

## अथ केवलान्वयिप्रकरणम्

तच्चानुमानं त्रिविधम्—केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकि-भेदात्। तत्रासद्विपक्षं केवलान्वयि। तथा हि केवलान्वयिनोऽभिधेय-त्वस्य न विपक्षः। अभिधानेऽनभिधाने च विपक्षत्वव्याघातात्।

### प्रकाशः

**तच्चानुमानमिति।** अनुमानविषयीभूतं लिङ्गमित्यर्थः। **केवलान्वयीति।** वक्ष्यमाणकेवलान्वयिधर्मसाध्यकमित्यर्थः। [1]असद्विपक्षमित्यस्याप्ययमेव तात्पर्यम्, यथाश्रुते सिद्ध्यसिद्धिव्याघातात्। अभिधेयत्वस्य शब्दशक्तिविषयत्वस्य न विपक्षः, आकाशत्वादेरप्याकाशपदाशक्यस्य वस्तुपदादिशक्यत्वादिति भावः। **अभिधान इति।** येनैव पदेन [2]तस्याभिधानं तत्पदशक्तिविषयत्वादेव न विपक्षत्वम्।

### तर्कचूडामणिः

नन्वनुमानं व्याप्तिज्ञानं तस्य च न वक्ष्यमाणत्रैविध्यमित्यत आह—**अनुमानेति।** [3]ननु शब्दोऽभिधेयः शब्दत्वादित्यत्र [4]शब्दत्वलिङ्गस्य कथं केवलान्वयित्वम् अत्यन्ताभावप्रतियोगित्वादित्यत आह—**वक्ष्यमाणेति।** नन्वस्मन्मते [5]भट्टमताभिधायाः अनङ्गीकारात् मूलानुपपत्तिः। न चाभिधेयत्वं पदजन्यज्ञानविषयत्वमिति वाच्यम्। अथेत्यादिशङ्कानुपपत्तेरित्यत आह—**शब्द-शक्तीति।** नन्वाकाशत्वादिकमेवाकाशपदशक्यं विवक्षितमित्यत आह—**आकाश-त्वादेरिति।** [6]नन्वनभिधानेऽपि विपक्षत्वं प्रतीयमानत्वमात्रेण भवत्वित्यत आह—[7]**अनभिधान इति। पदाशक्यत्वेऽपीति।** न च वस्तुपदाशक्यस्यावस्तुतापत्तिः।

1. क. असद्विपक्षमित्यत्र केवलान्वयिसाध्यकमित्यत्र तात्पर्यम्।
2. क. 'तस्य' नास्ति।
3. क. 'ननु' नास्ति
4. ग शब्दलिङ्गस्य
5. ग. भट्टाभिधेयानङ्गीकारात्
6. ख. ग. नन्वभिधानेऽपि
7. क. अभिधान इति

अथ यथाकाशशब्दाच्छब्दाश्रयत्वमनभिधेयमप्युपतिष्ठते तथाभिधेयत्वविपक्षस्यानभिधेयत्वेऽपि पदादुपस्थितिः स्यात्। एवं चाभिधेयत्वं कुतोऽपि व्यावृत्तं धर्मत्वात् गोत्ववत् इति चेत्—न। व्यावृत्तत्वस्याव्यावृत्तत्वे व्यावृत्तत्वस्यैव केवलान्वयि व्यावृत्तत्वे यत एव व्यावृत्तं व्यावृत्तत्वं तदेव केवलान्वयीति धर्मत्वस्यानैकान्तिकत्वात्। एवमत्यन्ताभावप्रतियोगित्वस्यात्यन्ताभावाप्रतियोगित्वेऽत्यन्ताभावप्रतियोगित्वमेव केवलान्वयि। अत्यन्ताभावप्रतियोगित्वे यन्निष्ठात्यन्ताभावप्रतियोग्यत्यन्ताभावप्रतियोगित्वं तदेव केवलान्वयि। न चात्यन्ताभावप्रतियोगित्वं व्यावृत्तत्वं च नानेति वाच्यम्। अनुगतप्रतीतिबलेन गोत्ववत्तयोः सिद्धेः।

---

## प्रकाशः

अनभिधाने च वस्तुपदादेरप्यनभिधेयतया [1]अवस्तुत्वादेव न विपक्षत्वमिति भावः। पदाशक्यत्वेऽपि पदजन्यज्ञानविषयत्वाद्विपक्षत्वं वस्तुत्वं च स्यादिति [2]द्वितीयविकल्पाक्षेपेण शङ्कते—अथेति। एवं चेति। उक्तक्रमेण [3]व्याघाताभावे सिद्धे सतीत्यर्थः। अन्यथा व्याघातादेवानुमानं बाधितं स्यादिति भावः। यद्धर्मसाध्यकं

---

## तर्कचूडामणिः

परमते गवादिपदाशक्यव्यक्तेरपि गोत्वदर्शनादिति भावः। ननु वक्ष्यमाणानुमाने पूर्वोक्तस्य हेतुपक्षसाध्यसिद्ध्यादिष्वनुपयोगात् एवं चेति [4]ग्रन्थासामञ्जस्यमित्यत आह— उक्तेति। तस्य हेतुत्वमुपपादयति—अन्यथेति। ननूक्तयुक्त्या केवलान्वयिधर्मसिद्धौ तत्रेति ग्रन्थवैयर्थ्यम्। न हि [5]तत्रेत्यत्र लक्षणं कथ्यते येन वैयर्थ्यं

---

1. क. अवस्तुत्वात्र
2. ख 'द्वितीयविकल्पाक्षेपेण' नास्ति।
3. ख. व्याघाते निरस्त इत्यर्थः
4. ग. ग्रन्थानुपपत्तिरित्यत
5. क. तत्रेत्यत्र लक्षणा कार्यते
ग. तत्रेत्यस्य लक्षणं कथ्यते।

अत्र न तावदव्याप्यवृत्त्यत्यन्ताभावः केवलान्वयी, तस्य प्रतियोग्यवच्छिन्नेऽप्यत्यन्ताभावात्। अत्यन्ताभावाप्रतियोगिनश्च केवलान्वयित्वात्।

नाप्याश्रयनाशजन्यगुणनाशात्यन्ताभावः तस्य नाशस्य सर्वत्रात्यन्ताभावादिति वाच्यम्। यत्र हि प्रतियोगिप्रागभावो वर्तते तत्र न तदत्यन्ताभावो वर्तते। तथा च नाशस्य प्रागभावो यत्र नाशप्रतियोगिसमानदेशे वर्तते तत्र कथं नाशात्यन्ताभावो वर्तताम्। तर्हि नाशस्य तत्र वृत्तिः स्यादिति चेत्—न। पूर्वं तत्र नाशप्रागभावस्यैव सत्त्वात् उत्तरकाले आश्रयस्यैवाभावात्। नाप्याकाशात्यन्ताभावः केवलान्वयी। तस्यापि प्रतियोगिरूपात्यन्ताभावप्रतियोगित्वात्। अभावात्यन्ताभावस्य भावत्वात्।

## प्रकाशः

लिङ्गं केवलान्वयि तद्धर्मं निरूपयति—तत्रेति। [1]न तावदिति। यत्तु—उक्तक्रमेणात्यन्ताभावाप्रतियोगित्वमेव केवलान्वयिधर्मलक्षणत्वेन तवाभिमतम्। तथा चाव्याप्तिरित्याशङ्कते—तत्रेति। [2]यदीदं लक्षणं तत्र—तदा नायमत्यन्ताभावः केवलान्वयी स्यादित्यर्थः। न तु कः संग्राह्यः इत्याकाङ्क्षायामस्यावतारः।

## तर्कचूडामणिः

स्यादित्यत आह—यद्धर्मेति। जयदेवमतं दूषयति—[3]यत्त्विति। नन्वाकाशात्यन्ताभावस्य केवलान्वयित्वाभावोक्त्या लक्षणस्य किमायातमित्यत आह—यदीदमिति।

उपाध्यायमतं जयदेव एव दूषयति—यदि चेति। क्वचित् न त्विति पाठः। नन्वनन्यगत्या तथैवाभिप्रायः कल्प्यत इत्यत आह—उक्तेनैवेति।

1. क. 'न तावदिति नास्ति।
2. क. यदिदं
3. क. यदि चेति।

अथाभावात्यन्ताभावो न प्रतियोगिरूपः. तथा सत्यन्योन्याभावात्यन्ताभावः प्रतियोगिरूप इति प्रतियोगिसमानदेशोऽन्योन्याभावो न स्यादिति चेत् — न। अत्यन्ताभावात्यन्ताभावः प्रतियोग्येव, अन्योन्याभावात्यन्ताभावस्तु प्रतियोगिवृत्तिरसाधारणो धर्म इति।

---

## प्रकाशः

[1]लक्षणानाक्षेपे तत्र सिद्धान्तप्रणयनस्य विरुद्धत्वापातादिति। तन्न। नाप्याश्रयेत्यादिग्रन्थस्यासंगतत्वापातादिति[2]। न ह्यव्याप्यवृत्त्यत्यन्ताभाव इवाश्रयनाशजन्यगुणादिनाशात्यन्ताभावोऽपि केवलान्वयित्वेन संग्राह्यः, येन तत्राव्याप्तिराशङ्क्येत। न चोक्तलक्षणेऽव्याप्तिरेव द्रष्टव्या नातिव्याप्तिरित्यभिप्रायेण तद्ग्रन्थावतार इति वाच्यम्। तल्लक्षणं दूषयितुस्तत्रातिव्याप्तिमाशङ्क्य तन्निरासप्रयासस्यासम्भवदुक्तिकत्वात्। अव्याप्तिवदतिव्याप्तिसत्त्वेऽपि तदिष्टस्यैव सिद्धेः, उक्तेनैवोपपत्तेश्च। न चैवमग्रे तल्लक्षणप्रणयनं विरुद्धं स्यादिति वाच्यम्। 'वृत्तिमत्' इत्यादि केवलान्वयिलक्षणं [3]न त्वत्यन्ताभावाप्रतियोगित्वमात्रम्। तथा चाव्याप्यवृत्त्यत्यन्ताभाव आकाशात्यन्ताभावो वा केवलान्वय्येवेति नोक्तदोष इत्याशयेन [4]तत्प्रणयनात्। यथा च सिद्धान्तलक्षणेनाव्याप्यवृत्त्यत्यन्ताभावसंग्रहस्तथाग्रे वक्ष्यते।

---

## तर्कचूडामणिः

सिद्धान्ते केवलान्वयिधर्मनिरूपण एव तत्पर्यम्। तल्लक्षणकथनं तु गगनात्यन्ताभाव[5]संग्रहायेत्याह—**वृत्तिमदि**ति। ननु वक्ष्यमाणलक्षणं न संयोगात्यन्ताभावसंग्राहकमित्यत आह—**यथा चे**ति। तथेति। [6]घटात्यन्ताभावात्यन्ताभाव इत्यर्थः। तस्या-

---

1. क. लक्षणाक्षेपे
2. ख 'इति' नास्ति।
3. क. न स्वात्यन्ता-
4. ख. तत्प्रणयनम्
5. क. संग्रहाच्चेत्यतः
6. ख. घटात्यन्ताभावः

उच्यते। वृत्तिमदत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्। आका-शात्यन्ताभावो यद्यपि प्रतियोगिरूपात्यन्ताभावप्रतियोगी, तथापि न स वृत्तिमान् इत्याकाशात्यन्ताभाव एव केवलान्वयी। तथा प्रमेयत्वाभि-धेयत्वादि केवलान्वयि। वृत्तिमतोऽत्यन्ताभावस्याप्रतियोगित्वात्।

---

## प्रकाशः

**प्रतियोग्येवेति**। न च प्रतियोगिप्रागभावादिरपि तथेति कथमवधारण-[1]मिति वाच्यम्। तस्यापि प्रतियोगित्वात् घटात्यन्ताभावस्यैव [2]तत्प्रागभावात्यन्ता-भावात्यन्ताभावत्वादिति भावः। **प्रतियोगीति**। प्रतियोगितावच्छेदकरूप इत्यर्थः।

---

## तर्कचूडामणिः

**पीति**। प्रागभावादेरपीत्यर्थः। [3]नन्वन्यप्रतियोगिकात्यन्ताभावता कथमन्यस्येत्यत आह—**घटेति**। न चाभावप्रतियोगिकाभावाङ्गीकारेऽपसिद्धान्त इति वाच्यम्। भावाभावोभय[4]प्रतियोगिकाभावाङ्गीकारेऽप्यभावमात्रप्रतियोगिकाभावानङ्गीकारात्। अत एवेतरत्वावच्छिन्नान्योन्याभावो भावाभावप्रतियोगिक इति वक्ष्यत इति भावः। घटनिष्ठस्य रूपादेर्घटान्योन्याभावात्यन्ताभावत्वप्रसङ्गं वारयति—**प्रतियोगितेति**।

ननु घटत्ववदेव तत्समनियतधर्मान्तरस्यापि घटान्योन्याभावविरोधित्वा-विशेषेण तदत्यन्ताभाव[5]रूपतैवेति चेत्—न। [6]घटे घटत्वानवगमदशायां [7]तन्मात्र-वृत्तिरूपादिज्ञानदशायां तत्र घटभेदभ्रमानुपपत्तेः, तद्गतरूपादिज्ञानस्य ग्राह्याभाव-ज्ञानतया प्रतिबन्धकत्वात्। न च रूपादेर्घटान्योन्याभावात्यन्ताभावत्वेन ज्ञान-

---

1 ख 'इति वाच्यम्' नास्ति
2. ख. तद्प्रागभावात्यन्ताभावत्वात्
3. क. नन्वन्यप्रतियोगिकात्यन्ताभावात्यन्ताभावता
4. क. प्रतियोगिकाङ्गीकारे
5. क रूपतयैवेति
6. ख. ग. 'घटे' नास्ति
7. ग. 'तन्मात्रवृत्तिरूपादिज्ञानदशायां' नास्ति।

## प्रकाशः

वृत्तिमदिति । वृत्तिमान् योऽत्यन्ताभावस्तदप्रतियोगित्वमित्यर्थः । नन्विदानीमाकाश इति प्रत्ययादाकाशस्यापि वृत्तिमत्त्वात् तदत्यन्ताभावे तथाप्यव्याप्तिः । न च वृत्तिः संयोगः समवायो वा विवक्षित इति वाच्यम् । [1]घटादेरपि केवलान्वयित्वापत्तेः । अव्याप्यवृत्त्यत्यन्ताभावाव्याप्तेश्चेति चेत् — न । स्ववृत्तिविरोधिवृत्तेः वृत्तिमत्पदेन विवक्षितत्वात् । [2]स्ववृत्तिविरोधित्वं च स्वसामानाधिकरण्यादिविरोधित्वम् । संयोगादिवृत्तिश्च न [3]तदत्यन्ताभावसामानाधिकरण्यविरोधिनीति न तत्राव्याप्तिः ।

नन्वेवं संयोगस्यापि केवलान्वयित्वापत्तिः । तदत्यन्ताभाववृत्तेरपि तद्वृत्तिविरोधित्वाभावात् वृक्षादावुभयोः समानाधिकरणत्वादिति चेत् — न । कर्मादावधिकरणे तदत्यन्ताभाववृत्तेरपि तद्वृत्तिविरोधित्वात् । यद्यपि संयोग[4]वृत्तिरपि

---

## तर्कचूडामणिः

दशायां भ्रमानुत्पत्तिरिष्टैव । [5]तदज्ञाने प्रतिबन्धकाभावादेव तदुत्पत्तावविरोधः । न हि ग्राह्याभावज्ञानमात्रं प्रतिबन्धकम्, अतिप्रसङ्गात् । किं तु ग्राह्याभावत्वेन तज्ज्ञानमिति वाच्यम् । एवं हि [6]घटत्वस्य घटान्योन्याभावात्यन्ताभावत्वाग्रहदशायां घटत्वेन निश्चिते घटे कदाचित् घटभेदज्ञानापत्तेः । तदुक्तरीत्या तज्ज्ञानमात्रस्याप्रतिबन्धकत्वादिति दिक् ।

ननु वृत्तिमत्त्वस्याप्रतियोगि[7]विशेषणत्वे संयोगात्यन्ताभावाद्यव्याप्तिरित्यत आह—वृत्तिमानिति । न च वृत्तिरिति । गगनस्य काले न संयोगादिः, किं तु स्वरूपसम्बन्ध इति भावः । कर्मादाविति । न हि यावदधिकरणे [8]तद्वृत्तिविरोधित्वं

---

1. ख. घटादेरेव
2. क. स्वविरोधित्वं च
3. ख. तदत्यन्ताभाववृत्तिविरोधिनीति
4. क. वर्तेरपि
5. क. ख. तज्ज्ञाने
6. क. 'घटत्वस्य' नास्ति
7. ख. विशेषणत्वं
8. ख. तद्विरोधित्वं

## प्रकाशः

स्वावच्छेदेन स्वात्यन्ताभाववृत्तिविरोधिनी भवत्येव । तथा च तत्राव्याप्तिरेव। [1]तथापि स्वसामानाधिकरण्यधीविरोधित्वं नास्ति । संयोगावच्छेदेन तदत्यन्ताभाव-सत्त्वेऽपि तत्सामानाधिकरण्यबुद्धेरप्रत्यूहत्वात् ।

न चैवं मेयत्वादि[2]वृत्तिविरोधिवृत्तेरप्रसिद्धेः तत्राव्याप्तिरिति वाच्यम् । स्ववृत्ति-विरोधिवृत्तिमदत्यन्ताभावप्रतियोगिनो घटादयः प्रसिद्धाः [3]तदन्यत्वस्य तत्रापि सत्त्वात् ।

ननु तथाप्याकाशात्यन्ताभावः कथं केवलान्वयी । कालादौ तस्य सत्त्वेन तदत्यन्ताभावासत्त्वात् । न च संयोगित्वेन तदत्यन्ताभावस्तथा, भूतलादौ संयोगित्वेनापि घटादिवत्तस्य सत्त्वेन [4]तदत्यन्ताभावासत्त्वात् । न चाकाशसंयोगस्य [5]भूतलादिवृत्तित्वेऽप्याकाशं न वर्तत इति वाच्यम् । एवं घटादेरपि भूतलादि-वृत्तित्वं [6]न स्यात् । नापि समवेतत्वेन तदत्यन्ताभावस्तथा, व्यधिकरणधर्मावच्छिन्न-प्रतियोगिकाभावाभ्युपगमापत्तेरिति चेत्—न । [7]इदानीं भूतले घट इतिवत् इदानीं भूतलादावाकाशमित्याधाराधेयभावप्रतीतेरसिद्धेः न तत्र संयोगित्वेन तस्य सत्त्वम् । तथा च तदवच्छिन्नाभाव एव तस्य केवलान्वयीत्याहुः ।

---

## तर्कचूडामणिः

विवक्षितम् । किं तु क्वचिदप्यधिकरणे । तावतापि [8]संयोगाद्यत्यन्ताभावाव्याप्ति-निवारणात् । स्वसामानाधिकरण्यधीविरोधित्वविवक्षाफलं दर्शयति--- यद्यपीति ।

जयदेवमतमाह—अन्ये त्विति । न चाकाशेति । प्रसिद्धस्यैवारोप इति सिद्धान्तादिति भावः । आरोपविषयेति । धर्मीत्यर्थः । तदुभयेति । प्रतियोग्यनु-

---

1 ख. तथा च सामाना-
2 ख. 'वृत्ति' नास्ति
3 क. तदन्यस्य
4. क तदत्यन्ताभावसत्त्वात्
5. ख. 'भूतलादि ......... घटादेरपि' नास्ति
6. ख नास्तीति
7. क. 'इदानीं भूतले घट इतिवत्' नास्ति ।
8. ग. संयोगात्यन्ताभावनिवारणात्

## प्रकाशः

अन्ये तु अस्त्वाकाशस्य संयोगेन भूतलादौ सत्त्वम्। तथापि समवायसम्बन्धावच्छिन्नाकाशात्यन्ताभाव एव केवलान्वयी। न चैवं व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमापत्तिः, आकाशत्वावच्छिन्न[1]प्रतियोगिकस्यैव तस्यैवारोप्येण समवायसम्बन्धेनाभावाभ्युपगमात् आरोप्यसम्बन्धभेदेनैवाभावभेदात्। न चाकाशसमवायाप्रसिद्ध्या [2]तदारोपः कथमिति वाच्यम्। सर्वत्र वैशिष्ट्यस्याप्रसिद्धस्यैवारोपात्[3]। न हि घटो नास्तीत्यत्र भूतलघटसंयोगोऽपि प्रसिद्धः। तथा च यथारोप्यारोपविषयप्रसिद्ध्या तदुभयसंसर्गोऽप्रसिद्ध एव [4]आरोप्यते। यथा वा अन्योन्याभावे तदुभयप्रसिद्धिमात्रेण तदुभयतादात्म्यं तथात्रापीति न काप्यनुपपत्तिः। यदि च सम्बन्धभेदेनाभावभेदो नाभ्युपगम्यते तदा आत्मा इतरेभ्यो भिद्यते ज्ञानादिति व्यतिरेक्यनुमानं सर्वसिद्धं न स्यादिति[5] विषयविषयि[6]भावसम्बन्धेन ज्ञानस्य वस्तुमात्रवृत्तितया [7]ज्ञानत्वावच्छिन्नाभावाप्रसिद्धेः। [8]तस्माद्विषयविषयिभावेन तत्सत्त्वेऽपि [9]समवायेन तदभावो यथा, तथात्रापि संयोगादिना [10]सत्त्वेऽपि समवायेन

## तर्कचूडामणिः

योगीत्यर्थः। **सम्बन्धभेदेनेति**। आरोप्यसम्बन्धभेदेनेत्यर्थः। **आत्मेति**। न च ज्ञानसमवायित्वमेव तत्र लिङ्गमिति वाच्यम्। तदप्रतिसन्धानेऽपि ज्ञानरूपलिङ्गात् तदनुमितेरनुभूयमानत्वादिति भावः।

ननु प्रतियोगिमति कथं तदभाव इत्यत आह - **येनेति**। ननु व्यधिकरणधर्मभेदेनाभावभेदाभ्युपगमे पूर्वं तदनभ्युपगमो विरुध्येतेत्यत आह—**तस्मादिति**।

1. ख. प्रतियोगिताकस्यैतस्यारोपेण
2. ख. तदारोपोऽपि कथम्
3. क. स्यैवारोप्यत्वात्
4. क. बोध्यते
5. ख. 'इति' नास्ति।
6. क. भावेन ज्ञानस्य
7. ख. ज्ञानत्वाभावा
8. ख. तस्माद्यथा घटादौ विषय-
9. ख. ज्ञानत्वेन समवायेन
10. ख. आकाशसत्त्वेऽपि

## प्रकाशः

[1]तदभावात् येन सम्बन्धेन यदभावस्तेन सम्बन्धेन तत्सत्त्वस्य तदत्यन्ताभाववृत्ति[2]विरोधित्वात्। [3]तथा च व्यधिकरणधर्मो नारोप्यतावच्छेदकीभूयाभावभेदकः आरोप्यसम्बन्धो [4]भूत्वा भेदक एवेति भावः। एवं च येन [5]सम्बन्धेन यस्य न वृत्तिस्तत्सम्बन्धावच्छिन्नतदभावः केवलान्वयीति परमाण्वाद्यत्यन्ताभावोऽपि केवलान्वयित्वेनाभ्युपगम्यते। प्रमेयत्वात्यन्ताभावोऽपि [मेयत्वादेरत्यन्ताभावोऽपि] केवलान्वयी।

नन्वेवं मेयत्वाभावस्यापि केवलान्वयित्वे तदप्रसिद्धिनिबन्धना अव्यभिचरितत्वलक्षणे केवलान्वयिन्यव्याप्तिः पूर्वोक्ता विरुध्यत इति चेत्—न। व्याप्तिशरीरप्रविष्टसबन्धावच्छिन्नसाध्याभाववदवृत्तित्वम् अव्यभिचरितत्वं तत्राभिमतम्। अन्यथा समवायावच्छिन्नवह्न्यत्यन्ताभाववद्वृत्तित्वाद्धूमे वह्न्यव्यभिचारानुपपत्तेः। तथा च मेयत्वस्य समवायावच्छिन्नाभावप्रसिद्धावपि यत्र वाच्यत्वं तत्र मेयत्वमित्यत्र व्याप्तिशरीरप्रविष्टस्वरूपसम्बन्धावच्छिन्नसाध्याभावाप्रसिद्ध्या तत्राव्याप्ति-

---

## तर्कचूडामणिः

नन्वेवं रूपादेरपि संयोगसम्बन्धेनात्यन्ताभावः केवलान्वयी स्यादित्यत आह—**एवं चेति**। नन्वेवं केवलान्वयिमेयत्वादेः समवायेनात्यन्ताभावः स्यात्, सा च [6]तस्य केवलान्वयित्वमित्यत आह—**मेयत्वादेरिति**। **व्याप्तिशरीरप्रविष्टसम्बन्धेति**। तादृशसाध्यसम्बन्धेत्यर्थः। **एवमिति**। मेयत्वादेरप्यत्यन्ताभावप्रतियोगित्वे सतीत्यर्थः। नन्वव्याप्तिवारकस्य व्यर्थत्वे इन्द्रियलक्षणे शब्देतरपदवैयर्थ्यं स्यादित्यत आह—**वस्तुत इति**।

---

1. ख. तदभावः स्यात्
2. ख. विरोधात्
3. ख. तस्माद्व्यधिकरण-
4. ख. 'भूत्वा' नास्ति
5. क. रूपेण सम्बन्धेन
6. ख. तच्च

## प्रकाशः

सम्भवात्। एवं च वृत्तिनत्पदस्याप्रसिद्धिवारकतया न व्यर्थत्वशङ्कापि। अव्याप्तिचारकत्वे [1]हि सा स्यात्। वस्तुतस्तत्रापि न व्यर्थत्वमित्युक्तमिन्द्रियलक्षण इत्याहुः।

---

## तर्कचूडामणिः

अत्रेदमस्वरसबीजम्। लाघवेन प्रतियोगिसत्त्वस्याभावविरोधित्वेन वाच्यत्वादिप्रतियोगिमति कथं तदभावः। यदि च तत्सम्बन्धावच्छिन्नतत्सत्त्वमेवाभावविरोधि तदा प्रतियोगितावच्छेदकावच्छिन्नतत्सत्त्वमेव विरोधीति व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमापत्तिः। किं चात्यन्ताभावप्रतीतेः अधिकरणे प्रतियोगि[2]संसर्गज्ञानपूर्वकतया वाच्यत्वात्यन्ताभावः कथं प्रतीयेत। न हि वाच्यत्वसम्बन्धारोपः सम्भवति। तस्यात्यन्तासत्त्वात्। वायौ रूपं नास्तीत्यादौ वायुरूपसमवायाप्रसिद्धावपि रूपसमवायः प्रसिद्ध एवेति न क्वाप्यसम्भवः।

अपि च यत्र समवायेनाभावः प्रतीयते तत्र समवायस्य केन रूपेण भानम्। न तावत् प्रतियोगितया। वाच्यत्वसमवायो नेत्यप्रतीतेः। नापि तदवच्छेदकतया, व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमापत्तेः। नापि संसर्गीभूय, अधिकरणाभावयोः स्वरूपसम्बन्धस्यैव भानात्। तस्मात् समवायेन [3]वाच्यत्वं नेत्यादौ 'सविशेषणे हि' इति न्यायेन वाच्यत्वे घटादिसमवायाभाव एव विषयः।

[4]किं च येन सम्बन्धेन यस्य वृत्तिस्तदतिरिक्तसम्बन्धेन तदत्यन्ताभावस्य केवलान्वयित्वे घटात्यन्ताभावस्य संयोगसम्बन्धेनात्यन्ताभावः केवलान्वयी स्यात्। न च घटस्यात्यन्ताभावप्रतियोगित्वात् अभावप्रतियोगिकाभावान्तरानभ्युपगमाच्च भावविषय एवायं नियम इति वाच्यम्। त्वन्मते संयोगसम्बन्धेन घटात्यन्ता-

---

1. ख. त्वेऽपि हि
2. ख. ग. संबन्ध-
3. क. वाच्यत्वेनेत्यादौ
4. क. किं चानेन

## प्रकाशः

वयं तु ब्रूमः। अन्योन्याभावप्रतियोगितानवच्छेदकधर्मत्वं केवलान्वयित्वम्। अन्योन्याभावो व्याप्यवृत्तिरेवेति नाव्याप्यवृत्त्यन्ताभावेऽव्याप्तिरिति।

---

## तर्कचूडामणिः

भावो नेति प्रतीतेर्घटविषयत्वनियमायोगेन तद्भिन्नस्यैव तस्यावश्यवाच्यत्वात्। न हि घटवत्येव तादृशाभावप्रत्ययः। किं तु तदभाववत्यपि, प्रतियोगिमत्यपि सम्बन्धान्तरेण [1]तदभावाङ्गीकारात्। एवं चैतन्मते तदत्यन्ताभावस्य सम्बन्धान्तरेणाभाव इत्यनवस्थापि स्यात्।

न च सम्बन्धभेदेनाभावभेदाभ्युपगमे इतरभेदानुमाने ज्ञानस्य लिङ्गत्वं न स्यादिति वाच्यम्। येन सम्बन्धेन यस्य पक्षधर्मताज्ञानमनुमितिहेतुः तत्सम्बन्धावच्छिन्नहेत्वभावस्य व्यतिरेकव्याप्तिनिरूपकत्वेन समवेतत्वस्य तत्राभावप्रतियोगितापच्छेदकत्वात्। तस्य च व्यधिकरणत्वाभावेनापसिद्धान्ताभावादित्यलमधिकेनेति।

[2]अन्योन्येति। अवृत्तिगगनादा[3]वतिव्याप्तिवारणाय धर्मपदम्। ननु मूले वृक्षः [4]कपिसंयोगाभाववान् अग्रे [5]कपिसंयोगाभाववान्नेति प्रतीत्या संयोगविशेषाभावस्यान्योन्याभावप्रतियोगितावच्छेदकत्वमेवेत्यव्याप्तिरित्यत आह—अन्योन्येति।

वयं तु ब्रूमः। उक्तात्यन्ताभावाप्रतियोगिसाध्यकत्वं तादृशान्योन्याभावप्रतियोगितानवच्छेदक[6]साध्यवत्कत्वं वा न केवलान्वयिलिङ्गलक्षणम्, प्रमेयवानयं वस्तुत्वादित्यादावव्याप्तेः। तत्र साध्यकोटिप्रविष्टघटादेरत्यन्ताभावप्रतियोगित्वात्।

---

1. ग तदत्यन्ताभावाङ्गीकारात्
2. क अन्योन्येनेति
3. ग. गगनादावव्याप्तिः
4. क. कपिसंयोगवान्
5. क कपिसंयोगाभाववानिति
6. क. साध्यकत्वं

ननु प्रमेयत्वं प्रमाविषयत्वम्, तच्च न केवलान्वयि; प्रमाया विषयत्वस्य चाननुगमादिति वाच्यम्। प्रमात्वमेव हि परम्परासम्बन्धात् घटादौ प्रमेयत्वमनुगतं प्रमाजातीयविषयत्वं वा। तथापि केवलान्वयिनि संशयाभावात् कथमनुमितिः? प्रमेयत्वमत्र वर्तते न वेति संशयश्च न प्रमेयपक्षकः किं तु प्रमेयत्वपक्षको भिन्नविषयकः। प्रमेयत्वपक्षके चास्तित्वसाध्यस्यान्वयव्यतिरेकित्वम्। तथा च घटः प्रमेयो न वेति संशयो मृग्यते। स च नास्त्येव।

---

### प्रकाशः

एतच्च केवलान्वयिधर्मलक्षणं, [1]तद्धर्मसाध्यकत्वं च केवलान्वयिलिङ्गलक्षणं बोध्यम्। तेनायं प्रमेयो घटत्वादित्यादावपि नाव्याप्तिः, सर्वसाधारणान्वयिनोऽत्र लक्ष्यत्वात् दशाविशेषान्वयिधूमादावव्याप्तिर्न दोषायेति ध्येयम्। सदनुमान-

---

### तर्कचूडामणिः

अन्योन्याभावप्रतियोगितावच्छेदकत्वाच्च। न चेदं लिङ्गमन्वयित्वेनासंग्राह्यमेवेति वाच्यम्। साध्यतावच्छेदकावच्छिन्नसाध्याभावाप्रसिद्ध्या व्यतिरेकित्वाभावेनान्वयित्वस्यावश्यकत्वात्। अन्यथा तस्य त्रितयबहिर्भावापत्तेः। न च तस्य संग्राह्यत्वेऽपि नाव्याप्तिः। साध्यकोटौ प्रमेयत्वस्यापि प्रविष्टत्वेन तादृशाभावाप्रतियोगिप्रमेयत्वसाध्यकत्वस्य तत्रापि सत्त्वादिति वाच्यम्। [2]तादृशाभावाप्रतियोगिमात्रसाध्यकत्वस्यैव तत्र [3]वाच्यतया अव्याप्तितादवस्थ्यात्। अन्यथा अयं प्रमेयत्वघटत्वबृत्तिद्वित्वाश्रयवान् वस्तुत्वादित्यत्र तादृशाभावाप्रतियोगिप्रमेयत्वसाध्यकत्वेनातिव्याप्तेः[4]।

---

1. क. तद्धर्मसाध्यकं
2. ख. 'तादृशा..................वस्तुत्वादित्यत्र' नास्ति
3. ग. व्याप्यतया
4. क. ख. अतिव्याप्तिः

अथ पक्षः साध्यवान्न वा, पक्षे साध्यमस्ति न वेति संशयौ समानविषयकावेव. 'तदस्यास्त्यस्मिन्' (पा. सू. ५-२-९४) इति मतुपो विधानादिति चेत्— न। विशेषणविशेष्यभावभेदेनार्थभेदात्।

मैवम्। य एव हि संशयः पक्षे साध्यसिद्धिविरोधी स एवानुमानाङ्गम्, आवश्यकत्वात् लाघवाच्च। न तु समानविषयकत्वमपि तत्र तन्त्रम्, गौरवात्। प्रमेयत्वं घटनिष्ठाभावप्रतियोगि न वेति संशयश्च घटः प्रमेय इति साध्यसिद्धिविरोधी भवत्येव।

## प्रकाशः

त्रिभागोऽयमिति अयं घटः प्रमेयत्वादित्यनुमानाभासस्य निरुक्तत्रितयबहिर्भावेऽपि न [1]नः क्षतिरिति बोध्यम्। तथेति। आदिपदात् दिगत्यन्ताभावादिपरिग्रहः।

ननु प्रमात्वपरम्परासम्बन्धे प्रमेति धीः स्यात् न तु प्रमेयमिति, लोहितः स्फटिक इत्यादौ विशेषणस्यैव प्रकारत्वात् न सम्बन्धस्यैवेत्यरुचेराह—प्रमाजातीय-

## तर्कचूडामणिः

तस्मादत्यन्ताभाव[2]प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वं तादृशान्योन्याभाव[3]प्रतियोगितावच्छेदकतानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यकत्वं वा केवलान्वयिलिङ्गलक्षणं बोध्यम्। तादृशसाध्यतावच्छेदकावच्छिन्नत्वं तद्धर्मलक्षणम्। अत एव [4]'द्रव्यत्वाद्यन्यतमवत्त्वे साध्ये तत्साध्यकहेतोः केवलान्वयित्वम्। अन्यथा साध्यत्वेनाभिमतद्रव्यत्वादीनामत्यन्ताभावप्रतियोगित्वेन [5]तत्साध्यकहेतोस्त्रितयबहिर्भावापत्तेरिति दिक्।

1. ख. 'नः' नास्ति.
2. क प्रतियोगितावच्छेदक-
3. ग. प्रतियोगितानवच्छेदकतान-वच्छेदक-
4. ख. द्रव्यत्वाद्यन्यतमत्वे
   ग. द्रव्यत्ववदन्यतमत्वसाध्ये
5. ख ग. तत्साधकहेतोः

## प्रकाशः

विषयत्वं वेति। यद्यप्यस्मन्मते ईश्वरप्रमा एकैव व्यक्तिः, तद्विषयत्वमनुगतमेव; तथाप्युभयमतसाधारण्यादेवमुक्तम्।

**भिन्नेति**। स च न प्रयोजको[1]ऽतिप्रसङ्गादिति भावः। **अस्तित्वेति**। घटास्तित्वेत्यर्थः। तस्यैव संशयकोटित्वादिति भावः। [2]**साध्यसिद्धेति**। साध्यसिद्धिविरोधिनी यस्य [3]साध्यसिद्धिप्रतिबध्य इति भावः। **समानविषयत्वमिति**। समानविशेष्यकत्वमिति भावः। घनगर्जितादावप्यनुमितेः संशयस्य नानुमित्यङ्गत्वम् इत्यभिप्रायेणाह—**यद्वेति**। [4]न चैवं तदज्ञानदशायां पक्षे साध्यवत्वग्रहदशायामुक्तयोग्यतासत्त्वेनानुमित्यापत्तिः। पक्षनिष्ठात्यन्ताभावप्रतियोगित्व[5]-

## तर्कचूडामणिः

नन्वेतदभिधेयत्वसाध्यकशब्दत्वादिलिङ्गे केवलान्वयि[6]न्यव्याप्तमित्यत आह—**एतच्चेति**। **आदिपदादिति**। तथा च न पूर्ववाक्यस्थावधारणं केवलान्वयिविशेषणमिति भावः। **विशेषणस्येति**। अत एव परम्परया सम्बन्धेन स्फटिकलौहित्यज्ञानं लौहित्यप्रकारमेवेति भावः। **यद्यपीति**। तथा च जातीयत्वविवक्षावैयर्थ्यमिति भावः। ननु भिन्नविषयत्वेऽपि संशयत्वमविकलमेवेत्यत आह—**स चेति**। **अतिप्रसङ्गादिति**। सिद्धसाधनस्थलेऽप्यन्यविषयसंशयदशायां पक्षत्वापत्तेरित्यर्थः। अस्तित्वं केवलान्वय्येवेति कथमन्वयव्यतिरेकित्वमित्यत आह—**घटेति**। तद्विरहश्च पटत्वादावेव प्रसिद्ध इति भावः। नन्वस्तित्वसंदेहे सति घटास्तित्वानुमानेऽर्थान्तरमित्यत आह—**तस्यैवेति**। अस्तित्वाभावकोटेरप्रसिद्धेः घटास्तित्वाभाव एव सन्देह इत्यर्थः। ननु पक्षीयसंशयस्यानुमित्यविरोधितया तद्विरोधित्वाभिधानमसंगतमित्यत आह—**साध्येति**। ननु [7]भिन्नविषयं प्रत्यपि भिन्नविषयकानुमितेर्विरोधि-

1. क. अप्रसङ्गादिति
2. ख. साध्यसिद्धिरिति
3. क साध्यसिद्ध्यप्रतिबध्यः
4. ख. न चैतदज्ञान-
5. ख. 'ज्ञानविरोधित्व' नास्ति।
6. क. अव्याप्तिरित्यतः
7. क, भिन्नविषयत्वं प्रत्यभिन्न-

यद्वा संशययोग्यतैवानुमानाङ्गम्, संशयस्य तदानीं विनाशात्। न च सापि साधकबाधकप्रमाणाभावः, प्रमेयत्वाभावासिद्धौ तत्प्रमाणासिद्धे-स्तदभावासिद्धिरिति वाच्यम्। पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वज्ञानस्यैव साध्यसाधकत्वेन तदभावस्यैव योग्यतात्वात्। प्रमेयत्वमत्यन्ताभाव-प्रतियोगीति भ्राम्यतः संशय इत्यन्ये।

## प्रकाशः

ज्ञानविरोधित्वज्ञानाभावस्यैव योग्यतात्वमित्याशयात्। अन्य इति। अत्रास्व-रसबीजमेवम्—प्रमेयत्वेऽत्यन्ताभावप्रतियोगित्वप्रसिद्धावपि प्रमेयो न वेति संशय-कोटिभूताखण्डप्रमेयत्वाभावस्यैवाप्रसिद्धिरेवेति।

[1](अन्ये तु) यदि तादृशो भ्रमस्तदा तत एव न केवलान्वयित्वम्। अन्यथा संदेहाभाव [2]इत्यादि तद्बीजमित्याहुः (इत्यप्याहुः)।

## तर्कचूडामणिः

गुणत्वेन निवर्तकतया सिद्धसाधनेऽपि पक्षतापत्तिरित्यत आह — साध्येति। ननु भिन्नविषयकस्य संशयस्य सिद्धिनिवर्त्यत्वाभावात् समानविषयकत्वमावश्यकमेवेत्यत आह — विशेष्यत्वमिति।

ननु संशयस्य तद्योग्यतापेक्षया लघुत्वात् तस्यैवानुमानाङ्गत्वम्, विनश्यद-वस्थसंशयसम्भवेन हेतुत्वसंगतिश्चेति यद्वेति ग्रन्थासंगतिरित्यत आह—घटेनेति। [घनेति]। अप्रसिद्धिरेवेति। न च प्रमेयत्वेऽत्यन्ताभावप्रतियोगित्वज्ञाने प्रमेयत्वा-त्यन्ताभावोऽपि ज्ञात एवेति वाच्यम्। तत्र घटात्यन्ताभावप्रतियोगित्वस्यैवारोपेणा-त्यन्ताभावे प्रमेयत्व[3]प्रतियोगित्वप्रसिद्धावपि न विशिष्टाभावप्रसिद्धिरिति भावः।

1. ख. 'अन्ये तु' नास्ति।
2. ख. एवेत्यादि
3. क. प्रतियोगित्वाप्रसिद्धावपि

नन्वेकरूपविकलमिदं कथं गमकम्? तत्त्वे वा व्यतिरेकविकलवत् रूपान्तरविकलमपि गमकं स्यादिति चेत्— न। अन्वयव्यतिरेकव्याप्त्योरन्यतरनिश्चयेनानुमित्यनुभवात्। युगपदुभयव्याप्त्युपस्थितौ विनिगमनाभावेन उभयोरपि प्रयोजकत्वे व्यतिरेकोपासना। व्यतिरेकश्च विपक्षवृत्तित्वशङ्कानिवृत्तिद्वारा व्यतिरेकव्याप्तावुपयुज्यते। अत्र तु विपक्षाभावेन शङ्कैव नोदेति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे केवलान्वयिप्रकरणम्

—:०:—

---

## प्रकाशः

एकरूपविकलमिति। विपक्ष[1]व्यावृत्तत्वविकलमित्यर्थः। अन्वयव्यतिरेकिणि तन्निश्चयेन गमकत्वदर्शनादिति भावः। रूपान्तरेति। पक्षवृत्तित्वादीत्यर्थः। अन्वयेति। तत्रैकव्याप्तिनिश्चयादप्यनुमितिदर्शनात् अन्यत्रान्वयव्याप्तिनिश्चये सति व्यतिरेकव्याप्तिनिश्चयप्रयोजकस्य [2]विपक्षाव्यावृत्तत्वस्य नापेक्षेति भावः। नन्वन्वय-

---

## तर्कचूडामणिः

जयदेवमतमाह—यदीति। तादृशभ्रमाङ्गीकारे [3]व्यतिरेकव्याप्तिभ्रमस्यापि सम्भवादिति भावः। तादृशभ्रमाभावे कोटयप्रसिद्ध्या सन्देह एव न [4]स्यादित्याह— अन्यथेति। प्रमेयत्वेऽत्यन्ताभावप्रतियोगित्वभ्रमेऽपि व्यतिरेकव्याप्ति[5]भ्रमस्यानावश्यकतया न केवलान्वयित्वानुपपत्तिः। अतो नेदमक्षरसवाजमिति सूचयति— इत्यप्याहुरिति।

ननु व्यतिरेकव्याप्तिविकलमित्यर्थाङ्गीकारे व्यतिरेकव्याप्तौ सत्यां विपक्षवृत्तित्वशङ्कानिरासद्वारा व्यतिरेक उपयुज्यत इत्युत्तरग्रन्थासंगतिरित्यत आह—विपक्षेति।

---

1. क. व्यावर्तकविकलम्
2. क. विपक्षव्यावृत्तत्वस्यानपेक्षा
3. ख. 'व्यतिरेक ............ भ्रमेऽपि' नास्ति।
4. क. ख. स्यादित्यत आह
5. ख. ग्रहस्यानाव-

## प्रकाशः

व्यतिरेकिणि अन्वयव्याप्तिप्रतीतौ विपक्षव्यावृत्तत्वस्यापि प्रयोजकत्वदर्शनात् तेन विनान्वयव्याप्तिनिश्चय एव न स्यादित्यत आह—व्यतिरेकश्चेति। अन्वयव्याप्ति-प्रतीताविति शेषः। व्यतिरेकव्याप्ताविति सति सप्तमी। तथा च [1]व्यतिरेकव्याप्तौ सत्यां विपक्ष[2]सद्भावे तद्वृत्तित्वशङ्कानिवृत्तिद्वारा विपक्षव्यावृत्तत्वमन्वयव्याप्तिप्रतीता-वुपयुज्यते, न तु साक्षात्। तथा चात्र स्वतःसिद्धे तादृशशङ्काविरहे तन्निवृत्ति-[3]प्रयोजनकस्य [4]व्यतिरेकस्य न कोऽप्युपयोग इति भावः।

इति श्रीरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे अनुमानखण्डे केवलान्वयिवादः

—— ० ——

## तर्कचूडामणिः

ननु [5]सपक्षवृत्तित्वविकलस्य व्यतिरेकिणो गमकत्वमिष्टमेवेत्यत आह – पक्षेति। ननु विपक्ष[6]व्यावृत्तत्वज्ञानस्यानुमितिहेतुत्वशङ्कायां[7] उभयव्याप्तिज्ञानस्यानुमितिहेतुत्वमसंगत मित्यत आह—तत्रेति। ननु अन्वयव्याप्तावुपयोगित्वस्य दर्शितत्वात् व्यतिरेक-व्याप्त्युपयोगित्वाभिधानमसंगतमित्यत आह—अन्वयेति। तर्हि मूलानुपपत्ति-रित्यत आह— व्यतिरेकेति। ननु व्यतिरेकव्याप्तिसत्तामात्रेण कथं [8]विपक्षव्यावृत्त-त्वज्ञानस्यान्वयव्याप्तिप्रतीतावुपयोगः, तस्य विशेषणज्ञानादिरूपत्वाभावादित्यत आह— तथाचेति। तर्हि तच्छङ्कानिवृत्तये विपक्ष[9]व्यावृत्तत्वज्ञानमत्राप्यावश्यकमित्यत आह – तथा चेति।

इति श्रीमद्धर्मराजाध्वरिविरचिते तर्कचूडामणौ अनुमानखण्डे केवलान्वयिवादः



1. ख. व्यतिरेकप्रतीतौ
2. क. सम्भवे
3. क. प्रयोजकस्य
4. क. 'व्यतिरेकस्य' नास्ति।
5. ग. पक्षवृत्तित्व-
6. क. व्यावृत्तज्ञानस्य
7. क. एतदनन्तरम् 'उभयव्याप्तिज्ञान-स्यानुमितिहेतुत्वशङ्कायाः' इत्यधिकपाठः
8. क. सपक्ष—
9. क. व्यावृत्तज्ञानम्

## अथ केवलव्यतिरेकिप्रकरणम्

केवलव्यतिरेकी त्वसत्सपक्षः। यत्र व्यतिरेकसहचारेण व्याप्तिग्रहः। ननु व्यतिरेकि नानुमानम्, व्याप्तिपक्षधर्मताज्ञानस्य तद्धेतुत्वात्। अत्र च व्यतिरेकसहचारात्तत्र व्याप्तिरन्वयस्य न पक्षधर्मता। न च व्याप्तपक्षधर्मत्वं साध्याभावव्यापकाभावप्रतियोगित्वं द्वयमनुमितिप्रयोजकमिति वाच्यम्। अननुगमात्। न चान्यतरवत्त्वं तथा; एकप्रमाणपरिशेषापत्तेः। न च तृणारणिमणिन्यायेनानुमितिविशेषे तत्कारणत्वमिति वाच्यम्। व्यतिरेकिसाध्येऽनुमितित्वासिद्धेः, उभयसिद्धक्लृप्तत्कारणस्याभावात्। न च साध्याभावव्यापकाभावप्रतियोगित्वमेवानुमितिप्रयोजकमिति वाच्यम्। गौरवात्। केवलान्वयिन्यभावाच्च।

### प्रकाशः

असत्सपक्ष इति। [1]सिद्ध्यसिद्धिव्याघातपराहतमिति तदर्थमाह—यत्रेति। व्यतिरेकेति। व्यतिरेकसहचारमात्रेणेत्यर्थः। दशाविशेषे धूमादेः केवलव्यतिरेकित्वमिष्टमेवेति भावः। एकेति। [2]प्रत्यक्षाद्यन्यतमत्वेन चतुर्णामेकजातीयप्रमाजनकत्वसम्भवादित्यर्थः। व्यतिरेकिसाध्य इति। अनुमिति[3]त्वप्रयोजकसामान्यसामग्र्यभावादित्यर्थः।

### तर्कचूडामणिः

नन्वन्वयव्यतिरेकोभय[4]सहचारग्रहाद्यत्र व्याप्तिग्रहस्तस्यापि केवलव्यतिरेकित्वापत्तिरित्यत आह—व्यतिरेकेति। ननु सर्वप्रमायाः एकप्रमाणजन्यत्वाभावात् कथं तत्परिशेष इत्यत आह—प्रत्यक्षेति। नन्वनुमिनोमीत्यनुव्यवसाय एव तत्साधक इत्यत आह—अनुमितित्वेति। तथा च तादृगनुव्यवसायोऽसिद्ध एव। सिद्धौ वा तस्य प्रमात्वनियमो नास्तीत्याशयः। भिन्नग्रन्थत्वशङ्कां निरस्यति एवमिति।

1. ख. साध्यासिद्धिपराहत इति
2. ख. प्रत्यक्षाद्यन्यतरत्वेन
3. ख. 'त्व' नास्ति।
4. क. सहचाराग्रहाद्यत्राव्याप्तिग्रहः

अथ साध्याभावव्यापकाभावप्रतियोगित्वेन साध्यव्याप्यत्वमेवानुमीयते। एवं व्यतिरेकव्याप्त्या अन्वयव्याप्तिमनुमाय यत्रानुमितिः स एव व्यतिरेकीत्युच्यत इति। तन्न। अन्वयव्याप्तेर्गमकत्वे व्यतिरेकव्याप्त्युपन्यासस्यार्थान्तरतापत्तेः। अन्वयव्याप्त्यनुकूलतया च तदुपन्यासेऽन्वयव्याप्तिमनुपन्यस्य तदुपन्यासस्याप्राप्तकालत्वादिति।

उच्यते। निरुपाधिव्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते प्रतियोग्यनुयोगिभावस्य नियामकत्वात् अन्वयव्यतिरेकिवत्।

---

## प्रकाशः

अथेति। वृत्तिमत्त्वेन विशेषणान्नावृत्तौ व्यभिचारः। एवं सति भेदकमाह—**एवमिति। निरुपाधीति**। साध्यसाधनव्यतिरेकसहचारेण साध्यानुमित्यनुकूलान्वयव्याप्तिरेव गृह्यत इत्यर्थः। नन्वत्रापि व्यतिरेकव्याप्त्युपन्यासेऽर्थान्तरमिति चेत्—न। नियतव्यतिरेकसहचाररूपायास्तस्याः अन्वयव्याप्तिज्ञानार्थमेवोपन्यासात्। अन्वयव्याप्तिज्ञानं च परस्य मानसमेव। न ह्यन्वयव्याप्त्युपन्यासेऽपि शाब्दमेव तज्ज्ञानमनुमितिजनकम्। वादिवचनस्य निर्णयाजनकत्वात्। तथा च यत्रान्वयसहचार[1]निश्चयसम्भवस्तत्रान्वयव्याप्तिज्ञापनाय नियतान्वयसहचाररूपा सैवोपदर्श्यते।

---

## तर्कचूडामणिः

ननु व्यतिरेक्याभासस्थले साध्यसाधनाभावसहचारस्य निरुपाधित्वाभावात् तत्सहचारादन्वयव्याप्तिभ्रमो न स्यात्। व्यतिरेकसहचारज्ञानस्य व्यतिरेकव्याप्तिग्रहेऽपि हेतुतया अवधारणानुपपत्तेः। वह्निधूमव्यतिरेकसहचारात् कृतकत्वादिग्रहापत्तिश्चेत्यत आह—**साध्येति**। एवकारो ग्रहणान्वयी, प्रायिकतया च निरुपाधिकत्वोक्तिरिति भावः। ननु साध्यसाधनाभावसहचारप्रयुक्तव्यतिरेकोदाहरणस्य कथमन्वयव्याप्तिप्रतिपादकत्वम्, तस्यापदार्थत्वादवाक्यार्थत्वाच्चेत्यत आह—**अन्वयेति**। नन्वन्वयो-

---

1. ख. 'निश्चय' नास्ति।

## प्रकाशः

यत्र तदसम्भवस्तत्र तदर्थं नियतव्यतिरेकसहचाररूपा व्यतिरेकव्याप्तिरेव । न चैवं नियमांशोपन्यासाय वीप्सावैयर्थ्यमिति वाच्यम् । तस्य व्यभिचाराभावप्रदर्शन-पर्यवसन्नतया परस्य व्यभिचारज्ञाननिवृत्तौ उपयोगात् तस्यापि [1]व्याप्तिग्रहौपयिकत्वात् । न चैवमप्यप्राप्तकालत्वम् । [2]लिङ्गभावेनैव व्यतिरेकसहचारस्यान्वय-व्याप्तिग्रहहेतुत्वात् लिङ्गतयैव ज्ञापकस्य ज्ञाप्यमनुपन्यस्य उपन्यासे अनाकाङ्क्षिताभिधानत्वेनाप्राप्तकालत्वात् ।

अत एवोपाधिज्ञानादौचित्यावर्जितं मानसमपि व्यभिचारज्ञानं सम्भवति । ज्ञाप्यव्यभिचारमनुपन्यस्य [3]ज्ञापकोपाधिरुपन्यस्यत इति सिद्धान्त इति भाव इत्याहुः ।

---

## तर्कचूडामणिः

दाहरणस्यानुमितिजनक[4]व्यापारजनकत्ववदत्रापि तथात्वमावश्यकमित्यत आह—**न हीति । वादीति ।** अन्यथा प्रतिज्ञामात्राभिधानप्रसङ्गादिति भावः । **एवमिति ।** व्यतिरेकोदाहरणस्यान्वयव्याप्तिग्राहकसहचारमात्रप्रदर्शकत्वे, व्याप्तिज्ञानमात्रस्य मानसत्व इत्यर्थः । **तस्यापीति ।** व्यभिचारज्ञानविरहस्यापीत्यर्थः । ननु तथापि कथम-प्राप्तकालत्वनिरास इत्यत आह—**लिङ्गतयेति ।** ननु लिङ्गतयेति व्यर्थमित्यत आह—**अत एवेति ।** साध्याभावाधिकरणसंनिकर्षाद्यभावस्थले व्यभिचारज्ञानस्य मानसत्वमित्यभिप्रायेण मानसमपीत्युक्तम् । नन्वेवमपि तादृशसंनिकर्षाभावस्थले उपाध्युद्भावने अप्राप्तकालत्वं स्यादेवेति चेत्—न । यत्र [5]ज्ञापकत्वावच्छिन्नस्य सर्वस्य लिङ्गतया ज्ञाप्यबोधकत्वं तत्रैव तस्य [6]दोषत्वात् । तदिदमाह—**लिङ्गतयैवेति ।** उपाध्यायोक्तदोषमाशङ्कते—**नन्विति । चाक्षुषत्वेति ।** चक्षुर्जन्यता-

---

1. ख. व्याप्त्युपयोगात्
2. ख. अलिङ्गभावेनैव
3. ख. 'ज्ञापक' नास्ति ।
4. ग. व्यापारवदत्रापि
5. क ज्ञानत्वावच्छिन्नस्य
6. ग. अदोषत्वात्

## प्रकाशः

ननु व्यतिरेकसहचारेण यद्यन्वयमात्रव्याप्तिज्ञानं जन्यत इत्यभिमतम्, तदा अन्वयमात्रसहचारज्ञान[1]जन्यान्वयमात्रव्याप्तिज्ञानतस्तस्य वैलक्षण्यमावश्यकम्। तद्विलक्षणहेतुजन्यत्वात् विषयकृतं च तन्नास्तीति जातिरूपमेव वाच्यम्। तन्न सम्भवति। चाक्षुषत्वादिना संकरापत्तेः। यदि चान्वयव्यतिरेकोभयव्याप्तिज्ञानं तेन जन्यत इति मतम्, तदा अन्वयव्यतिरेकोभयसहचारजन्यतदुभयव्याप्तिज्ञानतस्तस्य तुल्यविषयतया जातिरूपमेव वैलक्षण्यमुपेयम्। तदपि न युज्यते। चाक्षुषत्वादिनैव संकरापत्तेः।

न च व्यभिचारज्ञानविरोधिसहचारज्ञानत्वेनोभयसहचारज्ञानस्य हेतुत्वेन हेतुवैलक्षण्याभावान्न तत्र वैजात्यमिति वाच्यम्। सहचारस्य तज्ज्ञानस्य वा व्यभिचारज्ञानविरोधित्वाभावात् तत्सत्त्वेऽपि वह्न्यादौ धूमादिव्यभिचारोपलम्भादिति चेत्—न। स्वाधिकरणनिष्ठव्यभिचारज्ञानविरोधिसहचारज्ञानत्वेनोभयस्य हेतुत्वात् यत्राधिकरणे साध्यसाधनयोस्तदभावयोर्वा सहचारग्रहस्तत्र [2]साध्याभावसामानाधिकरण्यात्मकव्यभिचारज्ञानस्य सर्वथैवासम्भवात्।

---

## तर्कचूडामणिः

वच्छेदकजातिविशेषादिनेत्यर्थः। तस्य जातिविशेषस्य व्याप्यत्वे घटगोचरचाक्षुषप्रत्यक्षेऽपि सहचारज्ञानजन्यतावच्छेदकजातिविशेषापत्तिः। व्यापकत्वे व्याप्तिगोचरत्वाच्च प्रत्यक्षेऽपि तदापत्तिरिति संकर इत्यर्थः।

**हेतुवैलक्षण्येति**। हेतुतावच्छेदकवैलक्षण्येत्यर्थः। **सहचारस्येति** दृष्टान्तार्थम्। **स्वाधिकरणनिष्ठेति**। सहचारग्रहविषयीभूताधिकरणविषयकेत्यर्थः।

---

1. ख. जन्यादन्वयव्याप्तिज्ञानतः 2. क. हेतुसाध्या-

## तर्कचूडामणिः

तैरेवोक्तं दोषान्तरं [1][ननु व्यतिरेकसहचारज्ञानात् यत्रान्वयव्याप्तिग्रहस्तत्र साध्य-साधनसहचारानवगमे मानसोऽपि तद्ग्रहो न स्यात्। मनसो बहिरस्वातन्त्र्यात्। सामानाधिकरण्यस्वरूपाया व्याप्तेः उपनयमन्तरेण ग्रहासम्भवात्। तदुपनये च अन्वयसहचारज्ञानस्यैव तद्धेतुत्वसम्भवे व्यतिरेकसहचारज्ञानस्याकिंचित्करत्वात्। न च व्यतिरेकसहचारग्रहानन्तरं विशेषणज्ञानादौ सति पृथिवीत्ववान् स्वसमानाधिकरणतादृशाभावप्रतियोगीतरभेदवान् इत्येव मानसव्याप्तिग्रहः, न तु सहचार-विशेष्यकः पृथिव्यादौ विशेष्ये च ज्ञानमेव प्रत्यासत्तिरिति विशेष्य इव वैशिष्ट्यांशेऽपि प्रत्यासत्तेरावश्यकत्वात्। जन्यप्रत्यक्षत्वावच्छेदेन यावद्विषयसंनिकर्षस्यैव हेतुत्वोपगमात्। भ्रमस्थलेऽपि वैशिष्ट्यांशे ज्ञानप्रत्यासत्तिसत्त्वात्।

तस्मात् सहचारस्य विशेष्यत्वे विशेषणत्वे संसर्गरूपत्वे वा व्याप्तिग्रहात् पूर्वमन्वयसहचारज्ञानमावश्यकमिति किं व्यतिरेकसहचारज्ञानेनेति चेत्—न। पृथिवीत्वसमानाधिकरणाभावाप्रतियोगित्वज्ञाने प्रमेयत्वादावितरभेदसामानाधिकरण्य-ज्ञाने जाते व्यतिरेकसहचारज्ञानसहकृतेन मनसा अन्वयव्याप्तिग्रहसम्भवात्। न चेतरभेदसामानाधिकरण्यमात्रावगमेऽपि पृथिवीत्वेतरभेदयोः सामानाधिकरण्यं व्याप्तिशरीरप्रविष्टमनवगतमेवेति वाच्यम्। हेतावधिकरणे साध्यसामानाधिकरण्यस्यैव तच्छरीरनिविष्टत्वात्। न चैवमपि हेतुभूतपृथिवीत्वनिष्ठतया इतरभेदसामानाधि-करण्यस्य पूर्वमनवगमात् न तत्रोपनयः स्यादिति वाच्यम्। तद्ग्रहस्य हेतुसाध्य-सहचारग्रहाविरोधित्वात् तद्विरोधिसहचारज्ञानत्वेनैव तस्य हेतुत्वोपगमात्] शङ्कते--नन्विति। व्याप्तीति। धूमो वह्निव्याप्य इत्याकारकमित्यर्थः। व्यभिचारेति। धूमे वह्निव्याप्तिरित्याकारमित्यर्थः। ननु तर्हि विशेषणज्ञानादिसहकृतव्यतिरेकसह-

---

1. क. ख. अयं कुण्डलितो भागः नास्ति। ग पुस्तक एवाधिकपाठत्वेन दृश्यते।

## प्रकाशः

ननु व्यतिरेकसहचारेणान्वयव्याप्तिज्ञानं व्याप्तिविशेषणकं लिङ्गविशेष्यकं वा जन्यते, व्यभिचाराभावविशेषणकं सहचारविशेष्यकं वा । नाद्यः, तत्पूर्वमन्वयव्याप्तिज्ञानाभावात् लिङ्गेन्द्रियसंनिकर्षाभावाच्च । नान्त्यः, विशेषणज्ञानं विशेष्येन्द्रियसंनिकर्षं विना [1]तस्याप्यभावात् व्यतिरेकसहचारज्ञानमात्रकाले तयोरभावादिति चेत्—न । अन्त्यपक्षस्यैव युक्तत्वात् । इतरसामग्रीसत्त्व एव तस्य व्याप्तिग्राहकत्वाभ्युपगमात् विशेषणज्ञानादिसत्त्वे अन्वयसहचाराज्ञानेऽपि ततो व्याप्तिग्रह इत्येवाभिमतम्, न तु तव्द्यतिरेकेऽपीति । [2]तस्यान्वयव्यभिचारस्थानाभिषिक्तत्वात् । अन्यथा इतरकारणविरहे ततो न व्याप्तिनिश्चय इत्यन्वयसहचारस्यापि तद्धेतुत्वं न

## तर्कचूडामणिः

चार[3]ज्ञानमस्त्वित्यत आह—व्यतिरेकेति । [4]न च तस्य हेतुत्वोपगमात्? तथा च साध्यसाधनसहचारात्मकान्वयसहचारानवगमेऽपि व्यतिरेकसहचारज्ञानमात्रेण व्याप्तिग्रहः संगच्छते । किं च यत्र व्यतिरेकसहचारज्ञानानन्तरं साध्यसाधनसहचारेन्द्रियसंनिकर्षो विशेषणज्ञानं च तत्रान्वयसहचारानवगमेऽपि तस्य संयुक्तसमवायादिप्रत्यासत्तिसत्त्वात् सहचारविशेष्यकं चाक्षुषमपि व्याप्तिज्ञान सम्भवतीति व्यतिरेकसहचारज्ञानमर्थवदेवेति ।

नन्वन्वयव्यतिरेकिण्युभयसहचारादुभयव्याप्तिग्रहणे वैलक्षण्याभावात्कथं दृष्टान्त इत्याह—**उभयेति** । व्यतिरेकव्याप्तिघटकविशेषणाज्ञान इति शेषः । ननु व्यतिरेकसहचारज्ञानस्याप्यन्वयव्याप्तिग्रहहेतुत्वव्यवस्थापनात् व्यतिरेकव्याप्तेरेवेत्यवधारणानु-

1, क. तव्द्याप्त्यभावात्
2, ख. तस्यान्वयसहचारस्थाना-
3. ख. ज्ञानकमस्तीत्यत
ग. ज्ञानमित्यत
4. क. नैव तस्य

न चैवं व्याप्तिग्रह एव पृथिवीतरभिन्नेति भासितम्, नियतसामानाधिकरण्यरूपत्वात् व्याप्तेरिति चेत्—सत्यम्। गन्धवत्त्वावच्छेदेनेतरभेदस्य साध्यत्वात्। अत एवाचार्यः पक्षतावच्छेदके न हेतुत्वमनुमेने। पृथिवीत्वमितरभेदव्याप्यमिति प्रतीतावपि सर्वा पृथिवी इतरभिन्नेति पृथिवीविशेष्यकबुद्धेर्व्यतिरेकिसाध्यत्वाच्च।

---

## प्रकाशः

स्यात्। अन्वयेति। उभयसहचारादन्वयव्याप्तिरेव गृह्यत इति मतावष्टम्भेनेदमुक्तम्। एवमन्वयव्याप्तिग्रहे पक्षतावच्छेदकान्तरप्रतीत्यनियमात् प्रकारान्तरमाह—पृथिवीत्वमिति।

येषां केवलव्यतिरेकिणाभावरूपं साध्यमप्रसिद्धमपि सिध्यति अन्वयव्याप्तिज्ञानजनकविशेषणज्ञानादिविरहेऽपि व्यतिरेकव्याप्तिज्ञानादेवानुमित्युत्पादाभ्युपगमः तेषां मतेन प्रकारान्तरमाह—यद्वेति। तथा च पूर्वोक्तरूपेण व्यतिरेकसहचारस्य विशेष्यसंनिकर्षादिसत्त्वे अन्वयव्याप्तिज्ञानहेतुत्वम्, तदसत्त्वे च व्यतिरेकव्याप्तिज्ञानहेतुत्वमेव तस्येत्यनियम एव। न तु पूर्वास्वरसेन अयं ग्रन्थ इति ध्येयम्। व्यतिरेकव्याप्तेरिति पञ्चम्यन्तम्। साध्याभावेति। अत्र प्रतियोगिवैयधिकरण्याव-

---

## तर्कचूडामणिः

पपत्तिः। न च तस्य तद्धेतुत्वेऽपि प्रकृते साध्यादिविशेषणज्ञानाभावान्न तद्ग्रह इति वाच्यम्। साध्याप्रसिद्धौ व्यतिरेकव्याप्तिग्रहस्याप्यनुपपत्तेः तद्विशेषणकानुमित्यभावापत्तेश्चेत्यत आह—येषामिति। ननु साध्याप्रसिद्धिस्थले अन्वयव्याप्तिग्रहासम्भवेऽप्यन्यत्र तद्ग्रहः सम्भवत्येवेत्याशङ्क्य इष्टापत्तिरित्यत आह—तथा चेति। न त्विति। सांकर्याद्यस्वरसस्य निराकृतत्वादिति भावः। ननु व्याप्ते-

यद्वा व्यतिरेकव्याप्तेरेवान्वयेन गम्यगमकभावः। साध्याभावव्यापक-साधनाभावाभावेन साधनेन पक्षे साध्याभावाभावस्य साध्यस्य साधनात्। व्यापकाभावेन व्याप्याभावावश्यम्भावात्।

## प्रकाशः

च्छेदकावच्छिन्नः सन् योऽभावः प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नसाध्या-भावस्य व्यापकः तत्प्रतियोगित्वं व्यतिरेकिणि गमकताप्रयोजकत्वेनाभिमतम्, अन्यथा रूपादिविरुद्धसंयोगादे रूपादि[1]गमकतापत्तेः, संयोगे साध्ये द्रव्यत्वादेरन्वय-व्यतिरेकिताभावापत्तेश्च। [2]केवलान्वयिसाध्यकहेतोश्च तत्त्वेनावश्यं संग्राह्यत्वात्। अन्यथा तस्य त्रितयबहिर्भावापत्तेः।

## तर्कचूडामणिः

रगम्यत्वादगमकत्वाच्च षष्ठ्यर्थानुपपत्तिरित्यत आह— व्यतिरेकेति। व्यतिरेक-व्याप्तिबलात् साध्यसाधनयोर्गम्यगमकतेत्यर्थः। उपाध्यायोक्तमर्थं दर्शयति— अत्रेति।

[3]साधनाभावे तद्विशेषणस्य प्रयोजनमाह—अन्यथा रूपादीति। साध्या-भावविशेषणस्य तदाह—संयोग इति। तत्त्वेन [4]व्यतिरेकित्वेनेत्यर्थः। विभाग-सामान्याभावस्य संयोगसामान्याभावगमकत्वं स्यादेव। तत्र साध्यसाधनाभावयोः संयोगविभागसामान्ययोः साध्यत्वाभिमतसंयोगादिसमान्याभावसामानाधिकरण्याभावेन प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वात् इत्याशयेन विभागव्यक्तिविशेषा-भावस्येत्याद्युक्तम्। गमकत्वं न स्यादिति। व्यतिरेकव्याप्तिपुरस्कारेणेति शेषः।

1. क. गमकतापत्तिः
2. क. अकेवलान्वयि-
3. क. साधनाभावेन
4. क. व्यतिरेकत्वेन

## प्रकाशः

नन्वेवमपि विभागव्यक्तिविशेषाभावस्य संयोगव्यक्तिविशेषाभावगमकत्वं न स्यात्। तत्र संयोगरूपसाध्याभावस्य प्रतियोगिसामानाधिकरण्यनैयत्येन निरुक्तस्य गमकताप्रयोजकस्य तत्रासम्भवादिति चेद्—न। तस्य केवलान्वयित्वेन व्यतिरेकितया असंभावितत्वादित्याहुः।

एवं हि यत्र संयोगव्यक्तिविशेषस्तत्र विभागव्यक्तिविशेष इति व्यतिरेकव्याप्तिग्रमायां तत्संयोगाभावतद्विभागाभावयोर्गम्यगमकभावः कथं स्यात्। उक्तरीत्या तस्य व्यतिरेकित्वाभावात् अन्वयव्याप्त्यस्फुरणदशायां केवलान्वयित्वेनागमकत्वाच्च। न च तस्य तदा अगमकत्वमिति वाच्यम्। एवं यत्र वह्निविरहस्तत्र धूमविरह इति व्यतिरेकव्याप्तिग्रहे धूमस्यापि वह्निगमकतापत्तेरविशेषादिति प्रश्ने तादृशव्यतिरेकव्याप्तिग्रहस्य रूपादिविरुद्धसंयोगविशेषादिसाधारणतया अनन्यगत्या गुरोरपि निरुक्त-

---

## तर्कचूडामणिः

नन्वन्वयव्याप्तिपुरस्कारेण तस्य गमकत्वमस्तीत्यत आह—अन्वयेति। तादृशेति। अविशेषितेत्यर्थः। रूपादिविरुद्धेति। न च वायू रूपी संयोगित्वादिति व्यभिचारिण्यपि गमकतापादनसंभवेन विरुद्धत्वाभिधानं [1]अकिंचित्करमिति वाच्यम्। संयोगसामान्याभावस्य रूपाभावव्यापकत्वात्। न चैवमपि वायुघटसंयोगाश्रयत्वरूपव्यभिचारिणि तदापादनसंभव इति वाच्यम्। [2]तथाप्यत्यन्ताकौशलख्यापनाय तदभिधानसम्भवात् सर्वदा [3]साध्यासामानाधिकरण्यस्य गमकत्वापादने हि तद्गमकतावादिनोऽत्यन्ताकौशलं ज्ञाप्यते इति तात्पर्यम्। अत्रेति। [4]विभागव्यक्तिविशेषाभावस्थल

---

1. क. किंचित्करमिति
2. क. तन्वाप्यंताकौशल
   ख. तथाप्यत्यन्तकौशल
3. ख. साध्यसामानाधिकरण्यस्य
4. ख. विभागव्यक्तिविशेषस्थले
   ग. विभागवृत्तिविशेषाभावस्थले

## प्रकाशः

स्यैव [1]गमकत्वे तस्य चात्रासंभवात् तदा तदगमकत्वं [2]सुस्थमेवेति। अत एव च धूमस्यापि निरुक्तज्ञानादेव वह्निगमकत्वं नान्यथेत्युत्तरं प्रतिभातीति दिक्।

## तर्कचूडामणिः

इत्यर्थः। तदा व्यतिरेकव्याप्तिमात्रप्रतिसन्धानदशायामित्यर्थः। ननु यत्र वह्न्यभावस्तत्र धूमाभाव इति ज्ञानेपि निरुक्तविशेषणज्ञानदशायां [3]धूमस्य वह्निगमकत्वं न स्यादित्यत आह—अत एवेति। प्रतियोगि[4]व्याप्यतद्वैयधिकरण्यावच्छेदकावच्छिन्नान्यतरत्वमत्यन्ता[5]भावयोर्विशेषणमस्तु। एवं च विभागव्यक्तिविशेषाभावस्यापि व्यतिरेकितायां संग्राह्यत्वमेवेति। तत्रापि संयोगविभागव्यक्तिविशेषरूपयोः साध्यसाधनाभावयोः तद्वैयधिकरण्यानवच्छिन्नत्वेऽपि तव्द्याप्यत्वेनान्य[6]तरत्वगर्भगमकताप्रयोजकस्य विद्यमानत्वात्। यदि च निरुक्तस्याप्रतिसन्धानेप्यनुमितेर्नेदं प्रयोजकं तदा प्रतियोगिवैयधिकरण्याद्यप्रतिसन्धानेऽपि धूमादेर्व्यतिरेकितया गमकत्वात्तदपि न प्रयोजकम्। यदि च द्रव्यत्वादे[7]र्व्यतिरेकितया गमकत्वसिद्धये विरुद्धस्य तव्द्यावृत्तये च [8]तदावश्यकमिति धूमादावपि [9]तज्ज्ञानं कल्प्यते। [10]तदान्वयाप्रतिसन्धाने [11]व्यतिरेकप्रतिसन्धाने विभागव्यक्तिविशेषाभावस्य गमकत्वदर्शनादुक्तस्य नियामकत्वे यत्र [12]व्यतिरेकितया गमकत्वं [13]तत्र निरुक्त[14]प्रयोजकज्ञानमस्तीति कल्प्यते।

1. ख. गमकत्वम्
2. ख. तस्येष्टमेवेति
3. क. ज्ञानस्य
4. ग. व्याप्त
5. ग. अभावयोः सलक्षणमस्तु
6. क. तरगर्भ
7. क. व्यतिरेकतया
8. क. तदावश्यकमपि
9. क. ज्ञानं
10. क तदान्वयप्रतिसन्धाने
    ग, तदान्वयाद्यप्रतिसन्धाने
11. क. 'व्यतिरेकाप्रतिसन्धाने' नास्ति।
12. क. व्यतिरेकतया
13. ख. न तत्र
14. क. प्रयोजकज्ञानमपीति
    ग. प्रयोजकत्वज्ञानमस्तीति

## प्रकाशः

[1]अत्र चाप्रसिद्धसाध्याव्यतिरेकिणि साध्यरूपप्रतियोगिव्यधिकरणत्वेन साध्याभावस्य कथं ज्ञानमित्यत्र [एमः बोध्यः]। यत्तु प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावप्रतियोग्यप्रतियोगित्वेन साध्याभावो विशेषणीय इति। तन्न। व्यतिरेक्याभासोच्छेदापत्तेः। न च तत्त्वेन ज्ञानं गमकताप्रयोजकम्। तच्च क्वचित्प्रमा क्वचिद्भ्रम इति वाच्यम्। तत्त्वेन ज्ञानं व्यभिचारग्रहविरोधि न वा। आद्ये व्यतिरेकसहचारमात्रविषयतयैव गमकतापत्तौ नियमांशवैयर्थ्यापत्तिः। अन्त्ये तत्त्वेन भ्रमदशायां रूपादिविरुद्धत्वेन ज्ञातस्य संयोगविशेषस्य रूपादिगमकतापत्तिरेवेति।

---

## तर्कचूडामणिः

तस्माद्विभागव्यक्तिविशेषाभावस्य व्यतिरेकित्वं [2]अवर्जनीयमेवेति [3]कल्पान्तरं योतयति दिगिति।

[4]प्रतियोगिव्यधिकरणत्वेनेति। तद्वैयधिकरण्यावच्छेदकावच्छिन्नत्वेनेत्यर्थः। एतद्दोष[5]परिहारं शङ्कते—यत्त्विति। एतन्मते साध्याप्रसिद्धावपि साध्याभावे तादृशात्यन्ताभावप्रतियोगि[6]गगनाद्यप्रतियोगिकत्वं सुग्रहमिति भावः। तादृशात्यन्ताभावप्रतियोगिप्रतियोगिकेत्युक्ते तद्दोषतादवस्थ्यमित्याशयेन प्रतियोग्यप्रतियोगिकत्वेनेत्युक्तम्। रूपात्यन्ताभावस्य [7]संयोगविशेषसमानाधिकरणात्यन्ताभावप्रतियोगिप्रतियोगिकत्वाद्रूपादि[8]विरुद्धत्वेनातिव्याप्तिः। संयोगसाध्यकद्रव्यत्वहेतौ संयोगाभाव-

---

1. ख 'अत्र च .......इत्यादि-गमकतापत्तिरेवेति' इति ग्रन्थो नास्ति।
2. क. वर्तनीय
3. क. विकल्पान्तरं
   ख. 'विकल्पान्तरं' नास्ति।
4. क. प्रतियोगी
5. क. परिहाराय
6. ग. गगनाद्यप्रतियोगित्वं
7. क. संयोगाविशेष
8. क. विरुद्धेनाव्याप्तिः

## तर्कचूडामणिः

संग्रहाय प्रतियोगिव्याधिकरणेति । नन्वेवमपि द्रव्यत्वस्य [1]संयोगगमकत्वानुपपत्तिः । तादृशसंयोगाभावस्य वृक्षादावपि सत्त्वेन तत्र द्रव्यत्वाभावाभावात् । न च प्रतियोगिव्यधिकरणत्वमपि साध्याभावविशेषणमिति वाच्यम् । पूर्वोक्तदोषतादवस्थ्यात् । न च तदव्यापकत्वं, [2]तदभावानधिकरणयावत्तदधिकरणवृत्तित्वमेव विवक्षितम् । तच्च द्रव्यत्वाभावेऽप्यस्ति । संयोगानधिकरणयावत्संयोगाभावाधिकरणवृत्तित्वात्तस्येति वाच्यम् । एवं हि [3]विभागविशेषाभावस्य संयोगविशेषाभावगमकत्वं व्यतिरेकेण न स्यात् । तत्र साध्याभावरूपो यः संयोगविशेषः [4]तदभावानधिकरणाप्रसिद्धेः पूर्वोक्तदोषतादवस्थ्याच्च । न च तव्द्यापकत्वं तदभावव्याप्याभावप्रतियोगित्वमत्र विवक्षितमिति वाच्यम् । अन्वयव्याप्तेरेव ग्रहणापत्तेः । रूपादिविरुद्धसंयोगादेरप्युक्तव्यापकत्वाभावेन वारणे [5]पूर्वप्रतीकवैयर्थ्यापत्तेश्चेति चेन्न । व्यापकपदेन सामानाधिकरण्यमात्रस्यैव विवक्षितत्वात् । एवं चाग्रे नियमसंशयवैयर्थ्यापादनं यथायुक्तं तथाग्रे वक्ष्यते । किमेतत्स्वरूपसत् अनुमित्यंगं [6]उत तज्ज्ञानमात्रे व्यतिरेकीति । तत्र साध्यस्य तादृशात्यन्ताभावप्रतियोगित्वादिति भावः । द्वितीयमनूद्य दूषयति न चेति । व्यतिरेकेति । तादृशसाध्याभावसमानाधिकरणात्यन्ताभावप्रतियोगित्वज्ञानमेव गमकमस्तु । न चैतज्ज्ञाने सति व्यभिचारज्ञानं संभवति । तादृशात्यन्ताभावप्रतियोग्यप्रतियोगिकत्वज्ञानस्य तद्विरोधित्वेनोक्तत्वादिति भावः । न चैवमेव परस्याभिमतमिति नेष्टापादनमिति वाच्यम् । तथा सति व्यतिरेक्यनुमितेरेवानुत्पत्त्यापत्तेः व्याप्तिज्ञानरूपकारणाभावात् उक्तज्ञानस्य [7]व्याप्तिद्वयानवगाहित्वात् अनुमितिमात्रे व्याप्तिज्ञानस्य प्रयोजकत्वादित्यग्रिमग्रन्थविरोधाच्च । वस्तुतस्तु तादृशसाधनसमाना-

---

1. ख. संयोगि
2. क. तदभावाधिकरण
   ग. तदविरुद्धानधिकरण
3. क विशेषविभाग
4. क. तदनुभावानधिकरण
5. क. पूर्वप्रतीक
6. क. तज्ज्ञानमात्रे
7. क. व्याप्तिद्वयावगाहित्वात्

अथैवं न साऽनुमितिः क्लृप्ततद्धेतुलिङ्गपरामर्शाभावात्, अन्यथाऽननुगम इति चेन्न। अनुमितिमात्रे व्याप्तिज्ञानस्य प्रयोजकत्वात्। न चैव-

---

### प्रकाशः

अनुमितिमात्र इति। यद्यपि व्यतिरेकिणि व्यापकताज्ञानमात्रं हेतुः, न तु व्याप्तिधीरपि तथापि तस्य व्यतिरेकव्याप्तिविषयतयैव हेतुत्वं अन्वयव्याप्तिज्ञानेन तुल्ययोगक्षेमत्वात्। अन्यथा अन्वयिन्यपि व्यापकताज्ञानमेव हेतुः स्यात्। यथा चात्र नेष्टापत्तिस्तथोक्तम्।

ननु तथापि व्याप्तिज्ञानत्वमतिप्रसक्तमिति स्वव्याप्तिज्ञानत्वेन हेतुत्वं वाच्यम्। तच्च न व्यतिरेकव्याप्तिसाधारणमिति चेन्न। स्वव्यभिचारधीविरोधि-

---

### तर्कचूडामणिः

प्रकारात्यन्ताभावप्रतियोग्यप्रतियोगिकत्वेन [1]साध्याभावज्ञानस्य व्यभिचाराभावानवगाहितया न व्यभिचारग्रहप्रतिबन्धकत्वमिति ध्येयम्। तदग्रेति। स्वात्यन्ताभावस्य तादृशात्यन्ताभावप्रतियोग्यप्रतियोगिकत्वेन भ्रमदशायामित्यर्थः। निरुक्तज्ञानस्य हेतुसाध्य[2]सामानाधिकरण्यावगाहितया [3]विरुद्धत्वग्रहाप्रतिबन्धकत्वात् इति भावः। न च [4]विरुद्धत्वज्ञानमेव प्रतिबन्धकमिति वाच्यम्। सति परामर्शे तस्याकिञ्चित्करत्वादिति भावः।

तथापीति। [5]तथा च साध्याभावनिष्ठव्याप्तिनिरूपकाभावप्रतियोगित्वज्ञानं व्यतिरेक्यनुमितौ हेतुरिति भावः। स्वव्यभिचारेति। साध्यनिष्ठ[6]साधनसमानाधिकर-

---

1. ग. 'साध्याभाव...... प्रतियोग्यप्रतियोगिकत्वेन' नास्ति।
2. क. सामानाधिकरण्यानवगाहितया
3. ख. विरुद्धत्वाग्राहकप्रतिबन्धकत्वात्
   ग. विरुद्धत्वभावप्रतिबन्धकत्वात्
4. क. विरुद्धज्ञानमेव प्रतिबन्धकत्वमिति
5. ग. 'तथा च' नास्ति।
6. ग. 'साधन' नास्ति।

मतिप्रसङ्गः, अनुमितिसामान्यसामग्र्यां सत्यामप्यनुमितिविरहादनुमित्यनुत्पत्तेः, विशेषसामग्रीसापेक्षाया एव सामान्यसामग्र्या जनकत्वात् । अन्वयिव्यतिरेकिविशेषद्वयसामग्री च नास्त्येव ।

## प्रकाशः

विषयव्याप्तिज्ञानत्वेन हेतुत्वात् । एवं च यद्यपि परामर्शद्वयस्यापि अनुगमयितुं शक्यत्वात् तस्यानुमितिमात्र एव हेतुत्वसम्भवात् विशेषद्वयस्याभिधानं विरुद्धम्, तथापि व्यतिरेक्यनुमितौ व्याप्यतावच्छेदकावच्छिन्नाभावविषयत्वं अन्वयानुमितौ व्यापकता-

## तर्कचूडामणिः

णात्यन्ताभावप्रतियोगित्वधीविरोधीत्यर्थः । उपाध्यायोक्तदोषं जयदेवोक्तेन परिहरति । यद्यपीत्यादिना । फलभेद इति । न त्वनुगतहेत्वभावेन फलभेदाभिधानमिति भावः । ननु व्यतिरेक्यनुमितेर्व्याप्यतावच्छेदकावच्छिन्नाभावविषयत्वाभावे यत्र प्रमेयत्वाभावस्तत्र वाच्यत्वाभाव इति व्यतिरेकव्याप्तिभ्रममूलानुमितेरपि व्यापकतावच्छेदकावच्छिन्नविषयत्वे प्रमात्वापत्तिः । [1]न च व्याप्तिभ्रममूलानुमितेः याथार्थ्यं युक्तम् । अस्मन्मते तु प्रमेयत्वाभावाभाववानिति [2]ज्ञानं यथार्थमेवेति । तन्न । अबाधितत्वभ्रमस्यैव तद्भ्रम[3]प्रयोजकतयानुमितेः, प्रमात्व[4]संभवात् । अत एवाकाशे घटत्वव्याप्यत्वभ्रमानन्तरं घटत्वाभावेनाकाशाभावानुमितेः याथार्थ्यं सर्वसिद्धमिति भावः ।

ननु व्यतिरेक्यनुमितेः व्याप्यतावच्छेदकावच्छिन्नाभावविषयत्वे पृथिवी नेतरभेदाभाववतीति [5]प्रतिज्ञा स्यान्नत्वितरभेदवतीति अनुमितिसमानाकारज्ञानजनकत्वात्

1. ख, अत्र ग्रन्थपातः
   ग. न च व्याप्तिभ्रममूलानुमितेः
2. ख. ग. ज्ञानमयथार्थमेवेति
3. क. तद्भ्रमप्रयोजकतानुमितेः
4. क. संभवादाहात एवाकाशघटत्वव्यापकत्वभ्रमानन्तरं
5. ख. 'प्रतिज्ञा स्यान्न त्वितरभेदवतीति' नास्ति ।

ननु पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादिति व्यतिरेकिणि साध्यमसिद्धं, तथा च न व्यतिरेकिनिरूपणं न वा पक्षत्वं न वा लिङ्गजन्यसाध्यविशिष्टतज्ज्ञानं तेषां साध्यज्ञानजन्यत्वात् । अथ साध्यं प्रसिद्धं तदा यत्र प्रसिद्धं तत्र हेतोरवगमेऽन्वयित्वं अनवगमे असाधारण्यम् । किञ्च इतरभेदो न स्वरूपं अधिकरणप्रतियोगिनोः पृथिवीजलाद्योरनुमानात् प्रागेव सिद्धेः नापि वैधर्म्यं जलादिनिष्ठात्यन्ताभावप्रतियोगिसत्त्वम्, तद्धि पृथिवीत्वादिकं नच सिद्ध्येत । न च जलादिनिष्ठात्यन्ताभावप्रतियोगित्वेन पृथिवीत्वं न सिद्धमिति वाच्यम् । जलादौ पृथिवीत्वात्यन्ताभावग्रहदशायां पृथिवीत्वेऽपि

## प्रकाशः

...च्छेदकावच्छिन्नविषयत्वं अनुभूयत इति फलभेदे आवश्यके सामग्रीभेदोऽप्यावश्यक इत्यभिप्रायेणैतदभिधानम् । अत एव [1]च टीकादौ नेदं निरात्मकं जीवच्छरीरमित्येवानुमित्याकारप्रदर्शनमिति भावः । अतिप्रसङ्ग इति । पक्षधर्मताज्ञानं विनापि व्याप्तिग्रहादनुमित्यापत्तिरित्यर्थः । अन्वयीति । अतिप्रसङ्गस्थल इति शेषः ।

## तर्कचूडामणिः

प्रतिज्ञावाक्यस्येति चेत्—न, अप्रसिद्धसाध्यकव्यतिरेकिवादिमत इतरत्वस्यैव [2]व्यापकतया गृहीतत्वेन तदवच्छिन्नात्यन्ताभावस्य तद्वदन्योन्याभावस्य वा अनुमितिविषयत्वेन प्रतिज्ञाया अपि तत्समानप्रकारकज्ञानजनकत्वात्विरोधादिति । [3]नन्वन्वयव्याप्तिज्ञानस्य व्यभिचारग्रहविरोधित्वाभावात् कथमतिप्रसङ्ग इत्यत आह पक्षेति । ननु बाधादिना अनुमित्यनुत्पादस्थले अन्यतरसामग्र्याः सत्त्वात् कथं नास्त्येवेत्युक्तमित्यत आहातिप्रसंगेति । ननु साध्याप्रसिद्धावपि [4]सिद्ध्यभावरूपपक्षत्वमवि-

1. क. टीकादानेदं
2. ग. व्यापकतया
3. क. नत्वन्यव्याप्ति
   ख. नन्वन्याव्याप्तिज्ञानस्य
4. क. साध्याभावरूप

तत्प्रतियोगित्वग्रहात् । अन्योन्याभावस्तु भेदो यद्यपि साध्यं सम्भवति-वैधर्म्यज्ञानसाध्यत्वादन्योन्याभावग्रहस्य, तथापि जलादिप्रतियोगिकान्योन्याभावस्य अप्रसिद्धिः । न च जलादिप्रत्येकान्योन्याभावः साध्यः, असाधारण्यप्रसङ्गात् ।

अथ पृथिवी तेजोभिन्ना न वेति संशयेन तेजोभिन्नत्वेऽवगते पृथिवी तेजोभिन्ना सती जलादिद्वादशभिन्ना न वेति संशये तेजोभिन्नत्वे सति जलादिद्वादशभिन्नत्वं प्रसिद्धं तदेव साध्यम्. एकविशेषणविशिष्टे विशेषणान्तरबुद्धेरेव विशिष्टवैशिष्ट्यज्ञानत्वात्, एवञ्च संशयप्रसिद्धं साध्य-

## प्रकाशः

पक्षत्वमिति । संदेहघटितपक्षत्वमित्यर्थः । नन्वनवगममात्रेण नासाधारण्यम् । किंतु तद्व्यावृत्तत्वग्रहेणैवेत्यपरितोषादाह— किं चेति । वैधर्म्यमित्यस्यैव विवरणं जलादीति । वैधर्म्येति । पृथिवीत्वस्य हेतोर्वैधर्म्यरूपत्वादिति भावः । तथापीति । मिलितस्याप्रसिद्धिरिति भावः ।

## तर्कचूडामणिः

फलमेवेत्यत आह संदेहेति । पौनरुक्त्यं वारयति [1]वैधर्म्येणेति । ननु [2]वैधर्म्यज्ञानस्य तद्धेतुत्वेपि किमायात पृथिवीत्वज्ञानस्येत्यत आह पृथिवीत्वस्येति ।

ननु जलादिप्रत्येकान्योन्याभावास्तत्र तत्र [3]प्रसिद्धा एवेत्यत आह मिलितस्येति । ननु तेजोभिन्नत्वे सति जलादिद्वादशभिन्नत्वं कथमुक्तसंशयेन विषयीकर्तव्यं तस्य [4]तत्पूर्वं अप्रसिद्ध्या तज्जनकविशेषणतावच्छेदकप्रकारकविशेषणज्ञानाभावात् ।

1. ग. वैयर्थ्येति
2. ग. वैयर्थ्यज्ञानस्य
3. ग. सत्त्येवेत्यत
4. घ. तत्पूर्वस्य प्रसिद्ध्या तज्जन्य-तावच्छेदकप्रकारक

मादाय व्यतिरेकादिनिरूपणम् । यद्वा पृथिवी जलादिभिन्ना न वेति प्रत्येकं त्रयोदशसंशयविषयाणां त्रयोदशान्योन्याभावानां समुदायः पृथिव्यामवगतो व्यतिरेकादिनिरूपकः । न चैवं पृथिव्यामेव साध्यप्रसिद्धेर्व्यतिरेकिवैयर्थ्यम्, साध्यनिश्चयार्थं व्यतिरेकिप्रवृत्तेः । न चासाधारण्यम्, समुदितान्योन्याभावानां साध्यत्वे सपक्षाभावादिति चेन्न ।

## प्रकाशः

आचार्यमतमाशङ्कते—अथेति । [1]तेजोभिन्नत्वे सति द्वादशभिन्नत्वं कथं पृथिव्यामुक्तसंशयेनापि विषयीकर्तव्यम् । तस्य तत्पूर्वमप्रसिद्ध्या तज्जनकविशेषणज्ञानाविषयत्वादित्यत आह—एकेति । एकविशेषणविशिष्टतयोपस्थित इत्यर्थः यद्वेति । अत्र त्रयोदशत्वमविवक्षितम् । समूहालम्बनी[2]भूतैकसंशयेऽपि तावद्भेदानां प्रत्येकं कोटित्वसंभवादिति ध्येयम् । यदि च त्रयोदश[3]संशयाः तदा पूर्वपूर्वसंशयो-

## तर्कचूडामणिः

[4]विशिष्टवैशिष्ट्यज्ञाने तस्यैव हेतुत्वादित्याशङ्कायामुक्तमेकेति । तदयुक्तम् । वस्तुगत्या दण्डिनि पुरुषत्वबुद्धेः विशिष्टवैशिष्ट्यज्ञानत्वापत्तेः इत्यत आह एकेति । ननु यदा त्रयोदश संशयाः तदा अन्त्यसंशयकाले पूर्वपूर्वसंशयविनाशात् कथं तावद्भेदोपस्थितिरित्यत आह यदि चेति । ननु तावतां भेदानां तत्तदधिकरणेषु सुग्रहतया निश्चयरूपैव तावद्भेदप्रसिद्धिः सम्भवतीति किमनेन संशयेन । न हि त्रयोदशत्वावच्छिन्नप्रतियोगिकभेदस्य सामान्याभावरूपस्य संशय-

1. ख. 'तेजोभिन्नत्वे ............ एकेति' इति ग्रन्थस्त्रुटितः'
2. क. भून एकसंशये तावद्भेदानां
3. क. त्रयोदशसंशय
4. क. विशिष्टमेव वैशिष्ट्यज्ञाने

## प्रकाशः

पस्थितभेदविशिष्टत्वेनोपस्थिते [1]धर्मिण्यन्त्यसंशयेन तावद्भेद[2]समुदायो विषयीक्रियत इति द्रष्टव्यम्। ऐकाधिकरण्येन तावद्भेदोपस्थितये उक्तसंशयानुसरणम्। अन्यथा कोटिप्रसिद्धिं विना [3]संशयस्याप्रसिद्धेः निश्चयरूपापि तावद्भेदरूपसाध्यप्रसिद्धिः न [4]भवत्येव। ऐकाधिकरण्यविशिष्टतावद्भेदसाधनं चासाधारण्य[5]निरासार्थं जलादौ विपक्षत्वसिद्ध्या व्यतिरेकव्याप्तिग्रहणार्थं च। अन्यथा तेजोवाय्वादिद्वादशभेदस्य जलादावपि सत्त्वे त्रयोदशभेदाभावस्य तत्रासत्त्वे तदसम्भव एव स्यात्। व्यासज्य-वृत्तिप्रतियोगिकाभावानभ्युपगमात्। प्रत्येकभेदसाधने चासाधारण्यात्। तथा

---

## तर्कचूडामणिः

विषयत्वं सम्भवति। तत्पूर्वं तदप्रसिद्धेः संशयस्यैवायोगादित्यत आह—ऐकाधि-करण्येनेति।

[6]ननु तावद्भेदानामेव साध्यत्वमस्त्वित्यत आह **ऐकाधिकरण्येति**। नन्व-साधारण्यं दशाविशेष एव दोष इत्यनुशयादाह **जलादाविति**। ननु प्रत्येक-भेदानामेव साध्यत्वम्। तत्र च प्रत्येकमेव [7]पक्षत्वमित्यत आह **प्रत्येकेति**। एक-बुद्ध्युपारूढ[8]त्वं बोध्यम्। समुदितत्वं वारयति **ऐकाधिकरण्येति**। **उपाध्यायोक्त-माहात्रेति**। प्रतियोगिसंशये सति नाभावनिश्चय इत्यत्र किं तस्य प्रतिबन्धकत्वात् उत प्रतियोगिनिश्चयरूप[9]हेत्वभावात् [10]इति विकल्प्य आद्य आह **पृथिव्यामिति**।

---

1. ख. धर्मिण्यन्तिमसंशयेन
2. क. समुदायी
3. क. संशयस्यासिद्धेः
4. ख. 'न' नास्ति
5. ख. निरसनार्थं जलादेर्विपक्ष
6. ख. 'ननु तावद्भेदानानेव ....... ऐकाधिकरण्येति' नास्ति।
7. ग. विपत्वं
8. ग. 'त्वं बोधम्' नास्ति।
9. क. हेतुत्वाभावात्
10. क. 'इति विकल्प्य' नास्ति।

साध्यनिश्चये हि साध्यव्यतिरेकनिश्चयो भवत्येव साध्यसन्देहे तद्व्यतिरेकसंशयस्य वज्रलेपत्वात्, तथा च संशयरूपा साध्यसिद्धिरिति शिष्यबन्धनम्, एतेन पृथिवी जलादिभ्यो भिन्नेति विप्रतिपत्तिरूपवाद्दि-वाक्याद्वाकाङ्क्षादिमतोऽपूर्वार्थप्रतिपादकात् साध्यप्रसिद्धिरिति परास्तम्। वाक्यादेव पृथिव्यां साध्यसिद्धेर्व्यतिरेकिवैयर्थ्यात्। न च तद्बुद्धौ वादिवाक्यजन्यत्वेनाप्रामाण्यसंशयात् निश्चयेऽपि संशय इति तन्निश्चयार्थं व्यतिरेकीति वाच्यम्। तर्हि संशयप्रसिद्धं साध्यम्, तस्य च न व्यतिरेक-निश्चायकत्वमित्युक्तत्वात्, स्वार्थानुमाने तदभावाच।

---

## प्रकाशः

वैकाधिकरण्यावच्छिन्नत्वरूपविशेषणाभावाद्विशिष्टाभावसत्त्वेन तस्य विपक्षत्वात् न तदसम्भव इति भावः। समुदितेति। ऐकाधिकरण्या[1]वच्छिन्नेत्यर्थः। साध्य-निश्चय इति।

पृथिव्यां जलादित्रयोदशभेदसंशये सति जले न तत्संशयः तत्र जलभेदा-भावस्यैव ग्रहात्। एकदेशविरहनिश्चयस्यापि समुदायसंशयविरोधित्वात्। ननु मा [2]भूत्तदा तत्संशयः। तव्द्यतिरेकनिश्चयोऽपि न स्यात्। प्रतियोगिनिश्चयस्य अभावनिश्चयहेतुत्वात्। तथा च कथं तत्र व्यतिरेकव्याप्तिग्रहः स्यादिति चेन्न।

---

## तर्कचूडामणिः

भिन्नधर्मिकसंशयस्य तदप्रतिबन्धकत्वादिति भावः। द्वितीयमनूद्य दूषयति नन्विति। ननु प्रतियोगिनिश्चयत्वेनैव तस्य हेतुत्वम्। अन्यथा स्थाणुत्व[3]संशयानन्तरं

---

1. ख. वच्छिन्नानामिति भावः
2. क. भूतत्संशयः
3. ख. 'संशयानन्तरम् ........ स्थाणुत्व' नास्ति।

## प्रकाशः

लाघवेन प्रतियोगिज्ञानत्वेनैव तस्य तद्धेतुत्वात् । पृथिव्यां जलादित्रयोदशभेद-संशये सत्यपि जलं न जलादित्रयोदश[1]भेदवदिति निश्चयस्यानुभव[2]सिद्धत्वाच्च । न च तत्र तद्ग्राहक[3]मानासम्भवः । तत्संशयरूपायामेव समुदितत्रयोदशभेदाभाव-प्रसिद्धौ सत्यां जलं जलादित्रयोदश[4]भेदसमुदायाभाववत् तदेकदेशभूतजल-भेदाभाववत्त्वात् [5]यत्समुदायैकदेशभेदाभाववत् [6]तत्समुदायाभाववदिति सामान्य-व्याप्तिमूलकानुमानस्यैव संभवात् । नहि सामान्यव्याप्तिमूलकेऽप्यनुमाने प्रकृत-साध्यहेत्वोः सहचार[7]निश्चयापेक्षा यथा तद्देहं तदा मैत्राभाववत्[8]त्स्मरणार्हमैत्रयोगित्वे-

## तर्कचूडामणिः

'अयं स्थाणुरत्र नास्ती'ति अभावज्ञानापत्तेरिति चेन्न । तत्र तत्संशयस्यैव प्रतिबन्धकत्वात् । 'अयं स्थाणुरत्र नास्ती'ति निश्चयस्यापि पुरोवर्तिनि स्थाणुत्व-निश्चयरूपतया तदंशे स्थाणुत्वसंशयस्य ग्राह्याभावावगाहित्वात् [10]विशेषादर्शनदशायां तस्यापि प्रतिबन्धकत्वस्वीकारात् । न चैवं पृथिव्यां त्रयोदशभेदसंशयस्यापि [11]जलविशेष्यकव्यतिरेकनिश्चये प्रतिबन्धकत्वापत्तिरिति वाच्यम् । न हि जलादा-वितरभेद[12]व्यतिरेकनिश्चयस्य पृथिव्यंशे तद्भेदवैशिष्ट्यावगाहित्वं येन तथा स्यात् । [13]किं त्वितरभेदप्रतियोगिनि प्रतियोगितावच्छेदकवैशिष्ट्यावगाहित्वम् । न च तत्रेतरभेदे धर्मिणि [14]इतरभेदत्वावगाहिसंशयः । किं तु पृथिव्यामेव इतरभेदांशा-

1. क. भेदवतीति
2. क, सिद्धत्वात्
3. क. मानाभावः । संशय
4. ख. भेदाभाववन्
5. क. यत्समुदायैकदेशाभाववत्
6. क. भाववत्तदिति
7. ख. ग्रहापेक्षा
8. ख. मैत्राभाववदित्यत्र
9. ख, 'स्मरणार्ह ..... अनिष्ट-प्रसङ्गासम्भवात्' इति ग्रन्थ-स्त्रुटितः ।
10. ख. विशेषदर्शन
11. ख. प्रतिबन्धकत्वात
12. ग. 'व्यतिरेक' नास्ति ।
13. क. किं त्वनभेदे प्रतियोगिनि
ख. किं त्वितरभेदे
14. ख. इतरभेदे त्वावगाहिसंशयः

## प्रकाशः

नास्मर्यमाणत्वे सति स्मर्यमाणत्वात् स्मरणार्हयद्योगित्वेनास्मर्यमाणत्वे सति स्मर्यते यत्तत्तदभाववदिति सामान्यव्याप्तिमूलकेऽनुमाने। अन्यथा तत्रापि तदपेक्षायां तद्विरहदशायां न तदवतार इति तदा तद्विषयेऽनुपलब्धिरेव मानं स्यादिति जितं मीमांसकेन। न चैवं संशयप्रसिद्धस्यासदर्थस्यापि व्यतिरेकिणः सिद्धिप्रसङ्ग इति वाच्यम्। संशयोपस्थितस्यापि यस्य व्यतिरेकिनिष्ठप्रसङ्गः तेनैव सह हेतोर्व्याप्तिग्रहादसदर्थस्य व्यतिरेके अनिष्टप्रसङ्गासम्भवात्। [1]वस्तुतस्तूक्तसंशयानन्तरं त्रयोदशभिन्नत्वस्य तदभावस्य च निश्चयविषयत्वमपि न दुर्लभम्। [2]तदनुव्यवसायरूपेणैव निश्चयेन [3]तत्प्रकारत्वेनोभयोरपि विषयीकरणादिति।

---

## तर्कचूडामणिः

वगाहीति भिन्नविषयत्वादेव न प्रतिबन्धकत्वम्। न चैवं तन्मते संशयाभावस्यापि कारणत्वमिति गौरवापत्त्या प्रतियोगिज्ञानस्यैव निश्चयत्वेन हेतुत्वमस्तु लाघवादिति वाच्यम्। ग्राह्यव्यतिरेकज्ञानमात्रस्य ग्राह्य[4]निश्चयप्रतिबन्धकतया तदभावहेतुतायाः [5]क्लृप्तत्वादित्याशयः। [6]विशेषणज्ञानार्थमाह **संशयेति**। **तदपेक्षायामिति**। प्रकृतहेतुसाध्यसहचारग्रहापेक्षायामित्यर्थः। **तदवतारः** अनुमानावतारः। **न चैवमिति**। [7]भूर्विषाणोल्लिखितेति ज्ञानानन्तरं [8]तद्विषाणं शशीय वा न वेति संशयेन शशविषाणोल्लिखितत्वस्यापि [9]प्रसिद्धिसम्भवात् इति भावः।

---

1. क. वस्तुतः अत्रोक्त
2. रू. तदनुव्यवसायेन
3. ख. तत्प्रकारकत्वेन
4. क निश्चयाप्रति
5. ग. 'क्लृप्तत्वात् ......... अनुमानावतारः' नास्ति।
6. क. विशेषेण
7. ख. भूविशेषणाल्लिखितेति
   ग. शशविषाणाल्लिखितेति
8. ख. ग. तद्विशेषणं शशीयं वा न वेति
9. क. प्रसिद्धसम्भवात्

## प्रकाशः

अत्राहुः । यत्तद्भ्यां सामान्यतो व्याप्तिरनुगतव्याप्यतावच्छेदकाभावान्नानुमानाङ्गमिति ग्रन्थकृतैवोक्तत्वादुक्तानुमानं न [1]व्यतिरेकनिश्चायकम् । प्राङ्नास्तीत्यनुमानमपि तद्वत्तया [2]अस्मर्यमाणत्वहेतोरन्वयाप्रतीतौ व्यतिरेक्येव । तदुभयानवतारे प्राङ्नास्तीति बुद्धेरसिद्धेः । यत्तु अनुव्यवसायेन निश्चयरूपा प्रसिद्धिरिति । तन्न । यादृशो हि निश्चयो [3]व्याप्तिविषयकस्तादृशो निश्चयो व्याप्तिग्राहकः, अनुव्यवसायस्य तथात्वाभावात् । विषयविशेषणी[4]भूतधर्मग्रहस्य व्याप्तिधीहेतुत्वात् । अनुव्यवसायेन तज्ज्ञानविशेषणत्वेन तदवगाहनादिति । वस्तुतस्तु भेदसमुदाया[5]भावरूपस्यापि

---

## तर्कचूडामणिः

नन्वन्यत्र प्रतियोगिनिश्चयत्वेन हेतुत्वादत्रापि तदभावे अनुभव [6]एवासिद्धः । उक्तानुमानं च [7]न प्रतियोग्यनिश्चयेनाभावनिश्चायकमित्यत आह वस्तुत इति । [8]तत्प्रकारत्वेनेति । त्रयोदशभेदसंशयवानिति संशय[9]प्रकारकत्वेनेत्यर्थः । जयदेवोक्तसमाधिमाहात्रेति । उक्तत्वादिति । अर्थापत्तिस्थल इति शेषः । तथात्वाभावात् [10]तादृक्त्वाभावादित्यर्थः ।

[11]नन्वनुव्यवसायस्यापि साध्यतावच्छेदकप्रकारकतया कथं तादृशत्वाभाव इत्यत आह विषयेति । [12]साध्यानुयोगिकवैशिष्ट्यप्रतियोगितया साध्यतावच्छेदकप्रकारकस्यैव तथात्वादित्यर्थः । तदृज्ञानेति । व्यवसाय[13]प्रकारत्वेनैव साध्यतावच्छेदकस्य

---

1. क, निश्चयाधायकम्
2. क. स्मर्यमाण
3. ख. 'व्याप्तिविषयकस्तादृशो निश्चयो'
4. क. भूततद्धर्म
5. ख. भावत्वरूपस्यापि
6. क. एवासिद्धम्
7. ख. 'न' नास्ति ।
8. ग. तत्प्रकारकत्वेनेति
9. ग. प्रकारत्वेन
10. ख. ग. तादृशत्वाभावात्
11. क. नन्वनुव्यवस्यापि
12. ख. ननु साध्यानु
13. ग, प्रकारकत्वेनैव

केवलव्यतिरेकिसिद्धान्तः—

उच्यते। घटादावेवेतरसकलभेदस्य प्रत्यक्षतः प्रसिद्धिः घटो न जलादिरिति प्रतीतेः। नन्वयमन्योन्याभावो न प्रत्यक्षः अतीन्द्रियप्रतियोगिकाभावत्वात् परमाणुसंसर्गाभाववत् योग्यानुपलब्धेरभावग्राहकत्वात् नयनोन्मीलनानन्तरं स्तम्भः पिशाचो न भवतीति—प्रतीतेर्बाधक-

प्रकाशः

साध्यस्याप्रसिद्धिरेवेति नोक्तमनुमानं संभवति। न च संशयरूपैव तत्प्रसिद्धिरिति वाच्यम्। भेदसमुदायस्य तदभावस्य चाप्रसिद्धत्वेन संशयकोटित्वासम्भवात्। प्रसिद्धत्वे च तत एव व्यतिरेकव्याप्तिनिश्चयसम्भवात् उक्तानुमानवैयर्थ्यापत्तेः। तस्मादन्वये व्यतिरेके वा संशयरूपा साध्यप्रसिद्धिर्लिङ्गम्। कोटिप्रसिद्धौ निश्चयरूपाया एव [1]तस्याः सम्भवात्। तदप्रसिद्धौ [2]संशयस्याप्यसम्भवात्। न चैकाधिकरण्येन

तर्कचूडामणिः

विषयीकरणादित्यर्थः। ननु जलत्व जलादित्रयोदशभेद[3]समुदायाभाववदित्यत्र तदेकदेशकिंचिद्भेदाभाववत्त्वं लिङ्गमन्वय्येव [4]वाय्वादेरेव दृष्टान्तत्वात्। न च तत्रापि त्रयोदशभेदसमुदायरूपप्रतियोगिनिश्चयाभावान्नाभावानुमितिरिति वाच्यम्। अभावप्रत्यक्षे प्रतियोगिनिश्चयस्य हेतुत्वेऽपि तदनुमितौ तस्य हेतुत्वाभावात्। [5]न च तत्रापि विशेषणतावच्छेदकप्रकारकनिश्चयो [6]विशिष्टवैशिष्ट्यज्ञानहेतुरेव। अन्यथा दण्डत्वसंशये [7]दण्डी पुरुष इति निश्चयापत्तेरिति वाच्यम्। [8]यत्र विशिष्टवैशिष्ट्य-

1. क, तस्यासम्भवात्
2. ख. संशयस्याभावात्
3. क. समुदायाभावादित्यत्र
4. ग. वायुमेव
5. क. ननु तथापि
6. ग. विशिष्टवैशिष्ट्यनिश्चयहेतु
7. ग. दण्डिपुरुषनिश्चयापत्तेः
8. क. यदि विशिष्ट

वलेन वायुर्यातीतित्वल्लिङ्गग्रहोपक्षीणत्वादिति चेत्। न। यो ह्यनुपलम्भोऽधिकरणे प्रतियोगिसत्त्वविरोधी सोऽभावं ग्राहयति न तु योग्यानुपलब्धिमात्रम्, अन्यथा वायौ रूपाभावप्रतीतिवद् जलपरमाणौ पृथिवीत्वाभावग्रहप्रसङ्गात्। अधिकरणे प्रतियोगिसत्त्वञ्च तर्कितं--यदि हि स्तम्भः पिशाचः स्यात् स्तम्भवदुपलभ्येत न पिशाचानुपलम्भः स्यात्। न च

---

## प्रकाशः

तावच्छेदोपस्थितये संशयानुसरणमिति वाच्यम्। संसर्गविधयैकाधिकरण्योपस्थितावपि व्यापकतावच्छेदकप्रकारेण संशयादप्यनुपस्थितेरिति भावः।

योग्यानुपलब्धेरिति। ऐन्द्रियकस्य प्रतियोगिनोऽनुपस्थितेरित्यर्थः। नयनेति। तत्प्रतीतौ नयनोन्मीलनानन्तर्यस्येत्यर्थः। [1]यो हीति। एवञ्च

---

## तर्कचूडामणिः

ज्ञानं विशेषणतावच्छेदकप्रकारकविशेषणविषयकसंशयविरोधि तत्रैव विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वम्। नतु विशिष्टवैशिष्ट्यनिश्चयमात्रे। अन्यथा संदेहानुव्यवसायाभावापत्तेः। तदिह तादृशी अनुमितिर्भवति विशेषणतावच्छेदकांशे [2]संशयविरोधिन्येव इत्यस्वरसादाह....वस्तुत इति। संसर्गेति। पृथिवीवृत्तित्वं इतरभेदे न [3]प्रकारीभूय भासते। किं तु [4]स्थाणुत्वादिसंशये पुरो[5]वर्तिवृत्तित्ववत् संसर्गविधयैवेत्यर्थः। ननु योग्ये अनुपलब्धिरत्राप्यस्तीति अत आह

---

1. ख. प्रतियोगीति
2. ग. संशयविरोधि
3. ख. 'प्रकारीभूय' नास्ति।
4. ग. स्थाण्वादि
5. ख. ग. 'र्वति' नास्ति।

पृथिवी जलादिभ्यो भिद्यते जलावृत्तिधर्मवत्त्वात् तेजोवत्, एवमन्येभ्योऽपि भेदसिद्धौ द्वादशभिन्नेति विशेषणं दत्त्वा समवायभेदसाधनादन्वयिन एव पृथिव्यां त्रयोदशभेदसिद्धिरिति किं व्यतिरेकिणेति वाच्यम् । जलादिभिन्ना सती समवायिभिन्नेति बुद्धावपि त्रयोदशभिन्नेति बुद्धेः व्यतिरेकिसाध्यत्वात् । न च घटस्यापि पक्षत्वादंशतः सिद्धसाधनम्, सर्वा पृथिवीतर-

---

## प्रकाशः

मनोऽन्योन्याभाववन्मनस्त्वात्यन्ताभावो घटे प्रत्यक्ष एव । तत्रापि प्रतियोगिसत्त्वाविरोध्यनुपलम्भसम्भवात् तद्विषयत्वेनैवाभावस्य योग्यत्वादिति केचित् ।

अन्ये तु न हि तादृशोऽनुपलम्भोऽवश्यमभावं ग्राहयतीत्येवं नियमः । प्रतियोगिज्ञानादिविरहे अभावग्रहानुदयात् । किं त्वभावग्रहणकारणप्रतियोगिज्ञानादिसद्भावे सति योग्यमभावं ग्राहयतीति । मनस्त्वात्यन्ताभावस्तु न योग्यः

---

## तर्कचूडामणिः

ऐन्द्रियकस्येति । योग्यस्यानुपलब्धिरिति तदर्थः । योग्यत्वं च प्रत्यक्षयोग्यत्वमिति भावः । ननु स्तम्भः पिशाचो न भवतीति प्रतीतेः [1]फलीभूतायाः कथं लिङ्गदर्शनोपक्षीणत्वम् । अत एव दृष्टान्तोऽप्यसङ्गत इत्यत आह—तत्प्रतीताविति । एवञ्च वायुर्वातीति प्रतीतौ त्वगिन्द्रियव्यापारानन्तर्यं दृष्टान्त इति भावः ।

ननु [2]उक्तयोग्यतासत्त्वेन घटादौ [3]मनस्त्वात्यन्ताभावोऽपि प्रत्यक्षः स्यादित्यत्रेष्टापत्तिं जयदेवोक्तां [4]दर्शयति—एवं चेति । घटादौ [5]मनस्त्वात्यन्ताभावस्य

---

1. क. फलीभूतायां
2. क. युक्त
3. क. मानसत्वात्यन्ताभावो
4. क. दूषयति
5. क. मानसत्वात्यन्ताभावस्य

## प्रकाशः

योग्यप्रतियोगिकस्यैव संसर्गाभावस्य योग्यत्वात्। अतो घटेऽपि स न गृह्यते। रूपवदन्योन्याभावस्तु योग्योऽपि [1]वाय्वावधिकरणे योग्यताविरहान्न गृह्यते। अन्योन्याभावग्रहे [2]तस्याप्रयोजकत्वात्। अत एव संसर्गाभावान्योन्याभावग्रहे प्रतियोग्यधिकरणयोः योग्यता तन्त्रमिति सिद्धान्त इत्याहुः।

---

## तर्कचूडामणिः

प्रत्यक्षत्वे विवदमानानामुपाध्यायानां मतमाहान्येत्विति। ननु प्रतियोगिस[3]त्वविरोधित्वरूपयोग्यत्वमप्यस्तीत्यत आह योग्येति। प्रत्यक्षेत्यर्थः। सिद्धान्त इति। तृतीयटीकायां टीकाकृता तथैवाभिधानादिति भावः। न चाननुगमः। अत्यन्तान्योन्याभावप्रतीत्योः वैलक्षण्यस्यानुभवसिद्धत्वेन प्रत्येकमेव योग्यताद्वयस्य नियामकत्वादिति भावः। [4]नन्वयमेव पक्षो युक्तः। तथाहि प्रतियोग्यनुपलम्भो न तदुपलंभाभावमात्रं चाक्षुषवंशोरगभ्रमे त्वचा तदभाव[5]ज्ञानानुपपत्तेः। किन्तु तदिन्द्रियजन्यप्रतियोग्युपलंभाभाव एव वाच्यम्। न च मनस्त्वादिविषयप्रत्यक्षं संभवतीति तदभावो [6]न प्रत्यक्षः। न चैवमन्योन्याभावोऽपि न प्रत्यक्षः स्यादिति। तदिन्द्रियजन्यप्रतियोगितादात्म्यानुपलम्भस्य हेतुत्वे घटे अन्योन्याभावो न प्रत्यक्षः स्यादिति वाच्यम्। नयनोन्मीलनानन्तरं स्तम्भः पिशाचो न भवतीति प्रतीतेः लिगादिप्रतिसन्धानं विनापि जायमानायाः सर्वजनसिद्धतया तदिन्द्रियजन्याधिकरणतादात्म्यप्रत्यक्षविषयत्वाभावः

---

1. क वाय्वधिकरणे
2. ख. तस्याः प्रयोजकत्वात्
3. क. सत्वं विरोधित्वरूपयोग्यमपि
   ख. सत्वविरोधिरूपयोगत्वमप्य
4. क. न त्वयमेव
5. क. तदभावज्ञानानुत्पत्तेः
6. क. न प्रत्यक्षं। न चैवमन्योन्याभावग्रहेऽपि
   ग. न प्रत्यक्षः। न चैवमन्योन्याभावग्रहेऽपि तदिन्द्रियजन्यप्रतियोगितादात्म्यानुपलम्भस्य हेतुत्वे घटे मनोऽन्योन्याभावो न प्रत्यक्षः स्यादिति वाच्यम्।

## प्रकाशः

अनयोश्च कल्पयोर्विनिगमकोऽनुभव एवेति ध्येयम्। अनुपलब्धिश्च यादृशा अभावोपलब्ध्यङ्गं तादृशी प्रपञ्चिता प्रत्यक्षप्रकाशे। न त्विति। न त्वैन्द्रियकानुपलब्धिमात्रमित्यर्थः। नन्वधिकरणे प्रतियोगिसत्त्वस्याप्रसिद्ध्या तन्निरूपितस्य [1]विरोधित्वस्यासंभवात् उक्तानुपलब्धिरसिद्धेत्यत आह—अधिकरण इति। तथा च तर्कितमेव तद्विरोधित्वनिरूपक न तु वास्तवमिति भावः। तमेव तर्कमाह—

## तर्कचूडामणिः

कारणत्वेनोपेयते। न च संसर्गाभावग्रहेऽपि तदिन्द्रियजन्याधिकरणप्रत्यक्षे [2]प्रतियोगिसंसर्गाविषयत्वाभाव एव हेतुरस्त्विति वाच्यम्। एवं [3]च युक्तिबलादत्यन्तान्योन्याभावग्रहे प्रतियोग्यधिकरणयोग्यतयोर्नियामकत्वमिति किं विनिगमकांतरेणेत्यत आह अनुपलब्धिश्चेति। तदिन्द्रियजन्यानाहार्यप्रत्यक्ष प्रतियोग्यधिकरणसंसर्गविषयत्वाभाव एवानुपलब्धिशब्दार्थः। स च योग्यायोग्य[4]प्रतियोगिसाधारण एवेति न तद्बलात् पक्षयोरन्यतरस्य समीचीनत्वनिश्चय इत्यर्थः। वस्तुतो लाघवेन निरुक्तयोग्यतयैव सर्वाभावप्रत्यक्षनिर्वाहे योग्यतांतरस्य नियामकत्वकल्पने गौरवमेव। न हि योग्यप्रतियोग्यादिस्थले एव तदभावानुभवः। येन अनुभवबलात् गौरवं प्रामाणिकं स्यादिति बोध्यम्। ननु उक्तयोग्यतायाः स्वमतेऽप्यभावग्राहकत्वात् तन्निषेधानुपपत्तिरित्यत आह[5]नत्विति। ननु तर्कबलादप्यधिकरणे प्रतियोगिसत्त्वं न भविष्यतीत्यत आह तथा चेति। अधिकरणविषयकप्रतियोगिसत्वप्रसंजनप्रसंजितप्रतियोगिकत्वमनुपलब्धेर्योग्यत्वमिति भावः। ननु स्तंभस्य पिशाचभिन्नत्वे विप्रतिपत्त्य-

---

1. क. विरोधित्वस्याभावात्
2. क. प्रतियोगिसंसर्गविषयाभाव
3. ग. 'च' नास्ति
4. क. प्रतियोग्यसाधारण एव
5. ग. न, त्विति ...... भविष्यतीत्यत आह' नास्ति।
ख. नन्विति

## प्रकाशः

यदि होति। स्तम्भो यदि पिशाचात्मा स्यात् पिशाचात्मतया प्रमाविषयः स्यात्। यो यदात्मा स तदात्मतया प्रमाविषय इति सामान्यव्याप्तिरत्र [1]दृष्टान्तः सम्भवति विशेषव्याप्तौ तु व्यतिरेकदृष्टान्तोऽयम्। अन्वये तु पिशच एवात्र दृष्टान्त इति द्रष्टव्यम्। एतेनोपलम्भपदं यदि प्रत्यक्षपरं तदा व्याप्त्यसिद्धिः। यदा ज्ञानमात्रपरं प्रमापरं वा तदेष्टापादनमित्यशस्तम्। स्तम्भे यदि पिशाचतादात्म्यं स्यात्तदा स्तम्भतादात्म्यवदुपलभ्येत। स्तम्भे [2]यत्तादात्म्यं तत्तत्रोपलभ्यत इति[3] व्याप्तिरित्यर्थ इत्यन्ये।

नन्वाकाशादितादात्म्यस्य शब्दाश्रयत्वादिरूपतया जातित्वाभावात् घटादिवृत्तित्वेऽपि न तदुपलम्भ आपादयितुं शक्यत इति तदन्योन्याभावस्तत्र कथं प्रत्यक्ष

---

## तर्कचूडामणिः

भावात् तत्साधकतर्कप्रदर्शनानुपपत्तिरित्यत आह—[4]तथाचेति। योग्यताशरीरनिविष्टं [5]तर्कमित्यर्थः। ननु सामान्यव्याप्तिर्नाङ्गमित्यनुशयादाह—विशेषेति। [6]व्यतिरेकाप्रतिसन्धानदशायामाह—अन्वये त्विति। व्याप्त्यसिद्धिरिति। पिशाचत्वस्य [7]प्रत्यक्षत्वविरुद्धत्वादित्यर्थः। इष्टेति। स्तम्भस्यापि स्तम्भत्वादिना ज्ञायमानत्वात् [8]प्रमीयमानत्वाच्चेत्यर्थः। नन्वेवं मनसि गगनाद्यन्योन्याभावः प्रत्यक्षः स्यात् यदि मनो गगनं स्यात् [9]तदात्मतया प्रमाविषयः स्यादिति तर्कस्य तत्रापि सम्भवादित्यनुशयादुपाध्यायमतमाह—स्तम्भ इति। स्तम्भवृत्ति[10]गुरुत्ववत्तादात्म्ये व्यभि-

---

1. क. दृष्टान्तस्सम्भवदिति
2. क. अत्र यत्तादात्म्यं
3. ख. व्याप्तेरन्यः
4. क. तमेवेति
5. क; तर्कमिति
6. ग. व्यतिरेकिप्रति
7. ग. प्रत्यक्षविरुद्ध
8. ग. प्रमीयमाणत्वादित्यर्थः
9. ख. तदात्मकतया
10. ग. शून्यत्ववत्तादात्म्ये

भिन्नेत्युद्देश्यप्रतीतेरभावात् । पक्षतावच्छेदकनानात्वे हि तत्, अत एवानित्ये वाङ्मनसे इत्यत्रानित्या वागिति बुद्धेः उद्देश्यायाः सिद्धत्वादंशतः

---

## प्रकाशः

इति चेन्न । आकाशादिघटाद्योरभेदे आकाशत्वादेरपि जातित्वापत्तेरावश्यकत्वात् तदापादनसम्भवात् । न ह्येकव्यक्तिकत्वमपहाय आकाशत्वादीनामन्यज्जातिबाधकमस्तीति भावः । यद्यपि सामान्यविशेषसमवायान्योन्याभावे[1]ऽयमपि कल्पो न सम्भवति । तथापि [2]घटादिव्यक्तितादात्म्यत्वेनैव तत्र तदुपलम्भापादनं शक्यमिति ध्येयम् ।

पक्षतावच्छेदकनानात्व इति । अत्र वदन्ति । [3]पक्षतावच्छेदकस्य नानात्वे एकत्वे वा [4]यदा [5]सर्वपक्षव्यक्तिषु एकैव समूहालम्बनरूपा साध्यसिद्धिरुद्देश्या भवति [6]तदोभयत्रापि क्वचित् पक्षांशे [7]साध्यप्रसिद्धौ जातायां नांशतः सिद्धसाधनम् । तदंशेऽप्युद्देश्यभूतायाः समूहालम्बनरूपायाः साध्यप्रसिद्धेरजातत्वात् । यदा तु समूहालम्बनत्वाद्युदासीना या काचित्साध्यप्रतीतिरुद्देश्या भवति [8]तदोभयत्रापि तदवर्जनीयमेव । पक्षतावच्छेदकैक्येऽपि तदंशे साध्यप्रसिद्धेर्जातत्वेन तदुद्देश्यताविच्छेदात्, तस्मादेतच्चिन्त्यमिति ।

अत्र ब्रूमः । पक्षतावच्छेदकैक्येंऽशतः सिद्धसाधनं न भवत्येव । [9]पक्षतावच्छेदकसामानाधिकरण्येन क्वचिदपि पक्षे साध्यसिद्धौ सिद्धसाधनमेव नांशतः सिद्धसाधनम् । तादृशसिद्धेरेवानुमानसाध्यत्वात् । तदसिद्धौ [10]हि तच्छङ्कैव नास्ति ।

---

1. क. अयं कल्पो
2. क. घटादिवृत्तितादात्म्येनैव
3. क. पक्षतावच्छेदकनानात्वे
4. ख. 'यदा' नास्ति
5. क. सर्वव्यक्तिषु
6. क. तत्रोभयत्रापि
7. क. साध्यसिद्धौ
8. क. तथा सत्युभयत्रापि
9. ख पक्षतावच्छेदकधर्म
10. क. 'हि' नास्ति

सिद्धसाधनम्, अन्यथानुमानमात्रोच्छेदात् पक्षस्य सिद्धस्यैव साध्यत्वात्। न च घटः कथं पक्षः साध्यनिश्चयेन संशयसिषाधयिषयोः अभावादिति वाच्यम्। सर्वा पृथिवी इतरभिन्ना न वेति संशयस्य तत्प्रकारकसिषाधयिषायाश्च सामान्यतो घटविषयत्वात् घटत्वेन विशेषदर्शनं सिद्धिर्वा, अतस्तेन रूपेण संशयसिषाधयिषे न स्तः, पृथिवीत्वेन तु भवत एव धूमवान् वह्निमानिति धूमवत्त्वेन वह्निनिश्चयेपि पर्वते वह्निसंशयवत्।

---

## प्रकाशः

न हि पक्षे साध्यसिद्धिमात्रेण [1]तद्धूमवत्त्वेन पर्वते वह्निनिश्चये सिद्धसाधनप्रसङ्गात्। तस्मात् प्रकृते घटत्वेन साध्यसिद्धावपि पक्षतावच्छेदकसामानाधिकरण्येन तदसिद्धेर्नोक्तदोषः। नन्वेवं पृथिवीत्वस्य पक्षतावच्छेदकत्वात् तत्सामानाधिकरण्येनैव घटे साध्यसिद्धेः सिद्धसाधनमेवास्त्विति चेन्न। सर्वपृथिवीत्वस्यैव पक्षतावच्छेकत्वात्।

---

## तर्कचूडामणिः

चारा[2]न्नायमपि कल्पः साधुरिति सूचयति अन्य इति। जातित्वाभावादिति। [3]जातेरेव व्यक्तियोग्यता[4]नियतयोग्यताकत्वा[5]दुपाधेरपि प्रमात्वस्यापि प्रत्यक्षत्वापत्तेरिति भावः। यद्यपीति। तेषां घटादिवृत्तित्वेऽपि [6]जातित्वापादनासंभवादिति भावः। यद्यपि [7]घटे जलत्वात्यन्ताभावो न प्रत्यक्षः स्यात्। घटेऽपि जलत्वसत्त्वे पृथिवी-

---

1. क. तद्धूमत्वेन
2. ग नायं विकल्पः साधुः
3. क. जातिरेव
4. क. नयनयोग्यताकत्वं
5. क. तत्रोपाधेः
   ग. न तूपाधेः
6. ख. जातिवृतित्वापादना
   ग. जातित्वापादना
7. क. जले घटत्वात्यन्ता
   ख. घटे जलात्य

## प्रकाशः

[1]तदिदमुक्तं—'सर्वा पृथिवी इतरभिन्नेत्युद्देश्यप्रतीतेरभावात्' इति। अत एवाग्रे सर्वत्वेन रूपेण न पक्षतेति वक्ष्यते।

यत्तु समूहालम्बनानुमित्युद्देश्यतायां पक्षतावच्छेदकनानात्वेऽपि नांशतः सिद्धसाधनमिति [2]तत्तु तथैव। सिषाधयिषाविरहस्थल एव तत्रांशतः सिद्धसाधनस्योक्तत्वादिति। अन्यथेति। यद्यनुमितिविषयैकदेशसिद्ध्या सिद्धसाधनमित्यर्थः। ननु धूमवानित्यादिना सामान्यतो निश्चिते विशेषेण संशयस्योपपादितत्वेऽपि विशेषेण

## तर्कचूडामणिः

त्वादिना सांकर्यप्रसंगेन जलत्वस्य [3]जातित्वासिद्धेः। तथापि तत्रापि घटादिवृत्ति-[4]तादात्म्यतयैव तत्र तदुपलंभापादन[5]संभवादिति ध्येयम्। प्रभाकृदुक्तदोषमाहात्रेति। उभयत्रापीति। पक्षतावच्छेदकैक्ये तन्नानात्वे चेत्यर्थः। अत एवाग्रे इति। [6]पूर्वं सर्वत्वेन रूपेण पक्षत्वानभिधाने तेन रूपेण न पक्षतेति मतांतरप्रदर्शनानुपपत्तेरिति भावः। सिषाधयिषेति। सिषाधयिषासत्त्वे पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावपि पक्षत्वानपायादिति भावः। न चोद्देश्यपदासङ्गतिः। [7]तत्तत्सिद्धिपरत्वा[8]दुद्देश्यपदस्येति भावः। अन्यथेत्यस्य पक्षतावच्छेदकनानात्वे अंशतः सिद्ध[9]साधनानङ्गीकारे इत्यर्थभ्रमं वारयति यदीति। नन्वत्रेष्टापत्तिरिति प्रागेवोक्तम्।

1. ख. तदेव पृथिवी इतरभिन्नेत्युद्देश्यप्रतीतेरसिद्धत्वादिति। अत एवाग्रे सर्वत्वेन न पक्षतैवेति वक्ष्यते for तदिदमुक्तं.........वक्ष्यते।
2. क. तत् तथैव
3. क साधुत्वासिद्धेः
4. क, तादात्म्येनैव
   ग. तादात्म्यत्वेनैव
5. क. संभव इति
6. क. पूर्वं सत्वेन
   ग. पूर्वासत्वेन
7. ख. प्रसिद्धिपरत्वात्
8. ग. उद्देश्यस्येति
9. क. साधनाङ्गीकारे

## प्रकाशः

निश्चिते सामान्यतः संशयो नोपपादितः । [1]तथा सति इदम्पर्वतत्वेन वह्निनिश्चये पर्वतत्वेन [2]तत्संशयप्रसङ्गात् । किं च यदवच्छेदेन यत्र यत्कोटिनिश्चयस्तदवच्छिन्नत्वज्ञानं तत्र तत्कोटिकसंशयविरोधि न तु तत्प्रकारकतत्कोटिकसंशयविरोधि, गौरवात् । अत एव धूमत्वेन व्याप्तिनिश्चये सति धूमत्वेनोपस्थितायां व्यक्तौ विशेषतोऽपि न व्याप्तिसंशयः तदुक्तं [3]प्राक् । यत्र हि यद्व्यावर्तकधर्मदर्शनं तत्र न तत्संशयः । तच्च सामान्ये विशेषे वेत्यपरितोषादाह— यद्वेति । पृथिवीत्वेनेति । घटादिभिन्नपृथिवीत्वेनेत्यर्थः । अन्यथा पूर्वोक्तगत्या सिद्धसाधनप्रसङ्गात् । अत एवेश्वरानुमाने विप्रतिपत्तिविषयमात्रसंग्राहकपक्षतावच्छेदकनिर्वचननिर्बन्धः । अन्यथा कार्यत्वेन तावतामेव पक्षत्वे [4]अदोषप्रसङ्गात् । न चांशतः सिद्धसाधनभियैव तादृश[5]पक्षतावच्छेदकनिर्वचनं तत्र । तथा च पक्षतावच्छेदकैक्ये तदभ्युपगम

---

## तर्कचूडामणिः

न च तथा सति तत्र [6]वह्न्यर्थप्रवृत्तिर्निष्कम्पा न स्यात् इति वाच्यम् । न हि प्रवर्तकनिश्चये सति संशयस्य प्रतिबन्धकत्वं मानाभावात् । प्रतिबंधकत्वे वा इदंपर्वतत्वेन तत्र वह्निसन्देहाभावात् तेन रूपेण [7]प्रवृत्तिः स्यादेवेत्यस्वरसादाह-किञ्चेति । यद्यप्येवं [8]धूमवत्त्वेन वह्निमत्त्वनिश्चयाद्धूमवत्त्वेनावगते पर्वते वह्निसन्देहो न स्यादिति ग्रन्थकृतैवोक्तत्वान्नेदमस्वरसबीजम् । न च सामान्यतो निश्चितेऽपि विशेषसंशयप्रदर्शनेऽपि विशेषतो निश्चिते सामान्यसंशयो न सम्भवत्येवेति वाच्यम् ।

---

1. क तथा च इति ग्रन्थस्त्रुटितः ।
2. ख. तत्संशयः स्यात्
3. ख. 'प्राक्' नास्ति
4. ख. अदोषात्
5. ख. 'पक्षतावच्छेदक......तथाच'
6. क. वह्न्यर्थानां निष्कम्पप्रवृत्तिः
   ख. वह्न्यर्थतानिष्कम्पप्रवृतेः
7. क. वृत्तिः
8. क. धूमत्वेन

## प्रकाशः

एवेति वाच्यम् । एतन्मते सिद्धसाधनभीत्यैव तन्निर्वचनात् । अन्यथा कार्यं सकर्तृकमित्यत्र घटादावंशतः सिद्धसाधने [1]परेणोद्भाविते कार्यत्वेनाङ्कुरादिकमेव पक्ष इत्युद्भावनादेव विजयेत [2]वादीत्यभिप्रायः ।

## तर्कचूडामणिः

प्रसिद्धधूमे [3]तद्धूमवत्त्वेन वह्निसम्बन्धावगमेऽपि धूमो वह्निव्यभिचारी न वेति संशयदर्शनात् । तथापि यथा धूमत्वेनाप्रसिद्ध एव धूमस्तस्य विषयः तथात्रापि [4]घटादिभिन्नस्यैव तद्विषयत्वमित्यस्वरसबीजं बोध्यम् ।

ननु [5]घटादीति व्यर्थम्, पृथिवीत्वेन रूपेण घटादौ साध्यसिद्धावपि सन्दिग्धसाध्यवति पक्षे तदसिद्ध्या सिद्धसाधनानवकाशात् । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धावेव सिद्धसाधनात् । न चैवमतिप्रसक्तस्य पक्षतावच्छेदकत्वमपि न स्यादिति वाच्यम् । पक्षे यद्धर्मप्रकारिकानुमितिस्तस्यैव पक्षतावच्छेदकत्वेनातिप्रसक्तस्यापि तत्त्वाविरोधादित्यत आह—अन्यथेति । तथा च पक्ष इति विशेषणं [6]गौरवकरमिति भावः ।

ननु पक्षतावच्छेदकसामानाधिकरण्येन [7]सकलपक्षे साध्यसिद्धावेव सिद्धसाधनम्, गौरवं च प्रामाणिकम् । न च पृथिवीत्वाश्रये सर्वत्र साध्यसिद्धिः येन सिद्धसाधनं स्यात् । ईश्वरानुमानेऽपि न सिद्धसाधनवारणाय घटादिव्यावृत्तपक्षतावच्छेदकनिर्वचनम्, [8]किं तु पक्षतावच्छेदकसमानाधिकरण्येन किंचित्पक्षे तत्सिद्धांशतः सिद्धसाधनमिति तद्वारणायैवेत्याशङ्क्य निराकरोति—न चेति ।

1. ख. परेणोच्चारिते कार्यत्वेन क्षित्यादिकमेव
2. ख. वादीति भावः
3. क. तद्धूमत्वेन
4. क. घटत्वादि...
5. क घटादिति
6. क. गौरवमिति
7. ख. सकलपक्षसिद्धावेव
8. क. किमु पक्ष—

यद्वा सर्वत्वेन रूपेण न पक्षता सर्वत्राविप्रतिपत्तेः। घटाद्येकदेशे इतरभेदस्य प्रत्यक्षसिद्धत्वात्। तथाचैकदेशे विप्रतिपत्तौ सामान्ये इतरभेद-साधने अर्थान्तरम्, किन्तु सामान्येन पृथिवीत्वेन यावदेव विप्रतिपत्ति-विषयस्तावतामेव पक्षता विशेष्याननुगमात्। तर्हि पृथिवी इतरभिन्ना पृथिवीत्वात् घटवदित्यन्वयिनैवेतरभेदस्य सिद्धत्वात् किं व्यतिरेकिणा, घट-साधारणपक्षत्वेऽप्यभेदानुमानवत् पक्षस्यापि दृष्टान्तत्वाविरोधात् पक्षान्यत्व हि तत्रातन्त्रम्। किन्तु साध्यवत्तया निश्चितत्वं प्रयोजकम्॥ न च पृथिवीत्वाग्रहे पूर्वं गृहीतं यत्र साध्यं पश्चात् स्मर्यते तत्र हेतुसाध्यसामानाधिकरण्याग्रहा-व्यतिरेक्यवतार इति वाच्यम्। हेतोरेव पक्षतावच्छेदकत्वेन घटे पृथिवीत्व-ग्रहदशायां इतरभेदसामानाधिकरण्यग्रहावश्यंभावादिति चेत् —

---

### प्रकाशः

पूर्वमतेऽप्यन्वयित्वमापादयति—घटसाधारणेति। अन्वयीति। [1]उक्तरीत्या हेतुसाध्यसामानाधिकरण्यग्रहावश्यम्भावेऽपि अव्यभिचारानुपस्थितिदशायामन्वयव्या-

---

### तर्कचूडामणिः

ननु पक्षतावच्छेदक[2]नानात्व एव तदित्यत आह— तथाचेति। एतन्मत इति। पक्षतावच्छेदकैक्ये सिद्धसाधनमेव [3]तदवच्छेदकसामानाधिकरण्यसिद्धिरेव लाघवादनुमानफलमेतन्मत इत्याह — अन्यथेति। अंशतः सिद्धसाधनभिया तदनिर्वचन इत्यर्थः। पक्षतावच्छेदकाश्रये क्वचित्पक्षे साध्यसिद्धावेवांशतःसिद्ध-साधनेन घटादौ तत्सिद्धेरकिंचित्करत्वादिति भावः। ननु सर्वत्वेन न [4]पक्षतेत्यभि-धानात् घटसाधारणेति मूलानुपपत्तिरित्यत आह—पूर्वेति। ननु हेतुसाध्य-

---

1. क. उक्तगत्या
2. क नानात्वे न तदित्यतः
3. ग. 'तदवच्छेदक ... ... सिद्धसाधनेन' नास्ति।
4. क. पक्षतेत्यभिमाना

सत्यम् । अन्वयितुल्यतया व्यतिरेकिणोऽपि सामर्थ्यात् । अन्वयाप्रतिसन्धानदशायां व्यतिरेक्युपन्यासस्यापर्यनुयोज्यत्वात् । तदुक्तम् —"आस्तां तावदयं सुहृदुपदेशः, केवलव्यतिरेकिलक्षणं तावन्निर्व्यूढम्"।

अथवा जलादीनां त्रयोदशान्योन्याभावाः त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते । अत एवाकाशे व्यतिरेकिणा जलादिमिलितप्रतियोगिकान्योन्याभावाप्रतीतावपि त्रयोदशान्योन्याभावाः साध्या इति नान्वयित्वासाधारण्ये ।

## प्रकाशः

प्त्यप्रतिसन्धानसम्भवादिति भावः । उक्तप्रकारस्याकाशादावसम्भवात् तदर्थं प्रकारान्तरमाह—अथवेति । एतच्च व्यासज्यप्रतियोगिकाभाववादिमतेन । अन्यथा जलादौ तेजोवाय्वादिभेदसत्त्वेन त्रयोदशभेदाभावासम्भवेन [1]विपक्षत्वानुपपत्तेः व्यतिरेकव्याप्तिग्रहानुपपत्तेः । [2]प्रत्येकं च साध्यतायामसाधारण्यापत्तेः । तस्माद्व्यासज्यवृत्तिधर्मस्य साध्यतावच्छेदकत्वे तदवच्छिन्नाभाव एकसत्त्वेऽप्यस्तीति नोक्तदोषः । अत एव नासाधारण्यमपि निश्चितसाध्यतावच्छेदकावच्छिन्नसाध्यवद्व्यावृत्त्या हि

## तर्कचूडामणिः

साहचर्यग्रहस्यावश्यकतया उक्तत्वात् तन्मूलान्वयव्याप्तिज्ञानादेवान्यत्र क्लृप्तादनुमितिसम्भवेन व्यतिरेकिणोऽन्वयितुल्यत्वमसिद्धमित्यत आह—उक्तेति । आकाशादाविति । तस्य एकव्यक्तित्वेन घटादिवत्साध्यसिद्धिस्थलाभावादिति भावः ।

[3]नन्वत्र प्रत्येकाभावत्वस्य साध्यतावच्छेदकत्वे [4]तदवच्छिन्नसाध्यवतो हेतोर्व्यावृत्तत्वेनासाधारण्यम् । मिलितानां साध्यत्वे मेलनस्यैकाधिकरण्यावच्छेदकाव-

1. क. विपक्षानुपपत्तेः
2. ख 'प्रत्येकं च साध्यतायामसाधारण्यापत्तेः' इति नास्ति ।
3. ग. नन्वन्यत्र
4. क ततदवच्छिन्न—

## प्रकाशः

तद्भवति। [1]प्रकृते च न तथा। प्रत्येकाभावस्य व्यासज्यवृत्तिधर्मावच्छिन्नत्वाभावात्। अन्यथा एकत्रापि द्वाविति बुद्ध्यापत्तेः। अत एवाग्रे वक्ष्यति—तावदभावयोगी यत्र सपक्षो भवति। न तु तदेकदेशकतिपयाभाववान् साध्यतायास्तावति पर्याप्तेरिति। न चैवं साध्यतावच्छेदकेन रूपेण साध्यप्रसिद्धिरपि कथमिति वाच्यम्। भिन्नाधिकरणस्थानामप्यभावानां त्रयोदशत्वादिना ज्ञानसम्भवात् भिन्नाधिकरणस्थयोर्घटयोः [2]द्वौ घटाविति धीवत्।

यत्तु प्रत्येक[3]व्याप्तिभिः प्रत्येकाभावानामपि साध्यत्वेनासाधारण्यम्। अनुमितिविषयसाध्यवद्व्यावृत्त्या हि तद्भवति। सत्प्रतिपक्षोत्थापकतापक्षे [4]च तस्य दोषत्वनिर्वाहात् अनुमितिविषयमिलितान्योन्याभावात्मकं च साध्यमन्यत्र न प्रसिद्धम्, येनासाधारण्यं स्यादिति। तच्चिन्त्यम्। तथापि प्रत्येकाभाववद्व्यावृत्तत्वज्ञानेन प्रत्येकाभावाभावसाधनस्य [5]निष्कलङ्कत्वेन [6]मिलिताभावासिद्धेः। मेलकस्यातिरिक्तस्यासिद्धेश्च[7]। सिद्धौ वा मेलकानामसिद्धौ सर्वथा तदसिद्धेरिति।

## तर्कचूडामणिः

च्छिन्नत्वे तदवच्छिन्नसाध्याप्रसिद्धिः। [8]त्रयोदशत्वरूपत्वे [9]जलादेर्विपक्षत्वानुपपत्तिः। तत्र द्वादशभेदसत्त्वेन [10]तदभावाभावादित्यत आह—एतच्चेति। जयदेवमतमाह—यत्त्विति। अनुमितीति। अनुमितिविषय[11]यावत्साध्यवद्व्यावृत्तेत्यर्थः।

---

1. ख. प्रकृते हि
2. क 'द्वौ' नास्ति
3. ख. व्याप्तिधी
4. क. तदैतस्य
5. क. निष्कलङ्कत्वात्
6. क. मिलिताभावसिद्धेः
7. ख. स्यासिद्धौ वा मेलकानाम्
8. क. ख. त्रयोदशरूपत्वे
9. क जलादेर्विवक्षितत्वा—
10. ख. तदभावादित्यतः
11. ख. यावत्साध्यव्यावृत्तेत्यर्थः।

यद्वा जलं तेजःप्रभृतिद्वादशभिन्नप्रतियोगिकान्योन्याभाववत् द्रव्यत्वात् तेजोवत् इत्यनुमानात् त्रयोदशभिन्नस्य सामान्यतः सिद्धौ पृथिव्यां त्रयोदशभिन्नत्वं साध्यम् । न चान्वयित्वमसाधारण्यं वा, पक्षादन्यत्र साध्याप्रसिद्धेः ।

---

## प्रकाशः

केचित्तु असाधारणो दशाविशेषे दोषः । यदा तदवतारो नास्ति तदा क्वचिदयमपि पक्षः सम्भवतीत्येतदुक्तमित्याहुः ।

सर्वसाधारणं प्रकारान्तरमाह—**यद्वा जलमिति** । यद्यप्युक्तानुमानाज्जलभेदस्यासिद्धेः सिषाधयिषितत्रयोदशभेदस्यासिद्धिरेव[1]; तथापि तेजःप्रभृतिद्वादशभिन्ननिष्ठभेदप्रतियोगित्वं साध्यम्, अतो नोक्तदोषः ।

अन्ये तु तेजःप्रभृतिद्वादशभिन्नं तज्जलभेदवत् जलनिष्ठभेदप्रतियोगित्वादित्यनुमानान्तरात्तत्सिद्धिरित्यभिप्रेत्य [2]एतदुक्तमित्याहुः ।

---

## तर्कचूडामणिः

ननु मेलकस्यैव साध्यत्वमिति नोक्तदोष इत्यत आह—**मेलकस्येति** । तदीयमतान्तरमाह—**केचिदिति** ।

**सर्वसाधारणमिति** । व्यासज्यवृत्तिप्रतियोगिकाभावानङ्गीकारवादिमत[3]साधारणमित्यर्थः । **तथापीति** । यद्यपि त्रयोदशत्वावच्छिन्नप्रतियोगिकैकभेदसाधने साध्याप्रसिद्धिरेव, उक्तानुमानादपि तादृशाभावाप्रसिद्धेः । प्रत्येकसाध्यतायां च असाधारण्यम् । जलादावेव तत्प्रसिद्धावुक्तानुमानवैयर्थ्यं च; तथाप्यैकाधिकरण्या-

---

1. क स्यासिद्धेरेव
2. क. तदुक्तम्
3. क. साधारण्यम्

वस्तुगत्या पृथिव्यामेव साध्यसिद्धेः किं व्यतिरेकिणेति चेत् — न। पृथिवी त्रयोदशभिन्नेति व्यतिरेकिणं विना अप्रतीतेः। नन्वेवं पृथिवी जलादित्रयोदशभिन्नप्रतियोगिकान्योन्याभाववती द्रव्यत्वादिति पृथिवीभिन्न-तद्भिन्नादिसिद्धिः स्यादिति चेत् — न। अप्रयोजकत्वात्। प्रकृते चानुभूयमानजलादिवैधर्म्यस्य [1]पृथिवीत्वशब्दाश्रयत्वादेरतिरिक्तं विनानुपपत्तेः।

---

## प्रकाशः

यत्तु जले द्वादशभिन्नप्रतियोगिकभेदभाने द्वादशभिन्नेऽपि जलभेदस्य भानं समानसंवित्संवेद्यत्वादिति। तत्तुच्छम्। विशेषणविशेष्यादिभेदेन समानसंवित्संवेद्य-त्वासिद्धेः[2]। तत्प्रतियोगिकभेदे भासमाने तन्निष्ठभेद[3]प्रतियोगित्वं भासत इत्युचितम्। अत एव गवये गोसादृश्ये भासमाने समानसंवित्संवेद्यतया गवि गवयनिष्ठसादृश्य-प्रतियोगित्वज्ञानम्' न तु गवयप्रतियोगिकगोनिष्ठसादृश्यज्ञानमपि। अन्यथा [4]सादृश्योपमानस्य प्रत्यक्ष एवान्तर्भावसम्भवादनुमानान्तर्भावप्रयासानुपपत्तेरिति।

---

## तर्कचूडामणिः

वच्छिन्नास्तावन्तो भेदा इह साध्याः। उक्तानुमानाच्च ऐकाधिकरण्यं प्रसिद्धमिति भावः। **उपाध्यायमतमाह—अन्ये त्विति।** पूर्वानुमानादेतद्धेतुसिद्धिः समान-वित्तिवेद्यत्वादिति भावः।

**समानेति।** अत एव घटे पटभेदनिश्चये सति [5]पटे न घटभेदसंशय इति भावः। **विशेषणेति।** [6]विशिष्टघटकविशेषणादिपदार्थभेदेनेत्यर्थः। विशेषदर्शनात्

---

1. पृथिवीत्वाश्रयशब्दा—
2. ख. संवेद्यत्वानुपपत्तेः
3. ख. प्रतियोगिकत्वं
4. क. शाबरोपमानस्य
5. ख. ग. घटे न पट—
6. क. विशेष्य—

नन्वितरभेदो यद्यन्योन्याभावस्तदा भावाद्भेदो न सिध्येत्। अभावस्याभावान्तराभावात्। यदि च तेन समं स्वरूपभेद एव साध्यः, तदाननुगमादनुमानाप्रवृत्तिः। भावोऽभावो वा न भवतीत्यबाधितप्रतीतिबलादभावस्यापि अन्योन्याभावोऽस्तीति केचित्। तन्न। अपसिद्धान्तात्। अनतिप्रसक्ताधिकरणस्वरूपमात्रेणैवाभावप्रतीत्युपपत्तौ चाधिकाभावे मानाभावाच्चेति चेत्—न। इतरभावान्योन्याभावस्य साध्यत्वात्।

## प्रकाशः

इतरभावान्योन्याभावस्य साध्यत्वादिति। इतर[1]भावप्रतियोगिकतावदन्योन्याभावत्वेन रूपेण यदि साध्यता तदा अभावबहिर्भावादनुमानान्तरापेक्षा। यदि चाभावप्रतियोगिकस्वरूप[2]भेदवत्त्वे सति जलादिभावप्रतियोगिकत्रयोदशान्योन्याभाववत्वं साध्यम् यदि वेतरत्वावच्छिन्नसामान्यान्योन्याभाव एव साध्यः तदा अभावभेदोऽपि प्रथमानुमानेनैव सिध्यतीति मन्तव्यम्।

नन्वभावप्रतियोगिकाभावानभ्युपगमेन सामान्यान्योन्याभावोऽपि भावमात्रप्रतियोगिक एव सिध्येन्नाभावप्रतियोगिक इति चेत्—न। भावाभावसाधारणप्रतियोगितावच्छेदकभेदेनाभावस्याप्यतिरिक्ताभावस्वीकारस्यावश्यकत्वात्। अन्यथा

## तर्कचूडामणिः

कोट्यस्मरणाद्वा तत्र संशयाभाव इति भावः। गोसदृशो गवय इति ज्ञानानन्तरम् अनेन सदृशी मदीया गौरिति ज्ञानमुपमानफलमिति शबरस्वामिनां मतम्। मदीया गौरेतद्गवयसदृशी एतन्निष्ठसादृश्यप्रतियोगित्वात् इत्यनुमानादेव तत्सिद्धौ न तदर्थमुपमानम् इत्युपमानखण्डे ग्रन्थकार एव दूषयिष्यति। तदेवं सति व्यर्थं [3]स्यादित्याह—अन्यथेति।

1. ख. 'भाव' नास्ति।
2. ख. भेदत्वेन साध्यता तदाभाव- प्रतियोगिकः सिध्येन्न भाव-
3. क. स्यादित्यत आह

## प्रकाशः

कार्यवत्त्वे साध्ये तद्व्यभिचारिणोऽपि प्रमेयत्वादेस्तद्व्याप्यतापत्तिः । कार्यत्वस्य ध्वंसवृत्तितया [1]प्रमेयत्वादिसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वात् । [2]तस्मादकामेनापि भावाभावसाधारणकार्यत्वावच्छिन्नप्रतियोगिकोऽभावोऽभ्युपेयः, तथा प्रकृतेऽपि ।

ननु पृथिवीतरत्वस्य पृथिव्यन्योन्याभाववत्त्वस्य अभावेऽभावेन भावाभावसाधारणं सामान्यान्योन्याभावप्रतियोगितावच्छेदकमेवात्र [3]दुर्मिलमिति चेत् — न । जलादिभावाभावविशेष्यक[4]समूहालम्बनज्ञानविशेष्यत्वस्य तादृशस्य सत्त्वात् । न चाभावबहिर्भावपक्षेऽभावस्यैव सपक्षत्वात् ततो [5]हेतुव्यावृत्तावसाधारण्यमिति वाच्यम् ।

---

## तर्कचूडामणिः

तावदिति । ऐकाधिकरण्यावच्छिन्नेत्यर्थः । नन्वेवमितरान्योन्याभावत्वेन रूपेणाभावभेदसाधनं न स्यादित्यत आह — यदि चेति । अभावमात्र[6]प्रतियोगिकाभावाङ्गीकार एवापसिद्धान्त इत्याशयेनाह — न भावेति । तस्मादिति ।

अत्रेदं चिन्त्यम् । एवं हि घटात्यन्ताभावत्वावच्छिन्नात्यन्ताभावोऽपि स्वीकार्य एव । अन्यथा तद्वत्त्वे साध्ये तद्व्यभिचारिणोऽपि प्रमेयत्वस्य तद्व्याप्यत्वापत्तेः । [7]तत्त्वस्य तादृशाभावप्रतियोगितानवच्छेदकत्वात् । यदि च व्याप्तिलक्षणप्रविष्टात्यन्ताभावपदस्य [8]विरोधिमात्रपरतया घटात्यन्ताभावत्वावच्छिन्न[9]तदत्यन्ताभावाभावेऽपि तत्त्वं विरोधिप्रतियोगितावच्छेदकमिति मतम्, तदा तुल्यमिति ।

---

1. ख. प्रमेयत्वादिना सहवृत्तित्वात्
2. ख. अत्र ग्रन्थपातः
3. ख, दुर्निरूपमिति
4. ख समूहालम्बनसम्भवेन तज्ज्ञान-
5. ख. 'हेतु' नास्ति ।
6. क. प्रतियोगिकाङ्गीकार
7. क. स्वसत्त्वस्य ख ध्वंसत्वस्य
8. ख अविरोधि-
9. ख. 'तद्' नास्ति ।

**न चैवमभावादतिरेकत्वादवस्थ्यम् । तेन समं स्वरूपभेदस्यान्वयिना व्यतिरेकिणा वा साध्यत्वात् ।**

---

**प्रकाशः**

तस्य सपक्षत्वाप्रतिसन्धानदशायामेवास्याभिमतत्वात् । अभावस्याभावान्तरानाश्रयत्वा-देव न सपक्षत्वमित्याहुः (इत्यप्याहुः) ।

तेन सममिति । यद्यप्यभावस्वरूपभेदस्य पृथिवीजलादिस्वरूपत्वेनाननुगम-स्तदवस्थ एव । तथाप्यभावभिन्नत्वबुद्धिजननयोग्यत्व[1]मनुगतमस्तीति भावः । न चान्वा-यविनि घटादौ व्यभिचारः, पृथिव्यादिरूपस्याभावभेदस्य तत्राभावादिति वाच्यम् । घटादिरभावभिन्न इत्यबाधितप्रतीत्या भेदवत्त्वेन स्वस्यापि स्वस्मिन्ननन्यगत्या वृत्त्यभ्यु-पगमात् प्रतीतिवैचित्र्यस्यान्यथानुपपत्तेरिति दिक् ।

---

**तर्कचूडामणिः**

तस्माद्घटप्रागभावतद्ध्वंसप्रतियोगिक[2]घटात्यन्ताभावो भावाभावोभयप्रतियोगिका-भावसद्भावे दृष्टान्त इति द्रष्टव्यम् ।

दुर्मिलमिति । चतुर्दशत्वसंख्यायाः समवायादावभावात् इति भावः । सपक्षत्वेति । साध्यवत्त्वेत्यर्थः । [3]अभावस्याभावान्तरानाश्रयत्वे गगनात्यन्ता-भावोऽपि तत्र न स्यात् इत्यलरसं सूचयति—[4]इत्यप्याहुरिति ।

बुद्धीति । तद्विषयेत्यर्थः । नन्वेवमात्माश्रय इत्यत आह—(प्रतीति) [प्रतीतीति] । नन्वेवं घटाभावादेरपि अधिकरणरूपत्वापत्तिः । आधाराधेयभावस्य

---

1. क. 'अनुगतम्' नास्ति
2. क. घटात्यन्ताभावाभावोभय-
3. क. भावस्य
4. क. अपीति

अन्ये तु पृथिवीत्वभिन्नधर्मात्यन्ताभाव एव साध्यः जलत्वादिप्रतियोगिकास्तावन्तोऽत्यन्ताभावा वा तत्तदसाधारणतत्तद्धर्मात्यन्ताभावयोगो वा । एते चाभावा जलत्वं न घटादौ घटादि जलात्यन्ताभाववदिति

---

### प्रकाशः

पृथिवीत्वभिन्नेति । पृथिवीत्वासमानाधिकरणधर्मत्वावच्छिन्नात्यन्ताभाव इत्यर्थः । अस्याप्रसिद्धिरित्यस्वरसादाह—जलत्वादीति । [1]तत्तदिति । योग इति । पक्षधर्मताबललभ्यसाध्यसम्बन्धाभिधानम् । अत्यन्ताभावस्यैव साध्यत्वम्, अन्यथा अग्रिमग्रन्थविरोधात् । [2]अत्र जलत्वादिनियत[3]स्नेहात्यन्ताभावोऽपि साध्य इति न

---

### तर्कचूडामणिः

उक्तन्यायेन [4]स्वस्मिन्नपि सम्भवादित्यत आह—दिगिति । [5]गत्यन्तराभावे हि स्वाधारत्वकल्पना । अन्यथा प्रमेयत्ववत् इदानीं काल इति प्रतीत्या काले [6]कालवच्च गुणगुणिनोरपि [7]तत्प्रतीत्युपपत्तौ तयोर्भेदो न स्यात् । भूतले घटाभाव इत्यत्र अतिरिक्ताभावेन तदुपपत्तौ नानन्यगतिकत्वम् । न चेहापि तदनुरोधादभावप्रतियोगिकाभावाङ्गीकारः । अनवस्थापत्तेः । यद्यपि घटे पृथिव्याद्यभावेऽपि अभावभेदात्मकस्वगतरूपादिसत्त्वेन घटस्य स्वाश्रितत्वाभिधानं व्यर्थम् । तथाप्यनवस्थापरिहारायान्यधर्माङ्गीकारे [8]तत्राभावभेदत्वं स्वस्यैवेति [9]तत्रैव स्वाश्रितत्वं वाच्यमित्यत्र तात्पर्यम् । न च तत्राप्यभावभेदात्मकप्रमेयत्वमस्तीति [10]न स्वाश्रितत्वमिति वाच्यम् । प्रमेयत्वस्य तद्भेदरूपत्वे अभावस्यापि स्वभिन्नत्वापत्तेरिति दिक् ।

---

1. क. 'तत्तदिति' नास्ति
2. ख. अन्यथा
3. ख. स्नेहाद्यभावोऽपि
4. ग, तस्मादपि
5. क, अन्यतराभावे
6. क. कालद्वयाच्च
7. ग. तत्प्रतीत्युपपत्तौ
8. ख. तत्राभावे
9. ख, 'तत्रैव' नास्ति
10. ग, 'न स्वाश्रितत्वमिति' नास्ति ।

प्रत्यक्षादेः क्वचित्तद्वैशिष्ट्याग्रहादेव प्रसिद्धा इति नाप्रसिद्धिः। तावतामभावानां वैशिष्ट्यं न प्रसिद्धमिति चेत्—किमेतावता । न हि तावद्वैशिष्ट्यमत्र साध्यते। किं तु जलत्वादीनां यावन्तोऽभावा इह साध्यास्ते च तत्र तत्र प्रसिद्धा एव । तावद्वैशिष्ट्यधीस्तु फलम् । अन्यथा सिद्धसाधनात् । मिलितानामपि साध्यत्वे नाप्रसिद्धिः । किञ्चिदेकधर्मावच्छेदो हि बलादि-

---

## प्रकाशः

पूर्वाभेदः । योगो मेलक इत्यन्ये । ननु प्रत्येकं साध्यतायां समूहालम्बनानुमित्या [1]तावदभावसिद्धावसाधारण्यम् । मिलितसाध्यतायामप्रसिद्धिरित्यतुशयेन व्यासज्यवृत्ति-प्रतियोगिकाभाववादिमतमेवावलम्बते—**मिलितानामपीति । किंचिदिति ।** त्रयो-दशत्वसंख्यासमानशीलस्य तादृशापेक्षाबुद्धिविषयत्वस्य सत्त्वादिति भावः ।

एतेन तादृशबुद्धिविषयत्वावच्छिन्नानामेवाभावानां तेजःप्रभृतिषु सत्त्वेन तेषां विपक्षत्वार्थमैकाधिकरण्यावच्छेद एव मेलकपदार्थो वाच्यः, स चाप्रसिद्ध

---

## तर्कचूडामणिः

ननु जलादेरपि पृथिवीत्वभिन्नतेजस्त्वात्यन्ताभाववत्तया सपक्षत्वापत्तिः। तादृशधर्मत्वावच्छिन्नात्यन्ताभावत्वविवक्षायां बाधः, गन्धात्यन्ताभावस्य पक्षेऽ-भावादित्यत आह—**पृथिवीत्वेति । अग्रिमेति ।** 'न हि तावद्वैशिष्ट्यम्' इत्याद्यग्रिमग्रन्थविरोधादित्यर्थः । नन्वत्राप्यत्यन्ताभावानामेव साध्यत्वे[2]पूर्वाभेदापत्ति-रित्यत आह—**अत्रेति । मेलक इति ।** ऐकाधिकरण्यावच्छेदकस्य मेल-कपदार्थत्वे अप्रसिद्धिः। अपेक्षाबुद्धिविशेषविषयत्वस्य तत्त्वे मिलितानामपीत्यनेन पौनरुक्त्यमित्यस्वरसोऽत्र बोध्यः । ननु वनादौ शतत्वादिसंख्याविशेष ऐकाधि-करण्यं वा मेलनार्थः। न चात्र तत्सम्भवः। अभावे संख्यायोगात्, ऐकाधि-

---

1. ख. तदभाव-        2, क. पूर्वभेदा-

वन्मेलकार्थः, स च नासिद्धः। न च हेतोरसाधारण्यम्। तावदभावयोगी ह्यत्र सपक्षो भवति, न तु तदेकदेशकतिपयाभाववान्। साध्यतायास्तावत्यपर्याप्तेः।

---

## प्रकाशः

एवेति निरस्तम्। व्यासज्यवृत्तिधर्मस्य साध्यतावच्छेदकत्वाभ्युपगमेन तदवच्छिन्नसाध्याभावस्य तदेकदेशकतिपयाभाववत्त्वेऽपि तेषु सत्त्वेन तेषां विपक्षत्वसम्भवात्। न चाभावेषु व्यासज्यवृत्तिधर्म एव नास्तीति वाच्यम्। अभावे संख्या नास्तीति विशेषदर्शनवतः तत्र त्रयोदशव्यवहारानापत्तेः। न चाव्यासज्यवृत्तितादृशबुद्धिविषयत्वेनैव स इति वाच्यम्। अव्यासज्यवृत्तिधर्मस्य प्रत्येकाधिकरणविश्रान्तत्वेनैकस्मिन्नप्यभावे त्रयोदशत्वादिव्यवहारापत्तेः। एकत्रापि घटे [1]घट इति प्रतीतिवत्। अत एव जलादौ त्रयोदशाभावा नेति सर्वेषां प्रतीतिः। तस्मादकामेनापि तत्र व्यासज्यवृत्तिधर्मोऽभ्युपेय इति। तावतीति। व्यासज्यवृत्तिसाध्यतावच्छेदकस्य तावत्येव पर्याप्तेरिति भावः।

---

## तर्कचूडामणिः

करण्याप्रसिद्धेश्चेत्यत आह—त्रयोदशेति। उपाध्यायोक्तदोषं निराकरोति—एतेनेति। [2]सत्त्वेनेति। तादृशबुद्धि[3]विषयत्वस्याव्यासज्यवृत्तित्वादिति भावः। न चेति। त्रयोदशत्वादिव्यवहारस्य संख्याभ्रमादप्युपपत्तेरिति भावः। ननु साध्यताया व्यासज्यवृत्तित्वेन वह्न्यादिनिष्ठाया अपि तस्यास्तथात्वेन महानसादेरपि सपक्षत्वं न स्यादित्यत आह—साध्यतेति। [4]वह्नित्वमप्यनेकवह्नौ पर्याप्तमेवेत्यत आह—तावत्येवेति।

---

1. क. घटाः
2. क. 'सत्त्वेनेति' नास्ति।
3. ग विषयत्वस्य व्यासज्य-
4. क. वह्नित्वमप्येक-

यद्वा जलत्वात्यन्ताभावस्तेजस्त्वात्यन्ताभावाधिकरणवृत्तिः अत्यन्ताभावत्वात् घटत्वात्यन्ताभाववत् । एवमत्यन्ताभावान्तरसामानाधिकरण्यमपि तत्र साध्यमिति क्वाप्रसिद्धिः ।

---

## प्रकाशः

ऐकाधिकरण्यावच्छेदकस्यापि मेलकपदार्थत्वेन साध्याप्रसिद्धिरित्याह—यद्वेति । अत्यन्ताभावत्वादिति । इतरनिरूपणाधीननिरूपणकाविशेषितप्रतियोगिकात्यन्ताभावत्वादित्यर्थः । तेन तेजोन्यप्रमेयत्वात्यन्ताभावादौ न व्यभिचारः ।

---

## तर्कचूडामणिः

नन्वत्यन्तपदं व्यर्थम् । न च तेजोऽन्यप्रमेयान्योन्याभावे व्यभिचारवारणाय तदुपादानम् । [1]तेजोन्यप्रमेयकोटिनिविष्टजलादेरितरनिरूपणाधीन[2]निरूपणविशेषितत्वादिति वाच्यम् । तेजोन्यप्रमेयज्ञानादीनामितरनिरूपणाधीन[3]निरूपणविशेषितानामपि तत्प्रतियोगित्वात् । न च तादृशान्योन्याभावे घटादेरपि प्रतियोगित्वेन तदविशेषितप्रतियोगिकत्वमप्यस्तीति वाच्यम् । तन्मात्रप्रतियोगिकत्वस्यैव तदर्थत्वेन वक्तव्यत्वात् । अन्यथा तेजोऽन्यप्रमेयत्वघटत्वोभयप्रतियोगिकेऽत्यन्ताभावे व्यभिचारापत्तेरिति चेत्—न । व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिकत्वस्याप्यत्यन्ताभावविशेषणत्वात् । घटत्वतादृशप्रमेयत्वोभयाभावस्य तादृशप्रतियोगिकत्वादिति ।

उपाध्यायमतमाह—यद्वेति । मूलगतात्यन्तपदस्वारस्यमस्वरसबीजमित्याह—अन्य इति ।

---

1. क. तेजोन्यप्रमेयत्वघटत्वोभयकोटि·
2. ग. निरूपणकाविशेषितत्वात्
3. ग. निरूपणकविशेषितानाम्

किं चेतरे तावत् प्रसिद्धा एव। ते च भेदप्रतियोगिनो मेयत्वात् इतीतरभेदोऽपि सुग्रह एव।

ननु पृथिवी नेतरभेदवती गुरुत्वादिभ्यो जलवदिति प्रतिरोध इति चेत्—न। इतरभेदनिषेधो हीतराभेदः न तु तेजःप्रभृत्यभेदो जल इति

## प्रकाशः

यत्तु अभावाविशेषितप्रतियोगिकात्यन्ताभावत्वादित्यर्थ इति। तन्न। तेजोन्यप्रमेयमिति ज्ञानविशेष्यत्वात्यन्ताभावे तथापि व्यभिचारात्। [1]तेजोमात्रावृत्त्यत्यन्ताभावत्वादित्यर्थ इत्यन्ये।

किं चेति। अत्र निरधिकरणानामेव जलादिभेदानां प्रसिद्धौ सपक्षत्वानिश्चयात् प्रत्येकव्याप्तिभिरपि प्रत्येकभेदसाधनेन नासाधारण्यमिति हृदयम्। ननु गुरुत्वेन जलमात्राभेदः, तेजःप्रभृत्यभेदाश्च लिङ्गान्तरैः साधनीयाः। किं चेतरभेदनिषेधो नेतराभेदः अन्यतरभेदाभावेनापि समुदायाभावात् एकसत्त्वेऽपि द्वयमिह

## तर्कचूडामणिः

ननु प्रत्येकभेदानां जलादौ प्रत्यक्षसिद्धत्वादेतदनुमानवैयर्थ्यम्। न हि तावद्भेदानाम् [2]ऐकाधिकरण्यमुक्तानुमानेनापि प्रसिद्धमित्यत आह — अत्रेति। अयोग्यभेदस्यातीन्द्रियत्वाभ्युपगमेन इदमिति न वैयर्थ्यम्। सपक्षेति। साध्यवदित्यर्थः। तादृशाभावानङ्गीकारे बाधकमाह—अन्यथेति। [3]ननु अनुमानरूपमानसत्वे कथं तावदभेदासम्भवः। न च बाधादेव नानुमानावतार इति वाच्यम्। तावदभेदाभावरूपतावद्भेदानां[4]प्रत्यक्षत्वेन बाधाभावादित्यत

1. ख. तेजोमात्रवृत्त्यभावत्वात्
2. क. वैयधिकरण्यं
3. क. ननु
4. ग. प्रत्यक्षत्वे बाधा-

दृष्टान्तस्य साध्यवैकल्यात् । चतुर्दशाभेदानां चैकत्र विरोधेनासम्भवात् । चतुर्दशभेदानां चैकत्र वृत्तौ न विरोधः ।

यत्तु साध्यप्रसिद्धौ पृथिवीतरभिन्ना तत्साध्याधिकरणपृथिव्यन्यतरत्वात् तदधिकरणवत् पृथिव्यां तत्साध्यमन्वयिन एव सेत्स्यतीति । तन्न । अन्यतरत्वस्यालिङ्गत्वादित्युक्तत्वात् । लिङ्गत्वे वा जलादावपि तत्सिद्धिप्रसङ्गात् । एवं तर्हि पृथिवी जलं पृथिवीत्वात् यन्न जलं तन्न पृथिवी यथा तेज इति सत्प्रतिपक्षोऽस्त्विति चेत्—न । अजलस्य घटादेः प्रत्यक्षत

प्रकाशः

नास्तीति प्रतीतेः । अन्यथा चतुर्दश[1]भेदाभावरूपसाध्याभावाप्रसिद्धौ व्यतिरेकव्याप्त्यग्रहप्रसङ्गादित्यत आह—चतुर्दशेति । प्रत्यक्षादिना प्रत्येकभेदस्य पक्षे निश्चयेनान्यतरभेदाभावेनापि चतुर्दशाभेदस्य बाधान्न सत्प्रतिपक्षत्वमिति भावः । अभावपदार्थमादाय चतुर्दशत्वं बोध्यम् । विरोधेनेति । प्रमाणसिद्धप्रत्येकचतुर्दशभेदविरोधेनेत्यर्थः । लिङ्गत्वे वेति । तत्रापि तत्साध्याधिकरण[2]जलाद्यन्यतमत्वस्य लिङ्गत्वसम्भवादिति भावः । यद्यपि जले पृथिवीतरभेदस्य बाधेन न सिद्धिप्रसङ्गः ।

तर्कचूडामणिः

आह—प्रत्यक्षेति । [3]नन्वितराभावान्योन्याभावस्य साध्यतया कथं चतुर्दशत्वमित्यत आह—अभावेति । नन्वितरभेदनिषेधरूपेतराभेदस्य जलादौ साधनवति सत्त्वेन कथं हेतोर्विरुद्धत्वम् इत्यत आह—बाधेनेति । ननु जलादौ तत्साध्याधिकरणपृथिव्यन्यतरत्वस्यासिद्धेः कथं तत्र तत्सिद्धिप्रसङ्ग इत्यत आह—तत्रापीति [तथापीति] । यद्यपि तत्साध्याधिकरण[4]पृथिव्यन्यान्यत्वरूपलिङ्गनिष्ठा-

1. ख. भेदरूपसाध्यस्याभावाप्रसिद्धया
2. ख. जलाद्यन्यतरत्वस्य
3. क, नन्वितरभावा-
4. ख. पृथिव्यन्यत्वरूप

एव पृथिवीत्वनिश्चये व्यतिरेकव्यभिचारादस्य न्यूनत्वात् । तदनवधारणे तु सत्प्रतिपक्षत्वमिष्टमेव ।

ननु जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् इच्छादिकार्यवत्त्वाद्वेति व्यतिरेकिणि साध्याप्रसिद्धौ कथं व्यतिरेकादिनिरूपणम् । नैरात्म्यं च न घटस्य प्रत्यक्षवेद्यम्, तस्य तत्रासामर्थ्यात् । नानुमानगम्यम्, नैरात्म्याप्रतीतावन्वयिनोऽभावात् । सात्मकत्वप्रतीतिं विना व्यतिरेकिणोऽनुपपत्तेः ।

अथेच्छा समवायिकारणजन्या कार्यत्वात् । तच्च समवायिकारणं पृथिव्याद्यष्टद्रव्यभिन्नं पृथिव्यादित्वे बाधकसत्त्वादिति पृथिव्यादिभिन्नात्मसिद्धौ तद्वत्त्वं जीवच्छरीरे साध्यत इति चेत्—यदि सात्मकत्वमात्मसंयोगवत्त्वम्,

---

## प्रकाशः

जलेतरभेदसिद्धाविष्टापत्तिः । तथापि [1]पूर्वोक्तदोष एव तात्पर्यम् । व्यभिचारादित्युपलक्षणम्, [2]असाधारण्यादित्यपि द्रष्टव्यम् । इच्छादीति । इच्छाद्यवच्छेदकत्वादित्यर्थः । तस्येति । योग्यानुपलब्धेरभावादित्यर्थः । कार्यत्वादिति । भावकार्यत्वादित्यर्थः । ज्ञानेति । घटादेरपि सपक्षत्वापत्तौ ततो हेतुव्यावृत्तावसाधार-

---

## तर्कचूडामणिः

या व्याप्तेः पृथिवीत्वादिना दुर्ग्रहतया व्यर्थविशेषणत्वानवकाशात् पूर्वदोषोऽप्यसंगत एव, तथापि तदप्रतिसन्धानदशायां व्यतिरेक्यवतार इति द्रष्टव्यम् । नन्विच्छादिकार्यवत्त्वं समवायेनासिद्धम्, हेतुहेतुमद्भावसम्बन्धेन तद्वत्त्वं व्यभिचारीत्यत आह—इच्छादीति । नन्वधिकरणप्रत्यक्षादिसत्त्वे कथमसामर्थ्यमित्यत आह—योग्येति । सात्मकत्वस्यातीन्द्रियत्वादिति भावः । ध्वंसे

---

1. ख. पूर्वदोष 2. ख. असाधारणात्

तदा घटादौ तदस्तीति ततो हेतुव्यावृत्तावसाधारण्यम् । ज्ञानसमानाधिकरण-ज्ञानकारणीभूतसंयोगाश्रयकार्यत्वं सात्मकत्वं, शरीरात्मसंयोगस्य ज्ञान-कारणत्वात्, आत्ममनसोस्तथात्वेऽप्यकार्यत्वादिति चेत्—न । शरीरा-दन्यत्रासिद्धेः । तत्र प्रसिद्धौ सिद्धसाधनात् ।

---

## प्रकाशः

ण्यमित्यत आह—ज्ञानसमानाधिकरणेति । आत्मघटादिसंयोगस्य घटादौ सत्त्वा-दोषतादवस्थ्यमित्यत आह—ज्ञानकारणीभूतेति । तादृशसत्तादेर्घटादौ सत्त्वादुक्त-दोषतादवस्थ्यमित्यत उक्तं संयोगेति । आत्ममनसोः सपक्षत्वनिवारणायाह—[1]कार्य-त्वमिति । न च प्राणेऽतिप्रसङ्गः । आत्मप्राणसंयोगस्यान्यथासिद्धतया ज्ञानाहेतुत्वा-दिति वक्ष्यमाणत्वादिति भावः । शरीरावयवस्य सपक्षत्वानिश्चयदशायामेवास्यावतार इति नान्वयित्वमाशङ्कनीयम् । शरीर एवेति । यद्यप्युक्तं सात्मकत्वं शरीरावयवे-ऽप्यस्ति, तथापि तत्प्रसिद्धावन्वयित्वमसाधारण्यं वेति भावः । दोषान्तरमाह—

---

## तर्कचूडामणिः

व्यभिचारादाह—[2]भावेति । ननु घटादेः सात्मकत्वज्ञानेऽपि रूपादौ व्यतिरेकव्याप्तिग्रहसम्भवात् तद्व्यावर्तकविशेषणवैयर्थ्यमित्यत उक्तं ततो हेतुव्या-वृत्ताविति । तादृशेति । सत्तायाः स्वप्रत्यक्षहेतुत्वात् [3]तत्समानाधिकर-णत्वाच्चेति भावः । न चेति । आत्मप्राणसंयोगमादाय तत्रापि तत्सत्त्वा-दिति भावः । शरीरावयवस्येति । तद्व्यावर्तनाय कार्यपदस्यान्त्यावयविपरत्वे हेतोस्तत्र व्यभिचारः स्यादिति भावः । नन्वन्वयित्ववारणाय शरीरावयव-व्यावृत्तो हेतुर्बोध्यः इत्यत आह—असाधारण्यं वेति । दोषान्तर-

---

1. ख. कार्येति
2. ग. अभावेति
3. ग. 'तद्' नास्ति ।

इच्छाया असमवायिकारणसंयोगावच्छेदकत्वस्याभावः घटादौ दृष्टः, तद्व्यतिरेकः शरीरे साध्यत इति चेत्—न। इच्छाया असमवायिकारण-संयोगावच्छेदकत्वस्य शरीर एव प्रसिद्धेः सिद्धसाधनात्। अन्यथा असिद्धि-व्यतिरेकाद्यनिरूपणात्। अप्रसिद्धसाध्यसंसर्गमिव साध्यमप्रसिद्धं साधयति व्यतिरेकीति चेत — न। व्यतिरेकाद्यनिरूपणादसाधारणधर्मेणा-प्रतीतपदार्थानुमाने घटत्वादिनापि स्वेच्छाकल्पितडित्थाद्यनुमानप्रसङ्ग इति।

उच्यते। इच्छासमवायिकारणसिद्धाविच्छात्वं संयोगासमवायि-कारणकवृत्ति, नित्येन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वात् शब्दत्ववत्।

---

## प्रकाशः

असाधारणेति। इच्छासमवायिकारणासिद्धौ संयोगासमवायिकारणकत्वशङ्कापि नास्तीत्यत आह—इच्छेति। भावकार्यत्वादिति शेषः। [1]इच्छात्वमिति। व्यक्ति-पक्षके शब्दजशब्दे व्यभिचारः स्यादिति [2]जातिपक्षकमुक्तम्। स्नेहत्वादौ व्यभि-

---

## तर्कचूडामणिः

त्वसूचकचकाराभावेन पूर्वग्रन्थशेषत्वभ्रमं वारयति—दोषान्तरमिति। ननु वक्ष्य-माणहेत्वादिस्वरूपानुपयोगात् [3]सिद्धावित्यत्यन्तवैयर्थ्यमित्यत आह — इच्छेति। [4]असमवायिकारणजन्यवृत्तित्वस्योपाधित्व[5]शङ्कावारणाय तदभिधानमिति भावः। नन्विच्छा संयोगासमवायिकारणिका नित्येन्द्रियग्राह्यविशेषगुणत्वादिति व्यक्तिपक्ष-कानुमानादप्यभिमतसिद्धौ किं जातिपक्षकानुमानेनेत्यत आह — व्यक्तीति।

---

1. ख. इच्छाव्यक्तिपक्षकानुमाने शब्दे व्यभिचार
2. क. जातिपक्षकत्वमुक्तम्
3. क. असिद्धावत्यन्त-
4. ग. समवायिकारणवृत्तित्वस्य
5. ग. पक्षे शङ्का

## प्रकाशः

चागदाह—नित्येति । तच्च नित्यमात्रेन्द्रियग्राह्यत्वम्, अतो [1]मनइन्द्रियग्राह्यतया न दोषतादवस्थ्यमिति भावः । एतच्च गुणविशेषणम् [2]न तु जातिविशेषणम् । अन्यथा आत्मैकत्वे नित्यमात्रेन्द्रियग्राह्यजात्यभावेन व्यभिचाराभावात् तद्वारणाय [3]विशेषपदोपादानानुपपत्तेः । आत्मैकत्वप्रत्यक्षत्वपक्ष संख्यात्वजातौ व्यभिचारादाह—**विशेषेति**। शब्दजशब्दमात्रवृत्तिजातौ व्यभिचारादाह—**साक्षादिति**। साक्षाद्व्याप्यत्वं जातेरेवेति स्वरूपनिर्वचनपरं [4]जातिपदम् । यदि च तद्व्याप्यत्वजात्यव्याप्यत्वगर्भं तत्

---

## तर्कचूडामणिः

अत्र ग्राह्यत्वं लौकिकप्रत्यक्षविषयत्वम्, तेन दृष्टान्ते न साधनवैकल्यम्, न वा पक्षऽसिद्धिरिति ध्येयम् । **अन्यथेति** । संख्यात्वजातेश्चक्षुरादिनापि [5]ग्रहसम्भवादिति भावः । **आत्मैकत्वेति** । तदप्रत्यक्षत्वपक्षे ग्राह्यविशेषो लौकिकप्रत्यक्षविषय इत्यर्थः, अतो न वैयर्थ्यमिति ध्येयम् । ननु शब्दजशब्दसंख्यान्यतरत्वादेरपि गुणत्वव्याप्यशब्दसंख्यान्यतरत्वव्याप्यतया साक्षात्पदेनैव तत्र व्यभिचारनिरासे जातिपदवैयर्थ्यमित्यत आह—**साक्षादिति** । न च द्रव्यवृत्तिगुणत्वाद्युपाधेरपि तद्व्याप्यतया जातेरेवेति कथं नियम इति वाच्यम् । व्याप्यपदस्य न्यूनदेशवृत्तिपरत्वात् । अन्यथा शब्दत्वादेरपि गुणत्वव्याप्यद्रव्यवृत्तितया साक्षाद्व्याप्यत्वानुपपत्तेः ।

**यदि चेति** । न च तद्गर्भत्वे प्रयोजनाभावः । शब्दत्वादेरपि गुणत्वव्याप्यशब्दसंख्यान्यतरत्वादिव्याप्यतया साक्षाद्व्याप्यत्वाभावप्रसङ्गेन जातिगर्भत्वस्यावश्य-

---

1. ख. मनोग्राह्यत्वेन तस्य दोष
2. ख. 'न तु जातिविशेषणं' नास्ति ।
3. ख. विशेषगुणोपा-
4. ख. 'जातिपदम् ........ तदित ध्येयम्' इति ग्रन्थस्त्रुटितः
5. क. ग्रहादिति

स चासमवायिकारणं संयोगः किञ्चिदवच्छिन्नः संयोगत्वात् आत्मसंयोगमात्रस्येच्छाजनकत्वे सात्मकत्वं शरीरे साध्यते ।

## प्रकाशः

तदा शब्दजशब्दसंख्यान्यतरत्वादौ व्यभिचारवारकमपि तदिति ध्येयम् । [1]इन्द्रियत्वेनेन्द्रियग्राह्यत्वं विवक्षितम्, न तु तन्मात्रग्राह्यत्वम् । एवं च जातिविशेषणत्वेऽपि न दोष इति वयम् । स चेति । किंचिदवच्छिन्नसंयोगोऽसमवायिकारणमित्युद्देश्यविधेय[2]भावव्यत्यासेन योज्यम् ।

## तर्कचूडामणिः

वाच्यत्वादिति भावः । इन्द्रियत्वेनेति । स्नेहत्वं तु मनस्त्वेनैव मनोग्राह्यमिति भावः । तत्रापि ग्राह्यत्वं पूर्ववद्बोध्यम् । तेनोपनीततया मनोग्राह्ये तत्र न व्यभिचारतादवस्थ्यम् । स्वप्रत्यक्षजनकनित्येन्द्रियलौकिकसंनिकर्षाश्रयत्वं नित्येन्द्रियग्राह्यत्वम् । [3]तेनोक्तसकलदोषानवकाश इति वयं पश्यामः ।

ननु—"यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् ॥"

इति न्यायेनासमवायिकारणस्य प्राथम्यादुद्देश्यत्वं प्रतिभाति । न च तदुपपद्यते । तथा सति [4]किंचिदवच्छिन्नस्य विधेयतया वक्ष्यमाणानुकूलतर्कानुपपत्तेः । इच्छाजनकस्य संयोगस्य वात्मसंयोगमात्रत्वे इत्येव वक्तव्यत्वात् । किं च संयोगमात्रस्याव्याप्यवृत्तितया किंचिदवच्छिन्नत्वसिद्धेस्तत्साधनवैफल्यम् । किंचिदनवच्छिन्नत्वे संयोगत्वस्यैवानुपपत्तेरित्यत आह—**किंचिदवच्छिन्न** इति । तथा च संयोगमुद्दिश्य किंचिद-

1. ख. इन्द्रियत्वेन नित्येन्द्रियग्राहकत्वम्
2. क. भावादिना व्यत्ययेन योज्यम् ।
3. ग. अतो नोक्तदोषावकाशः ।
4. ग. किंचिदवच्छिन्नत्वस्याविधेयतायां

यद्वा, आत्मनीच्छाधारता महत्संयोगावच्छेद्या जन्यविभुविशेषगुणाधारतात्वात् वाय्वादिसंयोगावच्छेद्यशब्दाधारत्ववदिति सामान्यतः सिद्धमिच्छाधारताघटकेच्छासमवायिकारणद्रव्यसंयोगवत्त्वं सात्मकत्वम् । अत एव ज्ञानसमानाधिकरणज्ञानकारणीभूतसंयोगाश्रयकार्यत्वं वा सात्मकत्वम् । स्वशरीरे प्राणादिमत्त्वस्य इच्छादिमत्त्वस्य च चेष्टावयवोपचयादिव्या-

## प्रकाशः

अत एव तदनुकूलं तर्कमाह - **आत्मसंयोगमात्रस्येति** । न चैवं संयोगत्वादिहेत्वसम्भव इति वाच्यम् । असमवायिसंयोगत्वादिति हेतोर्विवक्षितत्वादित्याहुः । यद्वेति । अत्रोभयत्राप्यवच्छिन्नत्वज्ञानेन समानवित्तिवेद्यतयावच्छेदकत्वस्यापि विषयीकरणात् साध्यप्रसिद्धिर्द्रष्टव्या । सिद्धसाधनभयेनाह—**सामान्यत इति** । **अत एवेति** । सामान्यतः साध्यसिद्धौ सिद्धसाधनाद्यनवकाशादेवेत्यर्थः । व्यतिरेकव्याप्तिं दर्शयति—**स्वशरीर इति** । ननु शरीरं सात्मकं तत्त्वे वाधकाभावात्

## तर्कचूडामणिः

वच्छिन्नतया असमवायिकारणत्वं विधीयत इति भावः । **अत एवेति** । तादृशासमवायिकारणत्वस्याविधेयत्वादेवेत्यर्थः । **न चैवमिति** । किंचिदवच्छिन्नत्वे [1]सत्यसमवायिकारणत्वस्य साध्यत्वे विनश्यदवस्थघटसंयोगे व्यभिचारप्रसङ्गादिति भावः । ननु साध्यतावच्छेदकप्रकारकसाध्यप्रसिद्धेरनुमानाङ्गत्वात् सामान्यतस्तत्प्रसिद्धिरप्रयोजिकेत्यत आह—**सिद्धेति** । पक्षतावच्छेदकावच्छेदेन तदसिद्धिमात्रात् सामान्यत इत्युक्तमिति भावः । अतःशब्दस्याव्यवहितपरत्वं वारयति — **सामान्यत इति** । ननु सात्मकत्वानुमानप्रस्तावे घटादौ चेष्टाविरहाद्यनुमानप्रदर्शनमसंगतमित्यत आह—**व्यतिरेकेति** ।

1. क सति समवायि-

प्यत्नग्रहात् । घटादौ चेष्टादिविरहेण प्राणादिमत्त्वेच्छादिमत्त्वविरहानुमानम्, इच्छादिविरहात् इच्छादिप्रयोजकेच्छाद्याधारताघटकेच्छाद्यसमवायिकारण-संयोगविरहानुमानं कार्याभाववति कारणाभावनियमात् ।

न च सात्मकत्वं शरीरवृत्ति शरीरे बाधकाभावात् शरीरत्ववदिति अन्वयिनैव साध्यसिद्धेः किं व्यतिरेकिणेति वाच्यम् । शरीरं सात्मकमिति शरीरविशेष्यकबुद्धेर्व्यतिरेकिणं विनानुपपत्तेः । उपायान्तरस्योपायान्तरादूषकत्वाच्च ।

यद्वा चेष्टा संयोगासमवायिकारणिका संस्काराजन्यक्रियात्वादिति चेष्टाया असमवायिकारणसंयोगसिद्धौ प्रयत्नवदात्मसंयोग एव पर्यवस्यति प्रयत्नान्वयव्यतिरेकानुविधायित्वात् ।

---

## प्रकाशः

इति शरीरविशेष्यकबुद्धिरपि तदनन्तरं सुकरैवेत्यरुचेराह—[1]उपायेति । संस्काराजन्येति । गुरुत्वाद्यजन्येत्यपि विशेषणम्, तेन पतनादौ न व्यभिचारः । [2]प्रयत्नेति । या क्रियेत्यादिव्याप्तिरित्यर्थः ।

---

## तर्कचूडामणिः

ननु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरेवोद्देश्यतया न [3]तद्विशेष्यकत्वपर्यन्तमुद्देश्यता । न च तथाविधसिषाधयिषासत्त्वे पक्षत्वं दुर्वारमिति वाच्यम्, तथा सति तद्विशेष्यबुद्धिसत्त्वेऽपि तादृशबुद्ध्यन्तरेच्छया पक्षतासम्भवेनोक्तप्रयासानुपपत्तेरिति दोषे सत्येव दोषान्तरमाह—[4]नन्विति । ननु प्रयत्नान्वयव्यतिरे-

---

1. ख उपायस्येति
2. ख 'प्रयत्नेति ........शरीरावयवे व्यभिचारः' नास्ति ।
3. ग. तद्विशेष्यपर्यन्त-
4. क ननिति

एवं [च] चेष्टायाः असमवायिकारणसंयोगाश्रयत्वे सति शरीरत्वं सात्मकत्वं जीवच्छरीरे साध्यम्, चेष्टावत्त्वादिति हेतुः। चेष्टाविरहश्च घटादौ प्रत्यक्षसिद्धः। चेष्टाविरहात्तदसमवायिकारणसंयोगविरहोऽपि सुग्रहः।

यद्वा जीवच्छरीरं तदवयवो वा आत्मभिन्नत्वे सति आत्मविशेषगुणकारणभोगानधिकरणावृत्तिसंयोगवत् प्राणान्यत्वे सति ज्ञानकारणीभूतप्राणसंयोगवत्त्वात् यन्नैवं तन्नैवं यथा घटः।

---

## प्रकाशः

एवं चेति। सत्यन्तमात्रस्यात्मन्यपि सत्त्वात् ततो हेतुव्यावृत्तावसाधारण्यमित्यत उक्तं शरीरत्वमिति। चेष्टावत्त्वादिति। चेष्टावच्छरीरत्वादित्यर्थः। तेन न शरीरावयवे व्यभिचारः। आत्मभिन्नत्व इति। आत्मनोऽपि साध्यवत्त्वे [1]असाधारण्यवारणाय [2]सत्यन्तम्। मृतशरीरस्यापि कदाचित् भोगाधिकरणतया तत्राप्युक्तसंयोगसत्त्वेन सपक्षतया ततश्चेष्टावत्त्वहेतुव्यावृत्तावसाधारण्यवारणाय [3]आत्मविशेषगुणेति। [4]न च कादाचित्कभोगाधिकरणत्ववत् चेष्टावत्त्वमपि तत्रास्त्येवेति वाच्यम्। मृतशरीरव्यावृत्तस्यैव वर्तमानचेष्टावत्त्वस्य सात्मकत्व[5]लिङ्गत्वात्। मृतशरीरात्मसंयोगजनकतदवयवात्मसंयोगमादाय मृतशरीरा-

---

## तर्कचूडामणिः

काभ्यां कथं प्रयत्नवदात्मसंयोगस्य हेतुत्वम्, व्यधिकरणत्वादित्यत आह—या क्रियेति। या क्रिया व्यधिकरणयदीयगुणजन्या सा तत्संयोगासमवायिकारणिका गवद्वायुसंयोगजन्यवृक्षादिक्रियावदित्यर्थः। यथा चैतत्तथा वक्ष्यते।

---

1. क. असाधारण-
2. ख. 'सत्यन्तम्... ..असाधारण्यवारणाय' नास्ति।
3. ख. आत्मविशेषगुणकारणेति
4. ख. अत्र पङ्क्तिद्वयं नास्ति।
5. ख. लिङ्गकत्वात्

आत्मप्राणसंयोगः प्राणमनस्संयोगो वा शरीरप्राणसंयोगेनैवान्यथासिद्धो न कारणम् ।

---

## प्रकाशः

वयवेऽपि साध्यसत्त्वेनासाधारण्य स्यात् अत उक्तं विशेषेति । भेरीदण्डसंयोगवच्छब्दजनकं परशरीरादिसंयोगमादाय मृतशरीरे साध्यसत्त्वेनोक्तदोषतादवस्थ्यम्, अत उक्तम्—आत्मेति । यद्यपि तस्यापि स्वगोचरसाक्षात्कारजनकत्वेन दोषतादवस्थ्यम्, तथापि ज्ञानातिरिक्तात्मविशेषगुणकारणत्वं जन्यात्मविशेषगुणत्वावच्छिन्नकारणत्वं वा विवक्षितम्, अतो नोक्तदोषः । मनसः सपक्षत्वनिरासायाह—भोगानधिकरणावृत्तीति । नञ्द्वयस्याप्येतदेव फल[1]मित्याहुः । तच्चिन्त्यम् । अत्र हेत्वन्तरसत्त्वे चेष्टावत्त्वहेतुमादाय व्याख्यानस्यासंगतत्वात् । तस्मात्तद्धेतुपरतयैव व्याख्येयमिति ध्येयम् ।

---

## तर्कचूडामणिः

तस्यापीति । मृतशरीरजीवच्छरीरसंयोगस्यापीत्यर्थः । ननु औदुम्बरीं स्पृष्ट्वोद्गायेदित्यत्र औदुम्बरीस्पर्शस्य हस्तसंयोगविशेषस्यादृष्टजनकत्वात् तदाश्रयस्थूणायाः सात्मकत्वापत्तिः । तस्या अपि [2]कदाचित् भोगाधारतया तत्संयोगस्यापि भोगानधिकरणावृत्तित्वात् । एवं प्रेतशरीरसंयोगं दुरदृष्टादि[3]जनकमादाय प्रेतशरीरे दोषतादवस्थ्यं चेत्यस्वरसादाह—जन्येति । नञ्द्वयस्येति । तदनुपादाने भोगाधिकरणात्मवृत्तिसंयोगमादाय [4]दोषतादवस्थ्यमिति भावः ।

वैपरीत्यशङ्कां निरस्यति—अतिप्रसङ्गेति । उत्क्रान्त्यादिदशायां प्राणमनसोरात्मसंयोगसत्त्वे ज्ञानानुत्पत्तेरित्यर्थः । भोगाधारत्वपक्षकानुमानस्य प्रकृता-

---

1. ख. 'इत्याहुः ........इति ध्येयम्' नास्ति ।
2. ग. क्वचित्
3. ग. जनकसंयोग-
4. ग. दोषत्तादवस्थ्यादिति

भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्ति सकलभोगाधिकरणवृत्तित्वात् प्रमेयत्वादिवदिति तार्किकी रीतिः [तार्किकरीतिः]।

## प्रकाशः

नन्वात्ममनसोरपि हेतुसत्त्वे व्यभिचार इत्यत आह—आत्मेति। अतिप्रसङ्गभिया शरीरावच्छिन्नात्ममनोभ्यां प्राणसंयोगो हेतुर्वाच्य इत्यावश्यकत्वाद् शरीरप्राणसंयोगेनैवान्यथासिद्धिरित्यर्थः। नन्वनात्मतया शरीरस्यापि [1]भोगानधिकरणत्वेन तदवृत्तिसंयोगवत्त्वं तत्र बाधितमित्यनात्मनोऽपि [2]भोगाधिकरणत्वं साधयति—भोगाधारत्वमिति। सकलेति। न च भोगाधिकरणपदस्य स्वरूपासिद्धिवारकतया वैयर्थ्यमिति वाच्यम्। व्याप्यतावच्छेदकविकासकविशेषणे तथात्वाभावादित्याहुः। [3]तच्चिन्त्यम्। व्याप्याश्रयस्यैवं विकासेऽपि व्याप्यतावच्छेदकविकासाभावात्। न च तद्विकासस्यापि न व्यर्थत्वमिति वाच्यम्। तत्र यन्निष्ठेत्यादिव्याप्तेरभावात्। अन्यथा धूमालोकान्यतरत्वादावपि आलोकादि-

## तर्कचूडामणिः

संगतिं [4]वारयति — नन्विति। केचित्तु भोगसमवायिकारणान्यत्वे सति भोगाधारत्वं सात्मकत्वम्, [5]अनेन सामान्यतःसिद्धं व्यतिरेकिणा साधनीयमिति तात्पर्यमाहुः।

व्याप्यतावच्छेदकेति। सकलभोगाधिकरणवृत्तेर्हेतुत्वमिति भ्रमवत इदं द्रष्टव्यम्। तथा च भोगाधिकरणपदोपादाने तादृशद्रव्यत्वादेरपि संग्रहः। तदनुपादाने प्रमेयत्वादेरेवेति विकासकविशेषणत्वान्न वैयर्थ्यमित्यभिमानः। भ्रमं

1. ख 'भोगानधिकरणत्वेन........ अनात्मनोऽपि' नास्ति
2. क. भोगानधिकरणत्वम्
3. ख. 'तच्चिन्त्यं........ न वैयर्थ्यमिति ध्येयम्' नास्ति।
4. ख. तेन

## प्रकाशः

पदस्यालोकादिव्याप्यताश्रयविकासकतया न व्यर्थत्वं स्यात् । तस्मादखण्डाभाववदखण्डोपाधौ न वैयर्थ्यमिति ध्येयम् ।

यत्तु सकलात्मवृत्तिन्यात्मत्वे सकलवृत्तित्वं व्यभिचारीति । तन्न । शुद्धस्य सकलपदस्य यावत्पदार्थ [1]एव वृत्तेरिति । ननु भोगानधिकरणवृत्तित्वमत्रोपाधिः । अन्यथा रूपाधारत्वादीनामपि रूपादिसमवायिभिन्नवृत्तित्वानुमानापत्तिरित्यत आह—तार्किकरीतिरिति । तथा च शरीरे सुखमित्यादितदाधारत्वानुभवो न स्यादित्यनिष्टप्रसङ्गात्मकतर्केण हेतोः साध्यव्याप्यत्वेन उपाधेः साध्याव्यापकत्वम् । अत एव न रूपाद्याधारत्वप्रतिबन्दी । [2]तत्रैतादृशतर्काभावादिति भावः ।

केचित्तु संसार्यात्मत्वे [3]सन्दिग्धानैकान्तिकः । तत्र साध्याभाववत्तया

## तर्कचूडामणिः

वारयति—व्याप्येति । न हि भोगाधिकरणपदोपादाने बहूनां व्याप्यतयोपादानम् । किं तु सकलभोगाधिकरणवृत्तित्वमात्रस्यैव, तदनुपादाने सकलवृत्तित्वमात्रस्येति न तद्विकासकत्वमिति भावः । कथं तर्हि [4]वैयर्थ्योद्धार इत्यत आह — तस्मादिति । उपाध्यायमतमाह—यत्त्विति । तर्कोपजीवकरीतिस्तार्किकरीतिः, तमेव तर्कमाह—तथा चेति । उपाध्यायमतमाह—केचिदिति । [5]गगनादेराश्रितत्वाभावादाह — आश्रयत्वेति । नन्वधिकरणे

1. ख. 'एव' नास्ति ।
2. ख. 'तत्रै' नास्ति
3. ख. सन्दिग्धानेकान्तः
4. क. वैधर्म्योद्धारः
5. ख. गगनादावाश्रित-

अथेच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति गुणत्वात् यन्नैवं तन्नैवं यथा अनाश्रितमष्टद्रव्याश्रितं वेति कथं व्यतिरेकी? अष्टद्रव्यातिरिक्तद्रव्यस्य तद्वृत्तित्वस्य चाप्रतीतेर्व्यतिरेकाद्यनिरूपणात् ।

स्यादेतत् । इच्छायाः द्रव्याश्रितत्वेऽनुमिते पृथिव्यादौ बाधानन्तरदशायां विप्रतिपत्तिवाक्याद्वाश्रितत्वादिसाधारणधर्मदर्शनाद्वा तद्द्रव्यमष्टद्रव्यातिरिक्तं न वेति सन्देहेनाष्टद्रव्यातिरिक्तद्रव्योपस्थितिः ।

यद्वा इच्छा अष्टद्रव्यातिरिक्ताश्रिता न वेति संशयात् इच्छायाः अष्टद्रव्यातिरिक्ताश्रयोपस्थितौ पश्चादिच्छाश्रयोऽष्टद्रव्यातिरिक्तद्रव्यं न वेति संशयादष्टद्रव्यातिरिक्तद्रव्योपस्थितिः । अथ वा द्रव्याश्रिता इच्छा अष्टद्रव्यातिरिक्तद्रव्यवृत्तिर्न वेति पूर्ववत् संशयात् अष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं प्रसिद्धम् इच्छायाः साध्यते । संशयप्रसिद्धमपि साध्यं व्यतिरेकादिनिरूपकं, साध्यज्ञानमात्रस्य कारणत्वात् । न चैवं संशयादेव पक्षे साध्यसिद्धेर्व्यतिरेकिवैयर्थ्यम् । निश्चयार्थं तत्प्रवृत्तेरिति ।

मैवम् । संशयेन साध्यप्रसिद्धावपि तद्व्यतिरेकनिश्चयासम्भवात् साध्यव्यतिरेकतद्व्याप्तिनिश्चयस्य साध्यनिश्चयसाध्यत्वात् साध्यसन्देहे तद्व्यतिरेकादिसंशयावश्यम्भावात् ।

---

प्रकाशः

निश्चिते हेतुसन्देहादित्यत आह—तार्किकैरातिति । तथा चोक्ततर्कवशादत्र [1]व्याप्तिग्रह इत्याहुः । आश्रितत्वेति । [2]आश्रयत्वेत्यर्थः ।

---

1. ख. व्याप्तिग्रहात् 2. ख' आश्रितत्वेत्यर्थः

किं च संशयोपस्थितसाध्यस्य व्यतिरेकिनिरूपणं न योग्यानुपलम्भात्, साध्यनिश्चयं विना योग्यानुपलम्भासम्भवात्। नापि

---

### प्रकाशः

**साध्यनिश्चयं विनेति।** तत्तद्व्याप्येतरतन्निश्चायकसाकल्यसत्त्वगर्भस्य तस्य क्वचिन्निश्चयसद्भावे [1]सत्यात्मलाभसम्भवात्। अन्यथा [2]तन्निश्चायकाप्रसिद्धौ तदसम्भवादिति भाव इत्याहुः। वस्तुतः साध्यतावच्छेदकप्रकारेण साध्यप्रसिद्धिरनुमानाङ्गम्। सा च न संशयरूपा। तादृशकोट्यप्रसिद्धेः। प्रसिद्धौ वा निश्चयरूपैव सेति तत्त्वम्।

---

### तर्कचूडामणिः

प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वं योग्यत्वमस्त्येवेति कथं तदनुपलब्ध्यभाव इत्यत आह — **तत्तदिति।** न च तदुपलम्भकेत्यत्र उपलम्भकपदं संशयसाधारणप्रत्यक्षमात्रपरमिति वाच्यम्। तथा सति संशयकारणदोषादिसद्भावासद्भावयोरभावस्याप्रत्यक्षतापत्तेरिति भावः।

ननु संयोगाद्यभावप्रत्यक्षानुरोधेन तर्कितप्रतियोगिसत्त्वविरोधित्वमेवानुपलब्धेर्योग्यत्वम्। तच्च प्रकृतेऽप्यस्ति। किं च प्रतियोग्युपलम्भपदं प्रत्यक्षमात्रपरम्। उपलम्भकत्वं च प्रमाभ्रमसाधारणोपलम्भजनकत्वमात्रम्, अतो नोक्तदोषः। अन्यथा निश्चयपक्षेऽपि प्रतियोगिभ्रमजनकदोषाभावे घटाद्यभावग्रहो न स्यात्। किं च निश्चयपक्षेऽपि फलोपधानविवक्षायामसम्भवापत्त्या स्वरूपयोग्यताया एव वाच्यतया नोक्तदोष इत्यत आह— **वस्तुत इति।**

---

1. ख. एव सत्त्वादात्म-    2. ख. तन्निश्चायकप्रसिद्धौ

व्यापकाभावात्, साध्यनिश्चयं विना तद्व्यापकत्वनिश्चयाभावात् । न च यदीच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता न स्यात् अष्टानाश्रिता सती द्रव्याश्रिता न स्यात् रूपवदिति साध्यविपर्ययकोटौ प्रतिकूलतर्कसहकृतः साध्यसंशय एव निश्चयकार्यं करोति । अत एवैतादृशसंशयोपस्थितकल्पितडित्थादिसाधानमप्यपास्तम् । तद्विपर्यये प्रतिकूलतर्काभावादिति वाच्यम् । साध्यनिश्चयं विना साध्यव्यतिरेकनिश्चयतन्मूलतर्कानवतारात् । अन्यथा अष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वनिरूपणे तर्कोदयस्तर्कोदये च तत्सहकृतसाध्यसंशयस्य साध्यव्यतिरेकनिश्चायकत्वमिति ।

उच्यते । इच्छाश्रयद्रव्यसिद्धौ पृथिव्यादाविच्छाधारताभावे तद्द्रव्यं पृथिव्याद्यष्टद्रव्यभिन्नम् अष्टद्रव्यावृत्तधर्मवत्त्वात् पृथिव्यादित्वे बाधकसत्त्वाद्वा इत्यष्टद्रव्यातिरिक्तद्रव्यसिद्धौ इच्छायामष्टद्रव्यातिरिक्तद्रव्यवत्त्वम् अष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं वा साध्यते । साध्यप्रसिद्धिर्द्रव्यत्वे इच्छाविशेष्यकाष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वप्रतीतेर्व्यतिरेकिसाध्यत्वात् ।

---

## प्रकाशः

[साध्य] प्रसिद्धिरिति । एतच्च द्रव्याश्रयाश्रितेति यदि सामान्यतोदृष्टावतारस्तदा द्रष्टव्यम् । यदि चेच्छा द्रव्याश्रितेति सामान्यतो[1]दृष्टं तदा द्रव्यत्वस्य प्रकारतया तदाश्रितत्वस्य वैशिष्ट्यमर्यादया भानेन आश्रितत्व-

---

## तर्कचूडामणिः

[2]आश्रितत्वेति । [3]आश्रितत्वरूपस्य साध्यतावच्छेदकावच्छिन्नस्येत्यर्थः । दूषणान्तरमाह—एवं चेति । ननु द्रव्याश्रितेति सामान्यतोदृष्टावतारे साध्य-

---

1. ख. दृष्टा
2. ख. आश्रितेति
3. क. आश्रितरूपस्य

तथापीच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात् अष्टद्रव्यातिरिक्तद्रव्यत्ववदिति साध्यप्रसिद्धचैव दृष्टान्तप्रसिद्धेरन्वयी हेतुः स्यादिति चेत् — न । अन्वयव्याप्त्यप्रतिसन्धाने

## प्रकाशः

रूपसाध्यतावच्छेदकावच्छिन्नस्य द्रव्यत्वेऽप्रसिद्धतया तत्र प्रसिद्धयुपवर्णनविरोधात् । एवं चान्वयित्वापादनमग्रे विरुध्येत । तस्माद्यदि द्रव्याश्रितेत्येव सामान्यतोदृष्टं तदेच्छायामेव साध्यप्रसिद्धिर्द्रष्टव्या । अत एवेच्छाविशेष्यकप्रतीत्यर्थं [1]व्यतिरेक्यादर इति ग्रन्थकृतोक्तम् । अन्यथा निश्चयार्थमेव [2]तदादर इति ब्रूयात् इति ।

## तर्कचूडामणिः

प्रसिद्धिर्न स्यादित्यत आह — तस्मादिति । नन्विच्छायामपि द्रव्याश्रितत्वप्रकारिका प्रसिद्धिः, न तु [3]द्रव्याश्रितत्वत्वप्रकारिका । तादृशी चानुमानाङ्गम् साध्यतावच्छेदकप्रकारकत्वात् । अतथाभूतप्रसिद्धेरतिप्रसञ्जकतया अनङ्गत्वादिति चेत् — न । यत्प्रकारिका पक्षे साध्यानुमितिः तत्प्रकारकसाध्यप्रसिद्धेरेव तदङ्गत्वात् । सा च क्वचित् साध्यप्रकारिका क्वचित् तदवच्छेदकप्रकारिका वेति विशेषो नादरणीयः । न च साध्यतावच्छेदकप्रकारकतत्प्रसिद्ध्यभावे कथ व्यतिरेकव्याप्तिग्रहः, प्रतियोगितावच्छेदकप्रकारकतज्ज्ञानस्य तद्धेतुत्वादिति वाच्यम् । लाघवेन प्रागभावादिप्रत्यक्षसाधारण्येन च सप्रकारकप्रतियोगिज्ञानस्य हेतुत्वादिति दिक् ।

नन्वनुमितिपूर्वं नियमतस्तदनुपस्थितौ व्यतिरेकिणापि तत्प्रकारिकानुमितिर्न स्यादित्यनुशयादाह—वस्तुत इति । व्यापकांशे तदवच्छेदकमात्रप्रकारकत्वनियमा-

1. ख. व्यतिरेक्यवतारः
2. ख. तदवतारः
3. क. द्रव्यत्वाश्रयाश्रितत्व-

व्यतिरेकव्याप्तिप्रतिसन्धानदशायां व्यतिरेकिसम्भवात् । न च द्रव्यत्वादेः सपक्षात् व्यावृत्तावसाधारण्यम् । तद्धि साध्यतदभावोभयसाधकत्वेन सत्प्रतिपक्षोत्थापकतया दोषावहम् । प्रकृते च न हेतोः साध्याभाव-साधकत्वम्, विपक्षे बाधकाभावात् साध्यसाधकत्वे तत्सत्त्वाच्च । अत एव यावदेकत्रानुकूलतर्को नावतरति तावदेव दशाविशेषेऽसाधारण्यं दोष इत्युक्तम् । सुवर्णतैजसत्वसाधकव्यतिरेकिणि शब्दोऽनित्यः शब्दत्वात् इत्यादावपि तथा ।

अथाष्टद्रव्याधारत्वबाधानन्तरमिच्छादौ गुणत्वादेवाष्टद्रव्यातिरिक्त-द्रव्यवृत्तित्वं सिध्यति पक्षधर्मताबलात् । प्रसिद्धविशेषबाधे सामान्यज्ञानस्य तदितरविशेषविषयत्वनियमात् । अत एवासर्वविषयानित्यज्ञानबाधानन्तरं क्षित्यादौ कार्यत्वेन ज्ञानजन्यत्वं सिध्यत् नित्यसर्वविषयत्वं ज्ञानस्यादायैव सिध्यतीति चेत्—न । बाधानन्तरमष्टद्रव्यातिरिक्तद्रव्यविषयाप्यनुमिति-र्द्रव्याश्रितत्वप्रकारिका स्यात् । अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्व-नियमात् । न त्वष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वप्रकारिका, तस्य पूर्वमप्रती-तत्वेन प्रकारत्वासम्भवादिति तत्प्रकारिकानुमितिर्व्यतिरेकिणैव । अनाद्य-नन्तद्व्यणुकादियावत्पक्षीकरणेऽनाद्यनन्ततावदुपादानगोचरापरोक्षज्ञानत्वमेव नित्यसर्वविषयकत्वम्, एतदन्यनित्यसर्वविषयत्वं व्यतिरेकिण एव सिध्यति । पक्षधर्मताबलेनापि व्यापकतावच्छेदकप्रकारेण साध्यसिद्धिर्भवति न तु साध्यगतविशेषप्रकारिका, अतिप्रसङ्गात् ।

नन्वष्टद्रव्यानाश्रितेच्छा द्रव्याश्रितेति यदि साध्यते, तदा अष्ट-द्रव्यातिरिक्तद्रव्याश्रितत्वमन्तरेण प्रतिज्ञार्थ एव नोपपद्यते ।

सत्यम् । एवमप्यष्टद्रव्यानाश्रितेच्छायां द्रव्याश्रितत्वं सिध्यतु, तस्याष्टद्रव्यातिरेक्यं कुतः सिध्येत् ।

अथ सामान्याव्यभिचारमादाय मानान्तरोपनीतं तत्तदन्यत्वमुपजीव्याष्टद्रव्यान्यद्रव्यवृत्तित्वमिच्छादेः परिच्छिद्यते । ज्ञानान्तरोपस्थापितविशेषणविशिष्टज्ञानस्य सुरभि चन्दनमित्यादौ दर्शनादिति चेत्—न । मानान्तरान्नियमेनानुपस्थितेः ।

ये चेच्छाश्रये पृथिव्यादिभिन्नत्वं न जानन्ति इच्छायाश्च पृथिव्याद्यनाश्रितत्वं न जानन्ति तेषामप्यनुमानादित्यप्याहुः ।

---

## प्रकाशः

मानान्तरादिति । वस्तुता मानान्तरादुपस्थितानामपि न भानम् । अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वादिति भावः । इत्यप्याहुरिति । अपीत्यस्वरसोद्भावनम् । तद्बीजं तु यदीच्छाश्रयस्याष्टद्रव्यभिन्नत्वेन न ज्ञानम्, तदा साध्याप्रसिद्ध्या व्यतिरेकिणोऽप्यनवकाश इति तत्समर्थनमप्यशक्यं स्यादिति ध्येयम् ।

व्यतिरेकिणि वास्तवसाध्याभावव्यापकाभावप्रतियोगित्वमेव गमकम्, न तु साध्याभावत्वेन तस्योपस्थितिरपि तन्त्रम् गौरवादिति ये मन्यन्ते तन्मतमुपन्यस्यति

---

## तर्कचूडामणिः

दित्यर्थः । व्यतिरेकिणीति । न च पूर्वमेवैतन्मतस्योक्तत्वात् पुनरभिधानवैयर्थ्यमिति वाच्यम् । सम्यगुपपादनाय पुनरभिधानादिति भावः । ननु सात्मकत्वादिसाध्यक[1]व्यतिरेकिण्येव तदवधारणं न सर्वत्रेत्यत आह—भावेति । ननु साध्या-

---

1. ग. व्यतिरेकिणैव

अथ व्यतिरेकी नानुमानं, सर्वत्र प्रमेयत्वादिना सत्प्रतिपक्षग्रस्तत्वादिति चेत् — न । विपक्षबाधकेन व्यतिरेकिणो बलवत्त्वात् ।

अन्ये तु व्यतिरेकिण्यभाव एव साध्यः, स चाप्रसिद्ध एव सिध्यति । यस्याभावस्य व्यापको हेत्वभावो गृहीतः तस्याभावः पक्षे व्यापकाभावाभावरूपेण हेतुना सिध्यति । व्यापकाभाववत्तया ज्ञाते व्याप्याभावज्ञानावश्यम्भावात् । तथा हि पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यत्र इतरस्य जलादेर्व्यापकः पृथिवीत्वाभावो गृहीत इति

---

## प्रकाशः

—अन्ये त्विति । अत्रास्वरसबीजम्—अभाव एवेत्यवधारणमयुक्तम् । वह्न्यभावादेर्धूमाद्यभावव्याप्यत्वग्रहे वह्न्यादेर्भावस्यापि सिद्ध्यविरोधात् भावरूपसात्मकत्वादेरपि सिद्ध्यविरोधाच्च । इयानेव विशेषः यदत्र साध्यप्रसिद्धिरप्यङ्गमिति । यस्याभावस्येति । यदात्मकतया गृह्यमाणस्य व्यापकतया हेत्वभावो गृह्यते तदभाव एव व्यतिरेकिणा सिध्यतीत्यर्थः । तेन सुखस्य दुःखाभावात्मकतया गृह्यमाणस्य व्यापकतया यत्र हेत्वभावो गृह्यते तत्र दुःखविशिष्टानुमितिरनुभवसिद्धा समर्थिता भवति । अन्यथा सुखविरहस्यैव तत्र सिद्धिप्रसङ्गादित्याहुः । इतरस्य-जलादेर्व्यापक इति ।

---

## तर्कचूडामणिः

प्रसिद्धौ कथं व्यतिरेकव्याप्तिग्रह इत्यत आह — इयानेवेति । तत्प्रसिद्धिरुपपादितैवेति भावः । तेनेति । अयं दुःखी मुखप्रसादशून्यत्वात् इत्यत्र व्यतिरेकिणि यदा सुखं दुःखाभावत्वेन भ्रमविषयः तद्व्यापकतया मुखप्रसादो गृह्यते, तदा तदभावेन तत्र दुःखाभावाभावरूपदुःखानुमितिरनुभूयमाना न स्यादिति भावः । नन्विति ।

पृथिवीत्वाभावाभावरूपेण पृथिवीत्वेन पृथिव्यामितरान्योन्याभावोऽप्रसिद्ध एव सिध्यति, प्रतियोगिज्ञानस्य वृत्तत्वात्, प्रत्यक्षेण भूतले घटाभाववत् ।

---

## प्रकाशः

नन्वितर[1]पदार्थान्तर्गतात्मादिव्यापकत्वं पृथिवीत्वाभावस्यासम्भवि । सम्भवे वा तदत्यन्ताभावसिद्धेरुचितत्वेन तदन्योन्याभावसिद्ध्युपवर्णनविरोधात् हेत्वभावव्याप्यतय गृहीतस्यात्यन्ताभावो व्यतिरेकिणा सिध्यतीत्यभ्युपगमादिति चेत्—अत्राहुः । जलादिपदम् जलादितादात्म्यपरम् । न चैवं तदत्यन्ताभाव एव सिध्यतीति वाच्यम् । यथा हि हेत्वभावव्याप्यतया गृहीतस्यात्यन्ताभावः सिध्यतीति नियमः तथा तदवच्छिन्नान्योन्याभावः सिध्यतीत्यपि नियमः । एवं च [2]तस्याभावा इत्युपलक्षणम् । तदवच्छिन्नान्योन्याभाव इत्यपि द्रष्टव्यम् । व्याप्याभाव[3]ज्ञानावश्यम्भावादित्युपलक्षणम्, व्याप्यावच्छिन्नान्योन्याभावज्ञानावश्यम्भावादित्यपि द्रष्टव्यम् ।

केचित्तु जलादितादात्म्यात्यन्ताभावस्यैव जलाद्यन्योन्याभावरूपतया तत्सिद्ध्य-विरोधः । जलाद्यन्योन्याभावात्यन्ताभावस्य जलत्वादिरूपतया जलत्वात्यन्ताभावस्यापि जलाद्यन्योन्याभावरूपत्वात् । यस्य यत्पदार्थात्यन्ताभावरूपत्वं तस्य तत्पदार्थ-रूपात्यन्ताभाव[4]प्रतियोगित्वात् । अत एवात्यन्ताभावप्रतियोगिनोः परस्परविरह-[5]रूपतानियमः ।

---

## तर्कचूडामणिः

जलादिव्यापकत्वमपि न सम्भवति, पृथिव्यां जलादिसत्त्वेऽपि तत्र पृथिवीत्वा-भावाभावादित्यपि बोध्यम् । अभ्युपगमेन दोषान्तरमाह — **सम्भवे वेति** । उपाध्यायमतमाह—**केचित्त्विति** ।

---

1. ख. पदार्थान्तर्गततादात्म्यादि—
2. ख. तस्यात्यन्ताभावः
3. क. ज्ञानमावश्यकमित्युप—
4. ख. कत्वात्
5. क. 'रूपता' नास्ति ।

एवमन्यत्राप्यव्याप्यवृत्तीच्छायाः स्वाश्रयत्वे सिद्धे स्वाश्रये योऽत्यन्ताभावस्तदवच्छेदकं घटादि सर्वं, तदवच्छेदेनेच्छानुपलम्भात् । तथा चेच्छात्यन्ताभावाश्रयतावच्छेदकत्वरूपस्य नैरात्म्यस्य घटादौ प्राणादिमत्त्वाभावो व्यापको गृहीत इति जीवच्छरीरे प्राणादिमत्त्वेन इच्छात्यन्ताभावाश्रयत्वावच्छेदकत्वस्याभावः सात्मकत्वं साध्यते ।

---

## प्रकाशः

न चैवं जलाद्यन्योन्याभावात्यन्ताभावस्य न जलत्वादिरूपत्वमिति वाच्यम् । अपसिद्धान्तात् । अत एवोक्तं ग्रन्थकृता — "अन्योन्याभावात्यन्ताभावस्तु प्रतियोगिवृत्तिरसाधारणो धर्मः" इति । एकेनैवाभावेन तदन्योन्याभावात्यन्ताभावव्यवहारोपपत्तौ तदन्यकल्पने मानाभावाच्च ।

नन्वेवं जलत्वत्वादिज्ञानं विना[1] सोऽभावो न निरूप्येत, प्रतियोगितावच्छेदकावच्छिन्नज्ञानस्य हेतुत्वात् । यच्च तदितरावृत्तित्वगर्भं तदितरत्वमपि तदन्योन्याभावरूपतया तदत्यन्ताभावरूपम् तच्च [2]तादात्म्यज्ञानसापेक्षमित्यात्माश्रयानवस्थादिकमिति[3] चेत्—

---

## तर्कचूडामणिः

तमेवाह—अत एवेति । [4]सिद्धान्तस्यानुसरणीयत्वात् । एतन्मतेऽन्य एव भेदात्यन्ताभाव इत्यत आह—एकेनेति । तत्र जयदेवोक्तदोषं शङ्कते—नन्विति । आत्माश्रयेति । प्रकृतान्योन्याभावस्यैव प्रतियोगितावच्छेदकशरीरनिविष्टत्वेऽन्योन्याश्रयः । अन्योन्याभावान्तरत्वेऽनवस्थेत्यर्थः । [5]यद्यादिपदमस्ति तदा चक्रकादिकं तत्पदग्राह्यमित्याहुः ।

---

1. ख. तत्स्वभावो विरुध्येत
2. ख. तादात्म्यत्वज्ञान—
3. क. अनवस्थानमिति
4. ख. एकदेशिना तत्सिद्धान्तानु-
5. क. यद्यापिपदमस्ति ।

## प्रकाशः

न । अभावस्य यावत्प्रतियोगि[1]निरूप्यत्वनियमानभ्युपगमात् । अत एव घटप्रागभावतद्ध्वंसयो परस्परप्रतियोगित्वेऽपि न परस्परनिरूप्यत्वनियमः । केवलेनापि घटेन तन्निरूपणात् । न च तयोः [2]परस्परप्रतियोगित्वमेव नेति वाच्यम् । अन्यतरस्थितिकालेऽन्यतरोन्मज्जनापत्तेः । तथा च तस्याभावस्योभयप्रतियोगित्वेऽपि जलादिनैव प्रतियोगिना तन्निरूपणमिति नानवस्थानादिकमित्याहुः ।

## तर्कचूडामणिः

अत्र जलान्योन्याभावस्य जलत्वात्यन्ताभावरूपत्वेऽप्यत्यन्ताभावत्वेन तज्ज्ञान एव जलत्वज्ञानापेक्षा, न त्वन्योन्याभावत्वादिनापि तज्ज्ञाने । अत एवान्धकारप्रत्ययोऽपीति परिहारे सत्येव परिहारान्तरमाह—**नाभावस्येति** । **अन्यतरेति** । घटप्रागभावस्य तद्ध्वंसप्रागभावे घटप्रागभावकालस्य तद्ध्वंसकालत्वापत्तिः । ध्वंसप्रागभावानवच्छिन्नकालस्य स्वकालत्वनियमात् । एवं घटध्वंसस्य तत्प्रागभावध्वंसत्वाभावे घटध्वंसकालस्य प्रागभावत्वमापादनीयम् ।

नन्वेवं रूपात्यन्ताभावतद्वदन्योन्याभावयोरप्यैक्यापत्तौ वायौ रूपात्यन्ताभावः प्रत्यक्षः, तद्वदन्योन्याभावस्तु नेत्युपाध्यायसिद्धान्तविरोध इति चेत्—न । अन्योन्याभावत्वात्यन्ताभावत्वादिधर्मपरतयापि तद्वचनोपपत्तेरिति भावः ।

नन्वभावैक्येऽपि घटो न जलं घटे जलत्वं नेति प्रतीत्योर्विलक्षणप्रतियोगिविषयत्वादेव वैलक्षण्यमुपपद्यते । घटो नास्ति घटप्रागभावो नास्तीत्यादिप्रतीतीनां तथैव वैलक्षण्यात् । नापि प्रतियोगिभेदादभावभेदः । घटात्यन्ताभावस्य [3]तत्प्रागभावादिप्रतियोगिकस्य एकत्वदर्शनात् । न च भावरूपप्रतियोगिभेदात्

1. क. निरूप्यत्वानभ्यु-
2. क. 'परस्पर' नास्ति ।
3. ग. तत्प्रागभावादिप्रतियोगिध्वंसकत्वदर्शनात्

## प्रकाशः

अत्रेदं चिन्त्यम् । तदन्योन्याभावतत्तादात्म्यात्यन्ताभावयोः प्रतीतिवैचित्र्यादभेदानुपपत्तिः । प्रतियोगिभेदादभाव[1]भेदावश्यकत्वाच्च । अपि चान्योन्याभावात्यन्ताभावयोर्विरुद्धधर्माध्यस्तत्वेनावश्यं भेदः ।

ननु यथा भावव्यवहारहेतुर्घटो घटाभावाभावव्यवहारहेतुरपि । न च तावता विरुद्धधर्माध्यासः । वस्तुतो भावस्यैव तस्याभावव्यवहारहेतुत्वात् । तथा च वस्तुतोऽन्यान्याभावात्मनोऽत्यन्ताभावात्मनो वा तस्योभयव्यवहारहेतुत्वमस्तु । न चैतावतविरुद्धधर्माध्यास इति चेत्—

न । तदन्योन्याभावेन तत्तादात्म्यात्यन्ताभावव्यवहारः तत्तादात्म्यात्यन्ता-

## तर्कचूडामणिः

तद्भेदः । घटत्वावच्छिन्नप्रतियोगिकसामान्याभावस्याप्यनेकप्रतियोगिकस्याप्येकत्वदर्शनात् ।

यदि च यावन्तः प्रतियोगिनस्तावन्तस्तदभावा इति मतं, तदा जलान्योन्याभावस्य जलत्वात्यन्ताभावत्वेऽपि [2]जलत्वान्योन्याभावजलान्योन्याभाययोर्भेदाङ्गीकारादिष्टापत्तिरित्यनुशयादाह —अपि चेति । प्रतियोगिसमानदेशत्वतदसमानदेशत्वयोर्विरुद्धत्वादिति भावः । प्रमाणबलादिति । रूपादिमत्त्वादित्यर्थः ।

ननु तदत्यन्ताभावत्वमेव तदन्योन्याभावत्वविरुद्धम् । तदत्यन्ताभावस्य प्रतियोगिनि सत्त्वेऽपि तत्र तदन्योन्याभावाभावात् प्रतियोगिनि तदन्योन्याभावाभावेऽपि तदत्यन्ताभावदर्शनात् । न तु यत्किंचित्प्रतियोगिकान्योन्याभावत्वं यत्किंचिदत्यन्ताभावविरुद्धं मानाभावात् । अन्यथा ध्वंसत्वं प्रागभावविरुद्धमिति

1. ख. भेदस्या.श्यकत्वाच्च    2. क. जलत्वात्यन्ताभावयोर्भेदा-

## तर्कचूडामणिः

स्वप्रागभावध्वंसात्मनो घटस्य ध्वंसप्रागभावत्वं न स्यात् । एवं च तस्योभयस्वभावत्वेऽपि विरोधाभावात् विनिगमकान्वेषणमप्यसंगतमेव ।

अपि च घटान्योन्याभावस्य घटत्वविरहरूपत्वाभावे घटभिन्नत्वेन गृहीते [1]घटत्वात्यन्ताभाववत्त्वेनावगते पटादौ कदाचित् घटत्वबुद्धिः स्यात् । घटभेदज्ञानस्य ग्राह्याभावानवगाहित्वात् तद्व्याप्यत्वानवगाहनाच्चेति । तस्मादुपाध्यायमतमेव रमणीयमिति ।

अत्र ब्रूमः । तदत्यन्ताभावतद्वदन्योन्याभावयोरैक्यं किं प्रतीतिबलात् स्वीक्रियते, उत भेदकल्पनायां गौरवेण लाघवबलात् यस्य यद्विरहरूपत्वं तस्य तद्विरहरूपत्वमिति व्याप्तिबलाद्वा घटभेदग्रहस्य घटत्वग्रहप्रतिबन्धकत्वानुपपत्तेर्वा । नाद्यः, तदसिद्धेः । न द्वितीयः, तथा सति घटत्वरूपवद्घटत्वात्यन्ताभावयोरैक्यापत्तेः । तयोरपि नियमतः समानदेशत्वात् । न तृतीयः, अप्रयोजकत्वेन तथाविधव्याप्तेरसिद्धेः । अन्यथा यस्य यद्व्याप्यत्वं तस्य तद्व्याप्यत्वमिति समव्याप्तिस्थले दर्शनमात्रेण सर्वत्र [2]तथात्वापत्तेः ।

न चैवं घटादेः स्वात्यन्ताभावविरहत्वं न स्यादिति वाच्यम् । घटाभावो नास्तीति प्रतितेरतिरिक्तविषयत्वेऽनवस्थापत्त्या घटस्यैव तद्विरहरूपत्वकल्पनात् । न च भेदेऽपि समानाभावः [समानन्यायः] । घटस्य घटत्वात्यन्ताभावप्रतियोगित्वे घटत्वाभेदापत्तेः । तदत्यन्ताभावप्रतियोगित्वस्य तदभेदव्याप्तत्वात् ।

किं च प्रतियोगितावच्छेदकभेदस्याप्यभावभेदव्याप्तत्वेन घटत्वपटत्वरूपतदवच्छेदकभेदेन तद्भेद आवश्यक एव । न च घटप्रागभावत्वादिभेदेन

1. ग. घटात्यन्ताभाव- 2. ग. तथापत्तेः

### प्रकाशः

भावेन वा तदन्योन्याभावव्यवहार इत्यस्य विनियन्तुमशक्यत्वात् । घटादेश्चाभावाभावव्यवहारहेतुत्वेऽपि भावत्वमेव प्रमाणबलादवसीयत इति ।

[1]अत एव संयोगात्यन्ताभावसंयोगवदन्योन्याभावयोः अव्याप्यव्याप्यवृत्तित्वम् । पिशाचात्यन्ताभावतद्वदन्योन्याभावयोरयोग्यत्वं योग्यत्वं चेति सिद्धान्त इति संक्षेपः ।

---

### तर्कचूडामणिः

घटात्यन्ताभावभेदोऽपि स्यादिति वाच्यम् । भावनिष्ठतद्भेदस्यैव प्रयोजकत्वाभ्युपगमात् ।

यच्च 'अपि च' इत्यादि । तदपि मन्दम् । त्वन्मतेऽपि घटभेदस्य घटत्वात्यन्ताभावत्वाज्ञानदशायां प्रतिबन्धकत्वासम्भवेन तदापादनस्य दुर्वारत्वात् । न हि वस्तुगत्या तदत्यन्ताभावज्ञानं तद्विरोधि । प्रमेयत्वेन तज्ज्ञानेऽपि तत्प्रतिबन्धापत्तेः । किं तु तदत्यन्ताभावत्वेन ।

यद्यप्येवं सति घटनिश्चयस्य घटाभावज्ञानप्रतिबन्धकत्वं न स्यात् । ग्राह्याभावत्वेनाज्ञानात् । तथापि घटनिश्चयस्य घटाभावनिश्चये [2]प्रतियोगितावच्छेदकप्रकारकप्रतियोगिसंसर्गनिश्चयत्वेन, घटाभावनिश्चयस्य ग्राह्याभावनिश्चयत्वेनेति प्रतिबन्धकतावच्छेदकमननुगतमेवेति ।

एवं घटत्वज्ञानस्य घटान्योन्याभावग्रहे न प्रतियोगिनिश्चयत्वेन प्रतिबन्धकत्वम्, तस्याप्रतियोगित्वात् । नापि तदभावनिश्चयत्वेन, तदभावत्वेनाज्ञाना-

---

1. ख. 'अत एव ......... संक्षेपः' नास्ति ।

2. ख- पुस्तकयोः इत आरभ्य संक्षेप इति इत्यन्तं अस्पष्टान्यक्षराणि सन्ति ।

## प्रकाशः

अन्ये तु अत्र मते सम्बन्धिनोः सामानाधिकरण्यं न व्याप्तित्वेनाभिमतम् । किं तु तदुभयसम्बन्धयोः सामानाधिकरण्य तदुभयसम्बन्धिव्याप्तिः । अस्ति च यत्र धूमसम्बन्धस्तत्र वह्निसम्बन्ध इति सामानाधिकरण्यदर्शनादग्निना समं धूमस्य व्याप्तिः । परेणाप्यतिप्रसङ्गवारणाय तत्सम्बन्धावच्छिन्नतत्सामानाधिकरण्यं वाच्यम् । तथा च लाघवादुक्तसम्बन्धसामानाधिकरण्यमेव तत्सम्बन्धिव्याप्तिरस्तु । तदिह यत्र जलादितादात्म्यं तत्र पृथिवीत्वाभावसम्बन्ध इति जलादिपृथिवीत्वाभावरूपसम्बन्धिद्वयप्रतियोगिकयोस्तादात्म्यस्वरूपसम्बन्धयोरैकाधिकरण्यं व्याप्तिरिति जलादेरेव व्याप्यता । न च तादात्म्यं सम्बन्ध एव नेति वाच्यम् । अविशिष्टधीव्यावृत्तविशिष्टधीनिया

---

## तर्कचूडामणिः

दिति तत्प्रतियोगितावच्छेदकवैशिष्ट्यज्ञानत्वेन प्रतिबन्धकत्वम् । किं तु तदवच्छिन्नान्योन्याभावज्ञानत्वेनेति कल्प्यते । एवं च सति घटत्वस्य घटान्योन्याभावात्यन्ताभावत्वमनवस्थाभयादेव, न तु तज्ज्ञानस्य प्रतिबन्धकत्वबलात् तस्य तदभावत्वाभावेऽप्युक्तप्रकारेण घटत्वग्रहस्य प्रतिबन्धकत्वसम्भवादिति मन्तव्यम् । तदेतदाह—संक्षेप इति ।

जयदेवमतमाह—अन्ये त्विति । अत्रेति । एकदेशिमत इत्यर्थः । अतिप्रसङ्गेति । सम्बन्धान्तरेण हेतुसाध्यसामानाधिकरण्यावगमे सम्बन्धान्तरावच्छिन्नलिङ्गवारणायेत्यर्थः । तत्सम्बन्धेति । यत्सम्बन्धेन पक्षे हेतुज्ञानमनुमितिजनकं, अनुमितिश्च यत्सम्बन्धावच्छिन्नसाध्यविषयेति शेषः । न चेति । उभयनिरूप्यत्वाभावादिति भावः । अविशिष्टेति । अविशिष्टज्ञानाविषयत्वे सति विशिष्टज्ञानविषयत्वादित्यर्थः । न च तादात्म्यस्य जलत्वादिरूपतया निर्विकल्पकविषयत्वेन सत्यन्तासिद्धिरिति वाच्यम् । तत्समनियतधर्मान्तरस्यैव [1]तत्त्वेनाभ्यु-

---

1. क. तत्त्वेनानभ्युपगमात्

## प्रकाशः

मकत्वात् अत एव तादात्म्यारोपो विशिष्टज्ञानम् । तथा चेतरस्य जलादेरिति यथाश्रुतमेव ।

ननु भवतु तादात्म्यं सम्बन्धः । भवतु च तादात्म्यसामानाधिकरण्यं तद् व्याप्तिः । तथापि जलादेरेव व्याप्यतया जलाद्यत्यन्ताभाव एव सिध्येत् न जलाद्यन्योन्याभाव इति चेत्—नैवम् । जलाद्यन्योन्याभावो हि तादात्म्यावच्छिन्नजलादिविरहः । तथा च [1]यत्सम्बन्धावच्छिन्नसमानाधिकरण्यं [2]व्याप्तिः व्यापकाभावेन तत्सम्बन्धावच्छिन्नविरहवत् यत्सामानाधिकरण्यं व्याप्तिः तत्सम्बन्धावच्छिन्नव्याप्याभावस्य व्यपकाभावात् सिद्धिरिति तादात्म्यसामानाधिकरण्यग्रहात् तादात्म्यावच्छिन्नविरहः सिध्यतीति[3]अत्यन्ताभावसिद्धिसामग्र्यैव अन्योन्याभावः सिध्यतीत्याहुः ।

---

## तर्कचूडामणिः

पगमात् । अत एव प्रभायां प्रमालाक्षणावसरे तादात्म्यं [4]धर्मान्तरमेवेत्युक्तम् । अत एव च सिद्धान्ते सम्बन्धत्वमङ्गीकृत्यैव दोषान्तरं वक्ष्यतीति । अत इति । अन्यथा [5]सम्बन्धाविषयत्वेन तस्य तत्त्वं न स्यादिति भावः । पूर्वटीकासु दोषं सूचयति—तथा चेति । यद्वा ननु कुत एकदेशिमते सम्बन्धसामानाधिकरण्यमेव व्याप्तिरित्यवगतमित्यत आह—तथा चेति ।

ननु व्यापकाभावेन तत्सम्बन्धावच्छिन्नव्याप्यात्यन्ताभाव एव सिध्यति, न तु तदवच्छिन्नान्योन्याभावः, वह्न्यभावेन संयोगावच्छिन्नधूमान्योन्याभावसिद्ध्या-

---

1. क. यत्सम्बन्धितावच्छिन्न-
2. क. व्याप्तिः तत्सम्बन्धावच्छिन्न-व्याप्याभावस्य व्यापकाभावात्
3. क. अत्यन्ताभावसामग्र्यैव
4. क. धर्मान्तरं वेत्युक्तं
5. ग. सम्बन्धविषयत्वेन

एवं प्रामाण्यसाध्यकव्यतिरेकिण्यपि व्यधिकरणप्रकारावच्छिन्नत्वस्य व्यापकः समर्थप्रवृत्तिजनकत्वाभावोऽप्रमायां गृहीतः। अतो विवादाध्यासितानुभवे समर्थप्रवृत्तिजनकत्वेन व्यधिकरणप्रकारावच्छिन्नत्वस्याभावः सिध्यति। व्यधिकरणप्रकारावच्छिन्नत्वमेव प्रमात्वम्।

---

### प्रकाशः

तदपि चिन्त्यम्। यत्र यत्र धूमसम्बन्धस्तत्र तत्र वह्निसम्बन्ध इत्यादौ सम्बन्धे धूमादि सम्बन्धि विशेषणमुपलक्षणं वा। नाद्यः। आकाशादेरव्याप्यतापत्तेः। न हि यत्राकाशादिविशिष्टः सम्बन्धः तत्र पृथिवीत्वाभावसम्बन्ध इति व्याप्तिः सम्भवति। आकाशादेरवृत्तितया तद्विशिष्टस्य सम्बन्धस्य कुत्राप्यवृत्तेः, पूर्वोक्तलाघवासम्भवाच्च। नापि द्वितीयः, धूमाद्युपलक्षितसम्बन्धस्य धूमादावपि सत्त्वेन तत्र वह्निसम्बन्धाभावे व्यभिचारापत्तेः। वह्निसम्बन्धस्य संयोगात्मकस्य महानसादौ वृत्तेः।

---

### तर्कचूडामणिः

पत्तेः। तथा च प्रकृतेऽपि व्यापकाभावेन [1]तादात्म्यावच्छिन्नजलात्यन्ताभावसिद्धिरवर्जनीयैवेति चेत्—न। व्यापकाभावस्य तत्सम्बन्धावच्छिन्नव्याप्याभावमात्रगमकत्वाङ्गीकारात्। वह्न्यभावेन धूमाभावसिद्धिस्तु संसर्गावच्छिन्नधूमाभावविषयत्वादत्यन्ताभावमवलम्बते। संसर्गावच्छिन्नाभावमात्रस्यैव तत्त्वात्। प्रकृते तु तादात्म्यावच्छिन्नाभावतया अन्योन्याभावत्वं सिध्यति। न त्वत्यन्ताभावत्वमन्योन्याभावत्वं वा साध्यत्वे तन्त्रमिति तादात्म्यस्यान्योन्याभावप्रतियोगितावच्छेदकत्वे मानाभावेन तदवच्छिन्नाभावत्वमात्रेणान्योन्याभावत्वसिद्धिरिति दोषे सत्येव

---

1. क. तादात्म्यानवच्छिन्न-

ननु साध्याप्रसिद्धौ कथं साध्यविशिष्टज्ञानं, विशेषणज्ञानजन्यत्वाद्विशिष्टज्ञानस्येति चेत्—न। पक्षे साध्यानुमितिसामग्रीसत्त्वात् पक्षविशेषणकः साध्यविशेष्यक एव प्रत्ययो जायते, भूतले घटो नास्तीत्यभावविशेष्यकप्रत्ययवत्।

तथापि साध्याभावव्यापकाभावाभावरूपहेतुमत्तया पक्षज्ञानं व्यतिरेकिणि गमकतौपयिकम्। न च साध्यप्रसिद्धिं विना एतादृशप्रतिसन्धानं सम्भवति। न च वस्तुगत्या यः साध्याभावः तद्व्यापकाभावप्रतियोगिमत्तया ज्ञानं मृग्यत इति वाच्यम्। व्यतिरेक्याभासानुपपत्तेरिति चेत—

न। योऽभावो यस्य भावस्य व्यापकत्वेन गृहीतः तदभावाभावेन तस्य व्याप्यस्याभावः पक्षे साध्यत इत्यनुगतानतिप्रसक्तस्य गमकतौपयिकत्वात्। अयं च व्यतिरेकिप्रकारः स्वार्थ एव। परं प्रति साध्याप्रसिद्ध्या प्रतिज्ञाद्यसम्भवादिति सर्वं समञ्जसम्।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे केवलव्यतिरेकिप्रकरणम्



---

**प्रकाशः**

एवं च दण्डोपलक्षितसम्बन्धस्य दण्डेऽपि सत्त्वेन तत्र कुण्डलसम्बन्धाभावेन समानाधिकरणयोरपि दण्डकुण्डलयोर्व्याप्तिर्न स्यात्। तस्मादनन्यगत्या तत्सम्बन्धावच्छिन्नसम्बन्धिसामानाधिकरण्यमेव व्याप्तिः। तच्चेतरपदार्थान्तर्गताकाशादावसम्भवीति जलत्वादीनामेव व्याप्यत्वमिति। व्यापकाभावेन व्याप्यावच्छिन्नान्योन्याभावसिद्धिमुक्त्वा तेन व्याप्यात्यन्ताभावसिद्धिं दर्शयति—एवमिति।

## प्रकाशः

यस्य भावस्येति । यदात्मकतया गृह्यमाणस्येत्यर्थः । अयं चेति । एतेन व्यतिरेकिण्यभावः साध्य इत्यत्रानुशयान्तरमपि सूचितम् । परार्थानुमाने भावसाधारणस्य प्रकारान्तरस्यैवानुसरणीयत्वादिति ।

इति श्रीरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे केवलव्यतिरेकिवादः

——:०:——

---

## तर्कचूडामणिः

दोषान्तरमाह—तदपीति । वह्निसम्बन्धेति । ग्राह्यसामानाधिकरण्य[1]प्रविष्ट-संयोगावच्छिन्नाधारतायास्तत्राभावादित्यर्थः । दूषणान्तरमाह—एवं चेति ।

ननु सात्मकत्वादिसाध्येऽन्योन्याभावस्यासाध्यत्वादतिदेशानुपपत्तिरित्यत आह—व्यापकेति ।

इति श्रीधर्मराजाध्वरिविरचिते तर्कचूडामणौ
अनुमानखण्डे केवलव्यतिरेकिवादः



---

1. ख. विषय-

## अथ अर्थापत्तिप्रकरणम्

व्यतिरेक्यनुमानसिद्धावर्थापत्तिर्न मानान्तरम्। तेनैव तदर्थसिद्धेः। स्यादेतत्—ज्योतिश्शास्त्रात् तत्कथित लिङ्गाद्वा देवदत्तस्य शतवर्षजीवित्वमव-गतम्, चरमं शतवर्षजीवी गृह एवेति नियमे प्रत्यक्षेणावगते पश्चात् योग्यानु-पलब्ध्या निश्चितो गृहाभावो जीवननियमग्राहकप्रमाणयोर्बलाबलानिरूपणात् बहिस्सत्त्वकल्पनं विना नियमद्वयविषयकं संशयं जनयित्वा जीवति न

### प्रकाशः

अन्वयिनि व्यतिरेकिणि च निरूपिते अन्वयव्यतिरेकि निरूपितप्रायमेवेति तदुपेक्ष्य व्यतिरेकिसिद्धेरर्थापत्तिमानान्तरत्वनिरासफलकत्वमित्याह—व्यतिरेकीति। ज्योतिःशास्त्रादिति। यद्यपि ज्योतिःशास्त्रं व्याप्तिमात्रग्राहकम्, न तु देवदत्तीयशतवर्षजीवित्वनिश्चायकम्, तथापि ज्योतिः शास्त्रं यस्य स तथेति पुरुष एव विवक्षित इति केचित्, एतदस्वरसादेव तत्कथितलिङ्गाद्वेत्युक्तमित्यन्ये। निश्चितो गृहाभाव इति। गृहे अभावस्य निश्चय इत्यर्थः। नियमद्वयेति। [1]शतवर्षजीव्येवेत्येको नियमः, गृह एवेत्यपरः। तत्कथितलिङ्गे व्याप्तिरूप एको नियमः, गृह एवेत्यपर इत्यन्ये।

### तर्कचूडामणिः

ननु क्रमप्राप्तान्वयव्यतिरेकिनिरूपणं विहाय अर्थापत्तिनिरूपणमसंगतम्। सात्मकत्वादिसिद्धेरपि तत्फलतया [2]अर्थापत्तिमानान्तरत्वनिरासस्य [3]तत्फलत्वप्रदर्श-नानुपपत्तिश्चेत्यत आह—अन्वयिनीति। ननु पुरुषस्याप्रमाणतया तदुच्चारित-वाक्यादेव देवदत्तस्य शतवर्षजीवित्वमवगन्तव्यम्। तथा च तद्वाक्यस्य प्रामाण्यं न

1. ख. शतवर्षं
2. क. अर्थापत्तेः
3. क. ग. तत्फलस्य

वेति संशयमापाद्य जीवनसंशयापनुत्तये जीवनोपपादकं वहिःसत्त्वं कल्पयतीति, यथोक्तसामग्र्यनन्तरं वहिरस्तीति प्रतीतेः। तत्रान्वयव्यतिरेकाभ्यां संशयद्वारा गृहाभावः तदुत्पादितनियमद्वयविषयकसंशयो वा करणम्, जीवनसंशय एव वा। करणे सव्यापारकत्वानियमात्। प्रमाणयोर्विरोधज्ञानं तदाहितसंशयद्वारा करणमिति कश्चित्। तदा जीवित्वस्य लिङ्गविशेषणस्य सन्दिग्धत्वेनानुमानासम्भवादर्थापत्तिर्मानान्तरम्।

---

## प्रकाशः

आशयमविद्वान् शङ्कते—नन्विति। आशयमुद्घाटयति—नेति। ननु

---

## तर्कचूडामणिः

शास्त्रमूलतया, भिन्नविषयत्वाच्छास्त्रस्येति शास्त्रमूलकव्याप्तिज्ञानमूलकानुमानमूलत्वेनैव तद् वाच्यम्। तथा चावश्यकत्वात् सर्वेषामपि तल्लिङ्गादेव तदवगमोऽस्त्वित्यत आह—एतदिति। ननु देवदत्तस्य गृहे सत्त्वेऽपि तत्र गृहात्यन्ताभावनिश्चयेन वहिस्सत्त्वकल्पनापत्तिः। गृहनिष्ठतया देवत्ताभावभ्रमादपि वहिः सत्त्वकल्पनात् अभावो वहिःसत्त्वं कल्पयतीत्यप्ययुक्तम्, इत्यत आह—गृह इति। ननु शतवर्षजीवित्वग्राहकस्य व्याप्तिग्राहकत्वाभावात् कथं तद्ग्राहकेत्युक्तमित्याशङ्क्य, अवधारणपरो नियमशब्दः, न व्याप्तिपर इत्याह—शतेति। अवधृतज्योतिःशास्त्रप्रामाण्यस्य तत्कथितलिङ्गव्याप्तिसंशयेऽपि पक्षधर्मतासंशयसम्भवेन शतवर्षजीवित्व[1]ग्राहकमाने [2]तदाहिताप्रामाण्यसंशयो यत्र तत्राप्यर्थापत्तिस्वीकारात् व्याप्तिसंशयो न सार्वत्रिक इत्यनुशयं द्योतयति अन्य इति।

---

1. क. ग्राहकाभावे   2. क. ग. तदाहितप्रामाण्य-

ननु संशयस्य कल्पकत्वे स्थाणुपुरुषसंशयादपि तदेककोटिनिर्वाह-कल्पनापत्तिः। न च प्रमितसंशयः कल्पनाङ्गम्। जीवनस्य तदानीं प्रमितत्वे संशयाभावप्रसङ्गात्, जीवित्वनिश्चयेऽनुमानादेव बहिस्सत्त्व-निश्चयाच्च। कदाचित् प्रमितत्वे च प्राक्प्रमितपुरुषत्वस्यान्तरा तत्संशये कल्पना स्यात्। किं च जीवनसंशयस्य मृतेऽपि दृष्टत्वान्न व्यभिचारेण बहिःसत्त्वगमकत्वमिति चेत्—

न। यथोक्तसामग्रीप्रभवसंशयस्य कल्पनाङ्गत्वात्। अत एव मृत-जनिष्यमाणयोर्गृहाभावनिश्चयो न यथोक्तसंशयमापादयतीति न बहिस्सत्त्व-कल्पकः। गृहाभावश्च योग्यानुपलब्धिनिश्चितो न संशय इति।

---

## प्रकाशः

गृहाभावो न [1]करणम्, नियमग्राहकविरोधेन तस्य सन्दिग्धत्वादित्यत आह—गृहाभाश्चेति। देवदत्तेति। जीवनबाधे तासामपि बाध आवश्यक इति भावः।

---

## तर्कचूडामणिः

ननु यथोक्तसामग्र्यनन्तरमिति वदता तदाहितसंशय[2]विशेषस्यैव कल्पनाङ्गत्वोक्तेः शङ्कानुपपत्तिरित्यत आह—आशयमिति। गृहाभावस्य संशय[3]विषयत्वाभावप्रतिपादन[4]फलमाह—नन्विति। गृहाभाव इति। तन्निश्चय इत्यर्थः। ननु देवदत्तावयवानामानन्त्येन तन्निरूपित[5]गृहसत्त्वव्याप्तेः कथम-ल्पत्वमित्यत आह—जीवनेति। तासाम्—[6]व्याप्तीनामित्यर्थः।

---

1. ख. कारणम्
2. क. विषयस्यैव।
3. क. विषयाभाव-
4. क. विधिमाह
5. क. ग्रस्तव्याप्तेः
6. क. अव्याप्तीनाम्

अथ जीवननियग्राहकप्रमाणयोर्यदि च तुल्यबलत्वमवगतम्, क्व तर्हि बहिस्सत्त्वकल्पना? विशेषदर्शनविरहात्। कल्पने वा प्रमितजीवननिर्वाहकबहिस्सत्त्ववत् गृहनियमनिर्वाहकमरणस्याप्युचितत्वेन तत्कल्पनापि स्यात्, जीवनमरणयोः संशयाविशेषात्। अथ तयोरेकं बलीयोऽपरमबलम्, तदेकेनापरस्य बाध एवेति न संशयः।

तस्माद्यत्र शतवर्षजीवित्वमवधारितम्, गृहाभावश्च निश्चितः तत्र बहिस्सत्त्वकल्पनं न तु जीवनसंशये। एवं च देवदत्तो बहिः सन् जीवित्वे सति गृहनिष्ठात्यन्ताभावप्रतियोगित्वादिति व्यतिरेकिणा बहिस्सत्त्वज्ञानेनार्थापत्त्या लिङ्गविशेषणजीवित्वसंशये बहिस्सत्त्वकल्पना च नास्त्येव। किं च गृहाभावनिश्चयः प्रमाणद्वयविषयसंशयं जनयित्वा जीवनसंशयमापाद्य बहिस्सत्त्वं कल्पयतीति न युक्तम्। न हि यत एव यत्संशयः स एव तन्निश्चयाय प्रभवति अतिप्रसङ्गात्।

मैवम्। यथोक्तसामग्रीजनितसंशयवानेव तर्कयति, योग्यानुपलब्धिगृहीतो गृहाभाव इति तन्निश्चयः सुदृढ इति जीवननियमग्राहकयोरेकं बाध्यं विरुद्धयोरप्रमाणत्वात्। तदिह मरणं कल्पयित्वा जीवनग्राहकं बाध्यतां नो वा, बहिस्सत्त्वं कल्पयित्वा गृहनियमग्राहकम्। तत्र बहिस्सत्त्वकल्पने गृहनियमग्राहकमात्रबाधा। मरणकल्पने तु शतवर्षजीवी देवदत्तः शतवर्षजीवी गृह एवेति नियमद्वयस्यापि बाधा स्यात्। तदाह — जीवनबाधे तन्नियमबाधस्यावश्यकत्वादिति।

किं च अद्य जीवति श्वो जीविष्यतीत्यादिबहुतरक्षणलवमुहूर्तादिसमयोपाधिनियतं जीवनमुपलब्धमिति तद्बाधे बहुतरव्याप्तिबाधः देवदत्त-

तदवयवगृहसत्त्वव्याप्तिग्रहात् । तथाऽभावस्वरूपमरणापेक्षया बहिस्सत्त्वस्य भावस्य लघुत्वात् । यदि च गृहान्योन्याभावाश्रयबहिःपदार्थवृत्ति-संयोगाश्रयत्वं बहिस्सत्त्वमिति तदपेक्षया मरणमेव लघु, तथापि मरणा-पेक्षया जीवनमात्रं लघ्विति तदेव कल्पयितुमर्हम् । ततोऽर्थापत्ति-कल्पनं जीवित्वमुपजीव्यानुमानादपि बहिस्सत्त्वज्ञानं भविष्यतीत्येतावत्तर्क-सहकृतो यथोक्तसामग्रीप्रभवः संशयो बहिस्सत्त्वं कल्पयति ।

न च वाच्यं तर्काणां विपर्ययापर्यवसायित्वे आभासत्वम् । तत्पर्यवसाने च तदेवानुमानमेतत्तर्कसहाय बहिस्सत्त्वमनुमापयिष्यतीति । यतो लाघवगौरवतर्काणां विपर्ययापर्यवसयिनामेव प्रमाणसहकारित्वम्, अत एव प्रत्यक्षशब्दादावपि सहकारी सः । न च तस्यां दशायामेव प्रमाणान्तरमस्ति, ततोऽर्थापत्तिसहकारित्वं तर्कस्य ।

---

### प्रकाशः

तर्कान्तरमाह — **तथेति** । **तथापीति** । मरणापेक्षया हि जीवनं लघ्विति तत्कल्पनार्थमर्थापत्तिस्त्वाकारः स्यात् । ततश्च तत्कल्पितजीवित्व-लिङ्गकानुमित्या बहिस्सत्त्वं साध्यमित्यावश्यकतया गुर्वपि बहिस्सत्त्वमेवार्था-पत्त्या कल्प्यते, न हि मरणमिति तर्कशरीरमेव सर्वमिदं द्रष्टव्यम् । तेनैतावत्तर्कसहितः संशयो बहिस्सत्त्वं कल्पयतीति नोपसंहारविरोधो न वा जीवित्वस्यार्थापत्ति[1]कल्पनत्वेनोपवर्णनेऽपसिद्धान्त इति ।

---

### तर्कचूडामणिः

ननु जीवन एव लाघवमपूर्वमभिमतम्, न तु बहिस्सत्त्व इति तथेति ग्रन्थानुपपत्तिरित्यत आह—**तर्कान्तरमिति** । ननु [2]प्रमेति वदतो

---

1. क. अर्थापत्त्युपवर्णने    2. ख. प्रमेति वदता

ननु स्वकारणाधीनस्वभावविशेषात् तर्कानुगृहीतयथोक्तसंशयस्य यदि बहिस्सत्त्वप्रमापकत्वं तदा मृते गृहस्थिते वा तादृशसंशयाद्यत्र बहिस्सत्त्वकल्पना सापि प्रमा स्यादिति चेत्—न। यथा हि प्रमापकस्येन्द्रियस्य दोषेण प्रमाशक्तितिरोधानादैन्द्रियकभ्रमः, तथा यथोक्तसंशयस्यापि दोषेण प्रमाशक्तितिरोधानादग्रहरूपभ्रमसम्भवात्। परोक्षज्ञानानां जनकज्ञानाविभ्रमत्वे यथार्थत्वनियम इति चेत्—सत्यम्। प्रकृतेऽपि जीवनगृहाभावनियमग्राहकप्रमाणयोरन्यतराभासत्वेनाभासत्वसम्भवात्। यद्वा दोषाभावसहकृतस्य यथोक्तसंशयस्य बहिस्सत्वप्रमापकत्वमिति।

उच्यते। अनयोरेकं बाध्यं विरुद्धार्थग्राहकत्वादिति समान्यतोदृष्टादेव तर्कसहकृताद्गृहनियमग्राहकबाधे लिङ्गविशेषेण जीवित्वनिश्चयेऽनुमानात्

---

## प्रकाशः

प्रकृतेऽपीति। अत्र देवदत्तो गृहे नास्तीति नियमग्राहकप्रमाणं नियमग्राहकपदेनोक्तं न[1]तु जीवी गृह एवेति नियमग्राहकम्। तथा सति बहिस्सत्त्वप्रमा [2]क्वापि न स्यात्, गृह एवेति नियमग्राहकस्य तत्राप्याभासत्वादिति भावः। यद्वेति। पूर्वं दोषाभावो न हेतुः, किं तु अतिरोहितप्रमाशक्तिकस्य प्रमाहेतुत्वं [3]तद्विरहादेवोदाहृतस्थले प्रमाविरह इत्यभिमतम्। अत्र च दोषा-

---

## तर्कचूडामणिः

दोषाभावस्य हेतुत्वं पूर्वमप्यभिहितमिति पौनरुक्त्यमित्यत आह—पूर्वमिति। किं त्विति। अत एव दोषेण प्रमाशक्ति[4]तिरोधानमित्युक्तमिति भावः।

---

1. ख. 'तु' नास्ति
2. ख. कुत्रापि
3. ख. यद्विरहाच्चोदा॰
4. क. तिरोधानादित्युक्तम्

बहिस्सत्त्वसिद्धिः। तथाहि —जीवनप्रमाणबाधे गृहनियमप्रमाणोत्थापित-लिङ्गेन मरणानुमानात् प्रमाणत्वाभिमतयोर्द्वयोरपि बाधा स्यात्। गृहनियमग्राहकमानबाधं च निष्परिपन्थिजीवनप्रमाणात् लिङ्गविशेषण-जीवित्वनिश्चये बहिस्सत्त्वानुमानादकप्रमाणबाधं चेत्यादितर्कसहकृतात् सामा-न्यतोदृष्टादेवानयोरेकं बाध्यमिति जायमानानुमितिः परम्परामरणज्ञापकं विषयीकरोति, न तु बहिस्सत्त्वपरम्परासाधकं जीवनप्रमाणम्। तथा च सामान्यतोदृष्टादेव गृहनियमग्राहकबाधे जीवनप्रमाणाल्लिङ्गविशेषणजीवित्व-निश्चयेऽनुमानादेव बहिस्सत्त्वज्ञानमिति किमर्थापत्त्या?

ननु बहिस्सत्त्वज्ञानं विना जीवी गृह एवेत्यस्य ब्रह्मणापि बाधितुम-शक्यत्वात् प्रथमं बहिस्सत्त्वज्ञानम्, न तु गृहनियमग्राहकबाधानन्तरं तत् येन निष्परिपन्थजीवनग्राहकाज्जीवित्वनिश्चयेऽनुमानं स्यात्। न प्राथमिकं बहिस्सत्त्वज्ञानमर्थापत्तिं विना। न च गृहनियमग्राहिणि तुल्यबले जागरूके कथमर्थापत्त्यापि बहिस्सत्त्वज्ञानमिति वाच्यम्। तर्कसहकारेणार्थापत्तेर्बल-वत्त्वात् बहिस्सत्त्वज्ञानमुत्पाद्य गृहनियमग्राहकमानबाधादिति चेत्—

न। तर्कसहकारेण सामान्यतोदृष्टस्य बलवत्त्वेन गृहनियमग्राहक-बाधसम्भवात्। तस्माद्यथोक्तसंशयदशायां जीवनबाधे तन्नियमबाधस्यावश्य-कत्वादिति तर्कानन्तरमेव बहिस्सत्त्वज्ञानमित्यविवादम्। तत्र कल्पनीय-प्रमाणबाधे (प्रमाणाभावे) यथोक्तसंशये तर्कस्य न सहकारित्वं गौरवात्। किं तु नियमग्राहकबाधद्वारा बहिस्सत्त्वपरम्परासाधके सामान्यतोदृष्टे लाघ-वात्। न च सामान्यतोदृष्टावतार एवात्र नास्तीति वाच्यम्। अनिर्धारितै-कबाधप्राप्तौ त्वेकबाधानुकूलकल्पनायां विनिगमकस्तर्को भवति। न चैक-बाधप्राप्तिः सामान्यतोदृष्टं विना।

किं च विरोधज्ञानानन्तरमेकमप्रमाणमिति यदि धीर्नास्ति तदा प्रामाण्यसंशयो न स्यात्, न स्याच्च जीवनसंशयः द्वयोरपि जीवनमरणनिश्चायकत्वात् ।

अथैकमनयोरप्रमाणमिति ज्ञानं जनयित्वा सामान्यतोदृष्टस्य पर्यवसितत्वात्तज्जनितनियमद्वयसंशयाहितजीवनसंशयानन्तरं तर्कावतारे बहिरस्तीति ज्ञानं जायमानं संशयस्य कारणत्वं व्यवस्थापयतीति चेत्—

न। यदेव हि विरुद्धार्थग्राहकत्वं तर्कविनाकृतमनिर्धारितैकाप्रामाण्यानुमितिमजीजनत् तदेव तर्कसहकृतं पुनरनुसन्धीयमानं गृहनियमग्राहकप्रमाणमिति अनुमितिं बहिस्सत्त्वज्ञानानुकूलां जनयति, सहकारिवैचित्र्येणैकस्यापि

## प्रकाशः

भावोऽपि प्रमाहेतुः, [1]तद्विरहाच्च तद्विरह इत्युच्यत इति न पूर्वभेदः। प्रमाणत्वाभिमतयोरिति। अत्र शतवर्षजीवी[2] देवदत्तो गृह एवेति नियमग्राहकस्य शतवर्षजीवित्वरूपविशेषणबाधाद्बाधाभिमतेति ध्येयम् ।

## तर्कचूडामणिः

ननु मरणेऽपि जीवी गृह एवेत्यस्य कदाचिज्जीवनमादायापि पर्यवसानेन [3]बाधाभावात् कथमुभयबाध इत्यत आह—अत्रेति।

1. ख. तद्विरहात्तत्र तद्विरहः
2. ख. 'देवदत्तः
3. ख. बाधकाभावात

विचित्रफलजनकत्वात् । न च जीवनसंशयानन्तरं तदनुसन्धानमसिद्धम् । गृहनियमग्राहकस्य जीवनग्राहकत्वविरुद्धार्थग्राहकत्वानुसन्धानं विना बहिस्सत्त्वकल्पनेऽप्यबाधप्रसङ्गात् ।

अथ यदि पर्यवसन्नमपि प्रमाणं पुनरनुसन्धीयमानं सहकारिविशेषात् फलान्तरजनकं, तदा इच्छा द्रव्याश्रिता कार्यत्वादिति सामान्यतोदृष्टद्रव्याश्रितत्वानुमितौ पश्चाद्दृष्टद्रव्यवृत्तित्वबाधे व्यतिरेकिणा आत्मसिद्धिरिति भिज्येत । अदृष्टद्रव्यवृत्तित्वबाधसहकृतात् सामान्यतोदृष्टादेव पुनरनुसन्धीयमानात् तत्सिद्धेरिति चेत्—

### प्रकाशः

तदनुसन्धानमिति । विरुद्धार्थग्राहकत्वरूपलिङ्गप्रतिसन्धानमित्यर्थः । अबाधप्रसङ्गादिति । अविलम्बप्रसङ्गादित्यर्थः । दृश्यते च तदनुसन्धानं बिना-[1]विलम्ब इति त्वयापि तदवश्यं स्वीकरणीयमित्यर्थः । [2]वस्तुतस्तर्कावतारकाले पूर्वोत्पन्नः संशयोऽपि दुर्बलः । तावत्पर्यन्तमनवस्थानात् पुनस्संशयासञ्जनमपि ।

### तर्कचूडामणिः

तत्पदस्याव्यवहितजीवनपरत्वं वारयति—विरुद्धेति । ननु बाधाभाव इष्ट एव, त्वयापि [3]बाधाभावाभ्युपगमादित्यत आह—अविलम्बेति । इष्टापत्तिमाशङ्क्याह—दृश्यत इति । ननु दर्शनमसिद्धमित्यनुशयादाह—वस्तुत इति । [4]आसञ्जनमपीति । त्वया वक्तव्यमिति शेषः । तर्कस्य प्रतिबन्धकतया पुनः संशयो न सम्भवतीति सूचयति—अपीति ।

1. ख. तत्तद्विलम्बः
2. ख. 'वस्तुतः......कल्प्यत इति भावः' नास्ति
3. क. बाधाभावाभ्युपगमाभावात्
4. ग. आसञ्जनमपि कथं वक्तव्यमिति

न। अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन तत्प्रकारकबुद्धेर्व्यतिरेकिसाध्यत्वात्। व्यतिरेकिणोऽप्यन्यत्र सामर्थ्यावधारणेनोपायान्तरस्यादोषाच्च। अपि च देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वात् मद्वदिति सामान्यतोदृष्टं लाघवसहकारेण जीवनप्रतियोगित्वं विषयीकरोति। तथा च लिङ्गविशेषणनिश्चयात् अनुमानादेव बहिस्सत्त्वसिद्धिः।

## प्रकाशः

एवं च तस्य कल्प्यप्रमाणभावतर्कात् क्लृप्तप्रमाणभावस्य सामान्यतोदृष्टस्यैव पुनरवतारो लाघवात् कल्प्यत इति भावः।

लिङ्गनिश्चयार्थं सामान्यतो दृष्टान्तमाह—अपि चेति। न च प्राणित्वलिङ्गप्रतिसन्धानं [1]तदा अप्रसिद्धमिति वाच्यम्। [2]प्राणित्वलिङ्गेनान्यतरप्राप्तिं विना विनिगमकलाघवादितर्कानवतारात् पूर्वोक्तयुक्तेश्चेति भावः। [3]विशेषविषयत्वादिति। जीवनविषयत्वादित्यर्थः। तथा च [4]विरोधिविषयतया मरणानु-

## तर्कचूडामणिः

ननु जीवनादिप्रतियोगित्वानुमानस्य बहिस्सत्त्वसाधकत्वाभावात् अपि चेति ग्रन्थानुपपत्तिरित्यत आह—लिङ्गेति। अत्र वर्तमानत्वं जीवनादिविशेषणम्। अतो न कादाचित्कजीवनमादायार्थान्तरम्। [5]प्राणित्वं च कादाचित्क[6]प्राणसंयोगिसाधारणं [7]तत्संयोगात्यन्ताभावानधिकारणत्वम्। अतो न संदिग्धासिद्धिः। प्रतियोगिवैयाधिकरण्यावच्छेदकावच्छिन्नत्वं [8]चाभावविशेषणम्, अतो नासिद्धिः। यदि

1. ख. तदप्रसिध्दम्
2. ख. 'प्राणित्वलिङ्गेन' नास्ति।
3. ख. 'विशेष' नास्ति
4. ख. विरोधितया
5. ख. ग. प्रामाणिकत्वं च
6. ख. प्रमाण-
7. क. तत्संयोगभावात्यन्ताभावानधिकरणं
8. क. चेत्यभावविशेषणम्

अथ लाघवसाचिव्यात् सामान्यतोदृष्टस्यापि विशेषविषयत्वात् नियमग्राहकप्रमाणोत्थापितलिङ्गकमरणानुमानेन जीवनग्राहकस्यैवास्यापि सत्प्रतिपक्षत्वम्। एकेनापि भूयसामपि प्रतिबन्धसम्भवात्। न च तर्कात् समान्यतोदृष्टस्य बलवत्त्वम्। व्याप्तिपक्षधर्मते हि बलम्। तच्च तुल्यमेव ज्ञातम्, लाघवाख्यतर्कस्य विशेषमात्रपर्यवसायकत्वेन व्याप्तिग्राहकत्वस्य तुल्यत्वादिति चेत्—

## प्रकाशः

मानेन सत्प्रतिपक्षः सिध्यति। अन्यथा [1]अन्यतरत्वग्राहकसामान्यतोदृष्टेन विरोधाभावात् प्रतिपक्ष एव न स्यादिति भावः। जीवनग्राहकस्य ज्योतिःशास्त्रकथितरेखादिलिङ्गस्य। सर्वत्रेति। पर्वतो न पर्वतीयवह्निमान् धूमवत्त्वादित्यादिना प्रतिबन्धः स्यादित्यर्थः।

## तर्कचूडामणिः

च गगनादावपि तत्संयोगसम्भवेन तत्रापि तदत्यन्ताभावानधिकरणत्वं तदा चेतनत्वं मुक्तात्मादौ व्यभिचारवारणाय संसारित्वपरं तदपीति बोध्यम्। अस्तु तर्हि संशयसहकारितर्क इत्यत आह—पूर्वेति। ननु मरणस्यापि [2]विशेषणतया तद्विषयत्वे सत्प्रतिपक्षानवकाश इत्यत आह—जीवनेति। ननु [3]जीवनग्राहकज्योतिश्शास्त्रस्य कथं [4]सत्प्रतिपक्षत्वम्, तस्यालिङ्गत्वादित्यत आह—ज्योतिरिति। पर्वत इति। यद्यपि पर्वतीयवह्निसिद्धौ तदभावानुमाने बाधः। तदप्रसिद्धौ प्रतियोग्यप्रसिद्ध्यैवानुमानानवतार इति न सर्वानुमानोच्छेदः। तथापि न वह्निः पर्वतवृत्तिः वह्नित्वादित्यत्राप्रयोजकत्वे [5]तात्पर्यम्।

1. ख. अन्यतरग्राहक
2. क. विशेषतया
3. ख. 'जीवन' नास्ति।
4. क. ख. सत्प्रतिपक्षितत्वम्
5. क. वा तात्पर्यम्
   ग. न तात्पर्यम्

तर्हि पक्षधर्मताबलाद्विशेषसिद्धिः क्वापि न स्यात्। सर्वत्र सामान्यमुखप्रवृत्तप्रमाणस्य विशेषपर्यवसानेऽन्यसाधर्म्येण सत्प्रतिपक्षसम्भवात्। अप्रयोजकत्वान्न विपरीतसाधनमिति तुल्यम्। नियमग्राहकस्याप्रयोजकत्वात्। जीवनग्राहकस्य तु सामान्यतोदृष्टस्य ज्योतिश्शास्त्रायथार्थत्वमेव विपक्षबाधकं व्याप्तिग्राहकमस्ति।

तस्मात् सामान्यमुखप्रवृत्तस्य सहकारिविशेषात् विशेषपरस्यानुमानस्य तद्विशेषविलक्षणग्राहकप्रमाणेन सत्प्रतिपक्षत्वम्। न च प्रमाणविरोधेऽस्य तर्को न सहकारीति वाच्यम्। तर्कानवतारे विशेषपरत्वाभावेनाविरोधात्।

---

## प्रकाशः

जीवनग्राहकस्येति। अत्रेदं चिन्त्यम्। विपक्षबाधकतर्कानवतारे सामान्यतोदृष्टस्य न [1]जीवित्वनिश्चायकत्वम्, [2]सत्प्रतिपक्षत्वात्। तदवतारे च ज्योतिश्शास्त्रकथितलिङ्गादेरावश्यकत्वात् [3]जीवित्वनिश्चयसम्भवे किमनेन सामान्यतोदृष्टेनेति। तस्मादिति। अतुल्यबलेन न सत्प्रतिपक्षत्वमिति भावः। स चेति।

---

## तर्कचूडामणिः

अत्रेदमिति। इदमत्र समाधेयम्—[4]अन्यतरप्राप्तिं विना विनिगमकलाघवादितर्कानवतारादन्यतरप्राप्तये सामान्यतोदृष्टानुमानस्यावश्यकत्वे तर्कावतारदशायां ज्योतिश्शास्त्रकथितरेखादिलिङ्गवदेवास्यापि जीवित्वनिश्चायकत्वमविरुद्धम्, व्याप्तिपक्षधर्मतयोस्तुल्यत्वादित्येव ग्रन्थकृदभिमतम्, न त्विदमेव निश्चायकमिति। ननु सामान्यप्रवृत्तस्य विशेषपर्यवसितस्य न [5]सत्प्रतिपक्षत्वमित्ययुक्तम्। सामान्यप्रवृत्त-

---

1. ख. जीवत्त्व-
2. ख. सत्प्रतिपक्षितत्वात्
3. ख. जीवत्त्व-
4. ग. अन्यतरप्रतिपत्तिं
5. क. ख. सत्प्रतिपक्षितत्वम्

तदवतारे तदधिकबलत्वादेव । अन्यथा तर्कानवतारे सत्प्रतिपक्षस्य तदवतारेऽपि तत्त्वं न निवर्तते ।

किं चैवमर्थापत्तावपि तद्विरोधेन न सहकारी स्यात् । यदुक्तं मरणकल्पने शतवर्षावच्छिन्नजीवी गृह एवेत्यस्यापि बाध इति । तत्र विशिष्टबाधो न विशेष्यबाधात् । मरणेऽपि जीवी गृह एवेत्यस्य विशेष्यस्याबाधात्। किं तु विशेषणबाधात् । स च शतवर्षजीवित्वबाध एव । विशेषणाभावायत्तो विशिष्टाभावोऽप्यस्तीति चेत्—न। विशेष्यवति विशिष्टाभावस्य केवलविशेषणाभावात्मकत्वात्, विशिष्टस्यातिरिक्तस्यानभ्युपगमात् ।

अन्ये तु शतवर्षजीवी देवदत्तो जीवी गृह एव गृहे नास्तीति प्रमाणेषु द्वयोरविरोधेऽपि तृतीयमादाय विरोधज्ञानमस्ति। तत्र जीवी गृह एवेत्यप्रमा-

**प्रकाशः**

'प्रमाणत्वाभिमतयोर्द्वयोरपि बाधः स्यात्' इति च पररीत्या प्रागुक्तम्, मरणापेक्षया जीवनं लघिवति लाघवं, [1]ज्योतिश्शास्त्रयथार्थत्वं चेति विनिगमकं स्वपक्षे द्रष्टव्यम् ।

अन्य इति । मीमांसका इत्यर्थः । अप्रमाणस्यापीति । तथा च यत्र जीवी गृह एवेति वस्तुतोऽप्रमाणमपि प्रमाणत्वेन ज्ञायते, तत्रापि तद्विरोधि-

**तर्कचूडामणिः**

त्वादेरनियामकत्वादित्यत आह—अतुल्येति । नन्वेवं द्वयोरपि बाधः स्यादिति सिद्धान्तग्रन्थविरोध इत्यत आह—प्रमाणत्वेति । तर्हि स्वमतेऽपि विनिगमकाभाव इत्यत आह—मरणेति ।

ननु तथाप्यन्येषां मते का हानिरित्यत आह—तथा चेति । प्रत्येकं त्रयाणामन्वयं वारयति—मृत इति । ननु पूर्वानुमानस्यापि व्याप्तिप्रभवत्वात्

1. ख. ज्योतिश्शास्त्राद्यथार्थत्वं

णघटितप्रमाणद्वयविरोधज्ञानजनिताप्रमाण्यसंशयाहितजीवनसंशयात् प्रमाणयोरविरोधोपपादकप्रमाणविरोधि बहिरसत्त्वं कल्प्यते। यथोक्तसंशयस्यायमेव स्वभावो यद्वस्तुगत्या अप्रमाणं तद्विरोधि कल्पयति। विरोधघटकस्य वस्तुगत्या अप्रमाणत्वमेव विनिगमकत्वमिति।

तत्तुच्छम्। अप्रमाणस्यापि प्रमाणत्वेन ज्ञानात्। तर्कादिभिर्विशेषदर्शनं विना यथोक्तसंशयानन्तरं बहिरस्तीति ज्ञानमसिद्धम्। अतो न फलबलेन तथार्थापत्तिकल्पनम्।

किं च मृते गृहस्थिते बहिःस्थिते तादृशसंशयादेव बहिस्सत्त्वं गृहसत्त्वं मरणं च कल्प्येत। कस्यचित् क्वचित् वस्तुगत्या अप्रमाणत्वात्। अर्थापत्त्याभासश्चैवं न स्यात्।

स्यादेतत्—मा भूत् संशयः करणमर्थापत्तौ, अनुपपत्तिस्तु स्यात्। तथा हि जीवी देवदत्तो गृहे नास्तीति ज्ञाने सति बहिस्सत्त्वं विना जीवतो गृहासत्त्वमनुपपन्नमिति ज्ञानानन्तरं बहिरस्तीति धीरस्ति, तत्रान्वयव्यतिरेकाभ्यामनुपपत्तिज्ञानं करणम्। न च देवदत्तो बहिरस्ति, विद्यमानत्वे सति

---

प्रकाशः

बहिस्सत्त्वमेव कल्प्यते न मरणमित्यर्थः। किं चेति। मृते मरणं गृहस्थिते गृहे सत्त्वं [1]बहिः स्थिते बहिस्सत्त्वमिति यथायोगं ज्ञेयम्। अत्रेष्टापत्तिमाशङ्क्याह—अर्थापत्त्याभास इति।

अन्ये तु—किं चेत्यर्थापत्त्याभासश्चैवं न स्यादित्यन्तमेको ग्रन्थः। अप्रमाणत्वादित्यस्यानन्तरमिति पूरणीयः। तेन हेतुत्वं लभ्यत इत्याहुः।

---

1. क. 'बहिः स्थिते बहिस्सत्त्वम्' नास्ति

गृहासत्त्वात् घटवदित्यनुमानात् विद्यमानत्वे सति यत्र यन्नास्ति तदन्यदेशे तदस्ति. यथा गृह एव कोणेऽसन्नहं मध्ये तिष्ठामीति व्याप्तिप्रभवानुमानाद्वा बहिस्सत्त्वसिद्धेः किमर्थापत्त्येति वाच्यम् । हेतुसाध्ययोः सहचाराज्ञानदशायामनुपपत्तिज्ञानेऽपि बहिस्सत्त्वज्ञानात् । सामान्यतो व्याप्तिश्चानुमाने उपजीव्यत्वात् (?) तद्ग्रहाशक्येति तदन्यदेशसिद्धिरर्थापत्त्यैव ।

ननु जीविनो गृहासत्त्वमनुपपन्नं किं देवदत्तबहिस्सत्त्वं विना, उत बहिस्सत्त्वमात्रं विना । नाद्यः, प्रथमं देवदत्तबहिस्सत्त्वाप्रतीतौ तेन विनेदमनुपपन्नमिति ज्ञानाभावात् । प्रतीतौ वा किमर्थापत्त्या । अर्थापत्तित एव तत्प्रतीतावन्योन्याश्रयः । तदुक्तम्—'यतोऽन्यत्वं तत्सिद्धेरग्रे तदसिद्धेः' इति । नान्त्यः, अन्यदीयबहिस्सत्त्वज्ञानं विनानुपपत्त्यभावात् । बहिस्सत्त्वमात्रसिद्धावपि देवदत्तबहिस्सत्त्वासिद्धेरिति चेत्—

---

प्रकाशः

विशेषव्याप्तिमूलकमनुमानमुक्त्वा सामान्यव्याप्तिमूलकमनुमानमाह—विद्यमानत्वे सतीति । द्वितीयमनुमानं दूषयति—सामान्यत इति । यत्त्वतत्त्वयोरननुगमान्न व्याप्तिग्रह इति भावः । स्वोक्तदूषणे खण्डनसंमतिमाह—यतोऽन्यत्वमिति । यतः

---

तर्कचूडामणिः

[1]व्याप्तिप्रभवानुमानाद्वेति ग्रन्थासंगतिरित्यत आह—विशेषेति । ननु घटदृष्टान्तानुमाने दूषणमिदं न लगतीत्यत आह—द्वितीयेति । ननु व्याप्तिरनुमानाङ्गमित्युक्ते व्याघात इत्यत आह—यत्त्वेति । यतः कल्पनीयादिति । देवदत्तो

---

1. ख. ग. व्याप्तिप्रभवत्वानुमानाद्वेति

न। सामान्येन हि विनानुपपत्तिज्ञानं कारणम्, सामान्याकारेण विशेषज्ञानं फलम्। तथा हि जीवतो बहिस्सत्त्वं विना गृहासत्त्वमनुपपन्नमिति ज्ञानं यस्य गृहासत्त्वमनुपपन्नं तत्र बहिस्सत्त्वं कल्पयति नान्यत्र, देवदत्तश्च तथेति सिद्धे देवदत्ते बहिस्सत्त्वं कल्प्यत इति देवदत्तबहिस्सत्त्वं पर्यवस्यति। न तु तेन रूपेण कल्पना न वा तेन विनानुपपत्तिज्ञानं कारणम्। यथा वह्निमात्रव्याप्ताद्धूमात् पर्वते वह्निसिद्धिर्न तु पर्वतीयत्वेनैव धूमात्तत्सिद्धिः, तेन रूपेण व्यापकत्वाग्रहात्।

अथ उपपादकाभाववत्युपपाद्याभावानियमोऽनुपपत्तिर्न त्वभावमात्रम् अतिप्रसङ्गात्। एवं च व्यतिरेकव्याप्तिमत उपपाद्यात् व्यतिरेक्यनुमानमुद्रयैव साध्यसिद्धेः किमर्थापत्त्या। तथा हि—देवदत्तो बहिः सन् जीवित्वे सति गृहासत्त्वात् यन्नैवं तन्नैवम्, यथा मृतो गृहस्थितो वा। न चान्यव्याप्त्या अन्यस्य गमकत्वेऽतिप्रसङ्गः। साध्याभावव्यापकाभावप्रतियोगित्वस्य नियामकत्वात्। न चार्थापत्तौ स्वरूपसती व्याप्तिर्लिङ्गम्, नानुमान इति वाच्यम्। अनुपपत्तेर्ज्ञानं विना कल्पनानुदयात्, अर्थापत्त्याभासानवकाशाच्च।

मैवम्। अत्र हि व्यतिरेकव्याप्तिरन्वयस्य पक्षधर्मत्वमिति व्याप्तिधीजन्यमपि बहिस्सत्त्वज्ञानं नानुमितिः, तस्या व्याप्तपक्षधर्मताज्ञानजन्यतानियमात्। न च साध्याभावव्यापकाभावप्रतियोगित्वेन पक्षधर्मस्य ज्ञानमनुमितिप्रयोजकमिहाप्यस्तीति वाच्यम्। केवलान्वयिनि तदसम्भवात्, तदपेक्षया साध्यव्याप्यत्वज्ञानस्य लघुत्वाच्च।

अथ व्यतिरेकसहचाराद्धेतोरेव व्याप्तिर्दृश्यते। एवं चान्वयस्य व्यतिरेकस्योभयस्य वा सहचारात् व्याप्तिग्रहत्रैविध्येऽनुमानत्रैविध्यम्। अत एव धूमो देशाविशेषेऽन्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति चेत्—

अस्तु तावदेवम् । तथापि जीविदेवदत्ताभावो गृहे वर्तमानो न बहिस्सत्त्वे लिङ्गं देवदत्तावृत्तित्वात् । बहिस्सत्त्वगृहनिष्ठाभावयोर्व्यधिकरणत्वेन नियतसामानाधिकरण्यरूपव्याप्त्यभावाच्च । उपरि सविता भूमेरालोकवत्त्वादित्यत्र भूमेरुपरिसंनिहितसवितृकत्वेनानुमानात् । नापि गृहनिष्ठाभावप्रतियोगित्वम् । तत्प्रतियोगित्वस्य देवदत्तधर्मतया तदसंनिकर्षे प्रत्यक्षेण ज्ञातुमशक्यत्वात् । अत एव विशेष्यासंनिकर्षात् तृतीयलिङ्गपरामर्शोऽपि न प्रत्यक्षेण । न च व्यतिरेकव्याप्तिगृहनिष्ठाभावयोर्ज्ञानं सहकार्यासाद्य मनसैव न जन्यत इति वाच्यम् । सहकारिण एव मानान्तरत्वप्रसङ्गात् ।

अथ व्याप्तिज्ञानानन्तरं स्मर्यमाणधूमात् कथमनुमितिः? उक्तन्यायेन तत्रापि लिङ्गपरामर्शाभावादिति चेत्—न कथंचित् । कथं तर्हि वह्निज्ञानम्? पक्षधर्मधूमस्मृतिसहितात् धूमो वह्निं विना नास्तीत्यनुपपत्तिज्ञानादिति गृहाण ।

अत एव दृश्यमानो धूमो वह्निं विनानुपपन्न इति यदा ज्ञायते तदार्थापत्तिरेव । यदा त्वनुपपत्तिज्ञानं विना व्याप्यत्वेन प्रतिसन्धीयते तदानुमानम् । त्वयापि तत्र त्रिविधानुमानस्वीकारात् व्यतिरेकव्याप्तिमुपजीव्य जीविदेवदत्तगृहाभावो बहिस्सत्त्वं कल्पयति ।

उच्यते । देवदत्तासंनिकर्षेऽपि तस्य गृहनिष्ठाभावप्रतियोगित्वं प्रत्यक्षेण गृह्यते । तथाहि— गृहे देवदत्तस्याभाव इति प्रत्यक्षं देवदत्तं षष्ठ्यर्थं चाभावसम्बन्धं प्रतियोगित्वलक्षणं गोचरयति । सम्बन्धज्ञानस्य सम्बन्धिद्वयविषयत्वात्, प्रतियोगिना सममभावस्य सम्बन्धान्तराभावात् । गृहनिष्ठाभावप्रतियोगित्वे च प्रत्यक्षोपस्थिते स्मृतव्याप्तिवैशिष्ट्यमपि प्रत्यक्षेण सुग्रहम् । न च देवदत्तविशेष्यकं बहिस्सत्त्वव्याप्यगृहनिष्ठाभावप्रति-

योगित्वज्ञानं नास्तीति वाच्यम् । पक्षवृत्तिलिङ्गपरामर्शमात्रस्यानुमितिजनकत्वात्, अधिकस्य गौरवपराहतत्वात् ।

अथ वा अनतिप्रसक्तसहकारिवशान्मनसैव स्मृतदेवदत्तविशेष्यकस्तृतीयलिङ्गपरामर्शः । यथा च न सहकारि मानान्तरं तथोपपादितमधस्तात् ।

---

## प्रकाशः

कल्पनीयादन्यत्वं तस्यान्यत्वप्रतियोगिनोऽपि [1]अग्रे प्रथमतः सिद्धेः तस्याः अर्थापत्तेः असिद्धेः प्रमाणत्वासिद्धेः । तत्फलत्वेनाभिमतस्यान्यत्वप्रतियोगिज्ञानस्य प्रमाणान्तरादेव जातत्वात् । तदजातत्वे वा अन्यथानुपपत्तेरेवाज्ञानादित्यर्थः । यद्वा यतः कल्पनीयादन्यत्वं तत्सिद्धेरग्रे तत्सिद्धेः पूर्वं तदसिद्धेः उक्तानुपपत्तिज्ञानासिद्धेरित्यर्थः ।

देवदत्तस्याभाव इति । अत्र देवदत्तस्येति [2]प्रतियोगित्वं षष्ठ्यर्थः प्रकारः, न तु नेह देवदत्त इतिवत् संसर्गमर्यादया प्रतियोगित्वभानम् । तेन प्रतियोगित्वस्य-

---

## तर्कचूडामणिः

यदि बहिर्न स्यात् तर्हि गृहनिष्ठाभावप्रतियोगित्वे सति [3]जीवो न स्यादित्यत्र कल्पनीयो बहिस्सत्त्वविशिष्टदेवदत्तः तदन्यत्वं तत्र यद्यवगतं तदा तत्प्रतियोगितावच्छेदकावच्छिन्नबहिस्सत्त्वविशिष्टदेवदत्तस्य [4]प्रागेवावगतत्वादर्थापत्तिवैयर्थ्यमित्यर्थः । अनवगमपक्षं दूषणपरतया पुनरपि योजयति—यद्वेति ।

प्रकार इति । पदार्थानां विशेष्यत्वाभावे प्रकारत्वस्यावश्यकत्वादिति भावः । नेहेति । तत्र तद्वाचकाभावेन प्रकारत्वासम्भवादिति भावः । यत्रेति । इह देवदत्तो

---

1. क. 'अग्रे' नास्ति
2. क. 'प्रतियोगित्वं - तेन' नास्ति ।
3. जीवन्न स्यात्
4. क. ख. प्रागेवावगमात्

ननु मयूरः पर्वतेतरे न नृत्यति, नृत्यति चेति ज्ञानानन्तरं पर्वते नृत्यतीति ज्ञानमस्ति। न च व्यतिरेकिणस्तत् सम्भवति। पर्वतनृत्याप्रसिद्धौ तेन विनानुपपत्तिप्रतिसन्धानमपि नेति कथमर्थापत्तिरपीति वाच्यम्। अधिकरणं विनानुपपद्यमानं नृत्यं प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरमधिकरणं कल्पयतीति चेत्—

## प्रकाशः

रूपव्याप्यतावच्छेदकावच्छिन्नप्रतियोगित्वरूपलिङ्गलाभादनुमानावतारः। अन्यथा वैशिष्ट्यविधया [1]प्रतियोगित्वलाभेऽपि व्याप्यतावच्छेदकावच्छिन्नलिंगानुपस्थितौ नानुमानं स्यात्। न चैवं यत्र संसर्गमर्यादयैव तद्भानं तत्रानुमानानवतारेण अर्थापत्तिः [3]सावकाशेति वाच्यम्। अर्थापत्त्यापि बहिस्सत्त्वं विना गृहनिष्ठाभावप्रतियोगित्वस्यैवानुपपन्नत्वबुद्धिर्गमिकेति प्रतियोगित्वत्वावच्छिन्नोपस्थितिं विना तेनाप्यर्थापत्त्यवतारानभ्युपगमादित्याहुः। **अधिकस्य**——पक्षविशेष्यकत्वस्य। ननु गृहनिष्ठाभावप्रतियोगित्वस्यापि देवदत्तधर्मतया [2]असंनिकृष्टत्वाद् तद्विशेष्यकोऽपि चाक्षुषपरामर्शोऽप्यसम्भवीत्यनुशयेनाह——**अथ वेति**। पूर्वोक्तदोषं निरस्यति——[3]**यथा चेति**।

## तर्कचूडामणिः

नास्तीति शब्दादित्यर्थः। ननु [4]परामर्शादन्यस्याबाधितत्वज्ञानस्यानुमितिहेतुत्वात् कथमधिकस्य व्यर्थत्वमित्यत आह——**पक्षेति**। ननु परामर्शस्य पक्षविशेष्यकत्वे [5]लिङ्गविशेष्यकत्वे च उपनयस्य मानान्तरत्वापत्तिशङ्कायास्तुल्यत्वात् कथमस्मिन् पक्षे तच्छङ्का, येन तत्र तदुद्धारः क्रियत इत्यत आह——**पूर्वोक्तेति**।

1. ख. प्रतियोगित्वमात्रोपस्थितावपि
2. ख. संनिकृष्टत्वात्
3. ख. यथा वेति
4. ग. परामर्शजन्यस्याबाधितत्व
5. ख. 'लिङ्गविशेष्यकत्वे' नास्ति।

न। मयूरनृत्यं साधिकरणं नृत्यत्वादिति सामान्यतोदृष्टं प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरं पर्वतमधिकरणमादाय नृत्यज्ञानं जनयति।

यद्वा पर्वतेतरे न नृत्यतीति शब्देन नृत्याभावबोधानन्तरं मयूरो नृत्यतीति शब्दाज्जायमानं ज्ञानं पर्वतनृत्यं गोचरयति। प्रसिद्धविशेषबाधसहकृतसामान्यज्ञानजनकप्रमाणस्य प्रसिद्धेतरं पर्वतमधिकरणविशेषमादाय ज्ञानजनकत्वनियमात्। अत एवानित्यज्ञानबाधानन्तरं क्षित्यादौ ज्ञानजन्यत्वं सिध्यत् नित्यत्वमादाय सिध्यतीत्याचार्याः।

यद्वा मयूरनृत्यं पर्वताधिकरणकं पर्वतेतरानधिकरणत्वे सति साधिकरणत्वात् पर्वतत्ववत् इत्यन्वयव्यतिरेकी।

---

## प्रकाशः

ननु साधिकरणत्वानुमितावपि व्यापकतावच्छेदकप्रकारनैयत्येनाधिकरणत्वेनैव पर्वतभानं स्यान्न तु पर्वतत्वेनेति न [1]तया पर्वतत्वप्रकारकज्ञानजनकार्थापत्त्यन्यथासिद्धिः। एवं च मयूरो नृत्यतीत्यादिवाक्येऽधिकरणबोधकपदाभावात् सामान्येनापि रूपेण न पर्वतभानम्, कुतः पर्वतत्वेनेति न शब्देनापि तदन्यथासिद्धिरित्युभयत्रापरितुष्यन्नाह––यद्वा[2]मयूरनृत्यमिति। श्रुतार्थापत्तिवादी भाट्टः प्रत्यवतिष्ठते––अथेति। रात्रिभोजनोपपादकम्––रात्रिभोजनोपस्थापकमित्यर्थः। तेनेति। रात्रिभोजनेनेत्यर्थः।

---

## तर्कचूडामणिः

तयेति। अधिकरणत्वप्रकारकानुमित्येत्यर्थः। ननु गुरुमते पदाध्याहाराभावात् वाक्यकल्पनानुपपत्तिः यथा गुरुमत इत्यभिधानानुपपत्तिश्चेत्यत आह––श्रुतेति।

---

1. ख: त्वया   2. क. मयूरं नृत्यतीति

अथ वा यः सम्भाविततत्तदितरावृत्तिः सन् तदतिरिक्तवृत्तिर्न भवति स तद्वृत्तिर्भवतीति सामान्येन यत्तदर्थान्तर्भावेण व्याप्त्या नृत्यस्य पर्वतवृत्तित्वं सिध्यति। एवं पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्रापि अप्रसिद्धरात्रिभोजनसाध्यपीनत्वज्ञानं रात्रिभोजनमादाय सिध्यति।

अथ यथा अभोजी पीन इत्यत्रायोग्यताज्ञानं तथा पीनो दिवा न भुङ्क्त इत्यत्रापि दिवाभोजनस्य बाधात् योग्यताघटकरात्रिभोजनस्याप्रतीतेः। अतो योग्यताघटकोपस्थितिं विना अन्वयमलभमानमिदं वाक्यं योग्यताघटकरात्रिभोजनोपपादकं रात्रौ भुङ्क्त इति वाक्यं कल्पयित्वा तेन महान्वयबोधं जनयति। न चैवं लाघवाद्रात्रिभोजनमेव कल्पयितुं युक्तम्। "शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते" इति न्यायेन शब्दोपस्थापितमादाय शब्दस्यान्वयबोधजनकत्वात्। एवं च श्रूयमाणशब्दस्यान्वयबोधकत्वंयोग्यताघटकोपस्थापकेन शब्देन विनानुपपद्यमानं तं कल्पयित्वा यत्रान्वयबोधं जनयति तत्र श्रुतार्थापत्तिः।

द्वारमित्यादौ पिधेहीति शब्दकल्पनं श्रुतार्थापत्तिरेव। शब्दश्च यद्यपि श्रूयमाणो बाधितः, तथापि अभिप्रायस्थः कल्प्यते। यथा गुरुमते 'स्वर्गकामो यजेत' इत्यत्र साक्षात्साधनताबाधे परम्पराघटकस्यानुपस्थित्या परम्परासाधनताज्ञानविरहः योग्यताज्ञानाभावात् प्रसिद्धपदसामानाधिकरण्यानुपपत्तिरिति योग्यताज्ञानस्य परम्परासाधनताघटकमपूर्वं लिङादिवाच्यं कल्पयति, ततः स्वर्गसाधनं याग इति ज्ञानं जायते। अन्यथा अपूर्वमपि वाच्य न स्यादिति।

उच्यते । बाधकप्रमाणाभावोऽन्वयविरोधिरूपविरहो वा योग्यता । अतो दिवा अभोजने रात्रिभोजनाप्रतीतावपि भोजनसाध्यपीनत्वात् दिवा न भुङ्क्त इति शब्दाद्बोधोत्पद्यते न प्रतीत्यनुपपत्तिः । किं तु प्रतीतानुपपत्त्या रात्रिभोजनं कल्प्यते । अत एवापूर्वमपि न वाच्यमिति वक्ष्यते । तस्मान्नार्थापत्तिरनुमानादतिरिच्यत इति ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानखण्डे अर्थापत्तिप्रकरणम्



---

## प्रकाशः

योग्यातावच्छेदकरूपोपस्थितिं विना न शाब्दान्वयधीरित्यत्र प्राभाकरसंमतिमाह—यथेति । उपस्थितस्य योग्यस्य योग्यताज्ञानात् शाब्दधीः न तु योग्यतावच्छेदकरूपेणेति न [1]तथोपस्थितिः तन्त्रं गौरवादित्यभिप्रेत्य सिद्धान्तमाह—बाधकेति ।

इति श्रीरुचिदत्तविरचिते तत्त्वचिन्तामणिप्रकाशे
अनुमानखण्डे अर्थापत्तिप्रकरणम्



---

## तर्कचूडामणिः

ननु वाक्यस्य व्यापकत्वापरपर्यायोपपादकत्वानुपपत्तिरित्यत आह—रात्रीति । [2]तत्पदस्य वाक्यपरत्वं व्यावर्तयति—रात्रीति ।

---

1. क. तस्योपस्थितिः  2. ग. 'तत्पदस्य ........ रात्रीति' नास्ति ।

## तर्कचूडामणिः

ननु स्वर्गकामस्थले योग्यताघटकार्थान्तरप्रतिपादकवाक्यकल्पनाभावात् यथा गुरुमत इति दृष्टान्तानुपपत्तिरित्यत आह—**योग्यतेति** । ननु योग्यतालक्षणकथनं चोद्यानुरूपमित्याशङ्क्य तात्पर्यमाह—**उपस्थितस्येति** । **योग्यस्येति** । [1]क्वाचित्काभिप्रायेणेदम् । तत्त्वेन ज्ञातस्येति वाक्यार्थः ।

इति श्रीधर्मराजविरचिते तर्कचूडामणौ
अनुमानखण्डे अर्थापत्तिवादः



1. ख: कादाचित्काभि-

## अथ अवयवप्रकरणम्

तच्चानुमानं परार्थं न्यायसाध्यमिति न्यायस्तदवयवाश्च प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि निरूप्यन्ते। तत्र न समस्तरूपोपपन्नलिङ्गप्रतिपादकवाक्यं न्यायः। अत्रैव वाक्येऽतिव्याप्तेः। किं तु अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यं न्यायः। प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते। तेन च विशिष्टवैशिष्ट्यावगाहि-

### प्रकाशः

न्यायसाध्यमित्युपलक्षणम्, तदवयवसाध्यमित्यपि द्रष्टव्यम्। तेन तदवयवाश्चेति [1]नासंगतमिति भावः। उदाहरणोपनयरूपमवयवद्वयमिति बौद्धाः। उदाहरणान्तमवयवत्रयमिति मीमांसका इति [2]तन्निरासं हृदि निधायाह—प्रतिज्ञेति। पञ्चानामपि यथोपयोगस्तथा तत्र तत्र वक्ष्यते। समस्तरूपेति। रूपं [3]पक्षसत्त्वादिकम्। किं त्विति। अनुमितिचरमकारणत्वम अनुमितिजनने स्वोत्तर-

### तर्कचूडामणिः

तेनेति। न्यायसाध्यत्व[4]प्रतिज्ञायां तदवयवनिरूपणस्यानाकाङ्क्षितत्वादिति भावः। विभागफलमाह—उदाहरणेति। उदाहरणान्तमिति। उदाहरणादिकमवयवत्रयमित्यपि बोध्यम्। ननु न विभागमात्रात् तावतामावश्यकत्वमित्यत आह—पञ्चानामिति। ननु केवलान्वयिनि व्यतिरेकिणि चैकरूपवैकल्येन लक्षणस्य [5]तत्रातिव्याप्तिरित्यत आह—पक्षेति। व्याप्तिपक्षधर्मताविशिष्टलिङ्गप्रतिपादकमित्यर्थः। ननु [6]परामर्शसत्त्वेऽपि कामिनीजिज्ञासादिना अनुमितिप्रतिबन्धेन तस्य चरमकारणत्वमसिध्दमित्यत आह—चरमेति। यद्यपि स्वोत्तरभाविनोऽ-

1. ख. नाशङ्कितव्यमिति
2. ख. मतनिरासं
3. क. पक्षधर्मत्वादिकं
4. ख. प्रतिज्ञाया
5. क. तत्रातिव्याप्तिः
6. क. 'परामर्शसत्त्वेऽपि' नास्ति।

## प्रकाशः

भाविज्ञानानपेक्षत्वम्। प्रयोजकत्वं जनकज्ञानजनकत्वम्। शाब्दज्ञानपदं चरमकारण-परामर्शान्यूनविषयज्ञानपरम्। अत्र वह्निव्याप्यधूमवानयमित्याप्तवाक्येऽतिव्याप्तिवारणाय प्रयोजकेत्यन्तम्। परामर्शजनकेति कृतेऽसम्भवः। न हि तज्जनकविशिष्टवैशिष्ट्यावगाहिज्ञानजनकं वाक्यं सम्भवति, तस्य ज्ञानस्य मानसत्वादित्यत उक्तं जनकजनकेति। संस्कारद्वारा परामर्शजनके पूर्वोक्ताप्तवाक्येऽतिव्याप्तिवारणाय ज्ञानेति। तज्जन्यज्ञानस्यापि यत्किंचिज्जनक[1]ज्ञानजनकत्वसम्भवादुक्तदोष[2]तादवस्थ्यमित्यत

---

## तर्कचूडामणिः

बाधितत्वज्ञानस्याप्यपेक्षणात् इदमप्यसंगतम्; तथापि नियमतस्तादृशज्ञानसापेक्षत्वस्याभावोऽत्र विवक्षितः। परामर्शपूर्वकालीनस्य तत्समानकालीनस्य चाबाधितत्वज्ञानस्यानुमितिहेतुत्वान्नोक्तदोषः। यद्वा ज्ञानानपेक्षत्वं निश्चयत्वेन निश्चयानपेक्षत्वम्। अबाधितत्वज्ञानं तु ज्ञानत्वेनैवानुमितिहेतुः। अथ वा बाधाभावोऽनुमितिहेतुः नाबाधितत्वज्ञानमिति मतानुसारेणैतदुक्तम्। अत एवाप्तवाक्येऽतिव्याप्तिवारणाय प्रयोजकान्तमिति वक्ष्यति। अन्यथा तत्रापि तज्जनितपरामर्शस्य चरमकारणत्वाभावेनातिव्याप्त्यसम्भवादिति। न हीति। तादृशलिङ्गपरामर्शजनकं यत् धूमविशिष्टवह्निवैशिष्ट्यमिति ज्ञानं तज्जनकत्वं न वाक्यस्य सम्भवति। परामर्शजनकतादृशज्ञानस्य मानसत्वेन तत्र वाक्यस्यासामर्थ्यादित्यर्थः। तज्जन्येति। तादृशाप्तवाक्यजन्यज्ञानस्यापि ध्वंसजनकत्वानुव्यवसायादिजनकत्वेनेत्यर्थः।

ननु यत्र प्रतिबन्धादिवशादनुमित्यनुत्पादे परामर्शात् क्रमेण परामर्शद्वयं तदनन्तरं प्रतिबन्धकविगमात् अनुमितिः, तत्रानुमितिचरम[3]करणज्ञानजनकशाब्द-

---

1. ख. 'ज्ञानजनक' नास्ति
2. क. तादवस्थ्यसम्भवादित्यत
3. ग. कारणलिङ्गपरामर्शजनकज्ञान-जनकशाब्दज्ञान-

## प्रकाशः

आह—**अनुमितिचरमकारणेति**। लिङ्गपरामर्शपदं च स्वरूपकथनपरम्। एवं वह्निव्याप्यधूमवानयमिति वाक्यावयवेऽतिव्याप्तिवारणाय शाब्दज्ञानपदम्। तदर्थस्तूक्त एव। [1]यदि चैवमसाधकताप्रयोगेऽतिव्याप्तिशङ्का तदा वाक्यपदमेव महावाक्यपरं बोध्यम्। आत्मादावतिव्याप्तेराह वाक्यपदम्।

---

## तर्कचूडामणिः

ज्ञानजनकत्वं तत्रैवाप्तवाक्येऽतिव्याप्तम्। न च लिङ्गपरामर्शपदं मानमलिङ्गपरामर्श-परम्। तथा सति प्रयोजकानन्तवैयर्थ्यापत्तेः। आप्तवाक्यस्य स्मृतिरूपपरामर्शप्रयोज कत्वनियमाभावात्। व्यक्तिविशेषे तन्नियमविवक्षया ज्ञानपदमाफल्येऽप्युक्तातिव्या-प्तेर्दुर्वारत्वात्। न च शाब्दज्ञानत्वेनैव तत्प्रयोजकत्वं विवक्षितम्। धारावाहिकपरा-मर्शे च पूर्वपरामर्शस्य न तत्त्वेन हेतुत्वमिति वाच्यम्। स्मृतिरूपपरामर्शेऽनुभवरूप-परामर्शस्य शाब्दज्ञानत्वेन [2]हेतुत्वाभावेन ज्ञानपदवैयर्थ्यापत्तेरिति चेत् न। तज्जन-कज्ञानजनकेत्यत्र परामर्शभिन्नत्वस्य ज्ञानविशेषणत्वात्। **लिङ्गेति**। परामर्शादन्यस्यानु-मितिचरमकारणत्वाभावादित्यर्थः। (**वह्निव्याप्यवधूमवानयमिति**) वह्निव्याप्यधूम-वानयमिति वाक्यस्य योऽवयवस्तदवयव इत्यर्थः। ननु तदपि शाब्दज्ञानजनकमेवेत्यत आह—**तदर्थ इति**। जयदेवमतमाह—**अन्ये त्विति**। असम्भवं वारयति—**न्यायेति**। ननु शाब्दपदस्य पूर्वोक्तपरत्वाभावे पूर्वोक्तातिव्याप्तितादवस्थ्यमित्यत आह—**एवं चेति**। एतन्मते प्रयोजकत्वं [3]जनकत्वमात्रम्, न तु ज्ञानत्वगर्भम्, व्यर्थत्वादिति बोध्यम्।

अन्ये त्वित्यस्वरसोद्भावनम्। तद्बीजं तु अनुमितिजनकपरामर्शं प्रति न्याय-

---

1. ख. 'यदि चैवम्.......बोध्यम्' इति ग्रन्थस्त्रुटितः'
2. ग. 'हेतुत्वाभावेन' नास्ति
3. क. जनकजनकत्वमात्रम्

## प्रकाशः

अन्ये तु शाब्दज्ञानपदं कण्टकोद्धाररूपे न्यायभिन्ने वाक्येऽतिव्याप्तिवारणाय। तच्चानुमि(तीं)तिचरमकारणपरामर्शजनकव्याप्तिज्ञानादिजनकयोग्यताज्ञानजनकतया तादृशपरामर्शजनकज्ञानजनकम्। नायमाभास इत्यनेन व्याप्त्यादिवैशिष्ट्यधीजनकयोग्यताज्ञानजननात्। न च शाब्दज्ञानपददानेऽप्येष दोषः। शाब्दज्ञानत्वेन तादृशपरामर्शप्रयोजकत्वस्य विवक्षितत्वात्। न च योग्यताज्ञान तथा जनकम्। योग्यताज्ञानत्वेन जनकत्वात्। [1]शब्दं विनापि तत्र योग्यताज्ञानस्य सत्त्वात्। न्यायजन्यज्ञाने तु शाब्दज्ञानत्वेनैव[2] जनकत्वम्। वाद्युक्तप्रयोगजज्ञाने सत्येवोक्तपरामर्शसामग्रीसत्त्वात्। अन्यत्राप्तोक्तवाक्यात् वह्निव्याप्यवानयमिति परामर्शस्यैव आहत्योत्पत्ते[3]रित्याकर एवानुपदं स्फुटत्वात्। एवं च सत्याप्तोक्तवह्निव्याप्यवानयमिति वाक्यावयवावयवेऽतिव्याप्तिवारणाय वाक्यपदं महावाक्यपरमित्याहुः।

---

## तर्कचूडामणिः

जज्ञानस्य शाब्दज्ञानत्वेन जनकत्वे मानाभावः। तद्धि न तथाभूतपरामर्शत्वावच्छिन्नं प्रति, तद्विशेषत्वस्य कार्यतावच्छेदकत्वे मानाभावादिति।

केचित्तु उपनयान्तेष्वेवावयवेषु न्यायलक्षणं मा प्रसाङ्क्षीदित्यनुमितिचरमकारणेत्युक्तम्। न ह्युपनयजन्यः परामर्शः अनुमितिजनकः। परामर्शपदं स्पष्टार्थमित्याहुः।

---

1. ख. 'शब्दं विनापि तत्र........ सत्त्वात' इति ग्रन्थस्त्रुटितः।
2. क. 'एव' नास्ति
3. क. इत्यस्यानुपद एवाकर एव स्फुटत्वात्।

मानान्तरमुत्थाप्यते । तेन च चरमपरामर्श उत्पाद्यत इति न्यायजन्यशाब्दज्ञानस्य परामर्शप्रयोजकता ।

---

## प्रकाशः

न च पर्वते [1]वह्निः, धूमो यतः, धूमश्च वह्निमन्मात्रवृत्तिः, अस्ति च तादृशधूमे पर्वतवृत्तित्वम्, [2]तस्माद्वह्निः पर्वतवृत्तिरित्यादौ न्यायसमानार्थे न्यायानात्मनि वाक्येऽतिव्याप्तिरिति वाच्यम् । तादृशवाक्यस्य सर्वतार्किकसम्प्रदायविरुद्धतया अनभ्यस्तत्वेन व्याकुलीभावात् [3]कथमित्थं प्रयोगः सम्प्रदायमवमत्य कृतोऽनेनेति तद्बीजगवेषणव्यग्रतया [4]तद्वाक्यार्थज्ञानेन विशिष्टवैशिष्ट्यावगाहिज्ञानानुत्थापनेन तस्यानुमितिचरमकारणपरामर्शप्रयोजकज्ञानाजनकत्वादित्याहुः ।

---

## तर्कचूडामणिः

तच्चिन्त्यम् । लिङ्गपरामर्शपदस्य शाब्दलिङ्ग[5]परामर्शपरत्वाभावेन मानसपरामर्शमादाय निगमनेऽपि [6]लक्षणसम्भवात् । उपनयजन्यपरामर्शप्रयोजकशाब्दज्ञानजनकत्वस्योपनयेऽप्यभावेन तथाविधभ्रमस्याप्यभावाच्च । तद्बीजेति । तादृशप्रयोगकारणेत्यर्थः । क्वचित् तद्द्वेषणेति पाठः । तत्रापि तद्बीजगवेषणेत्यर्थः ।

ननु पर्वते वह्निर्धूमो यत इत्यादिवाक्यमेव कथकसम्प्रदायसिद्धमित्याबालमवयवभ्रमो यस्य तस्य [7]तथाविधव्याकुलताविरहेणातिव्याप्तितादवस्थ्यम् । न च प्रतिपाद्याकाङ्क्षानुरूपाभिधानजनकावान्तरघटितवाक्यमेव वाक्यपदेन विवक्षितमिति वाच्यम् । तस्यापि तथाविधावाक्यघटितत्वादिति चेत् — न । कथकसम्प्रदायसिद्धा-

---

1. ख. अग्निः
2. ख, तस्मादग्निः
3. ख. कथमन्यथा. कथायामित्थं प्रयोगः सर्वसम्प्रदाय-
4. ख. तद्वाक्येन
5. क. परामर्शत्वाभावेन
6. ग. लक्षणस्य सम्भवात्
7. क. 'तथाविध......तस्यापि' नास्ति ।

## प्रकाशः

**तेन चेति।** न चात्र मानाभावः, शाब्दज्ञानमहकृतमेव मनः परामर्शजनकमिति वाच्यम्। तस्यानाप्तोक्तत्वेनाप्रामाण्यशङ्काक्रान्ततया परामर्शाजनकत्वात्। अन्यथा आप्तवाक्यादिवत् न्यायजन्यज्ञानादेवानुमित्यापत्तेः।

तस्मात् न्यायजन्यज्ञाने अप्रामाण्यशङ्कया तस्य [1]क्वाप्यतन्त्रत्वेन [2]तदुपस्थित्यनुसारेण स्वयं मनसा [3]धूमविशिष्टे वह्निवैशिष्ट्यमित्याकारकज्ञानजनने तेन परामर्शोत्पाद इति स्वीकार्यम्। [4]तद्वाक्यस्य पदार्थमात्रोपस्थापकत्वेन प्रयोजकत्वादिति वदन्ति।

---

## तर्कचूडामणिः

वान्तरवाक्यघटितत्वस्य वाक्यपदेन विवक्षितत्वात्। [5]तथाभूतावयवाघटिते वाक्येऽतिव्याप्तिवारणाय जनकान्तस्यापि सार्थकत्वात्। **अत्रेति।** शाब्दज्ञानानन्तरं मानसपरामर्शपूर्वकालान[6]ज्ञानान्तरोत्पत्तावित्यर्थः। **तस्येति।** वादिवाक्यस्येत्यर्थः। **अनाप्तेति।** अनाप्तोक्तत्वनिश्चयेनेत्यर्थः।

नन्वनाप्तत्वसन्देह एव, न तु तन्निश्चयः। संदेहश्च न प्रतिबन्धक इति वादिवाक्यस्यापि बोधकत्वमेवेति शङ्कामुपसंहारव्याजेन निरस्यति—**तस्मादिति।** ननु [7]तस्यानुमित्यनुत्पादकत्वे मानसपरामर्शोत्पादकत्वं स्यादित्यत आह—**क्वापीति।** **तेनेति।** विशिष्ट[8]वैशिष्ट्यावगाहि[9]ज्ञानस्योपनायकत्वेनोपयोगादिति भावः। **पदार्थमात्रेति।** पदार्थोपस्थापकतुल्यत्वेनेत्यर्थः। उभयोरपि संसर्गनिश्चयाजनकत्वात् तेन 'न्यायजज्ञाने' इति प्रागुक्तं न विरुध्यत इति ध्येयम्।

---

1. ख, क्वाप्यतन्त्रतया
2. क. तस्य तदुप-
3. क. धूमवैशिष्ट्य-
4. ख. तस्य वाक्यस्य
5. क. तथाभूतावयवघटिते
6. क ज्ञानान्तरोत्पत्तौ
7. क. तस्यानुमित्युत्पादकत्वे
8. क. वैशिष्ट्यानव-
9. ख. ज्ञानस्योपयोगात्

## प्रकाशः

अन्ये तु मानान्तरं मनोलक्षणम् [1]उत्थाप्यते स्वात्मरूप[2]सहकारिसम्पन्नं क्रियते इत्यर्थं इत्याहुः ।

---

## तर्कचूडामणिः

ननु न्यायजज्ञानस्याप्रामाण्यशङ्काक्रान्तत्वेनानुमित्यहेतुत्वेऽपि मानसपरामर्शोत्पादने प्रत्यासत्तितया [3]हेतुत्वमविरुद्धम् । लाघवेन [4]समानविषयसविकल्पकज्ञानत्वस्यैव प्रत्यासत्तितावच्छेदकत्वात् । अन्यथा तादृशज्ञानानु[5]व्यवसायाभावापत्तेरित्यस्वरसादुपाध्यायमतमाह — अन्ये त्विति । स्वात्मेति । शाब्दज्ञान-[6]रूपसहकारिविशिष्टतया क्रियत इत्यर्थः ।

ननु शाब्दपरामर्श एवानुमितिहेतुरस्तु । न चाप्रामाण्यशङ्काकलङ्कितत्वेन तस्य न हेतुत्वमिति वाच्यम् । शङ्कापूर्वसमये अनुमित्यापत्तेः । [7]कोटिस्मरणादिविलम्बेन शङ्कानवश्यम्भावाच्च । किं च मानसलिङ्गपरामर्शस्यापि शाब्दज्ञानसमानविषयतया शङ्काकलङ्कितत्वमावश्यकमेव । न हि समानविषयज्ञानान्तरं अप्रामाण्यशङ्कायां ज्ञानान्तरस्य प्रामाण्यनिश्चयः प्रवृत्त्यादिजनकत्वं वा सम्भवति । न च न्यायजज्ञानं व्याप्तिविशिष्टपक्षधर्मतावगाह्येव न भवति । उदाहरणेन व्याप्तिमात्रस्य उपनयेन पक्षधर्मतामात्रस्य प्रतिपादनेन व्याप्ति[8]पक्षधर्मतयोः सामानाधिकरण्यमात्रप्रतिपादनेन अन्यतरविशिष्टेऽन्यतरवैशिष्ट्यानवगाहनादिति वाच्यम् । तथा चायमित्यत्र व्याप्त्यनुवादेन पक्षधर्मतायाः प्रतिपाद्यत्वेन तज्जन्यज्ञानस्य विशिष्टवैशिष्ट्यावगाहित्वात् । न चोपनयस्य व्याप्तिप्रतिपादकत्वे उदाहरणवैयर्थ्यमिति वाच्यम् । आकाङ्क्षाक्रमेण तदभिधानात् ।

---

1. ख. उपस्थाप्यते
2. क. सम्पन्नीक्रियते
3. क. ख. हेतुत्वं विरुद्धम्
4. क. ख. मानसविषयविकल्प-
5. ग. व्यवसायापत्तेः
6. क. 'रूप' नास्ति
7. ग. 'कोटि ......... ज्ञानान्तरेऽप्रामाण्य-'
8. क. 'पक्षधर्मतयोः .............. व्याप्त्यनुवादेन' नास्ति ।

अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यत्वमवयवत्वम् । अत एव वह्निव्याप्यधूमवानयमिति वाक्ये तदवयवे च न न्यायतदवयवलक्षणातिव्याप्तिः । तेन परामर्शस्य तदवयवेन परामर्शजनकस्य जननात् ।

---

### प्रकाशः

अत्र प्रथमशाब्द[1]ज्ञानान्तं न्यायजन्यज्ञानपरम् । तथा च न्यायजज्ञानजनकशाब्दज्ञानजनकवाक्यत्वमित्यर्थः । अत्र च न्यायबहिर्भूतवाक्येऽतिव्याप्तिवारणाय न्यायजज्ञानजनकेति । न चावयवावयवेऽतिव्याप्तिः । तस्य न्यायजज्ञानजनक-

---

### तर्कचूडामणिः

अन्यथा तत्राप्युदाहरणोपनयाभ्यामेव [2]परामर्शोत्पत्तौ प्रतिज्ञादिवैयर्थ्यापत्तेः । न चोपनये व्याप्तिवैशिष्ट्यस्याप्यनूद्यमानत्वेन [3]तदविवक्षितमिति वाच्यम् । तदविवक्षायां तदनुवादवैयर्थ्यात् । इयानेव विशेषः यदुद्देश्ये वाक्यस्यावान्तरतात्पर्यं विधेये महातात्पर्यमिति । न चाप्रामाण्यसंशयः क्वचिद्विषयदोषज्ञानात् [क्वचित्] [4]कारणदोषज्ञानात् । तत्राद्ये समानविषय[5]ज्ञानान्तराप्रामाण्यसंदेहे तत्तुल्य[6]ज्ञानान्तरेऽपि तत्सन्देह एव, दुष्टविषयत्वस्य समानत्वात् । द्वितीये पूर्वज्ञाने तत्सन्देहेऽपि द्वितीयज्ञाने दुष्टकारणजन्यत्वरूपसाधारणधर्म[7]दर्शनाभावात न तत्संशय इति चेत्—न । शङ्खे चाक्षुषपीतत्वज्ञानानन्तरं मानसतज्ज्ञानात् अप्रामाण्यशङ्काशून्यात् प्रवृत्त्यापत्तेः । यदि च तत्रापि [8]तद्भ्रमस्य तच्छङ्काकलङ्कितस्य न पीतत्वोपनायकत्वम्, [9]तदात्रापि न्यायजज्ञानानुपनायकतया न मानसपरामर्शोऽपि । तस्मादत्र समाधानं चिन्त्यम् ।

---

1. ख. ज्ञानपदं
2. क. परामर्शोपपत्तौ
3. क. तद्विवक्षितम्
4. ग. 'कारणदोषज्ञानात्' नास्ति ।
5. ग. ज्ञानानन्तरा-
6. ग. ज्ञानानन्तरेऽपि
7. क. दर्शनाभावाभावात
8. क तत्त्वभ्रमस्य
9. ख. तद्वदपि

यत्तु संक्षेपतः परामर्शप्रयोजकवाक्यत्वेन विशेषाभावात् सोऽपि न्याय एवेति । तन्न । कथायामाकाङ्क्षाक्रमेणाभिधानमिति प्रथमं विशिष्ट-वैशिष्ट्य आकाङ्क्षा नास्तीति तदभिधाने निग्रहादिति वक्ष्यते । अन्यथा चक्षुरादेरपि परामर्शजनकतया न्यायत्वापत्तिः । आकाङ्क्षाविरहस्तुल्य एव ।

## प्रकाशः

[1]व्याप्तिज्ञानादिजनकज्ञानादिजनकत्वेन तदजनकत्वात् । अत कण्टकोद्धा[2]ररूपं वाक्येऽपि नातिव्याप्तिः । तस्यापि न्यायजज्ञानजनक[3]ज्ञानाजनकत्वात् । शाब्दपदं सम्पातायातम् । आत्मादावतिव्याप्तिवारणाय वाक्यपदम् । एतच्च लक्षणं यन्मतेऽवान्तरवाक्यार्थज्ञानस्य महावाक्यार्थज्ञानजनकत्वाभ्युपगमस्तन्मतेन द्रष्टव्यम् । यदि च तावत्संस्कारमेलकात् तावत्पदस्मृतौ तावत्पदार्थस्मृतिः [4]अथ महावाक्यार्थज्ञान-मित्यभ्युपगमः तदास्यासङ्गतत्वापातादिति ।

## तर्कचूडामणिः

नन्वाप्तोक्त 'वह्निव्याप्यवानय' मितिवाक्यावयवावयवेऽतिव्याप्तिरित्यत आह—अत्रेति । शाब्देति । कण्टकोद्धारेऽपि विशेषणान्तरेणैव तद्वारणादिति भावः । नन्वाप्तवाक्यस्यैव[5] परामर्शजनकत्वेन जनकजनकत्वरूप[6]प्रयोजकत्वमसिद्धमित्यत आह—प्रयोजकत्वस्येति । तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगित्वस्येत्यर्थः । ननु परामर्शप्रयोजकवाक्यत्वस्यैव [7]न्यायत्वप्रयोजकतया अभिधानात् कथं चक्षुरादेस्तथा-

1. ख. ज्ञानजनकज्ञान एव जनकत्वात्
2. क. रूपेऽपि वाक्ये नाति—
3. ख. व्याप्तिज्ञानादिजनकयोरन्यता-ज्ञानजनकत्वेन तज्जनकत्वा-भावात्
4. ख. अतो
5. क. 'एव' नास्ति
6. क प्रयोजकमसिद्धम्
7. क. न्यायत्वप्रयोजकताभि—

अन्यं तु पञ्चावयववाक्याद्विजातीयमेव शाब्दज्ञानमुत्पद्यत इति तद्बीजनकवाक्यत्वं, न्यायत्वम् । एवं प्रतिज्ञाद्यवयवादपि प्रत्येकं विजातीयं शाब्दज्ञानमिति तत्तद्बीजनकशब्दत्वमेव तत्तल्लक्षणमिति ।

तन्न । ज्ञानविशेषजनकत्व तत्तज्ज्ञानजनकत्वं वा न्याये प्रतिज्ञादौ चानतिप्रसक्तमनुगतरूपमन्तरेण दुर्निरूपमिति तत्स्वीकारे तस्यैव लक्षणत्वात् । अन्यथा जातिसंकरप्रसङ्गः । [प्रसङ्गात्]

---

## प्रकाशः

परामर्शप्रयोजकवाक्यत्वेनेति । प्रयोजकत्वस्य जनके [1]जनकजनके चाविरोधादिति भावः । न्यायत्वापत्तिरिति । वाक्यत्वस्यापि गौरवेण त्याज्यत्वादिति भावः । यदि च चक्षुरादेः स्वरूपसत एव हेतुत्वान्न तत्राकाङ्क्षेति न तस्य न्यायत्वम्, तदा विशिष्टवैशिष्ट्येऽपि प्रथमाकाङ्क्षा नास्तीति न तस्यापि तत्त्व-

---

## तर्कचूडामणिः

पत्तिरित्यत आह—वाक्यत्वस्येति । ननु [2]व्याप्यस्य [3]पक्षधर्मताकाङ्क्षायामेव वह्निव्याप्यधूमवानिति प्रयोगात् कथमाकाङ्क्षाविरह इत्यत आह—यदि चेति । नन्वनतिप्रसक्तरूपाभावेऽपि ज्ञानविशेषजनकत्वं [4]विद्यमानं येन केनापि प्रमाणेन गृह्यत एवेति कथं दुर्निरूपत्वमित्यत आह—असम्भवीति । अनतिप्रसक्तस्य तादृशधर्मस्य व्यापकस्याभावे व्याप्याभावावश्यम्भावादिति भावः । तत्पदस्य तादृशज्ञानजनकत्वपरत्वे तस्य [5]लक्षणत्वमिष्टमेवेति तदापादनायोग इत्यत आह—

---

1. क. जनकज्ञानजनके
2. ख. ग. व्याप्तस्य
3. ख. पक्षधर्मताया आकाङ्क्षा—
4. ख. विद्यमानं' नास्ति ।
5. ख: लक्षणस्य तत्त्वमिष्टं

**तत्र प्रतिज्ञा न साध्यनिर्देशः, साध्यपदेऽतिव्याप्तेः। किं तूद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं वाक्यम् ।**

## प्रकाशः

मित्याह—**आकाङ्क्षेति** । **दुर्निरूपमिति** । असम्भवीति भावः । **तत्स्वीकार इति** । [1]अनतिप्रसक्तानुगतस्वीकार इत्यर्थः । **अन्यथा जातिसंकरप्रसङ्गादिति** । जातिनियामकानुगतकारणतावच्छेदकधर्मं विनापि जातिस्वीकारे परस्परविरहसमानाधिकरणजातिद्वयसमावेशः स्यादित्यर्थः ।

**किं तूद्देश्येति** । अत्र [2]न्यायाप्रविष्टप्रतिज्ञासमानाकारवाक्येऽतिव्याप्तिवारणाय सत्यन्तम् । वाक्यार्थपदं सम्पातायातम् । न्यायान्तरप्रतिज्ञायां न्यायान्तर-

## तर्कचूडामणिः

**न हीति (अनतीति)** । नन्वनतिप्रसक्तरूपाभावे कथं जातिसंकरप्रसङ्गः । प्रत्युत तदङ्गीकार एव तस्य जातिरूपत्वस्यावश्यकत्वेन देवदत्तप्रभवत्वानुमापकजातिविशेषेण सांकर्यमित्यत आह—**जातीति** । ज्ञानविशेषनिष्ठजातिविशेष[3]निर्वाहजनकतावच्छेदकाभावे तादृशजातेराकस्मिकत्वेन अत्रैव तत्सम्भवो नान्यत्रेति नियमो न स्यात् । नियामकाभावादित्यर्थः । **न्यायान्तरेति** । न चेष्टापत्तिः । [4]तत्तन्न्यायप्रतिज्ञाया विशिष्य निर्वचनादिति भावः । न चानित्यत्वानुमितित्वेन तादृशानुमितिमात्रमुद्देश्यमेवेति कथं तेन तद्वारणमिति वाच्यम् । उद्देश्यपदस्य तत्तदनुमितिपरत्वेन यदनुमितिप्रयोजकज्ञानप्रयोजकं [5]यत् तत् तदनुमितिप्रयोजकज्ञानजनकन्याये प्रतिज्ञेति

1. ख. अनतिरिक्तानुगत—
2. क. न्यायप्रविष्ट—
3. क. निर्वाहकजनक-
4. क. ख तत्र न्याय-
5. क. 'यत् तत्' नास्ति

## प्रकाशः

प्रतिज्ञात्वं मा प्रसाङ्क्षीदिति प्रथमोद्देश्यपदम्। अनुमितौ लिङ्गाभानपक्षे चैतदर्थमेवाग्रेऽप्युद्देश्यपदम्। तत्र तद्भानपक्षे तु असम्भववारणार्थमपि तदिति ध्येयम्।

---

## तर्कचूडामणिः

तदर्थलाभादिति भावः। एतदर्थमेवेति। अतिव्याप्तिवारणार्थमेवेत्यर्थः। न्यायान्तरप्रतिज्ञाया न्यायान्तरप्रतिज्ञात्ववारणायेति यावत्। शब्दोऽनित्य इत्यादिप्रतिज्ञाया उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकत्वादिति [1]बहवः।

तत्तुच्छम्। प्रथमोद्देश्यपदेनैव तन्निरासात्। न चान्यतरोद्देश्यपदोपादाने तात्पर्यमिति [2]न वैयर्थ्यमिति वाच्यम्। एवं हि [3]भिन्नपक्षकप्रतिज्ञान्तरेऽतिव्याप्तिनिरासेऽपि समानार्थन्यायान्तर[4]प्रतिज्ञाया न्यायान्तरप्रतिज्ञात्वापत्तेर्दुर्वारत्वात्। तस्याप्येतदनुमित्यन्यूनानतिरिक्तविषयकज्ञानजनकत्वात्। न चैतदपरितोषादेवासम्भववारणरूपं प्रयोजनान्तरमुपन्यस्तमिति वाच्यम्। तथा सत्यसम्भववारणार्थमेवेति ब्रूयात् न तु तदर्थमपीति।

वय तु ब्रूमः। एतदर्थमित्यस्यातिव्याप्तिवारणार्थमित्यर्थः, न तु न्यायान्तरप्रतिज्ञायां न्यायान्तरप्रतिज्ञात्ववारणायेत्यर्थः। उक्तदोषात्। न चान्यत्रातिव्याप्तेरनवकाशः। यो यो धूमवान् सोऽग्निमानिति उदाहरणस्य तदनुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वेन सर्वो धूमवान् वह्निमानिति न्यायान्तरप्रयोज्यानुमित्यन्यूनानतिरिक्तविषयकज्ञानजनकत्वेन च तत्रातिव्याप्तिसम्भवात्। द्वितीयोद्देश्यपदोपादाने तु नायं दोषः। तादृशोदाहरणस्य प्रकृतानुमित्यन्यूनानतिरिक्तविषयकत्वाभावात्।

---

1. क भावः
2. ख. 'न वैयर्थ्यमिति' नास्ति
3. क. भिन्नपक्षके
4. ख. 'प्रतिज्ञाया न्यायान्तर' नास्ति

## प्रकाशः

तथा चास्मिन् पक्षे यद्विषयत्वेनानुमितिरुद्देश्या [1]तस्यैवोद्देश्यानुमितिविषयत्वेन [2]विवक्षितत्वमिति नोक्तदोष इत्याहुः। प्रतिज्ञैकदेशेऽतिव्याप्तिमाह—अन्यूनेति। न च पक्षतावच्छेदकस्यावयवान्तराप्रतिपाद्यत्वात् अन्यूनपदेनैव तद्व्यवच्छेदेनानतिरिक्त-पदवैयर्थ्यमिति वाच्यम्। यत्र पृथिवीतरभिन्नत्वाभावस्तत्र पृथिवीत्वाभाव इति साध्या-भावांशे [3]उदाहरणैकदेशेऽतिव्याप्तिवारकत्वादित्याहुः। [4]तच्चिन्त्यम्। तत्र पृथिवी-त्वस्येतरभेदसामानाधिकरण्याभानेन अतिव्याप्त्यसम्भवात्। यदि च तस्माद्वह्निमानय-मित्याकारकं निगमनं, [5]तदा अयमिति पदस्य सर्वनामपदत्वेन बुद्धिस्थवाचकतया पर्वतत्वप्रकारकज्ञान[6]जनकत्वान्निगमनेऽप्यतिव्याप्तिवारकत्वं तस्येति ध्येयम्। एवं

---

## तर्कचूडामणिः

असम्भवेति। प्रतिज्ञावाक्यजन्यस्यानुमितिविष[7]यलिङ्गाविषयत्वेन न्यूनविष-यकत्वादित्यर्थः। कथं तर्हि तद्वारणमित्यत आह—तथा चेति। [8]अस्मिन्निति। लिङ्गभानपक्ष इत्यर्थः। लिङ्गस्य प्रागेवावगतत्वेन तद्विषयत्वेन नोद्देश्यतेति भावः। जयदेवमतमाह—यत्रेति। कथं तर्हि अनतिरिक्तपदसार्थक्यमित्यत आह—यदि चेति। तस्माद्वह्निमानित्येव यदा निगमनं तदा पक्षतावच्छेदकस्याप्रतीत्या अन्यूनपदेनैव तद्वारणमिति व्यर्थतैवेत्यर्थः। यद्यपि [9]निगमन एवातिव्याप्ति-वारकत्वस्योक्ततया अपिशब्दानुपपत्तिः, तथापि स प्रामादिक इति केचित्। अवधारणार्थ इत्यन्ये। अपिर्भिन्नक्रमः। तथा च तस्यापि निगमनेऽतिव्याप्ति-वारकत्वमित्यर्थ इत्यपरे।

---

1. ख. तस्यैवानुमिति-
2. क. विवक्षितत्वादिति
3. ख. 'उदाहरणैकदेशे' नास्ति
4. ख. 'तच्चिन्त्यम् ... ...अति-व्याप्त्यसम्भवात्' नास्ति
5. क. 'तदा' नास्ति
6. क. जनकत्वं निगमनेऽपि तदा-तिव्याप्ति
7. ख. लिङ्गविषयकत्वेन
8. ग. तस्मिन्निति
9. ग. तेनैव निगमनाति-

## प्रकाशः

चैतन्मते [1]निगमनावयवान्यत्वे सतीत्यपि विशेषणीयम्। अतो वह्निमानयमिति निगमनैकदेशे नातिव्याप्तिरिति द्रष्टव्यम्।

न च [2]शाब्दपदं व्यर्थम्। घटशब्दो गुणः द्रव्यकर्मान्यत्वे सति सत्त्वादित्यत्रोदाहरणे यदि प्रतिज्ञारूप एव शब्दो दृष्टान्तत्वेनोपादीयते, तदा तत्रातिव्याप्तिवारकत्वात्। न हि तस्य परामर्शप्रयोजकशाब्दज्ञानजनकत्वम् [3]अन्यूनानतिरिक्तविषयकशाब्दज्ञानत्वेन, अपि तु स्वज्ञानत्वेनेति। विवक्षितं तु [4]लक्षणे तथा जनकत्वमिति वदन्ति। तच्चिन्त्यम्। तस्य प्रतिज्ञात्वेन संग्राह्यत्वात्। [5]तद्विषय-

## तर्कचूडामणिः

वयं तु ब्रूमः। [6]अभेदानुमाने उदहरणावयवेऽतिव्याप्तिवारणाय [7]तत्तत्पक्षतावच्छेदकसामानाधिकरण्यस्यापि तत्प्रतिपाद्यत्वात्। [8]न चैवमपि दोषतादवस्थ्यम्। वीप्सावलेन नियतसामानाधिकरण्यस्यापि तत्प्रतिपाद्यत्वात्। न च हेत्वसिद्धौ सन्दिग्धासिद्ध्या तत्सिद्धौ सिद्धसाधनेन च तत्र प्रतिज्ञादिकमेव नेति वाच्यम्। असिद्ध्यादिस्थलेऽपि प्रतिज्ञाया दुरपह्नवत्वात्। अनुमितस्यापि तादृशप्रयोगसम्भवाच्च।

जयदेवमतमाह—घटेति। तत्रेति। घटशब्दो गुण इति शब्दवदिति [9]दृष्टान्तत्वेनोपात्त इत्यर्थः। न हि तदपि शाब्दज्ञानजनकमेवेत्यत आह—न हीति।

1. ख. निगमनानवयवत्वेन
2. ख. शाब्दपदवैयर्थ्यम्।
3. क. 'अन्यूनानतिरिक्तविषयक'-नास्ति
4. क. तथा लक्षणे
5. क. तद्विषयस्य
6. क. भेदानु-
7. क. तत्तत्र पक्ष-
8. ग. 'न चैवमपि ......तत्प्रतिपाद्यत्वात्' नास्ति।
9. ख. दृष्टान्तोपात्त

## प्रकाशः

कस्योदाहरणस्यानुमित्यन्यूनानतिरिक्तविषयकत्वाभावेनातिव्याप्त्यभावात् । तस्मात् सम्पातायातं शाब्दपदम् ।

पक्षसाध्यवाचकपदस्याप्युक्तलक्षणसत्त्वादतिव्याप्तिरित्यत आह — वाक्यमिति । तथा च तादृशज्ञानजनकपदसमुदायत्वमित्यर्थः । वाक्यपदस्य पदसमुदाय[1]वाचकत्वादिति । न च प्रतिज्ञायां [2]ज्ञानलक्षणया उद्देश्यानुमित्यतिरिक्तविषयक[3]ज्ञानजनकत्वादसम्भव इति वाच्यम् । वह्निमानयमित्यस्य हेत्वन्वयानुपपत्त्या [4]ज्ञानलक्षणायामपि हेत्वन्वय[5]प्राक्कालीनमुख्यान्वयबोधमादाय लक्षणसम्भवात् । केचित्तु [6]ज्ञानलक्षणैव नेत्याहुः । [7]तत्र वक्ष्यते ।

---

## तर्कचूडामणिः

यद्यपि तदपि शाब्दज्ञानं जनयति तथापि तस्य तज्जनकत्वेन न परामर्शप्रयोजकशाब्दज्ञानजनकत्वम्, महानसवदित्यादौ दृष्टान्तीकृतमहानसादेः [8]स्वगोचरज्ञानमात्रेणैव वाक्यार्थप्रतियोगित्वदर्शनादिति भावः । अत्र किं तादृशशब्देऽतिव्याप्तिः, उत तद्घटितोदाहरणे । आद्ये—तस्येति । अन्त्ये—तद्विषयेति ।

ननु वह्निमानिति साध्यवाचकमपि वाक्यमेवेत्यत आह—तथा चेति । जयदेवमतमाह—वह्निमानिति । उपाध्यायमतमाह—केचिदिति । लक्षणाया वक्ष्यमाणत्वात् तदभावोऽसिद्ध एवेत्यस्वरसोऽत्र बोध्यः । जयदेवमतं दूषयति—न चेति । अत्र शब्दोऽभिधेय इत्यादिप्रतिज्ञायामतिव्याप्तिः । न च तत्रानुमितिरेव

---

1. ख. वाचित्वादिति
2. ख. ज्ञानलक्षणतया
3. क. 'ज्ञानजनक' नास्ति
4. ख. ज्ञातव्यलक्षणायामपि
5. ख. प्राक्कालिक-
6. ख. तत्र ज्ञान-
7. क. 'तत्र वक्ष्यते' नास्ति ।
8. क. स्वगोचरमात्रेणैव

## प्रकाशः

ननु सर्वं प्रमेयमिति प्रतिज्ञायामव्याप्तिः, अनुमितिविषयातिरिक्ताप्रसिद्धया तत्रानतिरिक्ताप्रसिद्धेः। न च तत्र विवादाभावेन संशयाभावेन च प्रतिज्ञाद्यसम्भवान्नोक्तदोष इति वाच्यम्। अनुमित्सया तादृशप्रयोगसम्भवात्। [1]भिन्नप्रकारकसंशयाद्वा। अन्यथा केवलान्वयिहेतुलक्षणमग्रेतनं विरुध्येत। [2]सत्त्वं सर्वपदार्थवृत्ति धर्मत्वात् वस्तुत्वादिवत् इत्यादिप्रतिज्ञायां तथाप्यप्रतीकाराच्च। न ह्यत्रापि केवलान्वयि साध्यम्, येन विवादादिर्न स्यात्। सर्वपदार्थस्यानुमितिविषयतया अतिरिक्ताप्रसिद्धिस्तत्रापीति चेत्—अत्र ब्रूमः। अनुमित्यन्यूनानतिरिक्तविषयकपदेन अनुमितिविषयतासमव्याप्तविषयताकत्वं विवक्षितमिति नोक्तदोषः।

---

## तर्कचूडामणिः

नास्ति संशयाभावादिति वाच्यम्। सिषाधयिषादिनापि तत्सम्भवादिति दोषे सत्येव दोषान्तरमाह—**अनुमित्सयेति**। ननु विप्रतिपत्तेः कथाङ्गतया तदभावे प्रयोग एवासिद्ध इत्यत आह—**भिन्नेति**। **अन्यथेति**। केवलान्वयिस्थले कथानङ्गीकार इत्यर्थः। **अग्रेतनमिति**। केवलान्वयिहेत्ववयवलक्षणमग्रे वक्ष्यमाणमनुपपन्नं स्यादित्यर्थः। ननु दशाविशेषान्वयिधूमादिहेत्ववयवलक्षणपरतयाप्यग्रिमग्रन्थः संगच्छत इत्यनुशयादाह – **सत्त्वमिति**।

नन्वेवमपि स वह्निमानित्येव यत्र प्रतिज्ञा तत्र तदुदाहरणैकदेशे स वह्निमानित्यत्रातिव्याप्तिः। न च तादृशप्रतिज्ञैव नेति वाच्यम्। इदन्तावत्तत्ताया अपि पक्षतावच्छेदकत्वाविरोधात्। [3]न चोदाहरणस्थतत्पदस्य वीप्सितेयत्पदोपस्थापितसकलाधिकरणवाचकतया अनतिरिक्तविषयकत्वमसिद्धमिति वाच्यम्।

---

1. ख. 'भिन्न...विरुध्येत' नास्ति।
2. क. 'सत्वं' नास्ति।
3. ख. 'न चोदाहरण......विरोधाभावात्' नास्ति।

### प्रकाशः

यद्वा एतदस्वरसादाह—**लिङ्गेति** । प्रतिज्ञायां वह्निमानित्यादौ [1]मतुवर्थसम्बन्धस्यापि प्रकारतया भानादनुमितौ तद्भाने मानाभावात्तदनतिरिक्तविषयत्वमसिद्धमित्यस्वरसः पूर्वत्र बोध्यः ।

---

### तर्कचूडामणिः

पक्षवाचकतत्पदस्यापि तावत्परत्वे विरोधाभावात् । न च न्यायावयवत्वावच्छेदेनैवानुमिति[2]विषयतया समव्याप्तिविषयताकतादृशशाब्दज्ञानजनकत्वं विवक्षितमिति नोक्तदोष इति वाच्यम् । अन्यूनपदवैयर्थ्यापत्तेः । प्रतिज्ञैकदेशस्य [3]तेन रूपेण तादृशज्ञानजनकत्वाभावात् इत्यस्वरसादाह — **यद्वेति** । **एतदस्वरसादिति** । एतल्लक्षणे अस्वरसादित्यर्थः ।

केचित्तु अन्यूनानतिरिक्तपदयोरन्यतरान्तर्भावेण लक्षणद्वये तात्पर्यम् । अवयवत्वावच्छेदेनैव तादृशज्ञानजनकत्वं विवक्षितमिति प्रतिज्ञैकदेशे पूर्वोक्तोदाहरणैकदेशे च नातिव्याप्तिरित्याहुः ।

वयं तु ब्रूमः । सत्यं तस्य न्यायप्रविष्टशब्दपरतया न्यायप्रविष्टत्वे सति पक्षतावच्छेदकसाध्यसामानाधिकरण्यपरवाक्यत्वं विवक्षितम् । अवयवान्तरस्योक्तसामानाधिकरण्यपरत्वाभावान्नोक्तदोषः । वाक्यपदेन यावति तादृशतात्पर्यं पर्यवस्यति तदवच्छिन्नशब्दत्वं विवक्षितमिति न प्रतिज्ञैकदेशातिव्याप्तिः । तादृशसामानाधिकरण्यपरत्वमपि तन्मात्रपरत्वम् । तेन यत्र हेतोरेव पक्षतावच्छेदकत्वं तत्रोदाहरणावयवस्यापि [4]विशिष्टसामानाधिकरण्यपरत्वेन विशेष्यपरत्वस्यावश्यकतया

---

1. क. मतुबर्थस्यापि ख. विषयतासमव्याप्तिविषयक-
2. ग. 'विषयतया समव्याप्ति' नास्ति
3. ग. तेन तेन
4. ग. विशेष-

## प्रकाशः

तत्रापि सत्यन्तं न्यायाप्रविष्टोदासीनवाक्येऽतिव्याप्तिवारणाय । अवयवान्तर-वारणाय लिङ्गाविषयकेति । शाब्दपदं स्पष्टार्थम् । प्रतिज्ञैकदेशेऽतिव्याप्तिवारणाय वाक्यपदम् अवयवावयवान्यवाक्यपरम् । लिङ्गाविषयकज्ञानजनकत्वं च नञ्‌त्यत्या-सेन लिङ्गविषयकज्ञानजनकत्वनियतावयवान्यत्वं [1]पर्यवसितम् । अन्यथा यत्र प्रति-ज्ञायां हेतोः पक्षतावच्छेदकतया[कत्वेनेति] अन्यथा वा प्रवेशस्तत्राव्याप्तिः स्यात् । न च लिङ्गतावच्छेदकप्रकारेण लिङ्गाविषयकत्वविवक्षयैव नोक्तदोष इति वाच्यम् । धूमालोकादेः पक्षतावच्छेदकत्वे तथाप्यप्रतीकारात्, धूमत्वेनैव [2]तत्र धूमस्य भानात् ।

---

## तर्कचूडामणिः

तत्रातिव्याप्तिरिति दूषणमलग्नकं वेदितव्यम् । एवं च प्रतिज्ञायां मत्वर्थसम्ब-न्धस्यापि प्रकारत्वात् अनुमितौ च तस्यातथात्वादनतिरिक्तविषयकत्वमसिद्धमि-त्यपि दूषणं दूरीकृतमेवेति [3]यथाश्रुतस्याविवक्षितत्वादिति ।

ननूदासीनवाक्यस्यापि प्रतिज्ञासमानाकारस्य तादृशज्ञानजनकत्वे तत्राति-व्याप्तितादवस्थ्यमित्यत आह—**अत्रापीति** [तत्रापीति] । न्यायावयवपरत्वे वाक्य-पदवैयर्थ्यं स्यादिति भावः । **पक्षतावच्छेदकत्वेनेति** । प्रत्यक्षस्पर्शाश्रयो वायु-रित्यादावित्यर्थः । **अन्यथेति** । पृथिवीतरभिन्नत्वादौ साध्यविशेषणतयेत्यर्थः । **तदेति** । [4]तत्प्रतिज्ञावच्छेदेन लिङ्गविषयकज्ञानजनकत्वनैयत्यादिति भावः । **यथा-श्रुतेनेति** । [5]लिङ्गाविषयकज्ञानजनकवृत्त्यवयवविभाजकधर्मावच्छिन्नत्वमेव तदर्थोऽस्तु, तावताप्यव्याप्तिनिरासादिति भावः ।

---

1. ख. 'पर्यवसितम्' इत्यतः प्राक् 'तेनोदाहरणचतुष्टयावयवा' न्यत्वं इत्यधिकपाठः
2. क. 'तत्र' नास्ति
3. ग. यथाश्रुतस्य विव-
4. क. तत्प्रतिज्ञात्वाव-
5. ख. लिङ्गविषयक-

अन्यूनानतिरिक्तपदं विहाय लिङ्गाविषयकत्वं वा ज्ञानविशेषणम् । तेनोदाहरणादिव्युदासः । निगमनं च न परामर्शहेतुः, अबाधितासत्प्रति-

## प्रकाशः

न च विवक्षितोऽपि तादृशज्ञानजनकत्वनियमो यदि व्यक्त्यवच्छेदेन विवक्षितः, तदा तादृशप्रतिज्ञायां [1]तथैवाव्याप्तिः । अथानुगतहेत्ववयवत्वाद्यवच्छेदेन, तदा प्रतिज्ञात्वमवच्छेदकमादाय यथाश्रुतेनैव समर्थनमस्त्विति वाच्यम् । प्रतिज्ञात्वस्यैव [2]लक्ष्यत्वेन तदपरिचये तदादाय समर्थनस्याशक्यत्वात्[3] हेत्ववयवत्वादेस्तु लक्षणान्तरप्रमितत्वेन तदवच्छेदेन लिङ्गविषयकज्ञानजनकत्वनियमग्रहात् उक्तलक्षणार्थः सुग्रह इति भावः । निगमने इतोऽपि नातिव्याप्तिरित्याह— **निगमनं चेति** । चकारोऽप्यर्थः भिन्नक्रमः । निगमनं परामर्शहेतुरपि नेत्यर्थः । तथा

## तर्कचूडामणिः

ननु निगमनस्य लिङ्गविषयकज्ञानजनकत्वनियमेन लिङ्गविषयकेत्यनेनैव तद्वारणात् [4]परामर्शहेतुरनिषेधस्तत्र व्यर्थ इत्यत आह—इतोऽपीति । न चेति । [5]तस्यापि मानसपरामर्शप्रयोजकत्वादिति भावः ।

केचित्तु ननु निगमनैकदेशे अनित्य इत्यादावतिव्याप्तिः । तस्य न्यायप्रविष्टत्वात्, लिङ्गाविषयकज्ञानजनकावयवान्यत्वाच्च । न चैकदेशान्यवाचकवाक्यपदेनैव तद्वारणमिति वाच्यम् । सत्यन्तोपस्थापितयोः समुदायसमुदायिनोर्मध्ये समुदायिभिन्नवचनेन वाक्यनिगमनावयवभूतविभक्त्यादावतिव्याप्तिवारणेऽपि तत्र तदवारणात् । न हि यावति वाक्यस्य परिसमाप्तिस्तावत्परं वाक्यपदम् । प्रतिज्ञाया

1. क. तथाप्यव्याप्तिः ।
2. क. लक्षणत्वेन
3. क. त्वेन हेत्ववयवादेर्लक्षणा-
4. ग. परार्थहेतुकनिषेधः
5. क. तस्या अपि

पक्षत्वज्ञानजनकत्वात् । हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं वा लिङ्गाविषयकलिङ्गिविषयकज्ञानजनकन्यायावयववाक्यत्वं वा । इतरावयवानां लिङ्गविषयकज्ञानजनकत्वात् ।

---

**प्रकाशः**

च सत्यन्तेनापि तद्वारणमिति भावः । न चैतदेवासिद्धमिति वाच्यम् । परामर्शपदेनोपनयजन्यपरामर्शस्य विवक्षितत्वात् । [1]तत्र च निगमनस्योदीच्यत्वेनाप्रयोजकत्वात् । प्रतिज्ञायाश्चाकाङ्क्षोत्थापनद्वारा[2] तत्र प्रयोजकत्वमस्तीति [3]नासम्भव इति ध्येयम् । अवयवलक्षणे च [4]परामर्शपदं नोपनयजन्यपरार्शपरम् । तेन तल्लक्षणस्य निगमने नाव्याप्तिरिति द्रष्टव्यम् । अत एव तत्र परामर्शे चरमत्वं विशेषणम्, इह तु नेति सर्वं सुस्थम् ।

हेत्विति । हेत्ववयवेत्यर्थः । यद्वा वाक्यपदमवयवपरम् । अतो नातिप्रसङ्ग इति भावः । लिङ्गेति । अत्रापि नञ् व्यत्यासेन पूर्ववल्लिङ्गविषयकज्ञान-

---

**तर्कचूडामणिः**

अपि न्यायैकदेशत्वेनासम्भवापत्तेरित्यत आह—**निगमनं चेत्याहुः**। तच्चिन्त्यम्। अवयवैकदेशान्यपरेण वाक्यपदेनैव तद्वारणात्। अन्यथा उदाहरणैकदेशे अनित्य इत्यादावतिव्याप्त्यापत्तेः ।

उदासीनातिव्याप्तेराह—**हेत्ववयवेति** । ननु जनकतावच्छेदकग्रहाग्रहाभ्यामुक्तविवक्षावैयर्थ्यमित्यनुशयादाह—**यद्वेति** । अत्र जनकतावच्छेदकमुदासीनसाधारणमेवेति [5]तद्ग्रहणेऽपि न तस्य लक्षणत्वसम्भव इति भावः । पूर्वोक्ताव्याप्ति-

---

1. क. अत्र
2. क. उत्पादनद्वारा
3. ख. नैवासम्भवः
4. ख. 'परामर्शपदं नोपनयजन्य' इति नास्ति
5. क. तद्गुणेऽपि

प्रतिज्ञात्वं जातिः, अन्यूनानतिप्रसक्ततान्त्रिकव्यवहारादिति केचित्। तन्न। देवदत्तप्रभवत्वादिना जातिसंकरप्रसङ्गात्। प्रतिज्ञाजन्यं विजातीयं ज्ञानं व्यवहारादिति तज्जनकं प्रतिज्ञेत्यपि न। तज्जनकत्वं जनकत्वज्ञानं वा नानुगतरूपमन्तरेण सम्भवतीत्युक्तस्यानुसरणीयत्वात्।

एतेन शब्दोऽनित्य इति लिङ्गिधीपरवाक्यजन्यज्ञानवृत्तिकृतकत्वा-दित्यादिवाक्यजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यं प्रतिज्ञेति निरस्तम्।

ननु प्रतिज्ञा न साधनाङ्गम्। विप्रतिपत्तेः पक्षपरिग्रहे तत्र प्रमाणा-काङ्क्षायां हेत्वभिधानस्य प्राथम्यादिति चेत्—न। विप्रतिपत्त्यग्रे समय-बन्धानन्तरं शब्दानित्यत्वं साधयेति मध्यस्थस्य वादिनो वा आकाङ्क्षायां शब्दानित्यत्वं साध्यम्। न च साध्यनिर्देशं विना हेतुवाक्यं निष्प्रति-

---

## प्रकाशः

जनकत्वनियतावयवान्यन्यायावयवत्वमित्यर्थः। यदि च न्यायावयवपदं नास्ति, किं तु वाक्यपदं, तदा तदेवावयवपरं द्रष्टव्यम्। लिङ्गपदं च क्वाचित्कमफलम्। पूर्वं विजातीयज्ञानं निर्बीजमुक्तम्। इदानीं बीजपूर्वकमपि तदाह—**व्यवहारादिति**। **भास्करमतं** दूषयति—**एतेनेति**। यद्यपि अत्रापि विजातीयज्ञानजनकत्वमेव पर्यवस्यति, तथाप्युपाधिभेदेन भेद इति मन्तव्यम्।

---

## तर्कचूडामणिः

वारणायाह—**अत्रापीति**। उदासीनवारणायाह—**यदि चेति**। पौनरुक्त्यं वारयति—**पूर्वमिति**। ननु श्रुतपदस्योपस्थित्यन्तरमात्रमावृत्तिरिति कथायां प्रतिज्ञा-रूपवाक्योपन्यासो न स्यात्। न चेष्टापत्तिः। कथकसंप्रदायविरोधात् इत्यत

यौगिकमन्वयं बोधयितुमीष्टे । न च वादिवाक्येऽनुपस्थितमपि योग्यतयान्वेति । अतिप्रसङ्गात् । न च विप्रतिपत्तितः साध्योपस्थितिः । तस्याः प्रतिवादिविप्रतिपत्त्या प्रमाणादिव्यवस्थया चान्तरितत्वात् । परविप्रतिपत्ति समयबन्धं च विना स्थापनाया अभावात् । विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च । आवृत्तौ तु सैव प्रतिज्ञा । न चावयवान्तराद्धेत्वन्वययोग्या साध्योपस्थितिः । नाप्यवयवान्तरेणाक्षेपात् । साध्यान्वये तदभिधानं तदभिधाने च साध्यान्वय इत्यन्योन्याश्रयात् । तस्मात् प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या वा नेहाक्षेपः ।

---

## प्रकाशः

आवृत्तौ त्विति । इदं चापाततः । वस्तुतो हेत्वन्वयानुपपत्त्या प्रतिज्ञायां ज्ञानलक्षणा अवश्यं वाच्या । विप्रतिपत्तौ न तथेति [1]न तया तदन्यथासिद्धिः । न च प्रमाणाकाङ्क्षायां हेत्वभिधानात् धूमादित्यादौ ज्ञापकत्व एव पञ्चमीति नान्वयानुपपत्तिरिति वाच्यम् । ज्ञानलक्षणयाप्युपपत्तौ हेतुत्वशक्तायाः पञ्चम्या नानार्थत्वकल्पनायां मानाभावादिति वक्ष्यते । तदभिधानमिति । अवयवान्तराभिधानमित्यर्थः ।

---

## तर्कचूडामणिः

आह—[2]इदं चेति । न तथेति । तद्वाक्यस्य कोटिद्वयोपस्थापनमात्रपरत्वादिति भावः । तत्पदस्य साध्यादिपरत्वं [3]वारयति—अवयवेति । तामेवेति । पूर्वोक्तयुक्तिमेवेत्यर्थः ।

इति प्रतिज्ञालक्षणम्

---

1. क. तया न
2. ग. एवं चेति
3. ख. व्यावर्तयति

अन्ये तु शब्दानित्यत्वे प्रमाणं वदेति यदि मध्यस्थस्यानुयोगः, तथापि प्रमाणमात्रे नाकाङ्क्षा, किं तु विशिष्टे। विशिष्टं तु विशेषणं साध्यमनभिधाय न शक्याभिधानम्। न च वस्तुतो यत् साध्यं तत्र प्रमाणं वदेति मध्यस्थनियोगः। वादिद्वयमध्ये तदसम्भवात्। तस्मात् साध्याभिधानं विना न हेतोराकाङ्क्षा न वा अन्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमिति।

## हेतुः

साध्यनिर्देशानन्तरं कुत इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितम्। अन्यथा अनाकाङ्क्षिताभिधाने निग्रहापत्तेः। लोके तथैवाकाङ्क्षानिवृत्तिरिति व्युत्पत्तेरिति प्रतिज्ञानन्तरं हेतूपन्यासः।

हेतुत्वं च अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम्।

---

## प्रकाशः

अन्ये त्विति अस्वरसोद्भावनम्। तद्बीजं तु शब्दानित्यत्वे प्रमाणं वदेत्यस्य साध्योपलक्षितसाधनाभिधाननियोगपरतयाप्युपपत्तौ साध्यस्य विशेषणत्वमुक्तयुक्त्यवष्टम्भेन ग्राह्यम्। तथा च सैवास्तु, किमनेनेति। अत एवोपसंहारे तामेव दर्शयति—तस्मादिति।

---

## तर्कचूडामणिः

जनकान्तस्य शब्दविशेषणत्वे उक्तातिव्याप्तितादवस्थ्यम्। उदासीनवाक्यस्यापि स्मृतिरूपपरामर्शजनकानुभवपरामर्शजनकलिङ्गविषयशाब्द[1]ज्ञानजनकत्वादित्यत

---

1. ख. ग. ज्ञानविषयत्वात्

हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं वा उदाहरणप्रयोजका-काङ्क्षाजनकशाब्दज्ञानजनकन्यायावयवत्वं वा साध्याविषयकज्ञानजनक-

## प्रकाशः

हेतुत्वं चेति । हेतुसदृश[1]न्यायाप्रविष्टवाक्येऽतिव्याप्तिवारणाय कारणेत्यन्तं धीविशेषणम् । तस्मादिति निगमनांशे[2]ऽतिव्याप्तिवारणाय साध्याविषयकेति । अत्र साध्यतावच्छेदकप्रकारेण साध्याविषयत्वं विवक्षितम् । तेन [3]प्रमेयवत्त्वादौ साध्ये न साध्याविषयकज्ञानस्याप्रसिद्धिरिति ध्येयम् । [4]न चैवमपि वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यादिहेतावव्याप्तिरिति वाच्यम् । साध्यविषयकशाब्दधीजनकत्व-नियतावयवभिन्नत्वस्य विवक्षितत्वात् । यो यो धूमवान् इत्यत्र उदाहरणांशेऽति-व्याप्तिवारणाय हेतुविभक्तिमदिति । सामान्यवत्त्वे सति अस्मदादिबाह्यकरणप्रत्यक्ष-त्वादित्यत्राग्रिमभागेऽ[5]तिव्याप्तिवारणाय शाब्दपदम् । तथा च शब्दाधिक्यादर्थाधिक्यमिति न्यायेन यावदवच्छेदेन हेतुविभक्तिसमभिव्याहृतत्वं तावदवच्छिन्न-

## तर्कचूडामणिः

आह—धीविशेषणमिति । उदासीनस्थले च न तज्जनकशाब्दज्ञानजनकत्व-मिति नोक्तदोषः । **साध्याविषयकेति**। एवं च साध्यतावच्छेदक [का] प्रकार-कत्वं विवक्षितमिति बोध्यम् । **हेतुविभक्तिमदिति** । प्रकृतसाध्यनिरूपितहेतुत्व-प्रतिपादकविभक्तिमदित्यर्थः । तेनेदं तदन्वयाद्यनुविधायि ततो जायमानत्वादित्यत्र उदाहरणैकदेशे यत् यतो जायते इत्यादौ नातिव्याप्तिरिति ध्येयम् । **हेतु-विभक्तीति** । हेतुत्वप्रतिपादकत्वपर्याप्त्यधिकरणत्वमित्यर्थः । **अग्रिमावयवेति** ।

1. ख. न्यायावयवाप्रविष्ट-
2. ख तद्वारणाय
3. ख. प्रमेयादौ
4. क. न चैवं वायुः
5. ख. अतिव्याप्तिरित्यत उक्तं शाब्दपदम्

हेतुपञ्चम्यन्तानुमितिपरशब्दत्वं वा प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्वं वा ।

---

## प्रकाशः

शब्दत्वं विवक्षितम् । प्रकृते च सप्तमीबलात् विशिष्ट एव[1]हेतुत्वान्वयात् विशिष्ट एव हेतुविभक्तिसमभिव्याहार इति भावः ।

**हेतुत्वेति ।** [2]न्यायावयवत्वावच्छेदेन हेतुत्वप्रतिपादकविभक्तिमत्त्वं विवक्षितमिति तस्मादित्यंशमादाय हेतुविभक्ति[3]मत्त्वसत्त्वान्न निगमनेऽतिव्याप्तिः। **उदाहरणेति।** व्याप्त्यभिधानेत्यर्थः । उदाहरणावयवपरत्वे चाग्रिमावयवपदवैयर्थ्यापत्तेरिति । [4]अत्र प्रयोजकत्वं च जनकत्वं विवक्षितम् । तच्च स्वरूपयोग्यम् । तेनासाधकताप्रयोगीयहेतौ नाव्याप्तिरिति ध्येयमिति प्राहुः ।

**साध्याविषयकेति ।** अत्र जनकेत्यन्तं शब्दविशेषणं तस्मादिति निगमनांशेऽतिव्याप्तिवारणाय । [5]तदर्थश्च पूर्ववत् । [6]उदाहरणैकदेशेऽतिव्याप्तिवारणाय हेतु-

---

## तर्कचूडामणिः

तादृशशाब्दज्ञानजनकग्रहाग्रहाभ्यां । जनकत्वस्य लक्षणत्वानुपपत्तिश्च स्यादित्यपि बोध्यम् । जनकत्वस्य पञ्चमीविशेषणत्वे निगमनांशे दोषतादवस्थ्यमित्यत आह—**शब्दविशेषणमिति ।** ननु प्रत्यक्षस्पर्शाश्रयत्वादावव्याप्तिरित्यत आह—**तदर्थ इति।** अनुमित्युत्पादनेच्छयोच्चरितत्वमुदासीनस्यापीत्यत आह—**न्यायेति ।** ननु तस्मादिति निगमनैकदेशस्य साध्यविषयज्ञानजनकत्वनियतावयवान्यत्वाददतिव्याप्तितादवस्थ्यम् । न

---

1. ख. ग 'हेतुत्वान्वयाद्विशिष्ट एव' नास्ति ।
2. ख. न्यायावयवत्वावच्छेदकावच्छेदेन
3. क. मत्त्वान्न
4. ख. 'अत्र........प्राहुः' नास्ति
5. क. 'तदर्थश्च पूर्ववत्' नास्ति ।
6. ख. उदाहरणांशे

## प्रकाशः

पञ्चम्यन्तेति । उदासीनवाक्येऽतिव्याप्तिवारणाय अनुमितिपरेति । न्यायप्रविष्ट-वाक्यत्वमित्यर्थः । यद्वा अनुमितिपरशब्दत्वेन न्यायावयवत्वं विवक्षितम् । तथा च साध्याविषयकज्ञानजनकन्यायावयवत्वं हेतुपञ्चम्यन्तन्यायावयवत्वं लक्षणद्वयं बोध्यम् । पूर्वं हेतुत्वप्रतिपादकविभक्तिमत्त्वमित्युक्तम्, इदानीं तु [1]पञ्चम्यन्तत्वमुच्यत इति न पूर्वाभेदः । प्रतिज्ञेति । उदासीनस्याप्रतिज्ञात्वेन प्रतिज्ञा[2]वाक्यजधीजन्याकाङ्क्षा-निवर्तकत्वमवयवस्यैवेति पञ्चम्यन्ते उदासीनवाक्ये [3]निगमनैकदेशे च नातिप्रसङ्गः । सामान्यवत्त्वे सतीत्यादौ [4]हेत्ववयवावयवे परम्परयोक्तज्ञानजनकेऽतिव्याप्तिवारणाय हेतुविभक्तिमत्त्वं विशेषणम् । हेतुत्वान्वितैकार्थावच्छिन्नवाक्यत्वमित्यर्थः । हेत्ववय-वान्तर्गतस्य खण्डवाक्यस्य तथात्वाभावात् । सामान्यवत्त्वे सतीत्यादिहेतावपि सतिसप्तमीबलात् विशिष्ट एव हेतुत्वान्वयेन विशेष्यमात्रेण विशेषणमात्रेण वा तदनन्वयादिति भावः ।

---

## तर्कचूडामणिः

च तादृशज्ञानजनकत्व[5]नियतान्यत्वमेव विवक्षितमिति वाच्यम् । प्रत्यक्षस्पर्शाश्रयत्वा-देरपि तादृशज्ञानजनकत्व[6]नियततया तदन्यत्वाभावापत्त्या तादृशावयवान्यत्वस्यैव वाच्यत्वेन निगमनांशेऽतिव्याप्तेर्वज्रलेपत्वादित्यस्वरसादाह—यद्वेति । [7]साध्या-विषयकेति । एतदर्थश्च पूर्ववत् । द्वितीयलक्षणस्य पूर्वलक्षणाभेदं वारयति—पूर्वमिति । हेतुत्वान्वितेति । हेतुत्वविशिष्टार्थप्रतिपादकतापर्याप्त्यधिकरणत्वमित्यर्थः ।

---

1. ख. हेतुपञ्चम्यन्त-
2. क. 'वाक्यज'
3. क. निगमने च
4. क. हेत्ववयवे
5. ख. ग. नियतावयवान्यत्वम्
6. ख. नियततदन्यत्वापत्त्या
7. ग. साध्यविषयकेति

पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं वा ।

## प्रकाशः

यत्तु धूमवान् यत इत्यादौ अतिव्याप्तिवारणाय हेतुविभक्तिमदिति । न हि तत्र [1]पञ्चम्यन्तततामात्रेण तदाकाङ्क्षानिवृत्तिः, अपि तु [2]प्रथमान्तपञ्चम्यन्ताभ्याम् । हेत्ववयवे तु [3]पञ्चम्यन्तेनैवेति । तन्न । तस्यानवयवत्वे तत्र प्रतिज्ञाविरहेण उदासीनवाक्यवत् पूर्वप्रतीकेनैव वारणात्, अवयवत्वे तद्वारणस्या[4]नभिमतत्वादिति ।

पञ्चम्यन्तेति । न्यायाप्रविष्टहेतुसदृशवाक्येऽतिव्याप्तिवारणाय अनुमितिपरेति । न्यायप्रविष्टेत्यर्थः । [5]निगमनैकदेशेऽतिव्याप्तिवारणाय लाक्षणिकेति । तस्मादिति सर्वनाम्नश्च बुद्धिस्थवाचकतया तस्यार्थस्य [6]बुद्धिस्थत्वे शक्त्यैव [7]तद्विषयत्वे सर्वथा तत्र लक्षणाया [8]अनुपपत्तेः । प्रतिज्ञायामपि साध्यपदे लक्षणेति तत्रातिव्या-

## तर्कचूडामणिः

जयदेवमतमाह —यत्त्विति । ननु तस्यापि हेतुविभक्तिमत्त्वात् कथं तन्निरास इत्यत आह—न हीति । पञ्चम्यन्तत्वमात्रेणैवाकाङ्क्षानिवृत्तिरत्र विवक्षितेति भावः । पञ्चम्यन्तेनैवेति । यद्यपि सामान्यवत्त्वे सतीत्यादौ सप्तम्यन्तेनापि तन्निवृत्तिरिति [9]तत्राव्याप्तिः, तथापि पञ्चम्यन्तत्वं पञ्चमीसाकाङ्क्षत्वमिति नोक्तदोषः। सामान्यवत्त्वस्यापि पञ्चमीसाकाङ्क्षत्वादिति भावः। पूर्वेति । प्रतिज्ञा[10]वाक्यधीजन्याकाङ्क्षानिवर्तकत्वादिति भावः ।

---

1. ख. पञ्चम्यन्तमात्रेण
2. ख. प्रथमापञ्चम्यन्ताभ्याम्
3. ख. हेतुपञ्चम्यन्तेनैवेति
4. ख. स्यानर्हत्वात्
5. ख. निगमनाति-
6. क. बुद्धिविषयत्वे
7. क. बुद्धिविषयत्वे
8. ख. असम्भवात्
9. ग. तत्रातिव्याप्तिः
10. ख. वाक्याधीनाकाङ्क्षा-

## प्रकाशः

सिरित्यत आह—**पञ्चम्यन्तेति**। न च तत्र लक्षणायां मानाभावः, साध्यस्य हेतुवाक्यार्थेन हेतुनान्वयासम्भवात् तस्य तदकार्यत्वात् ।

अत्राहुः। न हि हेतुवाक्येन कारको हेतुरभिधीयते। किं तु ज्ञापकः। साध्यनिर्देशानन्तरं कुत इति प्रमाणाकाङ्क्षायां तत्प्रयोगात् पञ्चम्या [1]अपि ज्ञापकत्वरूपहेतुत्वपरत्वात्। तथा च हेतुवाक्यार्थे ज्ञापके ज्ञाप्यस्य साध्यस्य विषयत्वेनैवान्वय इति न साध्यपदे ज्ञानलक्षणा। अत एव **भास्करादौ** तथैव कण्ठतः प्रतिपादितमस्ति। उद्देश्यानुमित्यन्यूनेत्यादिगर्भप्रतिज्ञालक्षणं कृतवतो **गङ्गेशस्यापि** एतदेवाभिमतम् अन्यथा प्रतिज्ञायाः साध्यज्ञानविषयत्वे [2]अनुमितेश्च तदविषयत्वे तल्लक्षणासम्भवादिति चेत्—

अत्र वदन्ति। पञ्चम्या ज्ञापकत्वपरत्वं लक्षणया वा शक्त्या वा। नाद्यः, सुब्विभक्तौ लक्षणाया [3]अव्युत्पत्तेः। नान्त्यः, एकार्थत्वे सम्भवति नानार्थत्वायोगात्। प्रतिज्ञालक्षणं च यथा सुस्थं तथोक्तम् ।

---

## तर्कचूडामणिः

ननु तत्रापि हेतुपदे लक्षणैवेत्यत आह—**सर्वेति**। **न च तत्रेति**। मुख्ये बाधकाभावादिति भावः। **उपाध्यायमतमाह—अत्रेति**। **आलोककृन्मतमाह—अत्रेति**। **सुब्विभक्ताविति**। 'तान्येकवचन' (पा. सू. 1-4-102) इति सूत्रविहितान्वर्थसंज्ञाबलेनैव एकद्विबहुवचनानामेकत्वद्वित्वबहुत्वेषु व्यवस्थया प्रयोगोपपत्तौ 'द्व्येकयोः' (पा. सू. 1-4-22) इति सूत्रस्य वैयर्थ्यापत्त्या तत्सूत्रस्य लक्षणयापि द्वित्वादावेकवचनादिप्रयोगो न साधुरिति ज्ञापनार्थत्वेन विभक्तौ लक्षणाभावस्यावगमादिति भावः। तदीयं साध्यान्तरं दूषयति—**यत्त्विति**।

---

1. ख. अपि तत्र
2. क. 'अनुमितेश्च तदविषयत्वे' नास्ति।
3. क. अन्याय्यत्वात्

हेतुपदेन ज्ञानलक्षणात् । अन्यथा लिङ्गस्याहेतुत्वेन हेतुविभक्त्यर्थानन्वयात्, तथैवाकाङ्क्षानिवृत्तेः ।

## प्रकाशः

यत्तु यदि प्रतिज्ञायां न लक्षणा तदा पञ्चम्यन्तपदमत्र लक्षणे व्यर्थं स्यात् । न च पर्यदामनआदिलाक्षणिकपदवति अवयवान्तरेऽतिव्याप्तिवारणाय तदिति वाच्यम् । लाक्षणिक[1]पदवत्त्वेन तादृशपदनियतानुमितिपरवाक्यत्वस्यावश्यवाच्यत्वे तत एव तादृशावयवान्तरवारणात् । अन्यथा यत्रोदाहरणविशेषे धूमवत्त्वादित्यादिहेत्ववयवो दृष्टान्तत्वेनोपादीयते, तदा तदंशातिव्याप्तेर्व्रलेपत्वापातात् ।

न च प्रकृतसाध्य[2]प्रतियोगिकहेतुपञ्चम्यन्तोक्तावतिव्याप्त्यसम्भवात् (सम्भवः) [3]तत्प्रयोगहेतोरपि तत्प्रयोगोदाहरणदृष्टान्तत्वसम्भवादिति [4]तत्रोदाहरणान्तर्भूतस्य हेत्ववयवत्वेन संग्राह्यत्वात्, [5]तत्प्रतिपादकस्योदाहरणांशस्य धूमवत्त्वादितिशब्दवदित्यादेः महानसवदित्यादिवत् पञ्चम्यन्तत्वाभावेन नियमविवक्षाया अयुक्तत्वात् ।

## तर्कचूडामणिः

व्यर्थमिति । अवयवान्तरस्य लाक्षणिकपदवत्त्वाभावादिति भावः । न चेति । नायमध्यापनयोग्यः अब्राह्मणत्वादित्यत्र उदाहरणावयवस्यापि लाक्षणिकपदवत्त्वादिति भावः । ननु तादृशनियमं विवक्षित्वा पदान्तरवैयर्थ्यापादनमसंगतमित्यत आह— [6]अन्यथेति । घटशब्दो गुणः [7]द्रव्यकर्मान्यत्वे सति सत्त्वादित्यत्र धूमवत्त्वादिशब्दस्यापि दृष्टान्तत्वसम्भवेन तत्रोदाहरणावयवेऽतिव्याप्त्यापत्तेरित्यर्थः । न चेति । धूमवत्त्वादित्यस्य तु न [8]प्रकृतगुणत्वनिरूपितहेतुपञ्चम्यन्तत्वमिति भावः ।

1. क. पदेन
2. ख. प्रयोगे हेतुपञ्चम्यन्तगर्भतया
3. ख. एतत्प्रयोग-
4. ख. तत्रोदाहरणांशविषयीभूतस्य
5. ख. सपक्षप्रतिपादक-
6. ग. अन्वयेति
7. ग. द्रव्यान्यत्वे
8. ग. प्रकृतिगुणत्व-

## प्रकाशः

लाक्षणिकपदवत्त्वमुपपादयति — हेत्विति । अहेतुत्वेनेति । अतीतादौ व्यभिचारादिति भावः । न चैवं 'स्वायत्ते शब्दप्रयोगे' इति न्यायेन धूमज्ञानादिति प्रयोगापत्तिः । घटं करोतीतिवत् निरूढलक्षणया [1]ज्ञानलाभोपपत्ते ।

ननु हेतुपदे यदि ज्ञानलक्षणा तदा वृत्तिद्वयविरोधेन ज्ञानमात्रमुपतिष्ठेत, न तु [2]तद्विषयो धूमादिः । तथा चानुपस्थिते तत्र गमकत्वाकाङ्क्षा न स्यात् । प्रत्युत लिङ्गज्ञाने गमकत्वाकाङ्क्षा स्यादिति तस्यैव गमकताप्रयोजकव्याप्त्यादिविषयकत्वरूप[3]मुदाहरणमभिधेयं प्रसज्येत । किं चावयवेनानुमित्यङ्गं [4]ज्ञानमुत्पादनीयम् ।

## तर्कचूडामणिः

तत्प्रयोगेति । घट इत्यादिपदं सुबन्तम् अतिङन्तपदत्वात् यदतिङन्तपदं तत् सुबन्तपदं यथा अतिङन्तपदत्वादिति पदमित्यत्र प्रकृतहेतोरेव प्रकृतोदाहरणदृष्टान्तत्वादिति भावः । अतिङन्तपदत्वादित्यत्र किमतिव्याप्तिः, उत तद्घटितोदाहरणे । आद्ये—उदाहरणेति । अन्त्ये —तदिति ।

ननु लिङ्गज्ञानस्य जनकत्वेन लिङ्गमपि तथेत्यत आह—अतीतादाविति । स्वायत्त इति । 'स्वाधीने शब्दप्रयोगे किमित्यवाचकं प्रयोक्तव्यम्' इति न्यायेनेत्यर्थः । घटमिति । क्रियाजनितातिशयशालिन एव कर्मतया कपालस्यैव क्रियाफलशालितया कर्मत्वम् न तु घटस्येति । घटपदं कपालपरमेव । तथापि यथा तत्र कपालं करोतीति न प्रयोगः, एवमिहापीत्यर्थः । प्रभाकृन्मतं शङ्कते—नन्विति । वृत्तिद्वयेति । न च काकेभ्यो दधीत्यादाविवाजहल्लक्षणेति वाच्यम् । तत्र दध्युपघातकत्ववदत्रोभयसाधारणधर्माप्रतीतेरित्यर्थः । न च शक्त्या लक्षणया च [5]हेतुत्वं

1. ख. ज्ञानलाभापत्तेः
2. ख. विषयोऽपि धूमादिः
3. ख. उदाहरणाभिधेयं
4. ख. ज्ञानमुत्पादयितुमर्हम्
5. क. हेतुं

## प्रकाशः

लिङ्गज्ञानं च तथा, न तु लिङ्गज्ञानज्ञानम् । तस्माल्लिङ्गस्यानुमित्यजनकत्वपक्षेऽपि धूमादिपदं [1]शक्यपरमेव । पञ्चमी [2]तु न हेतुतायाम् । किं त्वनुमितिहेतुज्ञान-विषयत्वलक्षणानुमितिप्रयोजकत्वमात्र इति चेत्—

अत्र वदन्ति । यद्येवं वृत्तिद्वयविरोधः पावाद्रक्त[3]मित्यनन्वितं स्यात् । अभेदोपचारेऽपि वृत्तिद्वयविरोधेन रक्तस्याप्यनुपस्थित्या[4]हेतोस्तत्र लक्षणोपस्थि-तघटाद्याकाङ्क्षाविरहात् । यदि च तटस्थतयापि तत्राकाङ्क्षा यदि वा [5]येन विना यन्न भासत इति न्यायात् तल्लक्षणां [6]विना अन्यलक्षणयैव तत्र तदुपस्थितेस्तत्राकाङ्क्षा, तदा प्रकृतेऽपि तुल्यम् । तद्विषयकज्ञानस्यापि तन्निरूपणाधीननिरूपणत्वेन ज्ञानलक्षणयैव तदुपस्थितिसम्भवात् । अत एव समासेऽन्यपदार्थलक्षणादौ लम्बकर्णादिविशिष्टव्यक्तिभानम् ।

---

## तर्कचूडामणिः

तज्ज्ञानं च युगपदेव प्रतिपादयतीति वाच्यम् । सकृदुच्चरितस्य सकृदर्थप्रत्यायकत्वेन युगपत् वृत्तिद्वयपुरस्कारेणार्थप्रत्यायकत्वस्य व्युत्पत्तिविरुद्धत्वात् । तदेतदाह— **वृत्तिद्वयविरोधेनेति** । इष्टापत्तिमाशङ्क्याह — **तथा चेति** । **तस्मादिति** । लिङ्गस्य तज्जनकत्वपक्षे अनुमितिहेतुत्वमेव पञ्चम्यर्थ इति भावः । कथं तर्हि पञ्च-म्यन्वय इत्यत आह—**पञ्चमीति** ।

तत्र [7]**प्रकाशकृदुक्तमाह—अत्रेति** । **अभेदेति** । रक्तपदस्य गुणाश्रय-द्रव्यलक्षकत्वेऽपीत्यर्थः । उपस्थितस्य च [8]द्रव्यस्य पाकसाध्यत्वाभावादिति भावः ।

---

1. ख. शक्तमेव
2. ख. च. हेतुनायां
3. क. इत्यत्रानन्वितं
4. ख. हेतोस्तत्राकाङ्क्षाविरहात्
5. ख. यद्विषयत्वेन विना
6. ख. विनाप्यस्या लक्षणमेवेति तदुप·
7. क. प्रकाशकृदुक्तमतं
8. क. द्रव्यस्यापाक

## प्रकाशः

नन्वेवमुपस्थितस्यापि [1]धूमादिविषयस्य विशेषणत्वात् [2]तद्विशेष्य एव ज्ञाने गमकत्वाकाङ्क्षा स्यादिति चेत् न। इष्टापत्तेः। गमकत्वं हि ज्ञानजनकत्वम्। तच्च [3]लिङ्गज्ञानस्यैव—न तु लिङ्गस्य। तथा च कथमस्य [4]गमकत्वमित्याकाङ्क्षापि तत्रैव व्याप्यताविषयतया च तस्य गमकत्वमिति तद्विषयीभूतलिङ्गे व्याप्त्युपदर्शनायोदाहरणमपि तादृशं संगच्छते। अस्तु वा लिङ्ग एवाकाङ्क्षा, तथापि नानुपपत्तिः। लाघवेनोपस्थितिमात्रस्यैव तत्र तन्त्रत्वेन विशेषणतयापि तदुपस्थितेस्तत्प्रयोजकत्वात्।

यच्चोक्तं पञ्चमी न हेतुततायामिति। तन्न। हेतुत्वशक्तायाः पञ्चम्या विवक्षितार्थे लक्षणापत्तेः। सुब्विभक्तौ च तदनुपपत्तेः। [5]नानार्थकल्पने च मानाभावात्। उक्तेनैवोपपत्तेः। न च तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यत्र कथं प्रयोजकत्वेऽपि पञ्चमीति वाच्यम्। अनन्यथासिद्धत्वमपहाय विशिष्टशक्ताया अपि पञ्चम्याः विशेष्यभागे नियतपूर्ववर्तित्वे तात्पर्यात्।

---

## तर्कचूडामणिः

यदि चेति। रूपविशिष्टद्रव्यस्य रूपोपस्थितिं विना भानाभावादिति भावः। ननु ज्ञानस्य गमकत्वाकाङ्क्षायां तत्रैव व्याप्त्याद्यभिधानं स्यादित्यत आह—व्याप्यतेति। नन्विदं कथं गमकमिति लिङ्ग एव तदाकाङ्क्षानुभवात् ज्ञाने तदङ्गीकरणमनुभवविरुद्धम्, हेतावुक्ते कथमस्य गमकत्वमिति ग्रन्थविरुद्धं चेत्यनुशयादाह—अस्तु वेति। लाघवेनेति। अत एव राजपुरुषोऽयमिति वाक्यार्थज्ञानानन्तरं राजा कीदृश इत्याकाङ्क्षेति भावः।

---

1. ख. 'धूमादि' नास्ति
2. ख. 'तद्' नास्ति
3. क. 'लिङ्ग' नास्ति
4. क. 'गमकत्वं........तस्य' नास्ति।
5. ख. 'नानार्थ......उक्तेनैवोपपत्तेः नास्ति

### प्रकाशः

न च पदार्थैकदेशतया तत्रापि लक्षणैवेति वाच्यम् । विशेषणांशे पदार्थैकदेशेऽन्यान्वितत्वेनापस्थितेरनाकाङ्क्षिततया आकाङ्क्षोत्थापनाय स्वतन्त्रोपपस्थितये तत्र लक्षणास्वीकारात् । न तु साकाङ्क्षे विशेष्यभागेऽपि ।

अस्तु वा तदनुरोधान्नियतपूर्ववर्तित्व एव शक्तिः पञ्चम्याः तथापि [1]न प्रकृते संगतिः । उक्तप्रयोजकत्वस्यापि पञ्चम्यर्थत्वे प्रमाणाभावादिति ।

### तर्कचूडामणिः

**तन्नेति** । शक्तिश्च निराकृतेति भावः । **न चेति** । तत्र तत्त्वज्ञानस्याहेतुत्वादिति भावः । **न चेति** । अत एव गौर्नित्येत्यादौ लक्षणेति भावः । **न त्विति** । अत एव गौरनित्य इत्यादौ न सेति भावः । ननु विशिष्टवाचकस्य विशेष्यमात्रपरत्वे लक्षणाभावेऽपि प्रकृते सा दुर्वारा । अनन्यथासिद्धत्वस्यापि विशेष्यत्वसम्भवेन विनिगमकाभावादित्यपरितुष्यन्नाह—**अस्तु वेति** । **तदनुरोधादिति** । तत्त्वज्ञानादिति पञ्चम्यनुरोधेनेत्यर्थः । **न प्रकृत इति** । लिङ्गस्यानुमितिं प्रति नियतपूर्ववर्तित्वस्याप्यभावादित्यर्थः । ननु तज्ज्ञानजनकज्ञानविषयत्वरूपप्रयोजकत्वमपि तदर्थोऽस्त्वित्यत आह—**उक्तेति** ।

अत्र वदन्ति । यदि 'यद्धि' इति न्यायात् वृत्तिं विनैव धूमाद्युपस्थितिः तदा तस्य शाब्दबोधविषयत्वं न स्यात् । संसर्गभिन्नस्य वृत्त्युपस्थाप्यस्यैव शाब्दबोधविषयत्वात् । न च [2]ज्ञानलक्षणयैव तदुपस्थितिः, अन्यवृत्तेरन्यत्रासामर्थ्यात् । अन्यथा जातिशक्त्यैव व्यक्त्युपस्थितिसम्भवे तत्र शक्त्यभावापत्तेः ।

तीरशक्तगङ्गापदाल्लक्षणां विनैव तीरोपस्थित्यापत्तेश्च । अत एव सम्बन्धिपितृपदान्नियमतोऽसदुपस्थितावपि न तस्य शाब्दत्वमित्यसत्पदोपादानमिति **आचारप्रदीपे वर्धमानोपाध्यायैर्लिखितम्** ।

1. ख. प्रकृते नासंगतिः  2. क. ज्ञानलक्षणायैव

## तर्कचूडामणिः

आकाङ्क्षापि न न्यायोपस्थिते, किं तु शब्दोपस्थित एव। अत एव पदाध्याहारः। तथा च न्यायोपस्थिते रक्तरूपे कथं पाकादिति पञ्चम्यन्वयः यद्बलादिहापि तथा स्यात्। कथ तर्हि त्वन्मते पञ्चम्यन्वयः। रक्तादिपदस्य गुणिवाचकत्वादिति ब्रूमः। न चात्र प्रमाणाभावः। 'गुणे शुक्लादयः' इति कोशवचनस्यैव प्रमाणत्वात्। कथमन्यथा [1]निर्विगानं तत्र सर्वेषां व्यवहारः।

किं च 'यद्धि' इति न्याये बोधपदं [2]प्रत्यक्षपरमेव वाच्यम्। अन्यथा ज्ञानानुमितेः ज्ञानमस्तीति शाब्दज्ञानस्य [3]च ज्ञान[4]विषयविषयकत्वापत्तेः। तथा च धूमज्ञानविषयकशाब्दज्ञानस्य कथं धूमविषयकत्वम्। पञ्चमी च ज्ञापकत्वरूप-प्रयोजकत्वे शक्तैव। न चात्र मानाभावः। अनादिविशिष्टप्रयोगस्यैव मानत्वात्।

[5]अपि चाप्तोक्तत्वनिश्चयेन वादिवाक्ये कथं लक्षणा। अन्यथा शब्दोऽनित्य इत्यादौ हेतुतया प्रत्यक्षत्वे वादिनोपन्यस्ते अनैकान्तिकत्वं नोद्भाव्येत। प्रत्यक्षपदस्य सामान्यवत्त्वादिविशिष्टप्रत्यक्षत्वे लक्षणया प्रयोगसम्भवे च तत्परतयैव प्रत्यक्षपदं प्रयुक्तमिति परेण परिहारकरणसम्भवादिति।

अत्र ब्रूमः। प्रजयतीत्यादौ जयवाचकस्य प्रकृष्टजयविशिष्टे लक्षणावद्[6]धूमवाचक[6]धूमपदस्य धूमविशिष्टे ज्ञाने लक्षणास्तु अतो नोक्तदोषः। किं च मणिकृन्मते वृत्तिद्वयविरोधस्यादोषत्वात् गङ्गायां जलं घोषश्चेत्यादाविव वृत्तिद्वयेनैव धूमपदात् धूमतज्ज्ञानयोरुपस्थितिरस्तु। न चैकपदप्रतिपाद्ययोः परस्परान्वया-दर्शनेन धूमतज्ज्ञानयोः परस्परान्वयबोधो न स्यादिति वाच्यम्। अन्यत्र तथा

---

1. ग निर्विकल्पकभानं
2. ग. प्रक्षेपपरमेव
3. ख. चाज्ञान
4. ग. 'विषय' नास्ति।
5. ख. ग. यदि चाप्तोक्तत्वनिश्चयाभावेन
6. ख. 'धूम' नास्ति।

## तर्कचूडामणिः

तात्पर्याभावेन तादृशबोधाभावेऽपि अत्र तात्पर्यसत्त्वेन तद्बोधसम्भवात्। न च तादृशस्थले तात्पर्यमेव नेति वाच्यम्। [1]पुमिच्छायाः नियन्तुमशक्यत्वात्। वृत्तिभेदेन एकपदप्रतिपाद्ययो[2]रन्वयस्य तृतीयार्थकरणत्वैकत्वयोर्दर्शनाच्च।

यदपि पञ्चम्या ज्ञापकत्वे शक्तिरिति। तन्न। प्रमाणाभावात्, प्रयोगस्य लक्षणयाप्युपपत्तेः। अनन्यलभ्यप्रयोगस्यैव शक्तिसाधकत्वात्, अन्यथातिप्रसङ्गात्। न च वादिवचने लक्षणानुपपत्तिः। पर्युदासनञादिवदत्रयवप्रयोगानापत्तेः। यदि च वादिद्वयसिद्धलाक्षणिकप्रयोगो न दोषाय, तदा हेतुपदेन ज्ञानलक्षणाया [3]उभयोरप्यावश्यकतया तल्लक्षणायामपि न दोषः। अत एव पूर्वोक्तानैकान्तिकोद्भावनप्रसङ्गोऽपास्तः। तादृशलक्षणाया उभयवादिसिद्धत्वादिति।

वयं तु पश्यामः। प्रतिज्ञायां हेतौ च न ज्ञानलक्षणा। तथा हि— शब्दादावनित्यत्वतदभावयोरेव [4]विप्रतिपत्तिविषयत्वेनानाकाङ्क्षितानित्यत्वज्ञानस्य प्रतिज्ञातत्वे अप्राप्तकालत्वं दुर्वारमेव। न च हेत्वन्वयप्राक्कालिकबोधस्य [5]ज्ञानाविषयतया [6]नाप्राप्तकालतेति वाच्यम्। वक्तृतात्पर्यविषयीभूतज्ञानाभिधानस्य तथाप्यनाकाङ्क्षितत्वेन दोषतादवस्थ्यात्। न च [7]हेत्वनन्वयः, प्रतिज्ञानन्तरं कुत इति ज्ञापकाकाङ्क्षायामेव हेतुप्रयोगेन तज्ज्ञानजनकज्ञानविषयत्वरूपज्ञापकत्वे पञ्चम्याः शक्तिकल्पनात्। अन्यथा ततस्तत्प्रतीत्यनुपपत्तेः।

न च लक्षणयान्यथासिद्धिः। सुब्विभक्तौ तदभावात्। अस्तु वा पञ्चम्या ज्ञापकत्वे लक्षणा। तथापि हेतुपदे न लक्षणा। न च सुब्विभक्तौ तदभावः।

---

1. ग. 'पुम्' नास्ति
2. ग. अन्यतरस्य
3. ग. 'उभयोरप्यावश्यकतया तल्लक्षणायाम्' नास्ति।
4. ख. विप्रतिपत्तिः स्वविषयत्वेन
5. ग. ज्ञानविषयतया
6. क. 'न' नास्ति।
7. ख. हेत्वन्वयः

अनुमितिहेतुज्ञानकारणधूमवत्त्वादितिशब्दजन्यज्ञानवृत्तिप्रतिज्ञादिजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यत्वं हेतुत्वमित्यन्ये ।

जातिं विना केन रूपेण ज्ञानस्यानुमितिजनकत्वं, वाक्यविशेषजन्यत्वस्यापि जन्यतावच्छेदकरूपापरिचये दुर्ग्रहादित्यपरे ।

अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वमन्वयिहेतुत्वम् । एतदेव व्यतिरेकव्याप्त्यभिधायकपदप्रक्षेपाद् व्यतिरेकिहेतुत्वम् । अन्वयव्यतिरेकोदाहरणाकाङ्क्षाप्रयोजकतथाभूतावयवत्वमन्वयव्यतिरेकिहेतुत्वम् ।

---

प्रकाशः

यत्तु[1] धूमविषय एव ज्ञाने लक्षणेति धूमापस्थितिः । विशिष्टलक्षणया च गङ्गाविशिष्टतीरोपस्थितिरविशिष्टेति, तत्र लक्षणावसरे वक्ष्यामः ।

अनन्तरोक्ते अन्येषां मते परैर्या युक्तिरुक्ता तां दर्शयति—जातिं विनेति । तत्र तादृशज्ञानजनकतावच्छेदकसत्त्वे तदेव लक्षणम्, असत्वे [2]तदपि दुर्ग्रहमित्यक्षर सबीजं पूर्वमुक्तप्रायमिति नेह दर्शितम् ।

---

तर्कचूडामणिः

'आपो दाराः' इत्यादौ तद्दर्शनेन तत्प्रवादस्य प्रायिकमात्रत्वात् । एवं 'हेतुपदेन ज्ञानलक्षणात्' इत्यत्र हेतुविभक्त्या ज्ञापकत्वलक्षणादित्यर्थो बोध्यः ।

---

1. ख. धूमविशिष्ट 2. क. 'तदपि' नास्ति

### प्रकाशः

**अन्वयेति** । अत्र जनकान्त केवलव्यतिरेकिहेतावतिव्याप्तिवारणाय । प्रतिज्ञाया अपि परम्परया तत्प्रयोजकत्वात्, तद्वारणाय हेतुविभक्तिमदिति । अत्रोदासीनवाक्यातिव्याप्तिवारकत्वेनोपात्तयोः प्रथमचरमावयवपदयोरन्यतरगर्भं [1]लक्षणद्वयं बोध्यम् । अन्यथा अन्यतरावयवपदवैयर्थ्यापत्तेः ।

नन्विदमन्वयव्यतिरेकिहेताव[2]तिव्याप्तम् । न चान्वयव्याप्तिमात्राभिधायकत्वं विवक्षितमिति वाच्यम् । केवलान्वयिहेतौ मात्रपदव्यवच्छेद्यव्यतिरेकव्याप्तेरप्रसिद्धेरिति चेत्—न । अन्वयव्याप्त्यभिधायकावयवमात्राभिधानप्रयोजकेति विवक्षणात् । न चैवं मात्रपदव्यवच्छेद्यालाभः । व्यतिरेकव्याप्तेरभावेऽपि विशेषादर्शनदशायां तदभिधायकावयवप्रसिद्धेः । तत्प्रतीतिजनकस्यैव तदभिधायकत्वात् । दशाविशेषे अन्वयव्यतिरेकिहेतुः संग्राह्य एवेत्याहुः । न च केवलान्वयिनि संशयाभावेन न्यायानवतारात् तदीयो [3]हेतुरसंग्राह्य एवेति वाच्यम् । अनुमित्सयापि प्रयोगसम्भवादिति भावः ।

---

### तर्कचूडामणिः

दृष्टान्तं विघटयति—**तत्रेति** । नन्वन्येषामेव मते किं दूषणं परैरुच्यते, उत मतान्तरे । नोभयमपि, दूषणानभिधानात् अर्थान्तराप्रतिपादनाच्चेत्यत आह—**अन्येषामिति** । जयदेवसमाधिमाह—**अन्वयेति** । ननु व्यतिरेकव्याप्त्यभावे तत्प्रमापकत्वरूपतदभिधायकत्वमस्याप्रसिद्धमित्यत आह—**तादृति** । पक्षविशेष्यकसंशय एवानुमानाङ्गमित्यङ्गीकृत्य परिहरति—**अनुमित्सयापीति** । वस्तुतो भिन्नविषयसंशयसत्त्वात् [4]कथाप्रवृत्तिरिति ध्येयम् । पक्षसत्त्वादिमत इत्यस्य हेतुपदेनानन्वयादाह—**पक्षेति** ।

---

1. ख. लक्षणं बोध्यम्
2. क. अतिव्यापकं स्यात् ।
3. ख. हेतुः संग्राह्यो नास्त्येवेति
4. ख. ग. तथा प्रवृत्तिः

यद्वा पक्षसपक्षसतो विपक्षासतो हेतुवचनमन्वयव्यतिरेकि, अत्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरणपक्षसपक्षसद्धेतुवचनं केवलान्वयि ।

यद्वा अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयकशाब्दधीजनकप्रतीतान्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्व-

---

## प्रकाशः

पक्षेति । [1]पक्षसत्त्वादिमतोऽर्थस्य प्रतिपादकहेत्ववयव इत्यर्थः । अत्र च सद्धेतुविषयकः एव हेत्ववयवः संग्राह्य इति स्वरूपासिद्धिविषयकवारणाय पक्षपदम् । एतच्चोपलक्षणम् अबाधितत्वाद्यपि बोध्यम् । असाधारणविषयकवारणाय [2]व्यतिरेकिहेत्वतिव्याप्तिवारणाय च सपक्षपदम् । व्यभिचारिविरुद्धविषयकवारणाय विपक्षासत इति । एवमग्रिमलक्षणेऽपि बोध्यम् । एवं चेन्न व्याख्यायते तदा वारणीयहेत्ववयवस्य पदान्तरेणैव वारणात् प्रथमलक्षणे पक्षपदं द्वितीयलक्षणे पक्षसपक्षपदं चानर्थकमापद्येतेति भावः ।

---

## तर्कचूडामणिः

[3]ननु पक्षसत्त्वादिपदं व्यर्थम् । न चासिद्धहेतुविषयहेत्ववयवातिव्याप्तिवारणाय तदिति वाच्यम् । आभासानाभाससाधारणहेत्ववयवमात्रस्यैव लक्ष्यत्वात् । अन्यथा पूर्वोक्तलक्षणायां तत्रातिव्याप्त्यापत्तेरित्यत आह—अत्रेति । नन्वेवं पक्षवृत्तिबाधितहेतावतिव्याप्तिरित्यत आह—एतदिति । एवमिति । सद्धेत्ववयवस्यैव लक्ष्यत्वमाश्रित्य विशेषणसार्थक्यं द्रष्टव्यमित्यर्थः । एवं चेदिति । प्रथमलक्षणं वारणीयकेवलान्वयिकेवलव्यतिरेकिणोः सपक्षविपक्षपदाभ्यां, द्वितीयलक्षणे वारणीय-

---

1. ख. पक्षादिसतो यस्य प्रतिपादको
2. क. 'व्यतिरेकिहेत्वतिव्याप्तिवारणाय' नास्ति ।
3. ग. पक्षसत्त्वादिति पदं

मन्वयिहेतुत्वम् । एतदेवाप्रतीतान्वयसाध्यसाधनेतिविशेषणात् व्यतिरेकिहेतुलक्षणम् । कथायां धूमादित्येव प्रयोक्तव्यं, न तु धूमवत्त्वादिति, मतुपो व्यर्थत्वात् ।

## प्रकाशः

दशाविशेषान्वयिसाधारणं[1]लक्षणान्तरमाह—**अनुमितीति**। अत्र कारणान्तमुदासीन[2]वाक्येऽतिव्याप्तिवारणाय । तस्मादिति निगमनांशेऽतिव्याप्तिवारणाय **साध्याविषयकेति**। साध्यपदं स्पष्टार्थम् । केवलव्यतिरेकिण्यतिव्याप्तेराह—[3]**प्रतीतान्वयेति** । प्रतीतान्वयमात्रेत्यर्थः । प्रतीतान्वयं यत् [4]साध्यं तस्य साधनं तद्वाचकमित्यर्थः । यो यो[5]धूमवानित्युदाहरणांशेऽतिव्याप्तेराह—**हेतुविभक्तिमदिति** । दशाविशेषे व्यतिरेकिसाधारणं लक्षणमाह—**एतदेवेति** । **व्यर्थत्वादिति** । पक्षधर्मतायास्तदानीमनाकाङ्क्षितत्वेन [6]मीमांसकवत् तद्बोधनायापि मतुबादिर्न प्रयोज्यः । तथा चानाकाङ्क्षिताभिधाने अर्थान्तरापातादिति भावः।

## तर्कचूडामणिः

व्यतिरेकिणोऽत्यन्ता[7]भावाप्रतियोगिपदेन च वारणादित्यर्थः । दशाविशेषान्वयि-[8]न्यव्याप्तिं वारयति—**दशेति** । [9]नन्वन्वयव्यतिरेकिणोऽपि प्रतीतान्वयसाध्य-[10]साधनकत्वात् तत्रातिव्याप्तिरित्यत आह—**प्रतीतेति** । ननु प्रतीतान्वये साध्यसाधने इत्यर्थाङ्गीकारे हेत्ववयवपदस्य तदप्रतिपादकतया असम्भव इत्यत आह—**प्रतीतेति** । ननु पक्षसम्बन्धप्रतिपादनार्थत्वसंभवे कथं व्यर्थत्वमित्यत आह—**पक्षेति** । व्यतिरेकदृष्टान्तमाह — **मीमांसकवदिति** । मामांसकमते ह्युपनयाभावेन हेत्ववयवस्यैव पक्षसम्बन्धप्रतिपादकत्वाभ्युपगमादिति भावः ।

---

1. ख. लक्षणमाह
2. ख. 'वाक्येऽतिव्याप्ति' नास्ति ।
3. ख. 'प्रतीतान्वयेति' नास्ति
4. क. साध्यं यस्य साधनस्य तत् साधनं तथा तेन तस्य तद्वाचकत्वमित्यर्थः ।
5. ख. धूमवानित्यत्रोदा-
6. क. मीमांसकादिवत्
7. क भावप्रति-
8. ख. न्यतिव्याप्तिं
9. ग. ननु व्यतिरेकिणोऽपि
10. ख. साधकत्वात्

सामान्यवत्त्वे सति बाह्यकरणप्रत्यक्षत्वादित्यपार्थकम् । विभक्त्युस्थापितहेतुत्वेन सामान्यवत्त्वस्य विभक्त्यन्तरावरुद्धस्यानन्वयादिति केचित् । तन्न । सतिसप्तमीबलात् सामान्यवत्त्वस्य बाह्यकरणप्रत्यक्षत्वस्य च सामा-

## प्रकाशः

केचित्तु व्यर्थत्वात् व्यर्थविशेष्यत्वादित्यर्थः । धूममात्रस्यैव व्याप्यत्वेन तत्सम्बन्धस्य गुरुत्वादिति व्याचक्षते । तन्न । [1]धूमवत् धूमवत्त्वस्यापि व्याप्यत्वेन व्यर्थत्वाभावात् । [2]समानाधिकरणावच्छेदकद्वयसमावेशे अन्यतरलाघवस्यैव तद्बीजत्वात् । न चैवं [3]धूमवत्त्वादिति वाद्युक्ते त्वदुक्तार्थान्तरमपि न [4]शक्योद्भावनम् । यतः पक्षधर्मतार्थं न मया मतुप्प्रयोगः कृतः, किं तु विशिष्ट एव हेतुरित्युक्त्वा परेण परिहारकरणसम्भवादिति वाच्यम् । उदाहरणोपनयाभ्यामेव हेतुपरिच्छेदात् । न हि धूमवत्त्वहेतौ यत्र धूम इत्युदाहरणं धूमवांश्चायमित्युपनयो युज्यते । किं तु यत्र धूमवत्त्वमित्युदाहरणं, [5]धूमवत्त्ववांश्चायमित्युपनयश्चेत्याहुः ।

एवं ह्यत्र वह्निव्याप्यो धूम इत्येवोपनयः स्यात्, मतुपो व्यर्थत्वात् । यदि च कथकसम्प्रदायानुरोधात्तत्र तथा, तदात्रापि तुल्यम् । एवं प्रतिज्ञादावपीति [6]चिन्त्यम् ।

## तर्कचूडामणिः

[7]समानाधिकरणेति । अन्यथा लाघवेन कृतकत्वमेव हेतुरिति गुरुशरीरसामान्यवत्त्वादिविशिष्टं लिङ्गं न स्यादिति भावः । ननु तयोर्हेतुद्वयसाधारणतया कथं

1. क. 'धूमवत्' नास्ति ।
2. क. अवच्छेदकद्वयसामानाधिकरण्ये
3. क. धूमवत्त्वादित्युक्ते
4. क. शक्योत्थापनं, यावता
5. ख. धूमवांश्चायं
6. ख. व्यर्थत्वादित्येव चिन्त्यम्
7. ख. सामानाधिकरण्येति

नाधिकरण्योपस्थितौ विशिष्टे हेतुत्वान्वयात् तथैव व्युत्पत्तेः। न ह्ययमर्थोऽस्मान्नावगम्यत इति।

## उदाहरणम्

हेतावुक्ते कथमस्य गमकत्वमित्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनाय उदाहरणम्। तत्रानुमिति-

## प्रकाशः

**सतिसप्तमीबलादिति।** [1]विरुद्धार्थिकाया एव विभक्तेर्विभक्त्यर्थान्तरान्वयविरोधित्वात। अत एव प्रतिबन्धकान्यस्य सत इत्यादिरपि हेतुरविकल इति भावः। **व्याप्तेरिति।** विशेषणत्वेनास्याः प्रथमोपस्थिततया प्रथममाकाङ्क्षाविषयत्वादित्यर्थः। पक्षधर्मतायाश्च वैशिष्ट्यरूपत्वेनान्यथात्वादिति भावः।

## तर्कचूडामणिः

ताभ्यां निर्णय इत्यत आह — **न हीति।** ननु विभक्त्यन्तरावरुद्धस्यापि [2]विभक्त्यन्तरान्वये द्वितीयान्वितस्यापि [3]तृतीयान्वितत्वात्तैरित्यत आह— **विरुद्धेति।** **प्रतिबन्धकेति।** प्रतिबन्धकान्यस्य सतः प्रारिप्सितप्रतिबन्धकनिवर्तकत्वं मङ्गलत्वमित्यत्र तल्लक्षणस्येतरभेदानुमितौ लिङ्गत्वादिति भावः। ननूपत्तौ पौर्वापर्याभावात् कथं प्राथम्यमित्यत आह— **विशेषणत्वेनेति।** परामर्शस्य व्याप्तिप्रकारकत्वनियमाभावेऽपि अव्यभिचारप्रकारकतया अव्यभिचारप्रदर्शकोदाहरणस्य प्राथम्यमिति भावः।

अत्र भूमिनिष्ठालोकस्य सवितृरूपमाध्यात्यन्ताभाववद्वामित्वेन तादृशानुमितिवादिमते व्याप्यत्वमपि लिङ्गस्य दुर्लभमिति पक्षधर्मतायां विप्रतिपत्तौ व्याप्तावपि विप्रतिपत्तिरेव। किं च आकाङ्क्षाक्रमेण निरूपणक्रमः। तत्क्रमश्चोपस्थितिक्रमेणेतिबहुवादिसिद्धत्वमकिंचित्करमित्यनुशयं सूचयति— **केचिदिति।** ननूदाहरणे अन्यो-

1. क. विरुद्धार्थिकायाया विभक्तेः
2. क. 'अपि' नास्ति
3. ग. तृतीयान्वयानुपपत्तिः

हेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनकशब्दत्वमुदाहरणत्वम्। सामान्यलक्षणे साध्य-

---

## प्रकाशः

केचित्तु सकलवादिसिद्धत्वमेव व्याप्तेः प्राथम्यम्। पक्षधर्मतायामुपरि सवितेत्यादौ कश्चिद्विप्रतिपद्यतेऽपीत्याहुः।

तत्प्रदर्शनायेति। ([1]या) व्याप्तिर्यथोदाहरणेन [2]प्रदर्श्यते तथोक्तं प्राक्। ग्रन्थकृदभिमतव्याप्त्युपदर्शकत्वं च परम्परया उदाहरणस्य द्रष्टव्यम्, पदार्थविधया वाक्यार्थविधया वा ततस्तदलाभात्। किं तु तेन सहचारे बोधिते मानसो व्याप्तिग्रहो भवतीति। [3]तत्रेति। अत्र जनकान्तमुदासीन[4]वाक्यातिव्याप्तिवारणाय न्यायजज्ञानजनकपरम्। प्रतिज्ञादिवारणाय बोधजनकेत्यन्तम्। [5]उक्तसम्बन्धबोधजनकत्वं च [6]तद्बोधतात्पर्यकत्वम्। [7]उपनये च पक्षधर्मताबोधने तात्पर्यमिति न तत्रातिव्याप्तिः। यद्वा तत्सम्बन्धविधायकत्वमित्यर्थः। उपनयस्य च तत्सम्ब-

---

## तर्कचूडामणिः

न्धाभावादिवाचकपदाभावात् कथं तस्य [8]तत्प्रदर्शकत्वमित्यत आह—व्याप्तिरिति। [9]ननूपनयस्य व्याप्तिपरत्वाभावे ततो विशेषणतयापि न तत्प्रतीतिः स्यादित्यनुशयादाह — यद्वेति। ननु सामान्यलक्षणस्थाने साध्यसाधनादिपदप्रक्षेपात् विशेषलक्षणस्वीकारे उदासीनवाक्यातिव्याप्तिरित्यत आह—व्याप्यत्वेति। [10]पूर्वग्रन्थ-

---

1. ख. मदीया व्याप्तिः
2. ख. उपदिश्यते
3. क. अत्रेति
4. क. 'वाक्यातिव्याप्ति' नास्ति।
5. ख. निरुक्त-
6. क. सम्बन्धबोध-
7. क. 'उपनये च .........नातिव्याप्तिः' इति ग्रन्थस्त्रुटितः।
8. क. 'तत्' नास्ति
9. क. ख. ननूपन्नस्य
10. ख. पूर्वग्रन्थविशेषणत्वं

साधनसम्बन्धबोधकत्वं साध्यसाधनाभावसम्बन्धबोधकत्वं च विशेषलक्षणद्वयम् ।

न्यायावयवदृष्टान्तवचनमुदाहरणमिति तु न । दृष्टान्तप्रयोगस्य सामयिकत्वेनासार्वत्रिकत्वात् । यो यो धूमवान् सोऽग्निमानित्येव व्याप्तिप्रतीतेः ।

नापि प्रकृतानुमितिहेतुलिङ्गपरामर्शपरवाक्यजन्यज्ञानविषयव्याप्त्युपनायकं वचनं तत् । उपनयातिव्याप्तेः ।

अत उपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणम् । एतदेवान्वयव्यतिरेकव्याप्तिविषयत्वविशेषितं विशेषलक्षणद्वयमित्यन्ये ।

---

## प्रकाशः

न्धानुवादकत्वमिति । शब्दपदं च यावदवच्छेदेन तत्सम्बन्धबोधकत्वं तावत्समुदायपरम् । तेनोदाहरणैकदेशे नातिव्याप्तिः । सामान्यलक्षण इति । व्याप्यत्वाभिमतेत्यादि[1]स्थान, इति शेषः । कस्यचिन्मतमपाकरोति — न्यायावयवेति । न्यायावयवत्वे सति दृष्टान्तप्रतिपादकत्वमित्यर्थः । उपनयेत्युपलक्षणम्; निगमनेऽतिव्याप्तिरपि द्रष्टव्या ।

अन्ये (तु) इत्यस्वरसप्रदर्शनम् । तद्बीजं तु तादृशजिज्ञासाजनकत्वमनुगतावच्छेदकासत्त्वे दुर्ग्रहम् । तत्सत्त्वे च तदेव लक्षणमिति द्रष्टव्यम् ।

---

## तर्कचूडामणिः

शेषत्वं वारयति— कस्यचिदिति । ननु न्यायावयवशब्दस्य दृष्टान्तवचनविशेषणत्वे असम्भवः । [2]तस्यावयवावयवत्वेनावयवत्वाभावादित्यत आह— न्यायेति ।

---

1. ख. स्थले 2. क. तस्यावयवत्वेन

अत्र च व्यभिचारवारणाय वीप्सामाहुः । यत्र च सामानाधिकरण्यादेव व्याप्तिस्तत्र न वीप्सा । केवलान्वयिन्यभेदानुमाने च वीप्सायामपि व्यभिचारतादवस्थ्यमिति तु वयम् ।

---

## प्रकाशः

अत्र व्यभिचारेति। व्यभिचारिसाधारणसाध्यसामानाधिकरण्यमात्र[1]प्रतीतिवारणाय वीप्सामाहुरित्यर्थः । तेन वीप्सितशब्देन यावत्साधनाधिकरणोपस्थितौ तत्र [2]साध्यवत्त्वविधानात् यावत्साधनाश्रयाश्रितसाध्यसम्बन्धो व्याप्तिर्गृह्यत इति भावः । ग्रन्थकृदभिमतव्याप्तिपक्षे विशिष्टसामानाधिकरण्यरूपयास्तस्याः वीत्सयाप्यदर्शनात् किं तयेति चिन्त्यम् ।

ननु तत्रापि व्यभिचारधीवारणाय सा । तथा च [3]तया सकलसाधनाधिकरणे साध्यवत्त्वबोधनात् व्यभिचारशङ्काशून्यसहचारज्ञानात् भवति [4]मानसो व्याप्तिग्रह इति चेत्—[5]न । यदि ह्युदाहरणस्य व्यभिचारज्ञानविरोधिज्ञानोत्पादकत्वमनुमतं तदा व्याप्त्युपदर्शकत्वस्यापि सम्भवेन व्याप्तिग्रहस्य मानसत्वोपवर्णनविरोधात् व्यभिचारज्ञानविरोधिज्ञान[6]विषयत्वस्यैव व्याप्तित्वौचित्यात् । यत्रेति ।

---

## तर्कचूडामणिः

ननु वीप्सायां कथं व्यभिचारवारकत्वम् । [7]सत्यामपि तस्यां व्यभिचारिणि [8]तदवारणादित्यत आह--व्यभिचारीति। तत्रापि--ग्रन्थकृदभिमतव्याप्तावपीत्यर्थः । नन्वशेषसाधनाश्रयाश्रितत्व [9]प्रदर्शनस्यान्योन्याभावग… व्यभिचारज्ञानविरोधित्वेऽपि

---

1. ख. प्रतीतिप्रसङ्गवारणाय
2. ख. साध्यसत्त्व-
3. क. 'तया' नास्ति
4. क. मनसा
5. क. 'न' नास्ति
6. ख विषयस्यैव
7. ख. असत्यामपि
8. ख. तद्वारणात्
9. ग. 'प्रदर्शन' नास्ति

## प्रकाशः

ननु समानाधिकरण्यमात्रस्य व्यभिचारिसाधारणतया [1]केवलान्वयिन्यपि विशिष्टसामानाधिकरण्यमेवावश्यं व्याप्तत्वेनाभ्युपेयम् । तल्लाभश्च यदि वीप्सां विनापि स्यात् तदा धूमादावपि स्यात् । न चेत्तदा केवलान्वयिन्यपि तां विना [2]मनसा न तल्लाभ इति तत्राप्युपादेयैव सा । [3]अन्यथा धूमादिस्थलेऽपि तज्ज्ञानार्थमपि सा न स्यात् । न च धूमादौ व्यभिचारसंशयः सम्भवति अत्र तु नेति विशेषोऽस्तीति वाच्यम् । हेतुसमानाधिकरणात्यन्ताभावप्रतियोगि साध्यं न वेति संशयस्यात्रापि सम्भवात् । न च केवलान्वयित्वेन ज्ञाते तदसम्भव इति तत्रैव तदुपादानमिष्टं [4]नान्यत्रेति वाच्यम् । वादिकर्तव्यत्वेन तत्रापि तदुपादानस्य कर्तुं [5]न्याय्यत्वात् । अन्यथा केवलान्वयित्वेन ज्ञातस्य [6]प्रमेयत्वादिलिङ्गस्य पक्षधर्मतापि नोपदर्श्येत । तथात्वे च कथकसम्प्रदायविरोधात् । असाधकताप्रयोगे च नियमत उभयवादिसंमतिविषयतया कथकसम्प्रदाय[7]सिद्धतया च व्याप्त्यनुपन्यासः ।

---

## तर्कचूडामणिः

नोदाहरणस्य व्याप्त्युपदर्शकत्वम्, अन्योन्याभावादिवाचकपदाभावादिति न मानसत्वविरोध इत्यत आह—व्यभिचारेति । अशेषसाधनाश्रयाश्रितत्वस्य व्यभिचारधी[8]विरोधिधीविषयत्वे तस्यैव व्याप्तिरूपत्वम्, न त्वन्योन्याभावगर्भस्येत्यर्थः ।

उपाध्यायोक्तं शङ्कते—नन्विति । जयदेवममाधिं शङ्कते—न चेति । इष्टापत्तिमाशङ्क्याह—तथात्व इति । नन्वेवमसाधकताप्रयोग इवात्रापि केवलान्व-

---

1. क. 'केवलान्वयिन्यपि ........ चेत्तदा' नास्ति ।
2. ख. 'मनसा' नास्ति
3. ख. 'अन्यथा........सा न स्यात्' नास्ति ।
4. क 'नान्यत्र' नास्ति
5. ख उचितत्वात्
6. क. 'प्रमेयत्वादिलिङ्गस्य' नास्ति
7. क. 'सिद्ध' नास्ति
8. ख. विषयत्वेन

## प्रकाशः

किं च यदि केवलान्वयित्वेन ज्ञाते व्यभिचारशङ्काविरहात् वीप्सानुपादानं तदा असहचारशङ्काया अपि तत्राभावात् सहचारबोधनप्रयोजनमपि नास्तीत्युदाहरणमपि[1] न क्रियेत । यदि च सहचारज्ञानं विना मनसापि न व्याप्तिग्रह इति तद्बोधनाय तदुपादानम्, तदा अव्यभिचारज्ञानं विनापि न ततो व्याप्तिग्रह इत तद्विशिष्टसामानाधिकरण्यज्ञापनाय वीप्साघटितमुदाहरणमप्यावश्यकम् । एवं चाभेदानुमानेऽपि वीप्सा उपादेयैव । तथा चावस्थाभेदेन [2]नानात्वपुरस्कारात् [3]एकस्यैव पक्षत्वं दृष्टान्तत्वं च न विरुद्धमिति [4]वीप्सापि नानुपपन्नेति । तस्मादत्र समाधानमपि चिन्त्यमिति । वीप्सायामपि व्यभिचारतादवस्थ्यमिति ।

---

## तर्कचूडामणिः

यित्वेन यदोभयसंमतिः तदैव वीप्सावैयर्थ्यम् । अन्यत्र तु तदैव सा देयैवेत्यत आह — किं चेति । [5]नन्वभेदानुमाने साधनाश्रयस्यैकतया[6]साकल्यार्थेऽपि वीप्सानुपपत्तिरित्यत आह —यथेति ।[एवं चेति] । वस्तुत एकस्याप्यशेषस्वरूपसाकल्यं सम्भवत्येवेति ध्येयम् ।

तस्मादिति । इदमत्र समाधानम् । व्याप्तिग्राहकसहचारज्ञानाय सामानाधिकरण्यप्रतिपादकोदाहरणावश्यम्भावेऽपि वीप्साया अनावश्यकत्वम् । तथाप्यन्योन्याभावादि[7]गर्भाव्यभिचारस्याप्रतीयामानत्वात् । यथा चाशेषसाधनाश्रयाश्रिततत्साध्यसम्बन्धो न व्याप्तिस्तथा वक्ष्यामः । ननु वीप्सायां सकलसाधनाधिकरणलाभात्

---

1. ख. ग. एव
2. ख. नरत्व-
3. ख. एकस्य पक्षत्वं
4. क. वीप्सानुपपन्नेति
5. ख. ननु भेदानु-
6. क. साकल्यार्थं वीप्सा-
   ग. साकल्यार्थ वीप्सा-
7. ख. गर्भव्यभिचारस्य प्रतीय-

वीप्सा च यत्पदे न तत्पदेऽपि । विरूपोपस्थितयोरपि तत्पदेन परामर्शात् बुद्धिस्थवाचकत्वादिति न व्युत्पत्तिविरोधः । यथा 'यद्यत्पापं प्रतिजहि' इत्यत्र ।

## प्रकाशः

[1]अनेकव्यक्त्युपदर्शिकाया वीप्सायाः साधनाधिकरणद्वित्रिव्यक्त्युपस्थापनेऽपि चरितार्थत्वसम्भवात् अधिकरणान्तरे साध्यवत्त्वाग्रहात् ततोऽपि न व्याप्तिग्रह इत्यर्थः ।

ननु [2]वीप्सया व्युत्पत्तिबलात् व्याप्तिग्रहः स्यात् । तथा हि वीप्सितशब्दश्रवणानन्तरं द्वितीयशब्दस्यानुवादकतया प्रयोजनजिज्ञासायां व्युत्पत्तिबलात् व्याप्तितात्पर्यकत्वे गृहीते व्याप्तिबोधस्यैव प्रयोजनतया प्रथमयत्पदोपस्थाप्यभिन्नं सर्वं साधनाधिकरणं तदन्यत्वेनानुगतेन रूपेणोपस्थाप्यते । एवं च सर्वत्र साधनाधिकरणे साध्यवत्त्व[3]बोधनानन्तरं भवति व्याप्तिग्रह इति चेत्—न । हन्तैवं व्युत्पत्त्यादरे वीप्सां [4]विनापि यद्योगप्राथम्याभ्यां व्याप्तितात्पर्यकत्वनियम इति व्युत्पत्त्यन्तरादेव सर्वसिद्धात् अन्यत्र क्लृप्तात् सकृदुच्चरितयत्पदादेव यावत्साधनाधिकरणोपस्थितौ

## तर्कचूडामणिः

कथं व्यभिचारतादवस्थ्यमित्यत आह—**अनेकेति** । **व्युत्पत्तिबलादिति** । व्याप्तितात्पर्यकत्वग्राहकमानं व्युत्पत्तिशब्देन विवक्षितमिति ध्येयम् । **तदन्यत्वेनेति** । प्रथमयत्पदोपस्थाप्यं यत् तद्भिन्नत्वेनेत्यर्थः । तथा च न प्रथमयत्पदवैयर्थ्यमिति भावः । **यद्योगेति** । यत्पदयुक्तत्वात् प्रथमत उक्तत्वाच्च धूमस्य व्याप्यत्वं तात्पर्यविषय इति निश्चीयत इत्यर्थः । **यावदिति** । व्याप्तितात्पर्यग्रहानुरोधेन यत्पदस्य-

1. ख. अनेकव्यक्त्युपस्थापनसमर्थायाः
2. क. वीप्सायाः
3. क. बोधनात् भवति
4. ख. विनैव

## प्रकाशः

वीप्सावत् व्याप्तिग्रहसम्भवे किं गुरुणा वीप्सादरेण। यद्योगप्राथम्य[1]व्युत्पत्ति-पुरस्कारेण स्वल्पाक्षरेणोदाहरणे सम्भवति न वीप्साव्युत्पत्त्यादर इत्यत्र तात्पर्यम्। तदिदमुक्तम्--यद्योगप्राथम्याभ्यामेव व्याप्तौ लब्धायां वीप्सावधारणे स्फुटार्थं इति।

(वीप्सायां) [वीप्सया] व्याप्तिलाभमभ्युपेत्याह—वीप्सा चेति। यद्यपि तत्पदवीप्सायामपि नानन्वयः। तत्रापि [2]यत्पदद्वयोपस्थाप्ययोः प्रत्येकं तत्पदद्वयेन परामर्शसम्भवात्। यथा 'सा सा ह्रिया नम्रमुखी बभूव' इत्यत्र। तथाप्येक-पदोपादानादप्यभिमतसिद्धिसम्भवे [3]तत्पदद्वयोपादाने प्रयत्नगौरवम् इत्यभिप्रायेण तदुक्तमिति द्रष्टव्यम्। विरूपेति। यत्पदद्वयात् भिन्नभिन्न[4]रूपेणोपस्थितयो-रपि केनचिदेकेन[5] धूमवत्त्वादिरूपेण एकतत्पदेन परामर्शसम्भवादित्यर्थः।

अत्र वदन्ति। 'नित्यवीप्सयोः' (पा. सू.8-1-4) इति सूत्रेण वीप्सायां सुबन्तस्य एकपदस्य स्थाने पदद्वयात्मकः समुदाय आदिश्यते। वीप्सा च

---

## तर्कचूडामणिः

यावत्परत्वकल्पनादिति भावः। नन्वेवमपि व्युत्पत्तिसहकृतवीप्सायाः तद्ग्राहकत्वात् [6]मूलानुपपत्तितादवस्थ्यमित्यत आह -- यद्योगेति। पारायणसंमतिमाह -- (यदिति।) [तदिति]। यत्पदे वीप्साया निराकरणान्मूलानुपपत्तिरित्यत आह--- वीप्सयेति। यथेति। "यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव" इत्यत्र उभयत्र तद्दर्शनादिति भावः। ननु भिन्नभिन्नरूपेणोपस्थितयोस्तत्पदे-नापि तेन रूपेण परामर्शे वृत्तिद्वयविरोध इत्यत आह--यत्पदेति। प्रभाकृदुक्तं शङ्कते--अत्रेति।

---

1. क. व्युत्पत्तिस्वीकारे स्वल्पाक्षरेणोदाहरणं भवतीति न
2. ख. यत्पदोपस्थितयोः
3. ख द्वितीयतत्पदोपादानप्रयत्न-
4. क. रूपोपस्थितयोः
5. क. 'एकेन' नास्ति।
6. क. 'मूलानुपपत्ति.........निराकरणात्' नास्ति।

## प्रकाशः

[1]तत्प्रयोक्तुर्व्याप्तुमिच्छा । व्याप्तिश्च तदभिधेयस्य साकल्येनापरपदार्थेन सह सम्बन्धः । तथा च [2]यत्पदद्वयसमुदाय एकपदतामापन्नः अवयवद्वय[3]वृत्तिशक्तिपुरस्कारेण युगपत् साकल्येनैव स्वप्रतिपाद्यमुपस्थापयतीति व्युत्पत्तिरवसीयते । अत एव समुदायस्य सकलस्वावयवार्थोपस्थापकत्वमेकपदत्वं [4]च पुरस्कृत्य तत्र बहुवचनापत्तिं 'नृभिर्नृभिः' इत्यत्र नकारस्य णत्वं चाशङ्क्य परिहृतवान् न्यासकारः । तस्माद्वीप्सायामपि व्यभिचारतादवस्थ्यमित्यसंगतमेव । यत्पदद्वयसमुदायेन [5]तत्र हेतुमत्तया बुद्धिस्थानां साकल्येनैवोपस्थापनात् ।

एवं विरूपोस्थितयोरित्याद्यप्यसंगतम् । नहि तत्र यत्पदद्वयं [6]प्रत्येकं परस्परनिरपेक्षं मिथोविलक्षणरूपद्वये सकलस्वाभिधेयमभिधत्ते, किं त्वेकेनैव रूपेण तत्समुदाय एव । अन्यथा यद्यद्धूमवत् इति यत्पदद्वयान्वयार्थं धूमवत्पदस्यावृत्तिप्रसङ्गादिति ।

---

## तर्कचूडामणिः

ननु वीप्सायां समुदायस्यादेशेऽपि व्याप्तौ किमायातमित्यत आह—वीप्सेति । ननु समुदायस्य वाक्यत्वेनाशक्ततया कथं व्याप्तिप्रतिपादकत्वमित्यत आह—तथा चेति । पङ्कजादिवत् समुदायोऽपि शक्त एवेत्यर्थः । स चासौ पदसमुदायस्तत्पदसमुदाय इतिवत् पदद्वयसमुदाय इत्यर्थः । क्वचित् यत्पदेत्येव पाठः । साकल्येनेति । प्रकारेणेति शेषः । अत एवेति । सकलवाचकत्वात् एकपदत्वादित्यर्थः । साकल्यवाचकत्वाभावे बहुवचनशङ्कायाः एकपदत्वाभावे [7]णत्वशङ्कायाश्चायोगादिति भावः । प्रकृते योजयति—तस्मादिति । तत्समुदाय इति यत्पदद्वयसमुदाय इत्यर्थः ।

---

1. ख. तत्पदद्वययोर्व्याप्तुमिच्छा
2. ख. तत्पद—
3. क. 'वृत्ति' नास्ति ।
4. क. 'च' नास्ति ।
5. ख. 'तत्र' नास्ति ।
6. ख. 'प्रत्येकं' नास्ति
7. ख. ग. एकत्वशङ्कायाः

## प्रकाशः

अत्र ब्रूमः । 'वीप्सायामपि व्यभिचारतादवस्थ्यम्' इत्यस्य अनुमितिहेतुव्याप्त्यग्रहतादवस्थ्यमित्यर्थः । ग्रन्थकृन्मते ह्यन्योन्याभावगर्भव्याप्तिरनुमितिहेतुः । सा च वीप्सया उक्तरीत्या सकलसाधनाधिकरणे साध्यवत्त्वोपस्थापनेऽपि नोपस्थापयितुं शक्यते, अन्योन्याभावादिवाचकपदाभावात् । एवं च वीप्सायाः सत्त्वे असत्त्वे वा यदि व्याप्तिग्रहानुकूलसहचारमात्रोपस्थापकत्वमुदाहरणस्य, तदा किं वीप्सया । न च वीप्सायाः सर्वस्मिन् साधनाधिकरणे साध्यसहचारोपस्थापकत्वमिति विशेष इति वाच्यम् । सहचारज्ञानत्वेनैव तस्य व्याप्तिग्राहकत्वे तस्य विशेषस्यानादरणीयत्वात् । एवं च यावत्साधनाश्रयाश्रितसाध्यसम्बन्धरूपाया अति व्याप्तेर्व्यभिचारिव्यावृत्ततया वीप्साबलेन उदाहरणप्रतिपाद्यतया चानुमित्यनुकूलत्वाभ्युपगन्तारं प्रत्याह—वीप्सा चेति । योऽपीमां व्याप्तिमनुमित्यनुकूलत्वेनेच्छति

---

## तर्कचूडामणिः

कथं तर्ह्युदाहरणस्य व्याप्तिप्रदर्शकत्वमित्यत आह—एवं चेति । तथा च परम्परया तदुपदर्शकतेति भावः । कथं तर्हि वीप्सा चेति ग्रन्थस्य संगतिरित्यत आह—एवं चेति ।

अत्र ब्रूमः । 'नित्यवीप्सयोः' (पा. सू. 8-1-4) इत्यत्र व्याप्तुमिच्छा वीप्सा इत्यत्र व्याप्तिपदेनाव्यभिचरितसामानाधिकरण्यं न विवक्षितम् । किं तु औत्सर्गिकसम्बन्धमात्रम् । अन्यथा 'गुरुणा यद्यदुक्तं तद्ग्राह्यम्' इत्यादौ वीप्सानुपपत्तेः । किं चाशेषसाधनादिघटितसम्बन्धरूपव्याप्तिज्ञानं नानुमितिहेतुः । तादृशसाधनाश्रयाश्रितत्वज्ञानत्वेन हेतुत्वेऽतिप्रसङ्गेन तत्प्रकारकज्ञानत्वेन हेतुत्व

## तर्कचूडामणिः

वक्तव्यम् । न च तत्सम्भवति । धूमादावव्याप्तिभयेन तादृशसाधनाश्रयाश्रितत्वस्य साध्यतावच्छेदकविशेषणत्वेनोक्ततया वह्नित्वादिनिष्ठतादृशाश्रितत्वाप्रकारेण[1]वह्निनिष्ठ-तादृशाश्रितत्वप्रकारेण अनुमित्यभावापत्तेः । न चेष्टापत्तिः । कृतकत्वाधिकरणे सर्वत्रानित्यत्वमिति ज्ञानादनुमितेरनुभूयमानत्वात् साध्यतावच्छेदकनिष्ठतादृशाश्रित-त्वस्योदाहरणादप्रतीत्या तस्य व्याप्तिप्रतिपादकत्वानुपपत्तेश्च ।

न च साध्यतावच्छेदके [2]तादृशाश्रितत्वं संसर्गविधयैव भासते । तादृशज्ञानमेवानुमितिहेतुः । उदाहरणेनापि सकलसाधनाधिकरणे साध्यसम्बन्ध-प्रतिपादने साध्यतावच्छेदकवह्नित्वादावपि परम्परासम्बन्धस्य भानेन उदाहरण-स्यापि तत्प्रतिपादकत्वं युज्यत इति वाच्यम् । व्यभिचार[3]विरोध्यर्थाप्रकार-कतया तस्य व्यभिचारज्ञानविरोधित्वानुमितिहेतुत्वयोरनुपपत्तेः । न हि वह्नित्वादिकं तद्विरोधि । नहि व्यभिचारविरोधिविषयकत्वमात्रेण तद्विरोधित्वमनु-मितिहेतुत्वं वा, प्रमेयत्वप्रकारकतज्ज्ञानस्यापि तथात्वापत्तेः ।

तस्मात् त्वन्मतेऽपि उदाहरणस्य व्याप्तिग्राहकसहचारप्रदर्शकत्वमात्रम्, न तु व्याप्तिग्राहकत्वमित्यभ्युपेतम् । सहचारमात्रप्रदर्शनं च वीप्सां विनैवेति किं वीप्सया ।

किं च उदाहरणस्य व्याप्त्यर्थत्वे पक्षधर्मता[4]प्रयोजकोपनयवत् उदाहरण-मपि धूमो वह्निव्याप्य इत्येव क्रियेत । [5]अपि च व्यतिरेकिणि उदाहरणावयवस्य व्याप्त्यग्राहकतया अनुदाहरणत्वापत्तिः । तस्मात् सहचारमात्रग्राहकत्वमेवोदाहरण-स्येति वीप्सावैयर्थ्यं दुर्वारमेव ।

---

1. क. 'वह्निनिष्ठतादृशाश्रितत्वप्रकारेण' नास्ति ।
2. क. तत्रापि
3. ख. विरोध्यर्थाप्रतिपादकतया
4. ख. प्रदर्शकोप-
5. ग. तदपि च

## प्रकाशः

तस्यापि तत्पदे वीप्सा विफला। तां विनापि तल्लाभसम्भवादित्यर्थः। न च तथापि विरूपोपस्थितयोरित्ययुक्तमेव, समुदायस्य एकेनैव रूपेणोपस्थापकत्वादिति वाच्यम्। गौरवेण समुदायस्य अशक्ततया अनुपस्थापकत्वेन यत्पदद्वयस्यैव प्रत्येकं [1]भिन्नभिन्नरूपेणोपस्थापकत्वात्। अत एवावयवद्वयशक्तिपुरस्कारेणेति तवापि स्वीकारः। न चैवमावृत्त्यापत्तिः। धूमवत्पदेन [2]युगपदेवानेककारकान्वितक्रिया-पदेनेवोभयान्वयबोधजननात्। यथा चानावृत्तिस्तत्रापि तन्मते [3]तथाग्रे ग्रन्थकृता वक्ष्यते। तत्र च यो धूमवानित्युदाहरणं धूमे हेतौ न युज्यते। तेन हि मतुवर्थ[4]सम्बन्धसामानाधिकरण्यं प्रतिपाद्यते। न तु धूमसामानाधिकरण्यम्। धूमस्याधेयतायः पर्वतस्याधारतायाश्चाप्रतीतेः। किं तु धूमसंयोगस्याधेता भासते। तस्माद्यत्र धूमस्तत्र वह्निरित्येवोदाहरणं तत्रोचितमिति वदन्ति।

अत्र ब्रूमः। एवं हि पर्वतो वह्निमानिति प्रतिज्ञा वह्निव्याप्यधूमवांश्चाय-मित्युपनयः तस्माद्वह्निमानिति निगमनं च न स्यात्। वह्न्यादेराधेयतायाः पर्वतस्या-धारतायाश्च ततोऽप्रतीतेः। न च [5]तत्रापि पर्वते वह्निरित्याद्येव प्रतिज्ञादिकमिति

---

## तर्कचूडामणिः

एवं च 'तुष्यतु दुर्जन' इति न्यायेन यत्पदवीप्सामभ्युपेत्य तत्पदवीप्सां दूषयति—[6]वीप्सा चेति। न चैवमिति। [7]यद्यद्धूमवदित्यत्रेति शेषः। अनेकेति। घटं पटं चानयेत्यादौ आनयेतिपदेनेवेत्यर्थः। दृष्टान्तासंगतिं वारयति—यथा चेति। जयदेवमतमाह—अत्रेति। [8]धूमे हेताविति।

---

1. ख. 'भिन्न' नास्ति
2. क. 'युगपदेवानेक' नास्ति।
3. क. तथैवाग्रे
4. ख. 'सम्बन्ध' नास्ति।
5. ख: 'तत्रापि' नास्ति।
9. ख. 'वीप्सा चेति' नास्ति।
7. ख. ग. यद्यद्धूमवदत्रेति।
8. क. धूमहेताविति

इदं च साध्यसाधनोभयाश्रयविकलानुपदर्शितान्वयविपरीतोपदर्शितान्वयानुपदर्शितव्यतिरेकविपरीतोपदर्शितव्यतिरेकभेदादाभासरूपमिति ।

## प्रकाशः

वाच्यम् । कथकसम्प्रदायविरोधात् । यदि च वह्न्यादिविशिष्टसम्बन्धाधेयताप्रतीतौ विशेषणांशस्य वह्न्यादेरप्याधेयता प्रतीयत एवेति मन्यसे तदा अत्रापि तुल्यमिति ।

इदं चेति । सम्प्रदायमतेन । सामयिकदृष्टान्त[1]सहितोदाहरणाभिप्रायेण वा । दृष्टान्तस्य साध्यादिवैकल्येनोदाहरणाभासत्वं बोध्यम् । यद्यप्युभयवैकल्ये साध्यादिवैकल्यमस्त्येव, तथाप्यत्यन्ताकौशल[2]ख्यापनाय तेनापि रूपेणोद्भावनमिति

## तर्कचूडामणिः

धूमवत्त्वे हेतौ तु युज्यत इति भावः । तुल्यमिति । अत्र ब्रूमः । प्रतिज्ञादिवाक्यस्य नियमतः पक्षविशेष्यकतया कथकसम्प्रदाय[3]सिद्धत्वेन तत्र तथाभावेऽपि उदाहरणवाक्यस्य लिङ्गवद्विशेषणकतया [4]नियतसम्प्रदायाभावाद् यत्र धूमस्तत्राग्निरित्येवोदाहरणं धूमे हेतौ युक्तम् । अत एव यत्रेतरभिन्नत्वाभावस्तत्र पृथिवीत्वाभावः, यत्र वह्न्यभावस्तत्र धूमाभाव इत्युदाहरणशरीरं सर्वसिद्धमिति ।

ननु दृष्टान्तस्योदाहरणशरीरत्वाभावेन तदाभासादुदाहरणाभासप्रतिपादनमसंगतमित्यत आह—इदं चेति । नव्यमतेऽप्यविरोधमाह—सामयिकेति । यद्यपीति । तथा च साधनादिवैकल्यमेव तत्रोद्भाव्यम्, अन्यत्र

1. क. सहितोदाहरणस्य साध्यादि-
2. क. ज्ञापनाय
3. ख. सिद्धतया
4. ग. नियमतः

## उपनयः

उदहरणानन्तरं भवतु व्याप्तिः तथापि व्याप्तं किं पक्षे वर्तते न वेत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनयः।

तत्रानुमितिकारणतृतीयलिङ्गपरामर्शजनकावयवत्वम् उपनयत्वमिति सामान्यलक्षणम्। साध्यव्याप्यविशिष्टपक्षबोधकावयवत्वं साध्याभाव-व्यापकाभावप्रतियोगिमत्पक्षबोधकावयवत्वं च विशेषलक्षणद्वयम्।

---

## प्रकाशः

पृथगुपन्यास इति बोध्यम्। **अनुपदर्शितेति**। यथा महानस [1]इत्येव यत्रोदाहरण-मित्यर्थः। [2]**विपरीतेति**। योऽग्निमान् स धूमवानिति यत्रोदाहरणमित्यर्थः। एवमग्रेऽपि। अत्रावयवान्तराभासत्वं कथं नोक्तमिति चिन्त्यम्।

**अनुमितीति**। अनुमितिकरणव्यापारसमानाकारज्ञानजनकावयवत्त्वमित्यर्थः। यद्यपि तस्मादिति निगमने तच्छब्देन व्याप्तपक्षधर्मपरामर्शादुक्तज्ञानजनकत्वं सम्भवति, तथापि साध्यव्याप्यविशेषणकपक्षविशेष्यकपरामर्शसमानाकारज्ञानजनकत्वं नास्तीति न तत्रातिप्रसङ्ग इति भावः।

---

## तर्कचूडामणिः

क्लृप्तत्वादिति भावः। **अत्रेति**। स्वतन्त्रस्य नियोगाद्यविषयत्वात् उदाहरणस्यैव[3] सर्वसिद्धत्वाच्चेति समाधानमत्र द्रष्टव्यम्।

नन्वनुमितिकारणत्वं यदि फलोपधानगर्भम्, तदा असम्भवः। योग्यतापरत्वे निगमनेऽतिव्याप्तिरित्यत आह — [4]**अनुमितीति**। लिङ्गपरामर्श-

---

1. ख. इत्येवमत्र
2. क. 'विपरीतेति......यत्रोदाहरण-मित्यर्थः' नास्ति।
3. क. 'एव' नास्ति।
4. ग. 'अनुमितीति.........सिद्ध एवेत्यत आह' नास्ति।

उदाहरणान्त एव प्रयोग इति न वाच्यम् । तृतीयलिङ्गपरामर्शस्य व्याप्तिपक्षधर्मतावगाहिनोऽवयवान्तरादलाभात् । तदनभ्युपगमेऽपि पक्षधर्मताया अलाभात् । न च हेतुवचनादेव तदवगमः । तस्य को हेतुरित्याकाङ्क्षायामेव प्रवृत्तत्वेन हेतुस्वरूपोपस्थापकस्यातत्परत्वात् । वादिवाक्यादेवाक्षेप इति चेत्—न । तदर्थस्यासिद्धत्वेनानाक्षेपकत्वात् । अन्यथा प्रतिज्ञामात्रादेव सर्वाक्षेपेऽवयवान्तरविलयात् । प्रतिपाद्यानां स्वत एव तदवगम इति चेत्—न । तेषां व्युत्पन्नाव्युत्पन्नतया सर्वत्र तदसम्भवात्, प्रतिपादकेन स्वव्यापारस्य निर्वाहयितुमुचितत्वाच्च । अन्यथा अवयवान्तरेऽप्येवं प्रसङ्गात् ।

## प्रकाशः

ननु परेषां तृतीयलिङ्गपरामर्शहेतुताङ्गीकार एव नास्तीति[1] कुतस्तल्लाभायोपनयः [2]स्यादित्यत आह—तदनभ्युपगमे चेति । तथा चोदाहरणानन्तरं पक्षधर्मतामात्रस्याप्युपदर्शनार्थमवयवान्तरं परैरपि स्वीकर्तव्यमेव । व्याप्तिविशिष्टपक्षधर्मताप्रदर्शकं तत् किमर्थं वक्तव्यम् इत्येवावशिष्यते । तच्च तृतीयलिङ्गपरामर्शहेतुत्वव्यवस्थापनादेव निरस्तमिति भावः ।

## तर्कचूडामणिः

परन्यायावयवत्वमुपनयत्वमिति वयं ब्रूमः । तथापीति । पञ्चम्यर्थस्य ज्ञापकत्वादेस्तस्मादित्यनेन प्रतिपादनेन लिङ्गस्य पञ्चम्यर्थं प्रत्येव विशेषणत्वादिति भावः । ननु स्वमते तदनभ्युपगमे [मांऽ]सिद्ध एवेत्यत आह—नन्विति । ननु तथापि धूमवानित्येवोपनयोऽस्तु, पक्षधर्मतायास्तत एव लाभादित्यत आह—तथा चेति ।

अत्रेदमालोचनीयम् । व्याप्तस्य पक्षधर्मताकाङ्क्षायां तावन्मात्रमेवोपनयेन प्रतिपाद्यम् न तु व्याप्तत्वमपि । अप्राप्तकालत्वापत्तेः । न चैवं प्रतिज्ञायामपि

1. ख. 'इति' नास्ति । 2. ख. 'स्यात्' नास्ति ।

## निगमनम्

उपनयानन्तरं निगमनम् । तच्चानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षताधीप्रयुक्तसाध्यधीजनकं वाक्यम् । न च

## प्रकाशः

[1]तच्चानुमितीति । अत्रोदासीनवारणाय कारणेत्यन्तं साध्यधीविशेषणम् । प्रतिज्ञातिव्याप्तेराह—व्याप्तेत्यादि । साध्यधीजनकत्वं साध्यधीज्ञानजनकत्वम् ।

## तर्कचूडामणिः

साध्यवाचकमेव पदं प्रयुज्येत आकाङ्क्षितत्वादिति वाच्यम् । साध्यमात्रस्य सिद्धत्वेन [2]पक्षतावच्छेदकसामानाधिकरण्येनैव तस्याकाङ्क्षितत्वेन तथैव [3]प्रतिज्ञाभिधानात् । न चोपनयावयवस्य लिङ्गपरामर्शजनकत्वार्थं व्याप्तिप्रतिपादनमिति वाच्यम् । [4]मनसैवानुमितिहेतुपरामर्शोत्पादनाभ्युपगमात् । न च मानसज्ञानोपयोगितया उपनयोऽपि विशिष्टवैशिष्ट्यज्ञानजनक इति वाच्यम् । उदाहरणोपनयाभ्यां प्रत्येकमुपस्थितयोर्व्याप्तिपक्षधर्मतयोर्मनसा वैशिष्ट्यज्ञानसंभवेन विशिष्टवैशिष्ट्योपस्थितेरतन्त्रत्वात् । अत एव च [5]संश्च शब्दादिरिति [6]सौगतानामुपनयप्रयोग इति ।

अत्र ब्रूमः । [7]व्याप्तिः किं पक्षे वर्तत इत्याकाङ्क्षायां व्याप्यवानित्येव प्रयोक्तव्यम्, न तु धूमवानिति । धूमः किमत्र वर्तत इत्याकाङ्क्षाविरहात्, अकाङ्क्षानुरोधेनैवावयवप्रयोगात् । अन्यथा वह्निव्याप्यधूमवानयमित्येनेनैव परामर्शोत्पत्ताववयवान्तरवैयर्थ्यापत्तेः । न च व्याप्तो यो धूमः स किं पक्षे वर्तत

1. ख. 'तच्चानुमितीति ......... तज्ज्ञानपरत्वादिति भावः' नास्ति ।
2. ख. पक्षधर्मतावच्छेदक-
3. क ग. प्रतिज्ञाविधानात्
4. ग. तस्यैवानुमिति-
5. ख. संश्रयशब्दादि-
6. क. ख. सुगतानाम्
7. क. व्याप्तिः

व्याप्तिपक्षधर्मतयोश्चतुर्भिरेवावयवैः पर्याप्तेः किं तेनेति वाच्यम् । अबाधितासत्प्रतिपक्षत्वयोरलाभे चतुर्णामप्यपर्यवसानात् ।

अथाभिधानाभिधेययोर्व्याप्तिपक्षधर्मतावल्लिङ्गप्रतिपादनादेव पर्यवसानेनावयवान्तराणां निराकाङ्क्षत्वम् । विपरीतशङ्कानिवृत्तेरपि तत एव

---

प्रकाशः

प्रतिज्ञायामिव निगमनेऽपि साध्यपदस्य लक्षणया तज्ज्ञानपरत्वादिति भावः । **पर्याप्तेरिति ।** प्रतीतेरित्यर्थः । **अपर्यवसानादिति ।** साकाङ्क्षत्वादित्यर्थः । **अथेति ।** अभिधानं व्याप्त्यादिविशिष्टलिङ्गानुभवः, अभिधेयं तथाभूतलिङ्गम् । [1]आकाङ्क्षा च चतुर्ष्ववयवेषु द्वारमित्यत्रेवाभिधानपर्यवसानाद्वा 'विश्वजिता यजेत' इत्यत्रेवाभिधेयापर्यवसानाद्वा, तदुभयाभावे च कथं स्यादित्यर्थः ।

---

तर्कचूडामणिः

इत्येवाकाङ्क्षेति वाच्यम् । तथापि व्याप्तिविशिष्टस्यैव तस्याकाङ्क्षाविषयत्वेन तत्प्रतिपादन[2]स्यावश्यकत्वादिति दिक् ।

**प्रतिज्ञायामिवेति ।** अत्र प्रतिज्ञायामपि लक्षणायाः निराकरणात् निगमनेऽपि न लक्षणेति यथाश्रुत एव ग्रन्थः साधुरिति सहृदयैरालोकनीयम् । पर्याप्तिशब्दस्य परिसमाप्तिपरत्वे प्रकृतेऽसम्भव इत्यत आह—**प्रतीतेरिति ।** ननु व्याप्ति[3]पक्षधर्मताविशिष्टलिङ्गप्रतिपादनेन चतुर्णां [4]पर्यवसिततया कथं तदभाव इत्यत आह—**साकाङ्क्षत्वादिति ।** अवान्तरवाक्यार्थबोधेऽपि महावाक्यार्थबोधाभावेन साकाङ्क्षत्वादित्यर्थः । अभिधानपदस्य शक्तिपरत्वं वारयति—**व्याप्तीति ।** अभिधानस्यापर्यवसानम् अनुत्पत्तिः । अभिधेयस्य त्वनुपपद्यमानत्वं तदिति ध्येयम् ।

---

1. ख. 'आकाङ्क्षा च.........कथं स्यादित्यर्थः' नास्ति ।
2. ख. स्याशक्यत्वात्
3. ग. 'पक्षधर्मता' नास्ति ।
4. ख ग. पर्यवसन्नतया

लाभात् । अन्यथा निगमनेनापि तदवारणात् । न हि तद्विशेषदर्शनमनादृत्यैव तन्निवर्तकम् । सिद्धनिर्देशतया वारयतीति चेत्—न । स्वरूप-

### प्रकाशः

ननु यावत् पक्षे साध्यविपरीतशङ्का तावत् नाभिधेयं पर्यवस्यति । न हि सम्भवति पक्षे साध्याभावो व्याप्त्यादिविशिष्टं च लिङ्गमिति । तथा चाभिधेयापर्यवसानादेव अत्राकाङ्क्षा स्यादित्यत आह—**विपरीतेति** । साध्यविपरीतशङ्कानिवृत्तेरपि पक्षे [1]साध्यसत्त्वोपदर्शकात् प्रतिज्ञालक्षणावयवान्तरादेव भावादित्यर्थः । **अन्यथेति** । प्रतिज्ञायास्तदनिवर्तकत्व इत्यर्थः । **न हीति** । नहि निगमनमपि विशेषदर्शनतां पक्षनिष्ठसाध्यसत्त्वोपदर्शकतारूपामनादृत्य तन्निवर्तकमित्यर्थः । **सिद्धेति** । निगमनं साध्यवत्तया पक्षस्य सिद्धत्वमाह न प्रतिज्ञा । तस्याः साध्यनिर्देशरूपत्वात् । तथा च पक्षष्ठिसाध्यसत्त्वोपदर्शकत्वाविशेषेऽपि निगमनमेव तन्निवर्तकं न तु प्रतिज्ञेति भावः । **स्वरूपेति** । सिद्धत्वप्रतिपादक[2]पदाभावात् निगमनस्यापि साध्यविशिष्टपक्षमात्राभिधायकत्वमित्यर्थः ।

### तर्कचूडामणिः

[3]ननु विरोधिप्रमाणशङ्कानिवृत्तेरवयवचतुष्टयेनालाभात् विपरीतेति ग्रन्थानुपपत्तिरित्याशङ्क्य तद्व्यावर्त्यां शङ्कामाह—**नन्विति** । ननूदाहरणादेः कथं तन्निवर्तकत्वम्, तद्विरोध्यविषयकत्वादित्यत आह—**साध्येति** । ननु निगमनस्य वाक्यरूपतया [4]न विशेषदर्शनत्वम् । करणव्युत्पत्त्यादरेऽपि साध्यप्रदर्शकत्वं [5]न व्याप्यप्रदर्शकत्वमित्यत आह—**नहीति** । ननु प्रतिज्ञापि [6]सिद्धस्य [7]पक्षादेर्निर्देश इति न तद्वैषम्यमित्यत आह—**निगमनमिति** । ननु

1. क. साध्यवत्त्वोपपादकात्
2. ख. पदादेरभावात्
3. ख. 'ननु' नास्ति
4. ग. 'न' नास्ति
5. ख. 'न व्याप्यप्रदर्शकत्वम्' नास्ति ।
6. ग. साध्यस्य
7. ख. पर्वतादेः

